# प्रास्ताविकम्

विदितमेव प्रायः सर्वेषां विदुषां यद् "अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः। यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः॥ कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्। तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्"। इति भगवद्वचनानुसारेण जनानामैहलौकिकपारलौकिकनिःश्रेयसार्थं यज्ञा एव परमहेतुरिति निर्बाधमेव। ते च विविधदेवतोद्देशेन 'विष्णुयागः, महारुद्रयागः, शतचण्ड्यादियज्ञः' इत्यादिस्वरूपेण भिन्नभिन्नफलापेक्षया सर्वदा सर्वत्र जनैः क्रियन्ते। तेषां च परम्पराऽद्यावध्यपि प्रचलति सा एव तेषां वैशिष्ट्यं प्रतिपादयतीति निःसंशयमेव। अपि नाम ते यज्ञा यदि विधिप्रयुक्तास्तदैव फलप्रदातारो भवन्ति नोचेत्कर्तारमधो नयन्तीति सप्रमाणं यत्र कुत्रापि दृश्यते। एतदर्थमेव जनकल्याणार्थं याज्ञिकानां विविधयज्ञकर्मकारयितृत्वे परोपकरणार्थं च तदर्थकज्ञानार्थं च बहवो ग्रन्थाः प्राचीनैरनन्तदेवप्रभृतिभिर्विद्वद्वरैर्व्यरचिषत। तत्रापि महारुद्रयज्ञस्य वैदिकत्वात्तस्य च "यः शतरुद्रियमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स कृत्याकृत्यात्पूतो भवति तस्मादविमुक्तमाश्रितो भवत्यत्याश्रमी सर्वदा सकृद्वा जपेत्। अनेन ज्ञानमाप्नोति संसारार्णवनाशनम्। तस्मादेवं विदित्वैनं कैवल्यं पदमश्नुते॥" इति कैवल्योपनिषदि तथा च "अथ हैनं ब्रह्मचारिण ऊचुः किं जाप्येनामृतत्वं ब्रूहीति। स होवाच याज्ञवल्क्यः शतरुद्रियेणेत्येतान्येव ह वा अमृतस्य नामानि एतैर्ह वा अमृतो भवतीति एवमेतद्याज्ञवल्क्यः" इति जाबालोपनिषदि शतरुद्रियस्यापि महाफलश्रवणाद्विशेषफलदातृत्वं होमात्मकमहारुद्रस्वरूपेण चानन्तफलदातृत्वं स्यादेवेति निर्विवादम्। अत एव प्राचीनैर्ग्रन्थकारैः कृतेष्वपि ग्रन्थेषु तेषु चान्यप्रयोगग्रन्थेष्वपि प्रयोगकारयितृत्वे याज्ञि-

दीपिकायामपि—ईश्वराराधनार्थं वाऽथ वा पापापनुत्तये । यदि रुद्रानुष्ठानं न मुहूर्तादि चिन्तयेत् ॥ इति । काम्ये तु शुभकाले एव प्रारम्भः ॥

रुद्रभेदाः—शातातपः—षडङ्गैकादशिनी रुद्रो रुद्रैश्चैकादशरुद्रतः ॥ एकादशाभिरेताभिर्महारुद्रस्तु कथ्यते॥एकादशमहारुद्रैरतिरुद्र इतीरितः। अन्यत्रापि-शृणुष्व भो महाप्राज्ञ रुद्रभेदान्वदामि ते ॥ रुद्राः पंचविधा प्रोक्ता देशिकैरुत्तरोत्तरम् ॥ साङ्गस्त्वाद्यो रूपकाख्यः सशीर्षो रुद्र उच्यते ॥ एकादशगुणैस्तद्वद् रुद्रीसंज्ञो द्वितीयकः ॥ एकादशभिरेताभिस्तृतीयो लघुरुद्रकः ॥ लघ्वैकादशभिः प्रोक्तो महारुद्रश्चतुर्थकः ॥ पंचमः स्यान्महारुद्रैरेकादशभिरन्तिमः ॥ अतिरुद्रः समाख्यातः सर्वेभ्यो ह्युत्तमोत्तम इति ॥ अत्र रुद्रशब्दवाच्यो महेशः ॥ रुद्रशब्दनिरुक्तिमाह बौधायनः-रुत् पापं दुःखं वा द्रावयतीति रुद्रः ॥ अन्यत्र स्मृतिसंग्रहे—विना महेश्वरं देवं नान्यस्त्रातुमघौघतः इति ॥

रुद्रयज्ञफलम्—यः शतरुद्रीयमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स सुरापानात्पूतो भवति स सुवर्णस्तेयात्पूतो भवति स गुरुतल्पगमनात्पूतो भवति स ब्रह्महत्यायाः पूतो भवति स कृत्याकृत्यात्पापात्पूतो भवति ॥ तस्मादविमुक्तमाश्रितो भवति ॥ यः श्रद्धया युतो नित्यं शतरुद्रियमभ्यसेत्॥अग्निदाहात्सुरापानाद् दुष्कृत्याचरणात्तथा॥ मुच्यते ब्रह्महत्याया इति वैकल्पशाखिनः ॥ इति ॥ मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा ॥ भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः ॥इति॥ सर्वेष्वपि हि धर्मेषु रुद्राध्यायजपः परः ॥ रुद्राध्यायी विमुच्येत जन्मसंसारबन्धनात् ॥ स्मृतिमहार्णवे स्मृतिदर्पणे च । रुद्रार्चनं रुद्रजाप्यं तथा चैकादशीव्रतम् ॥ वाराणस्यां च मरणं मुक्तिरेषा चतुर्विधा ॥ रुद्रजापी शिवः साक्षाच्चतुराश्रमधर्मकः ॥ तस्मात्सर्वं परित्यज्य रुद्रजापी भवेत्सदा ॥ वायुपुराणे । अनपत्यत्वदोषेषु शाकिन्यादिग्रहेषु च ॥ सर्वज्वरविनाशाय रुद्रजाप्यो न संशयः ॥ रोगवान्पाप्मनोऽश्चैव रुद्रं जप्त्वा जितेन्द्रियः ॥ रोगात्पापात्प्रमुक्तोऽसावतुलं सुखमश्नुते ॥ अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ॥ यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ॥ *तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥*

द्रापणारम्भः स्यात् परन्तु तत्र ग्राहकाणां साहाय्यं विना तद्भवितुं नार्ह-त्यतस्तत्प्रदातु ग्राहकैः कृपा कर्तव्येति समाशासे ॥ ग्रन्थायिमं संपूर्णतां नेतुं जगदीश्वरो मयि कृपां करोत्विति संप्रार्थये ॥ अन्ततो यैर्ग्राहकैरस्मत्पुस्तकानां ग्राहकत्वविषये एतावत्कालपर्यन्त साहाय्यं कृत तेषामुपकारं मत्वाऽतः परमपि ते सज्जना अस्माकं पुस्तकविषये पुनरपि साहाय्यं कुर्वन्त्विति सप्रार्थ्य विरमे ॥

सवत् १९९८ व. शु. ३
अक्षय्यतृतीया. शनिवासरः
शक १८६४,ता. १८-४-१९४२.

विद्वज्जनानुरागी—
शास्त्रीदुर्गाशङ्करात्मजयज्ञदत्तशर्मा ।

## द्वितीयावृत्तिमुद्दिश्य प्रास्ताविकं किंचित्

धीधनाः विद्वांसः

ग्रन्थस्यास्यावृत्तिरियं द्वितीया श्रीमतां तत्रभवतां पुरतः समुपस्थाप्यते मयाऽत्यतीव हर्षोत्फुल्लचेतसा । श्रीमतां तत्रभवतां, विदुषां सहयोग एव तत्र हेतुरिति मत्वा सर्वेभ्यः सादरं नमो नमः ।

आशासे च भवन्तः सर्वे एव सर्वदैतादृशं सहयोगं कृत्वा मदीयमुत्साहं प्रवर्धयिष्यन्तीति ।

शकः १८८१ माघ शुक्ल ५, वसंत पचमी
संवत् २०१६ ता. २-२-६०

प्रार्थयति
विदुषा वशवदः
शास्त्री यज्ञदत्तः

॥ रुद्रारम्भकालनिर्णय (पराशरोक्त)मुहूर्तानि ॥ वैशाखे श्रावणे मासे चाश्विने मार्गशीर्षके ॥ माघफाल्गुनयोर्वापि सिते पक्षे शुभे दिने ॥ रुद्रारम्भः प्रकर्तव्यः पुत्रपौत्रादिवृद्धये ॥ कार्तिके स्वर्णलाभः स्यादिति केचित् ॥ वर्ज्यानि तु संग्रहे—अनध्यायतिथिं रिक्तान्तथा षष्ठीं विहाय च ॥ इतरासु च कर्तव्यो रुद्रारम्भः शुभप्रदः ॥ अनध्याये च सन्ध्यायामपराह्णे कथञ्चन ॥ स्त्रियां रजस्वलायां च रुद्रारम्भो न सिद्धिदः ॥ इति ॥ रत्नावल्याम्—सोमसौम्यगुरुशुक्रवासरा सर्वकर्मसु भवन्ति सिद्धिदाः ॥ निष्कामतया रुद्रानुष्ठाने तु यदैव श्रद्धोत्पद्यते तदैव रुद्रारम्भः कार्यः । न श्वः श्वमुपासीत को हि मनुष्यः श्वो वेद इति श्रुतेः ॥ परशुरामोऽपि—यदैव जायते वित्तं चित्तं श्रद्धासमन्वितम् ॥ तदैव पुण्यकालोऽयं यतोऽस्थिरजीवितम् ॥ अतः सर्वेषु कालेषु जपस्यारम्भणं शुभम् ॥ इति ॥

## ॥ किंचिन्निवेदनम् ॥

महानुभावा ग्राहकविद्वांसः !

सखेदं निवेद्यते यदस्य ग्रन्थस्य संपूर्णतासमय एव किंचिन्न्यूनविषयत्वे ग्रन्थस्यास्य प्रणेतारो मम पितृचरणाः परमपूज्यगीर्वाणविद्याभूषणदुर्गाशङ्करशास्त्रिणो जगन्नियन्तुर्भगवतः कालस्वरूपिणोऽबाधितकृत्यनुसारेण १९९७ तमे विक्रमाब्दे भाद्रपदशुक्लपष्ठ्यां गुरुवासरे प्रातःकाले पञ्चत्वमाप्ताः ॥ अस्य स्मरणमपि मे हृदयं संप्रति शल्यदुःखाक्रान्तमिव करोति । शिरश्छत्ररूपस्य पितुः शीतलछायाविरहितो वियोगातपततोऽहं सर्वथाऽऽकुलितहृदयः संजातस्तथाप्युत्पत्तिस्थितिलयकर्तुः परमात्मनोऽघटितघटनापटीयसीं प्रवृत्तिं परिवर्तयितुं न कोऽपि समर्थं इति मत्वा पितृचरणानां लोकान्तरगमनशोकसागरनिमग्नोऽप्यहं " पितृचिकीर्षापरिपूर्तिरेव पुत्रस्य परमो धर्म " इति मत्वा तस्माच्छोकसागरात्कथमपि निर्गत्य तैः समारब्धानां ग्रन्थानां परिपूर्तिरेव लोकान्तरे तेषामानंदकारणं स्यादिति कथमपि सा कर्तव्यैवेति निश्चित्यायं ग्रन्थो मया संपूर्णतां नीतः ॥ तातपादानामिच्छानुसारेण ग्रन्थममुं संपूर्णतां नेतुं यदहं संप्रति समर्थः संजातः तत्परमेश्वरस्य परमां कृपां मन्ये ॥ ग्रन्थस्यास्य संपूर्णतासिद्धौ यद्यपि स्वल्पतयाऽपि विलम्बो जातस्तथापि ममोपर्यापतितामननुमितां व्यावहारिकीं चिन्तां विचिन्त्य स विलम्बः सज्जनैः सुहृद्भिर्विद्वद्भिः क्षन्तव्य इत्याशासे ॥ अस्य ग्रन्थस्यारम्भात्संपूर्णप्रयोगस्तथा ग्रन्थारम्भे पश्चात्संयोजितः प्रायश्चित्तप्रयोगोऽपि मम पितृचरणहस्तेनैव लिखित आसीत् स च तथैव मुद्रापितः । अन्यत्सर्वं मयैव संकलितम् । अतएव तत्र क्वापि क्षतिश्चेत्सा ममैवेति मत्वा क्षन्तव्या च यथावकाशं तां शापयितुं कृपा कर्तव्येति काङ्क्षे ॥ वर्षद्वयात्पत्राणां बहुमूल्यत्वेनार्थिकीं न्यूनतां सहित्वाऽपि " वास्तुशांतिप्रयोगो होमात्मकमहारुद्रप्रयोगश्च " ति ग्रन्थद्वयं मम पितृचरणैर्मया च संपूर्णतां नीतं च तस्य पत्रसमुच्चया ( फॉरम ) अपि प्राक्तनमूल्यसमतयैव प्रदत्ताः । भाविनोऽपि तथैव प्रदातुं समुत्सुकोऽहम् । एवं च मम तातपादैरारब्धौ ग्रन्थान्तरौ "हवनात्मकविष्णुयागप्रयोगो हवनात्मकशतचण्डीप्रयोगश्चे" ति द्वावप्यर्धावस्थायामेव मुद्रितौ संप्रति पतितौ । अतःपरं तयोः पुनर्मु-

कमवराणामसंतुष्टत्वान्मया रुद्रकल्पद्रुम–काशीदीक्षितरुद्रपद्धति–
दीक्षितपद्धत्यादिविविधग्रन्थेभ्यो विविधविषयान् संगृह्य तान्
चितं संस्थाप्य महारुद्रप्रयोगकारयितॄणां याज्ञिकप्रवराणां प्रयोगवि
सुगमता यथा स्यात्तथाऽयं "ह्वचनात्मकमहारुद्रप्रयोगो" रचि
नात्र विशेषप्रशस्तिप्रयोजनं तत्तु विद्वांसः स्वयमेव ग्रन्थवाचनेन प्र
गकारयितृत्वेन च ज्ञास्यन्तीति मन्ये । एतावदेव नापि याज्ञिकानां
योगविषये विशेषज्ञानार्थमनेकग्रन्थेभ्यः संगृहीतानि बहूनि प्रमाण
तथा च वैदिकप्रयोगविषये मातिशाख्यादिप्रमाणान्यपि टिप्पण्यां
तानि यैर्विद्वांसः परमसंतोषमनुभविष्यन्तीति नोचितं विशेषवक्तव्य

ग्रन्थस्यास्य संशोधनविषये गुर्जरराष्ट्रे राजपीपलासंस्थानान्तर्वै
नर्मदातटस्थ 'भालोद' ग्रामनिवासिभिरपि संप्रति मोहमयीवास्तव
'शास्त्री तुलजाशंकर धीरजराम पंड्या' इत्येतैः समन
बहुशः साहाय्यं कृतं तथा चैतत्पुस्तकसंस्करणेऽवभृथादिप्रयोगदान
काशीपुरस्थयोः सप्तर्षीत्युपाख्यहरिरामात्मजसोमनाथलक्ष्मीनाथश
णोर्मुख्यशिष्येण उत्तरगुर्जरदेशान्तर्गत'सम्मौ' ग्रामनिवासिना याः
कोपाद्वकृपारामतनुजनुषा स्वर्गतविद्वद्वर 'सोमनाथ' शर्मणाऽप्यस्म
त्सन्तसाहाय्यमकारीति द्वयोरप्युपकारं विस्मर्तुं न प्रभवामि ।

अस्य ग्रन्थस्य संकलनायां संशोधने च मया यथाशक्ति प्रयत्न
कृतोऽस्ति तथापि कचित्स्खलनं स्याचेत् 'विद्वानेव विजानाति वि
ज्जनपरिश्रमः ।' इति न्यायेनास्मच्छ्रमबाहुल्यं विचार्य तत् क्षन्तव्
मत्वा स्वयमेव संशुध्य सज्जना विद्वांसो ग्रन्थमिमं सहृदयं संमान्य म
-परिश्रमं सफलीकुर्युरित्याशासे ।

विद्वज्जनानुरागी

दुर्गाशङ्कर उमाशङ्करशास्त्री सिद्धपुरस्थ

# अथ श्रीहवनात्मकमहारुद्रस्य अनुक्रमणिका ॥
## ( आरंभादिमहारुद्रपूजनान्तो विभागः १ )

ग्रन्थारम्भे ग्रन्थान्ते च पश्चान्निक्षिप्तविषयानुक्रमणिका ॥

# अथ श्रीहवनात्मकमहारुद्रस्य अनुक्रमणिका ॥

## ( आरंभादिमहारुद्रपूजनान्तो विभागः १ )

[1] ब्रह्मादिपद्पञ्चाशद्देवतानामामन्त्रैरावाहनम् (टि ) २१७-२२०

[1] ब्रह्मादिपद्पञ्चाशद्देवतानां नाममन्त्रैरावाहनम् (टि०) २६१–२६४

---

१ होमात्मकमहारुद्रप्रारम्भदिनात्पूर्वं तदङ्गीभूतकर्मानुक्रमः (टिप्पण्याम् ) ४८

( परिशिष्टम् )

# टिप्पणीस्थविषयानुक्रमणिका ।

## ( महारुद्रपूजनान्तः प्रथमो विभागः )

## ( होमादिद्वितीयो विभागः )

☞ वैदिकप्रयोगविषयेऽपि क्वचित्क्वचित् लुगभावः—अनुस्वारस्य ह्रस्वदीर्घत्वम् इत्यादिप्रयोगसिद्धिदर्शकानि प्रातिशाख्य–याज्ञवल्क्यादि· प्रमाणान्यन्यापि च टिप्पण्यां दत्तानि तानि यथाप्रयोगं वाच्यनीयानि।

अनुक्रमणिका समाप्ता ॥

---

**रुद्रारम्भात् पूर्वदिने ह्यसंभवे तस्मिन्दिने वाधिकारसिद्धये यजमानेन यथाशक्ति प्रायश्चित्तं यथाविधि कर्तव्यम् ।**

श्रीगणेशाय नमः ॥ पर्षल्लक्षणलक्षितानां वेदधर्मशास्त्रविदां स्वाचारनिष्ठानां पर्षदर्हाणाम् ऋग्यजुःसामादिवेदविदां धर्मशास्त्रविदां ब्राह्मणानां चतुरः अथवा अध्यात्मविदाम् एकं वा पर्षत्त्वेनोपविश्य घृतं प्राश्य उपोष्य वा कृतस्नानोऽशक्तश्चेदार्द्रवासा यजमानः अङ्गं मोक्ष्य

---

१ प्रायश्चित्तेन्दुशेखरधर्मसिन्धुकल्पद्रुमानुसारिसर्वप्रायश्चित्तानि—प्राजापत्यलक्षणम्—त्र्यहं प्रातस्त्र्यहं सायं त्र्यहं मद्यादयाचितम् ॥ त्र्यहं परं तु नाश्नीयात् प्राजापत्योऽयमुच्यते ॥ द्वादशदिवसात्मकप्रायश्चित्ते षडब्दे । १८० ॥ त्र्यब्दे । ९० ॥ सार्धाब्दे । ४५ ॥ अब्दे प्राजापत्यानि त्रिंशत् । ३० ॥ प्राजापत्यप्रत्याम्नायाश्च—१ गायत्र्या अयुतो जपः ॥ २ सहस्रव्याहृतिभिः तिलहोमः ॥ ३ द्वादशब्राह्मणभोजनम् ॥ ४ तीर्थयात्रा ॥ ५ जनयात्रा ॥ ६ शुष्ककेशपर्यन्त द्वादशस्नानानि ॥ ७ वेदसंहितापारायणम् ॥ ८ द्वादशसहस्रनमस्काराः ॥ ९ द्वात्रिंशदुत्तरशत प्राणायामान्कृत्वा अहोरात्रमुपोषितः प्राङ्मुखस्तिष्ठेत् ॥ १० रुद्रैकादशिनी ॥ ११ षडुपवासाः ॥ १२ एकविप्रभोजनम् ॥ उपवासस्य अत्यशक्तौ सहस्रंगायत्रीजपः ॥ स्मृत्यर्थसारे द्वादश प्राणायामाः ॥ प्राजापत्येप्यशक्तस्तु धेनु दद्यात् पयस्विनीम् ॥ धेनोरभावे निष्कं स्यात्तदर्धं पादमेव वा॥ निष्कस्य लोकशास्त्रयोरेकवाक्यतया चत्वारिंशन्माषाः।४०॥ तदर्धम् । २० ॥ तदर्धम् । १० ॥ अत्यशक्तपक्षे तु द्वात्रिंशत्पणिका गौः । इदमेव प्राजापत्यम् ॥ २ याज्ञवल्क्यः—चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ॥ सा ब्रूते य स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥

वाससी परिधाय फलताम्बूलगन्धपुष्पधूपदीपाः पञ्चगव्यानि मृद्भस्म गोमयदूर्वातिलाः समिद्दर्भाः होमार्थं घृतं पर्वदक्षिणाः निबंधानुवाद-कपूजार्थं दक्षिणाः पूर्वोत्तराङ्गगोदानविष्णुश्राद्धद्रव्याणि इत्येतान्येकीकृत्य शिखां बध्नीयात् ॥

शिखाबन्धनम्–ॐ मा नंस्तोके तनये मा नऽआयुषि मानोगोषु मानोऽअश्वेषु रीरिषः ॥ मानो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ ११ ॥ इत्यनेन अङ्गुष्ठमात्रां शिखां नैर्ऋत्यां बध्नीयात् ॥

पवित्रधारणम्–ॐपवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसवऽ उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥ १२ ॥ तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥ ४ ॥ इत्यनेन सव्यहस्ते कुशत्रयं दक्षिणहस्ते कुशद्वयं च धारयेत् ॥

आचमनम्–अन्तर्जानुहस्तः संहताङ्गुलिना वामपाणिनाऽन्वारब्धे मुक्ताङ्गुष्ठकनिष्ठेन दक्षिणहस्तेन शुद्धजलं गृहीत्वा ब्रह्मतीर्थेन त्रिरपिबेत्–ॐ केशवाय नमः स्वाहा । ॐ नारायणाय नमः स्वाहा । ॐ माधवाय नमः स्वाहा । हस्तप्रक्षालनम्–ॐगोविंदाय नमः ॥

प्राणायामः–प्रणवस्य परब्रह्म ऋषिः परमात्मा देवता दैवी गायत्री छन्दः भूरादिसप्तव्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगोतमात्रिवसिष्ठकश्यपा ऋषयः अग्निवायुसूर्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवताः गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छंदांसि तत्सवितुरित्यस्य विश्वामित्र ऋषिः सविता देवता गायत्री छन्दः आपो ज्योतिरित्यस्य प्रजापतिर्ऋषिः ब्रह्माग्निवायुसूर्या देवता यजुश्छन्दः सर्वेषां प्राणायामे

विनियोगः॥ ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यम् ॐतत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि॥धियो योनः प्रचोदयात्॥ॐ॥ ॐआपो ज्योतीरसोमृतं ब्रह्म भूर्भुवः स्वरोम् ॥ एवं पूरकं कुम्भकं रेचकं क्रमेण त्रिवारं पठेत् ॥

सङ्कल्पः—विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य ब्रह्मणः द्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भारतवर्षे जम्बुद्वीपे रामक्षेत्रे परशुरामाश्रमे दण्डकारण्यदेशे श्रीगोदावर्याः पश्चिमदिग्भागे श्रीमल्लवणाब्धेरुत्तरे तीरे अमुके श्रीशालिवाहनशके अमुकनामसंवत्सरे अमुके श्रीविक्रमवर्षे अमुकनामसंवत्सरे अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं ग्रहगणविशेषणविशिष्टायां शुभपुण्यतिथौ करिष्यमाणमहारुद्राख्ये[1] कर्मणि अधिकारसिद्ध्यर्थं समस्तकलपातकनिवृत्त्यर्थं विष्णुपूजनपूर्वकं देहशुद्ध्यर्थं प्रायश्चित्तं करिष्ये। प्रायश्चित्तारंभनिमित्तं विष्णोः षोडशोपचारैः पूजनं करिष्ये। विष्णुपूजनाङ्गत्वेन षोडशाङ्गन्यासांश्च करिष्ये। ॐसहस्रशीर्षेति षोडशर्चपुरुषसूक्तस्य नारायणः पुरुष ऋषिः जगद्बीजं पुरुषो देवता आद्यानां पञ्चदशानामनुष्टुब् अन्त्यायास्त्रिष्टुप्छन्दः सर्वासां न्यासपूजनाभिषेकेषु विनियोगः ॥

---

१ एवं विष्णुयागे विष्णुयागाख्ये कर्मणि तथा च शतचण्ड्यां सहस्रचण्ड्यादौ च शतचंड्याख्ये सहस्रचण्डाख्ये वा कर्मणि इत्यादि ऊहः कार्यः ॥

१ ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिꣳ सर्वत-
स्पृत्त्वात्यतिष्ठद्दशाङ्गुलम् ॥ ३१/१ ॥ वामकरे ॥

२ ॐ पुरुषऽ एवेदꣳ सर्वँय्यद्भूतँय्यच्च भाव्यम्॥ उतामृतत्वस्येशानो
यदन्नेनातिरोहति ॥ ३१/२ ॥ दक्षिणकरे ॥

३ ॐ एतावानस्य महिमातो ज्यायाँश्च पूरुषः॥ पादोऽस्य विश्वा-
भूतानि त्रिपादस्यामृतन्दिवि ॥३१/३॥ वामपादे ॥

४ ॐ त्रिपादूर्ध्वऽउदैत्पुरुषः पादोऽस्येहाभवत्पुनः ॥ ततो विष्वु-
ङ्व्यक्रामत्साशनानशनेऽअभि ॥ ३१/४ ॥ दक्षिणपादे ॥

५ ॐ ततो विराडजायत विराजोऽअधिपूरुषः ॥ सजातोऽअत्य-
रिच्यतपश्चाद्भूमिमथो पुरः ॥ ३१/५ ॥ वामजानौ ॥

६ ॐ तस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृषदाज्यम् ॥ पशूँस्ताँश्चक्रे
वायव्या नारण्याग्राम्याश्च ये ॥३१/६॥ दक्षिणजानौ ॥

७ ॐ तस्माद्यज्ञात्सर्वहुतऽ ऋचः सामानि जज्ञिरे ॥ छन्दाꣳसि
जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ३१/७ ॥ वामकट्याम् ॥

८ ॐ तस्मादश्वाऽअजायन्त ये केचोभयादतः॥ गावो ह जज्ञिरे
तस्मात्तस्माज्जाताऽअजावयः ॥३१/८॥ दक्षिणकट्याम् ॥

९ ॐ तँय्यज्ञम्बर्हिषिप्रौक्षन्पुरुषञ्जातमग्रतः॥ तेन देवाऽ अय-
जन्त साध्याऽऋषयश्च ये ॥३१/९॥ नाभौ ॥

१० ॐ यत्पुरुषं व्यदधुः कतिधाव्यकल्पयन् ॥ मुखङ्किमस्यासी-
त्किम्बाहू किमूरूपादाऽउच्येते ॥३१/१०॥ हृदये ॥

११ ॐ ब्राह्मणोस्य मुखमासीद्बाहूराजन्यः कृतः ॥ ऊरू तदस्य
यद्वैश्यः पद्भ्याꣳशूद्रो ऽअजायत ॥३१/११॥ वामकुक्षौ ॥

१२ ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्यो ऽअजायत ॥ श्रोत्राद्वा-युश्च प्राणश्च मुखादग्निरजायत ॥१२॥ दक्षिणकुक्षौ ॥

१३ ॐ नाभ्याऽआसीदन्तरिक्षᳬ शीर्ष्णो द्यौः समवर्त्तत ॥ पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ऽअकल्पयन् ॥१३॥ कण्ठे ॥

१४ ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत ॥ वसन्तोऽस्यासी-दाज्यङ्ग्रीष्मऽइध्मः शरद्धविः ॥१४॥ वक्त्रे ॥

१५ ॐसप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः॥ देवा यद्य-ज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥१५॥ अक्ष्णोः ॥

१६ ॐयज्ञेनयज्ञमयजन्तदेवास्तानि धर्म्माणि प्रथमान्यासन्॥ ते ह नाकम्महिमानः सचन्त यत्र पूर्वे साध्याः सन्तिदेवाः॥१६॥ मूर्ध्नि॥

एवं देहन्यासान्कृत्वा पुष्पेण देवं स्पृष्ट्वा देवन्यासान्कुर्यात् ॥

षोडशाङ्गदेवन्यासाः—१ सहस्रशीर्षा० २ पुरुषए० ३ एतावा-नस्य० ४ त्रिपादूर्ध्व० ५ ततो विराड० ६ तस्माद्यज्ञात्स० ७ तस्मा-द्यज्ञात्सर्वहुतऽऋचः० ८ तस्मादश्वा० ९ तंयज्ञम्ब० १० यत्पुरुषं व्य० ११ ब्राह्मणो० १२ चन्द्रमा मनसो० १३ नाभ्या० १४ यत्पुरुषेण० १५ सप्तास्या० १६ यज्ञेन यज्ञ० ॥ एवं षोडशाङ्गेषु देवन्यासान्कृत्वा षोडशोपचारपूजां समारभेत् ।

---

१ षोडशोपचारपूजाक्रम.—१ सहस्रशीर्षेत्यावाहनम्॥ २पुरुषऽएवेत्यासनम्॥ ३ एतावानस्येति पाद्यम्॥ ४त्रिपादूर्ध्वमित्यर्घ्यम्॥ ५ततो विराडजायतेत्याचमनम्॥ ६ तस्माद्यज्ञादिति स्नानम् ॥ ७ तस्माद्यज्ञात्सर्वहुतऽऋच. इति वस्त्रम् ॥ ८ तस्मादश्वा इति यज्ञोपवीतम्॥ ९ तं यज्ञमिति गन्धम्॥ १० यत्पुरुषमिति पुष्पम् ॥ ११ ब्राह्मणोस्येति धूपम् ॥ १२ चन्द्रमामनस इति दीपम् ॥ १३ नाभ्या आसीदिति नैवेद्यम् ॥ १४ यत्पुरुषेणेति दक्षिणायुकताम्बूलम् ॥ १५ सप्तास्यासन्निति प्रदक्षिणा ॥ १६ यज्ञेन यज्ञमिति मंत्रपुष्पयुक्तो नमस्कारः॥

ध्यानम्–ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्य पाᳫंसुरे स्वाहा ॥५॥ विष्णवे नमः ध्यायामि ॥

आवाहनम्–ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ विष्णवे नमः आवाहयामि ॥

आसनम्–ॐ पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ विष्णवे नमः आसनं समर्पयामि ॥

पाद्यम्–ॐ एतावानस्य महिमातो ज्यायाँश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ विष्णवे नमः पाद्यं समर्पयामि॥

अर्घ्यम्–ॐ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः । ततो विष्वङ् व्यक्रामत्साशनानशने अभि॥ विष्णवे नमः अर्घ्यं समर्पयामि॥

आचमनीयम्–ॐ ततो विराडजायत विराजो अधिपूरुषः। स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥ विष्णवे नमः आचमनीयं समर्पयामि॥

स्नानम्–ॐ तस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृषदाज्यम्। पशूँस्ताँश्चक्रे वायव्या नारण्या ग्राम्याश्च ये ॥ विष्णवे नमः स्नानं समर्पयामि ॥

वस्त्रम्–ॐ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छन्दाᳫंसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ विष्णवे नमः वस्त्रं समर्पयामि ॥

यज्ञोपवीतम्–ॐ तस्मादश्वा अजायन्त ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥ विष्णवे नमः यज्ञोपवीतं स०॥

चन्दनम्–ॐ तं यज्ञम्बर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः । तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ विष्णवे नमः चन्दनं समर्पयामि ॥

पुष्पाणि–ॐ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किमस्यासीत्किम्बाहू किमूरूपादा उच्येते ॥ विष्णवे नमः पुष्पाणि समर्पयामि ॥

धूपम्–ॐ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरूतदस्य यद्वैश्यः पद्भ्याᳫं शूद्रो अजायत॥ विष्णवे नमः धूपमाघ्रापयामि॥

दीपम्—ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽ अजायत। श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥ विष्णवे नमः दीपं दर्शयामि ॥

नैवेद्यम्—ॐ नाभ्याऽ आसीदन्तरिक्षः शीर्ष्णो द्यौः समवर्त्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ऽ अकल्पयन् ॥ विष्णवे नमः नैवेद्यं समर्पयामि ॥ नैवेद्यान्ते आचमनीयं समर्पयामि ॥

दक्षिणायुक्तताम्बूलम्—ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत। वसन्तोस्यासीदाज्यं ग्रीष्मऽइध्मः शरद्धविः ॥ विष्णवे नमः दक्षिणायुक्तताम्बूलं समर्पयामि ॥

आरार्तिकपूर्वकप्रदक्षिणा—ॐ सप्तास्यासन् परिधयस्त्रिः सप्तसमिधः कृताः। देवा यद्यज्ञन्तन्वानाऽ अबध्नन्पुरुषं पशुम्॥ विष्णवे नमः आरार्तिकपूर्वकप्रदक्षिणां समर्पयामि ॥

मन्त्रपुष्पपूर्वकनमस्कारः—ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ विष्णवे नमः मन्त्रपुष्पपूर्वकनमस्कारं समर्पयामि ॥ अनेन षोडशोपचारैः कृतेन पूजनेन भगवान् महाविष्णुः प्रीयताम् ॥

ततः क्लिन्नवासाः पर्षदं प्रदक्षिणीकृत्य हृदयेन दूयमानो धरण्यां साष्टाङ्गं प्रणमेत्॥ तत अग्रत उपविष्टं तं वृद्धाः पृच्छन्ति। किं ते कार्यं यदस्माकं किं वा मृगयसे द्विज ॥ तस्मात्तो ब्रूहि तत्सर्वं सत्यं हि गतिरात्मनः॥१॥ अस्माकं चैव सर्वेषां सत्यमेव परं वलम्॥ यदि चेद्रक्ष्यसे नित्यं नियतं प्राप्स्यसे शुभम् ॥ २ ॥ यथागतोस्यसत्येन न त्वं शुद्ध्यसि कर्हिचित् ॥ एवं तैः समनुज्ञातः सर्वं ब्रूयादशेषतः ॥ ३ ॥

ब्राह्मणानामग्रे प्रार्थना—समस्तसंपत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः॥अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः॥१॥

आपद्घनध्वान्तसहस्रभानवः समीहितार्थार्पणकामधेनवः। समस्ततीर्थाम्बुपवित्रमूर्तयो रक्षंतु मां ब्राह्मणपादपांसवः॥२॥विप्रौघदर्शनाच्छीघ्रं क्षीयन्ते पापराशयः। वन्दनान्मंगलावाप्तिरर्चनादच्युतं पदम् ॥ ३ ॥ आधिव्याधिहरन्नॄणां मृत्युदारिद्र्यनाशनम्। श्रीपुष्टिकीर्तिदं वन्दे विप्रश्रीपादपङ्कजम् ॥ ४ ॥ ततो विप्रैः "किं ते कार्यं ? मिथ्या मा वादीः सत्यमेव वद" इति पृष्टेन प्रायश्चित्तिना प्रत्येकं प्रत्याम्नायत्वेन यथाशक्ति स्वर्णरूप्ययोर्निष्कं तदर्धं वा पर्षत्पुरतो निधाय तत् करिष्यमाणप्रायश्चित्ताङ्गत्वेन इदं गोवृषनिष्क्रयद्रव्यं सभ्येभ्यो दातुमहमुत्सृजे न ममेति संकल्पपूर्वकं सभ्येभ्यो देयम्। ततः अमुकगोत्रस्य अमुकनाम्नो मम जन्मप्रभृति अद्ययावत् ज्ञाताज्ञातकामाकामसकृदसकृत्कृतकायिकवाचिकमा-

१ सुवर्णमाननिर्णयः—गुंजाकृष्णलशब्दौ पर्यायवाचकौ तत्र पंचगुंजापरिमितः स्वर्णमाषः। ते षोडशमाषाः अक्षशब्देन सुवर्णशब्देन कर्षशब्देन चोच्यन्ते ॥ सुवर्णाश्चत्वारः पलं निष्कश्चोच्यन्ते ॥ २ रजतो माननिर्णयः—द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते ॥ शतमानं तु दशभिर्धरणैः पलमेव तु ॥ १ ॥ निष्कं सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः ॥ शतमानपलशब्दौ पर्यायौ ॥ निष्कं सुवर्णाश्चत्वार इति ॥ ३ अत्र च—पापं विलापयन् पापी दत्वा धेनुं तथा वृषमिति पराशरवचनात् सति संभवे प्रत्यक्षमेव गोवृषयोर्दानं प्रतीयते तथापि निष्क्रयेणैव तद्दानम्। बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः ॥ विभक्तदक्षिणा ह्येता दातारं तारयंति हि ॥ इत्यंगिरसा बहुभ्यः प्रत्यक्षैकगोदानस्य प्रतिषिद्धत्वात् ॥ इदं च गोवृषदानमेकप्राजापत्यकृच्छ्ररूपप्रायश्चित्तदाने ज्ञेयम्, पादतो ह्रासे तु विष्णुः—पादव्रते वस्त्रदानं कृच्छ्रार्द्धे तिलकांचनम्। पादहीने तु गामेकां कृच्छ्रे गोमिथुनं स्मृतमिति ॥ अतएव महापातकादिष्वाधिक्यं कल्प्यमिति मिताक्षरायाम्। अनयैव शक्त्याद्यपेक्षया दक्षिणाधिक्यमिति महार्णवे ॥

सर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघु-गुरुसूक्ष्मपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणप्रकीर्णपातकानां मध्ये संभावितानां महापातकव्यतिरिक्तानां पापानां निरासार्थमनुग्रहं कृत्वा मह्यं प्रायश्चित्तमुपदिशन्तु भवन्तः इति प्राय-श्चित्ती सभ्यान् प्रार्थयेत् । उपदिशाम इति सभ्या वदेयुः ॥

ततः पुनः प्रार्थना—आब्रह्मस्तम्बपर्यन्तं भवद्वशमिदं जगत् । यक्ष-रक्षःपिशाचादि सदेवासुरमानुषम् ॥ १ ॥ सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः । मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः ॥२॥ मया कृतं महाघोरं ज्ञातमज्ञातकिल्बिषम् । प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छत ॥ पूज्यैः कृतपवित्रोऽहं भवेयं द्विजसत्तमैः ॥३॥ इति प्रार्थ-यित्वा मामनुगृह्णन्तु भवन्त इति प्रणमेत् ।

ततस्तैः प्रायश्चित्तस्वरूपं यत्र यथोचितं धर्मशास्त्रानुसारेण विचार्य तस्य यथाशक्तिशरीरद्रव्यादिशक्त्युत्तममध्यमाधमादिपक्षांश्च विचार्या-स्मिन्पक्षेऽयं समर्थ इति मत्वाम्नायांश्च निश्चित्य तैरुपदिष्टः कर्ता चन्दनपुष्पादिभिः पुस्तके सरस्वतीपूजामनुवादकपूजां च कृत्वा निबंधपूजात्वेन किंचित् यथाशक्ति द्रव्यं निधायानुवादकाय भृतिरूपां

१ तत्र शक्तस्यामात्र द्विगुण त्रिगुण चतुर्गुणसभवे द्विगुण द्रव्यमित्यादि योज्यम् ॥ निष्कश्च लोकशास्त्रयोरेकनाक्त्मतया माषाश्चत्वारिंशत् ॥ तदर्धं त्रिंशति तदर्धं दशमुख्यं सुवर्णं तदशक्तो तावद् रजत माह्यम् ॥ चान्द्रायणस्याष्टौ प्राजा-पत्याः । मृगारेष्टिर्वा, पवित्रेष्टिर्वा मित्रविंदा पशुर्वा तिलहोमायुतं वा पराकद्वयं लक्षसङ्ख्याकगायत्रीजपो वा चान्द्रायणप्रत्याम्नायाः॥ पराकतप्तकृच्छ्राणां तु प्रत्येकं त्रयः प्राजापत्याः प्रत्याम्नायः ॥ २ प्रायश्चित्तं ॥ निर्दिश्य कथं पापा प्रमुच्यते ॥ यत्पवित्रं विजानीयात् जपेद्वा वेदमातरम्॥ इति हारीतवचने दोषश्रवणात् पर्षद्-न्तर्गतोऽन्य एव भृतिदानेनानुवादकः कल्पनीयः ॥

दक्षिणां पापानुसारेण दद्यात् । ततः सभ्याः पुस्तकवाचनपूर्वकं प्रायश्चित्तस्वरूपमनुवादकस्याग्रे कथयेयुः। अनुवादकश्च कर्तारं प्रति वदेत्। तद्यथा—'शृणुष्व भो सभ्यैस्तवादिश्यते व्रतं यत्नेन कर्तव्यम् अन्यथा तद्वृथा भवेदि'ति । ततः सभ्यैरुपादिष्टोऽनुवादकः 'अमुकस्य ते जन्मप्रभृति अद्य यावत् ज्ञाताज्ञातकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकगुरुलघुसूक्ष्मपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणप्रकीर्णपातकानांमध्ये संभावितानां महापातकव्यतिरिक्तानां पापानां निरासार्थं पर्षदुपदिष्टं सार्धाब्दादिप्रायश्चित्तं अमुकप्रत्याम्नायद्वारा प्राच्योदीच्याङ्गसहितं त्वया आचरितव्यं तेन तव शुद्धिर्भविष्यतीत्यतस्त्वं सर्वेभ्यः पातकेभ्यः कृतार्थो भविष्यसि ।' इति निरुपदिशेत् । कर्ता 'भवदनुग्रहः ॐमि'ति तदङ्गीकृत्य प्रणम्य पर्षदं विसृजेत् । ( तद्दिने तत्कालमेव प्रायश्चित्ते पर्षदो न विसर्जनम् ॥ शूद्रस्त्रियौ तु स्वीकरोमि इत्युक्त्वा नमस्कृत्य तां विसृजेत् । अब्दादावब्दम् । आम्नायश्च अयुतां गायत्रीं जपेत् । गायत्र्या तिलहोमसहस्राणि वा द्वादशब्राह्मणभोजनं वा एतत्सर्वमाब्दिकम् । )

ततः तद्दिने पूर्वदिने वा कस्यांचिद्रिक्तायां तिथौ कृतमाध्याह्निकः प्रायश्चित्ती सायाह्ने गङ्गादौ तीर्थे गृहे वा देशकालौ निर्दिश्यामुकशर्मणो मम जन्मप्रभृत्यद्ययावत् ज्ञाताज्ञातकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकगुरुलघुस्थूलसूक्ष्मपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणप्रकीर्णपातकानां मध्ये संभावितानां महापातक-

व्यतिरिक्तानां पापानां निरासार्थं होमात्मकमहारुद्रकर्माधिकारार्थं च श्रीपरमेश्वरमहारुद्रप्रीत्यर्थं प्रायश्चित्तं प्राच्योदीच्याङ्गसहितमसुकमत्या-म्नायेनाहमाचरिष्ये। तथा वपनदंतधावनदशविधिस्नानानि च करिष्ये। इति संकल्पयेत् ॥

ततः शिरसि हस्तं निधाय। आत्मनो बुद्धिकामो वा पितॄणां तृप्ति-हेतवे। वपनं कारयिष्यामि तीरेऽहं तव जाह्नवि ॥ १ ॥ यानि कानि च पापानि ब्रह्महत्यासमानि च। केशानाश्रित्य तिष्ठंति तस्मात्केशान्वपा-म्यहम् ॥ २ ॥ महापापोपपापाभ्यां केशलोमनखादिना। क्षुरादिच्छिन्न-सर्वांगास्ते मे दोषाः पतन्त्वधः ॥३॥ इति मंत्रान् पठित्वा। शिखाक-क्षोपस्थवर्जनखलोमकेशानां दैवक्रमेणोदक्संस्थं वपनं श्मश्रूपपक्षके-

१ विष्णुयागे श्रीविष्णुयागकर्माधिकारार्थं श्रीपरमेश्वरमहाविष्णुप्रीत्यर्थं तथा च शतचण्ड्यादौ शतचण्ड्यादिकर्माधिकारसिद्ध्यर्थं श्रीमहाकाल्यादिदेवता प्रीत्यर्थम् इत्याद्यूहः कार्यः। २ अथवा मानुषक्रमेणोपपक्षश्मश्रू सपक्षौ वापयित्वा वामौ वाप्यौ॥ शिरसि शिखामादिं कृत्वाऽप्रस्तात्सर्वतो वापयेन्नोदक्संस्थम्। यतिशूद्रविधवादीनां सशिखं वपनम्। यत्र गोब्रह्महत्यादिपापेष्वपि सशिखं सर्वांगलोम्ना च तत्र प्रायश्चित्ते शिखासहितमविशेषवचनात्। सधवाना द्व्यंगुलं त्र्यगुलं वा क्षुरेण केशाग्रच्छेदनम्। यत्र तु सभर्तृकस्त्रिया जीवत्पितृकादे राजादीनामिच्छया वपना-भावः तत्र सार्द्धाब्दादि द्विगुणव्रतं पर्षद्दक्षिणा च द्विगुणा। तदुक्तं हेमाद्रिखंडे—प्रेतकृत्ये राजदंडे वपनं केशपूर्वकम्॥ अग्निहोत्रे च तीर्थे च वपनं श्मश्रुपूर्वकम्। ब्रह्महत्यादिपापेषु सशिखं वपनं स्मृतम्। वपनाभावे द्विगुणव्रतदक्षिणयोश्च ग्रहणं तत्र प्रमाणमाम्लेपः॥ राजा वा राजपुत्रो वा ब्राह्मणो वा विशेषतः॥ केशाना रक्षणार्थाय छेदयेदंगुलद्वयम्। प्रमादाच्छिखावपने कुशमयशिखा ब्रह्मग्रंथियुता दक्षिणकर्णे निदध्यादिति काटके॥ शिखां छिन्दन्ति ये मोहाद्द्वेषादज्ञानतोऽपि वा॥ पुनः संस्कारमर्हंति त्रयो वर्णा द्विजातयः। इति गृह्याग्निसागरे॥

शांश्च वापयेत् ॥ ततः क्षौरनिमित्तं शीतोदकेन स्नानं करिष्ये । इति संकल्पपूर्वकं स्नात्वाऽऽचमनम्। (अत्र वपनाङ्गं स्नानं शीतोदकेन कार्यमित्युक्तं रुद्रकल्पद्रुमे।।) ततो गंडूषान् कृत्वा अपामार्गस्य औदुंबरस्य वा दन्तकाष्ठं गृहीत्वा–आयुर्बलं यशोवर्चः प्रजाः पशून्वसूनि च ॥ ब्रह्म प्रज्ञां च मेधां च तन्नो देहि वनस्पते।।इति मंत्रेणाभिमंत्र्य द्विजानां द्वादशाङ्गुलप्रमाणेन स्त्रीशूद्रादिनां मुष्टिप्रमाणेनापामार्गादिदंतकाष्ठेन प्राङ्मुखः सन्–ॐ अन्नाद्याय व्यूहध्वᳬ सोमो राजाय मागमत् । स मे मुखं प्रमाक्ष्यते यशसा च भगेन च ॥ इति मंत्रेण काष्ठाग्रं किंचिद्भक्षयित्वा–मुखदौर्गंध्यनाशाय दंतानां च विशुद्धये । ष्ठीवनाय च गात्राणां कुर्वेऽहं दंतधावनम् । इति मंत्रेण दंतान्धावयित्वा काष्ठान्तरेण जिह्वामुल्लिख्य काष्ठद्वयमपि प्रक्षाल्य किंचित् भग्नं कृत्वा वामभागे निक्षिपेत् । ततो जलाशयं गत्वाऽप्सु निमज्याचम्य भस्मादिदशविधस्नानानि कुर्वीत । यथा–देशकालौ संकीर्त्य करिष्यमाणप्रायश्चित्ताङ्गत्वेन भस्मादिभिर्दशविधस्नानानि करिष्ये इति संकल्प्य आदौ (१) भस्मस्नानं कुर्यात् । (नर्यसंभवस्य गृह्याग्निसंभवस्य वा भस्मनो ग्रहणम् ।) तद्यथा–ॐईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् । इति शिरसि ॥ ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् । इति मुखे ॥ ॐअघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः । इति हृदये ॥ ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः

सर्वभूतदमनाय नमो मनोन्मनाय नमः। इति गुह्ये॥ ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवेभवे नातिभवे भवस्व मां भवोद्भवाय नमः। इति पादयोः॥ ॐ इति प्रणवेन सर्वाङ्गेषु। पुराणमंत्रो यथा— यथाग्निर्दहते भस्मतृणकाष्ठादिसंचयम्। तथा मे दहतां पापं कुरु भस्म शुचे शुचिम्॥ आचमनम्॥ इति भस्मस्नानम्। ततः (२) गोमय-स्नानम्। मानस्तोकेति गंधद्वारामिति वा। (आवर्गोभिरुत्सृष्टस्य गो-मयस्यान्तरिक्षस्थस्य ग्रहणं भूमिस्थं चेदुपर्यधश्च सन्त्यज्य मध्यस्थस्य संग्रहणम्।) गोमयं गृहीत्वा। पुराणोक्तमंत्रः—अग्रमग्रं चरंतीनामो-षधीनां रसं वने। तासामृषभपत्नीनां पवित्रं कायशोधनम्। यन्मे रोगांश्च शोकांश्च तन्मे दहतु गोमय। इत्यनेन चाभंत्र्य सूर्याय प्रदर्श्य। ॐ मानस्तोके तनये मा नऽ आयुषि मानो गोषु मानोऽअश्वेषु रीरिषः। मानो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे॥ १६॥ इत्यनेन मंत्रेण गन्धद्वारा दुराधर्षां नित्यपुष्टां करी-षिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥ इति मंत्रेण वा गोमयेन दक्षिणहस्तगृहीतेन शिरसि तूष्णीं सकृदनुलिप्य द्विर्नाभेरुप-रितनेष्वंगेष्वनुलिप्य वामकरेण नाभेरधस्तादापादं त्रिरनुलिंपेत्॥ ततः (३) मृत्तिकास्नानम्॥ भूमिं प्रार्थ्य। ॐ मायोरिपत्खनिता यस्मै चाहं खनामि वः। द्विपाच्चतुष्पादस्माकः सर्वमस्त्वनातुरम्॥ १०२॥ इति खनित्वा। ॐ स्योना पृथिवि नो भवान्नृक्षरा निवेशनी। यच्छा-नः शर्म्म सप्रथाः॥ १३॥ इति मृदमादाय॥ ॐ नमो मित्रस्य वरु-णस्य चक्षसे महो देवाय तदृतः सपर्यत। दूरे दृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शःसत॥ ३५॥ इति सूर्याय प्रदर्शयित्वा।

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ इत्यभिमन्त्र्य ॥ ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहा॥ ॥ इत्यनेन च पुराणोक्त-मंत्राः—अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे । मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिवन्दिता ॥१॥ मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् । मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ॥ २ ॥ त्वया हतेन पापेन जीवामि शरदां शतम् ॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना । शिरसा धारयिष्यामि रक्ष त्वं मां पदे पदे ॥३॥ (इति दक्षिणहस्तगृहीतया मृदा शिरस्तो नाभिपर्यन्तानां वामहस्तगृहीतया नाभितः पादपर्यन्तानाम् अङ्गानाम् आलेपनम् ॥ ) इति सर्वाङ्गे गोमयवद् मृत्तिकामनुलिंपेत् । ततः ॐआपोहिष्ठेति तिसृभिः सूर्याभिमुखेन आपो अस्मान् इदं विष्णुरिति मन्त्राभ्यां वा शुद्धोदकस्नानम् ॥ ॐ आपो हिष्ठा मयोभुवस्तानऽ ऊर्जे दधातन । महेरणाय चक्षसे ॥ ॥ ॐ योवः शिवतमो रसस्तस्य भाजयतेह नः॥उशतीरिव मातरः॥ ॥ ॐ तस्माऽअरंगमामवो यस्य क्षयाय जिन्वथ॥ आपो जनयथा च नः ॥ ॥ ॐआपोऽ अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वꣳ हि रिप्रम्प्रवहन्ति देवीरुदिदाभ्यःशुचिरापूत ऽएमि ॥ ॥ ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्॥ समूढमस्य पाꣳसुरे स्वाहा ॥ ॥ विष्णुपादाग्रसंभूते गङ्गे त्रिपथगामिनि । धर्मद्रवेति विख्याता पापं मे हर जाह्नवि। सरस्वत्यादिनद्यम्बुपानं वै पापनाशनम्। शरीरस्य विशुद्ध्यर्थं स्नानानि व्रतशुद्धये । इति शुद्धोदकेन स्नायात् ॥ ततः (४) पञ्चगव्यस्नानम् । तत्र गायत्र्या गोमूत्रस्नानम्—ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ ॥

गोशरीरात्समुद्भूतं पवित्रं क्लेशनाशनम् ॥ स्नानार्थं प्रतिगृह्णामि गोमूत्रं मलनाशनम् ॥ ततः गोमयस्नानम् ॥ ( प्रातर्गोभिरुत्सृष्टगोमयस्यान्तरिक्षस्थस्य ग्रहणम् । भूमिष्ठं चेदुपर्यधश्च संत्यज्य मध्यस्थस्य ग्रहणम् ।) ॐ मानस्तोके तनये मानऽ आयुषि मानो गोषु मानोऽ अश्वेषु रीरिषः। मानो वीरान्रुद्रभामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ ६/१६ ॥ ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ गोमये वसते लक्ष्मीः पवित्रं सर्वमङ्गलम् । स्नानार्थं संस्कृतं शुद्धं पापं मे हर गोमय ॥ इत्यनेन गोमयेन पूर्ववत् सर्वाङ्गान्यनुलिप्य स्नायात् ॥ ततः पयःस्नानम् । ॐ आप्यायस्व स मे तु ते विश्वतः सोम वृष्ण्यम् ॥ भवा वाजस्य संगथे ॥ ११२/१२ ॥ पयोमिष्टं पुष्टिदं च सौरभेयं सुनिर्मलम् । शरीरस्य विशुद्ध्यर्थमघौघस्य प्रणाशकम् ॥ ततः दधिस्नानम् । ॐ दधिक्राव्णोऽ अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभिनोमुखाकरत्प्रणऽ आयूꣳषि तारिषत् ॥ ३२/२३ ॥ दुग्धसार तु माङ्गल्यं चन्द्रकान्तिसमं शुभम् । दधिसर्वगुणोपेतं स्नानार्थं गृह्यते मया ॥ इति दध्ना मूर्धादिपादान्तान्यङ्गान्यनुलिप्य स्नायात् । ततः घृतस्नानम् ॥ तेजोऽसीति घृतं मिमिक्षे इत्यनेन वा । ॐ तेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियन्देवानामनाधृष्टन्देवयजनमसि ॥ ३१ ॥ ॐ घृतम्मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम । अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥ ६/१७ ॥ पयसा मन्थितं हव्यं श्लक्ष्णं तेजोविवर्धकम् । सर्वकल्मषनाशाय स्नापयामि हितकाम्यया ॥ इति पंचगव्यस्नानानि ॥ ततो (५) गोरजःस्नानम्— ॐ [illegible] । पितरश्च प्रयन्त्स्व— ॥ ६/३ [illegible] म् ॥ शिरसा तेन सल्लेपो

महापातकनाशनम् ॥ ततो ( ६ ) धान्यस्नानम्—ॐ धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा ॥ दीर्घामनु प्रसितिमायुषे धान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनाम्पयोसि॥ २० ॥ धान्यौषधी मनुष्याणां जीवनं परमं स्मृतम्॥ तेन स्नानेन देवेश मम पापं व्यपोहतु॥ततः (७) फलस्नानम्—ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः॥ ८९ ॥वनस्पतिरसो दिव्यः फलपुष्पहृतः सदा॥ तेन स्नानेन मे देव-फलं लब्धमनंतकम्॥ ततः (८) सर्वौषधीस्नानम्—ॐ ओषधयः समवदन्त सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस्तं राजन्पारयामसि॥ ९६ ॥ औषध्यः सर्ववृक्षाणां तृणगुल्मलतास्तु याः ॥ दूर्वासर्षपसंयुक्ताः सर्वौषध्यः पुनन्तु माम् ॥ ततः (९) कुशोदकस्नानम्—देवस्य त्वेति मंत्रत्रयेणापोहिष्ठेति तिसृभिर्ऋग्भिः पुनन्तु मेति नवभिः पावमानीभिश्च कुशैर्मार्जयेत् ॥ ॐ देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम्॥ सरस्वत्यै वाचो यन्तुर्यन्त्रिये दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ ॥ ३० ॥ ॐ देवस्य त्वा० । सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि॥ ३२ ॥ ॐ देवस्य त्वा०। अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेभिषिञ्चामि ॥ ३/२० ॥ ॐ आपोहिष्ठामयोभुवस्तान ऊर्जे दधातन ॥ महेरणाय चक्षसे ॥ ३६ ॥ ॐ योवः शिवतमो रसस्तस्य भाजयतेह नः ॥ उशतीरिव मातरः ॥ ३६ ॥ ॐ तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च नः ॥ ३६ ॥

ॐपुनन्तु मा पितरः सोम्म्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा ॥ ३४ ॥ पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै॥३५॥ ॐ अग्नऽआयूंषि पवसऽआसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम्॥३६॥ ॐपुनन्तु मा देवजनाः पुनन्तु मनसा धियः । पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥३७॥ ॐपवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् ॥ अग्ने क्रत्वा क्रतूँ२ऽरनु ॥३८॥ ॐयत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ॥ ब्रह्म तेन पुनातु मा ॥३९॥ ॐपवमानः सोऽअद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु मा ॥४०॥ ॐउभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः॥४१॥ ॐवैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः। तया मदन्तः सधमादेषु वयꣳ स्याम पतयो रयीणाम् ॥४२॥ विष्णुदेहसमुत्पन्ना ब्रह्मणा स्वकरे धृता ॥ तत्संलग्नकुशाग्रेस्तैर्जलैः स्नास्यामि शुद्धये ॥ १ ॥ मच्छरीरं पावयन्ति निर्मलानि जलानि वै । आपः शुद्धा ब्रह्मरूपा रुद्ररूपाः समीहिताः॥२॥ मां पुनंतु च पापेभ्यो मत्कृतेभ्यो द्विजोत्तम । अभिषिञ्चामि शुद्ध्यर्थं शरीरं दुःखभाजनम्॥३॥ कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः॥ कुशाग्रे शंकरो देवस्तेन नश्यतु पातकम् ॥ ४ ॥ ततो (१०) हिरण्यस्नानम्—ॐआकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यं च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥४३॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः। अनंतपुण्यफलदमतः शान्तिं प्रयच्छ मे॥ इति दशविधस्नानानि ॥

---

१ एतानि दशस्नानान्यमंत्रकाण्येवेत्युक्तं महार्णवे ॥ स्त्रीशूद्राणां त्वमंत्रकाण्येव॥ ततो हेमाद्रिकृतस्नानसंकल्पपूर्वकं नित्यस्नानविधिना स्नानं केचिदाचरन्ति तत् कर्तव्यं चेत् प्रायश्चित्तप्रयोगान्ते १९ तमे पृष्ठे द्रष्टव्यम् ॥

ततः ॐ नमो नारायणायेति जलमध्ये चतुरस्रं तीर्थं प्रकल्प्य शिखां विमुच्य केशान् द्विधा कृत्वाऽङ्गुलिभिः श्रोत्रदृङ्नासिकामुखं पिधायेदं विष्णुरितिमंत्रेण नमो नारायणायेति वा विष्णुं संपूज्य नद्यां प्रवाहाभिमुखोऽन्यत्र सूर्याभिमुखो निमज्जेत् । एवं त्रिःषड्द्वादश वा कृत्वा शक्त्या वा निमज्य पुनर्जले निमग्नः सन् ऋतं च सत्यंचेति सूत्रस्य त्रिः सकृद्वा जपेनाघमर्षणं विदध्यात् । यथा—ॐ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रोऽ अर्णवः । समुद्रादर्णवादधिसंवत्सरोऽअजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी । सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥ (स्त्रीशूद्राघमर्षणे तु नमो भगवते वासुदेवाय इति वारत्रयं पठेत् । परमात्मानं भगवन्तं विचिंतयन्नघमर्षणं कुर्यात् इति सांप्रदायिकाः॥) ततः स्नानाङ्गतर्पणम् । देवतीर्थेन ॐभूर्देवांस्तर्पयामि । ॐभुवर्देवांस्तर्पयामि । ॐस्वर्देवांस्तर्पयामि । ॐभूर्भुवः स्वर्देवांस्तर्पयामि । ततः कंठं कृत्वा मनुष्यतीर्थेन । ॐभूरृषींस्तर्पयामि । ॐभुवऋर्षींस्तर्पयामि । ॐस्वरृषींस्तर्पयामि । ॐभूर्भुवः स्वरृषींस्तर्पयामि ॥ अपसव्यं कृत्वा पितृतीर्थेन । ॐभूः पितॄंस्तर्पयामि । ॐभुवः पितॄंस्तर्पयामि । ॐस्वः पितॄंस्तर्पयामि । ॐभूर्भुवः स्वः पितॄंस्तर्पयामि । तत्र सव्येन । ब्रह्मादयो देवास्तृप्यन्तु । कंठं कृत्वा । कृष्णद्वैपायनादय ऋषयस्तृप्यन्तु । अपसव्यम् । कव्यवाहनादयो दिव्यपितरस्तृप्यन्तु । एतावत्तर्पणं जीवत्पितृकाणाम् । मृतपितृकाणां तु अमुकगोत्रा अस्मत्सर्वे पित्रादयस्तृप्यन्तु इति विशेषः । ततः यन्मया दूषितं तोयं शरीरमलसंभवम् । तस्य पापस्य शुद्ध्यर्थं यक्ष्माणं तर्पयाम्यहम् इति यक्ष्माणं

तर्पयेत् । अत्र केचिन्नित्यविधिवत् स्नानमिच्छन्ति हेमाद्रिप्रयोगं पठन्ति च । एवं स्नात्वा ततो जलादुत्तक्रम्यापोऽस्मानिति जपेत् । ॐ आपो अस्मान्० ॥ तत्र वरुणाय नमः इति जपेत् । ततो यज्ञोपवीत्याचम्य यथोक्ते धौते वाससी परिधाय मृदोरुकरौ प्रक्षाल्याचम्य विधिवद्वर्णक्रमेणोर्द्ध्वपुंड्रं त्रिपुण्ड्रमर्धचंद्रं वृत्तं वा तिलकं विदध्यात् । ततस्तीर्थपात्रजलैः प्रपूर्य गृहमागत्य अर्घ्यकैर्युग्मैर्द्विजैरावाहनाग्नौकरणविकिरावनेजनपिंडदानाक्षय्योदकस्वधावाचनरहितं पार्वणं विष्णुश्राद्धं कुर्यात् ॥ तत्रादौ अत्रावसरे वा प्रायश्चित्तान्ते केचिन्नूतनयज्ञोपवीतमपि धारयन्ति॥

अथ प्रायश्चित्ताङ्गं वैष्णवंश्राद्धम् । तत्रादौ देशकालौ संकीर्त्य प्रायश्चित्ताङ्गकरिष्यमाणविष्णुश्राद्धाङ्गत्वेन श्रीविष्णोः पूजनमहं करिष्ये ।

---

१ नित्यस्नानविधिप्रयोगो हेमाद्रिस्नानसंकल्पपूर्वको यदि कर्तव्यश्चेत्तदा प्रायश्चित्तप्रयोगस्यान्तिमे १९ तमे पृष्ठे द्रष्टव्यः ।

यत्रैतत्स्नानं गृहे भवति तत्रैतावत्कर्म वर्ज्यम् । तत्राह यमः । नित्यं नैमित्तिकं चैव क्रियामंगलकर्षणम् । तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः ॥ परोदकैः शीतोदकैरित्यर्थः । तथा—गृहस्नाने न कुर्वीत मार्जनं चाघमर्षणम् । नान्तरा तर्पणं कुर्यात्पश्चादाचम्य शुध्यति ॥ गृहे स्नानं यदा कुर्याद् वस्त्रं मूर्ध्नि परित्यजेत् । अघश्चाग्रेण संपीड्य पाराशर्यवचो यथा ॥ पतिमतीस्त्रीविषये व्यासः—कुलस्त्री-सशिखं स्नायादुत्सवे सति तैलतः । वारे वा पैतृके कर्मण्यन्यदा कंठसंप्लवेति ॥

२ नित्यस्नानप्रयोगान्ते द्रष्टव्यम् ।

३ अथ प्रकारान्तरेण कृतकुशोपग्रहेण पार्वणेन विधिना विष्णुश्राद्धम् ॥ विष्णोर्देवतात्वेन श्रवणात्र पित्रादीनां देवतात्वम् ॥ साकल्यत्वाचार्घावाहनाग्नौकरण-विकिरणावनेजनपिण्डाक्षय्योदकस्वधावाचनानामभावः॥ अत्र सर्वे देवधर्माः ॥ अत्रैवं क्रमः । देशकालसंकीर्तनपूर्वकविष्णुश्राद्धाङ्गत्वेन श्रीविष्णोः पूजनं करिष्ये इति

इति संकल्प्य शालिग्रामशिलायां विष्णोः पूजनं कार्यम्॥तद्यथा–विष्णो एतत्ते पाद्यम् ॥ ॐशन्नो देवीरभिष्टयऽ आपो भवंतु पीतये ॥ शंय्यो-रभिस्रवंतु नः॥ ॥विष्णुपादयोः आपः सुआपः॥विष्णुपादयोः गंधः सुगंधः ॥ विष्णुपादयोः पुष्पं सुपुष्पम् ॥ अर्घः ॥ ॐसहस्रशीर्षा० ॥ विष्णुपादयोः एष पादार्घः संपद्यताम् ॥ अस्तु पादार्घः ॥ आचम्य ॥ इदं विष्णुरिति दिग्बंधः ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्य पांसुरे स्वाहा॥ ॥ विष्णुश्राद्धोपहाराणां पवित्रतास्तु ॥

---

संकल्प्य शालिग्रामशिलादौ यथोक्तविधिना पुरुषसूक्तेन षोडशोपचारैः श्रीविष्णोः पूजनं कार्यम्॥ ततः स्वागतम् वः सुस्वागतम् इति प्रश्नोत्तरपूर्वकं विप्रनिमंत्रणम्। तद्यथा–दैवे क्षणः क्रियता तथा प्राप्नोतु भवान्प्राप्नवानि॥ विष्णुश्राद्धे क्षणः क्रियतां तथा प्राप्नोतु भवान्प्राप्नवानीति निमंत्रणम् ॥ अक्रोधनैः० इति नियमश्रावणम् ॥ धूरिलोचनौ विश्वेदेवाः ॐ भूर्भुवः स्वः एतद्वः पाद्यं पादप्रक्षालनं गंधादिभिरर्चनम्॥ धूरिलोचनौ विश्वेदेवाः एष वोऽर्घः ॥ प्रद्युम्नसंकर्षणवासुदेवाः एतद्वः पाद्यं पाद-प्रक्षालनं गंधादिभिरर्चनम् । प्रद्युम्नसंकर्षणवासुदेवाः एष वोऽर्घः ॥ स्थलान्तरे स्वपादप्रक्षालनम् । एतदाचमनीयमित्युदकदानेन ब्राह्मणान्द्विराचम्य स्वस्यापि द्विराचमनम् ॥ ॐभूर्भुवः स्वः समाध्वमित्युक्त्वा दैवपूर्वं श्राद्धदेशे ब्राह्मणोपवे-शनम ॥ ॐइदं विष्णुरित्यावारादिग्बंधनम् ॥ विष्णुश्राद्धोपहाराः शुचयो भव-न्त्विति उपहारप्रोक्षणम् ॥ देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु ॥ अस्त्विति प्रत्युक्ते श्रीन्प्राणायामान्कृत्वा देशकालयोः संकीर्तनान्ते प्रायश्चित्ताङ्गविष्णुश्राद्धं करिष्ये इति संकल्पः । कुरुष्वेति प्रतिवचनम् । धूरिलोचनयोर्विश्वेषां देवानामिदमासन-मित्यासनं दत्वा हस्तप्रक्षालनार्थोदकदानपूर्वकमुपग्रहार्थं कुशादानम् । प्रद्युम्नसं-कर्षणवासुदेवानामेतदासनमित्यासनं दत्वा हस्तप्रक्षालनार्थोदकदानपूर्वकमुपग्रहार्थं कुशादानम् ॥ धूरिलोचनौ विश्वेदेवाः एतद्यथादत्तं गंधाद्यर्चनमक्षय्यं वः स्वाहा नमः॥ प्रद्युम्नसंकर्षणवासुदेवाः एतद्यथादत्तं गंधाद्यर्चनमक्षय्यं वः स्वाहा नमः इति

**देशकालौ स्मृत्वा प्रायश्चित्तांगविष्णुश्राद्धमहं करिष्ये ॥ विष्णवे इदमासनम्॥ इदमत्र चन्दनं पुष्पं धूपं दीपं यथादत्तम् अर्चनं विष्णवे स्वाहा संपद्यताम् ॥ विष्णुश्राद्धस्यार्चनविधेः परिपूर्णताऽस्तु ॥ हस्ते जलं गृहीत्वा प्रायश्चित्ताङ्गविष्णुश्राद्धसम्पत्तये श्रीविष्णूद्देशेन त्र्यधिकयुग्मब्राह्मणभोजनपर्याप्तामान्ननिष्क्रयीभूतं रजतद्रव्यं चन्द्रदैवत्यं चतुर्भ्यो ब्राह्मणेभ्यः सुपूजितेभ्यो यथाभाग विभज्य दातुमहमुत्सृजे तेन पापहा श्रीभगवान् महाविष्णुः प्रीयतां न मम ॥**

---

गंधादिदानम्। आचमनम् ॥ धूरिलोचनौ विश्वेदेवाः यथाकाले दास्यमान युग्मब्राह्मणभोजनपर्याप्तमन्नमक्षय्यं वः स्वाहा । प्रद्युम्नसंकर्षणवासुदेवाः यथाकाले युग्मब्राह्मणभोजनपर्याप्तमन्नमक्षय्यं वः स्वाहा इति ब्राह्मणभोजनसंकल्पः ॥ सकृत्सकृदपां दानम् ॥ अश्नत्सु जपो यथोक्तः ॥ तृप्तान्ज्ञात्वा सकृत्सकृदपां दानम् ॥ गायत्र्यादिभिः सशब्दा जपः॥ आचान्तेषु ब्राह्मणेषूदकदानं ॐशिवा आपः सन्त्विति मंत्रेण ॥ सौमनस्यमस्त्वेति पुष्पाणाम् ॥ अक्षतं चारिष्टं चास्त्वित्यक्षतानाम् ॥ अघोराः प्रद्युम्नसंकर्षणवासुदेवाः सन्त्विति प्रार्थना ॥ सन्त्विति विप्रैः प्रयुक्ते । गोत्रं नो वर्द्धतामिति ब्रूयात्॥ वर्द्धतामिति प्रत्युक्ते । दातारो नोभिवर्द्धन्तां वेदाः संततिरेव च॥ श्रद्धा च नो मा व्यगमद् बहु देयं च नोऽस्त्विति मन्त्रपाठः ॥ धूरिलोचनौ विश्वेदेवाः इदं हिरण्यं तन्निष्क्रयं वा दक्षिणाऽक्षय्य वः स्वाहा न मम । प्रद्युम्नसंकर्षणवासुदेवाः इद हिरण्यं तन्निष्क्रयं वा दक्षिणाऽक्षय्य वः स्वाहा न ममेति दक्षिणादानम् ॥ विश्वेदेवाः प्रीयेतामिति दैवे वाचयित्वा वाजेवाज इति मंत्रेण ब्राह्मणविसर्जनम् ॥ आमावाजस्येत्यनुगमनम् । इति विष्णुश्राद्ध मयूखोक्तम् ॥

(नारायणभट्टैस्तु विष्णुपूजनानन्तरं विष्णुबुध्या त्रिभ्योऽधिकानां युग्मब्राह्मणानामभ्यर्चनम् ॥ देशकालयोः संकीर्तनान्ते त्रिभ्योधिकान्युग्मब्राह्मणान् विष्णूद्देशेन भोजयिष्य इति संकल्पपूर्वकं तावतां ब्राह्मणानां भोजनदानं आमान्नदानं वा । इदमेव प्रायश्चित्तांग विष्णुश्राद्धमित्यभिधीयते ॥ )

अथ प्रायश्चित्तपूर्वाङ्गगोदानम्—प्रत्यक्षगोदानाशक्तौ यथाशक्ति तन्मूल्यं दद्यात् । यथा—प्राङ्मुखमुपविश्य प्रतिगृहीतारमुदङ्मुखमुपवेश्य सम्पूज्य—हस्ते जलं गृहीत्वा ॥ गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः॥गावो मे हृदये संतु गवां मध्ये वसाम्यहम्। गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश॥ यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च॥२॥

१ अथ प्रत्यक्षतया पूर्वांगगोदानम् । तद्यथा—उदङ्मुख ब्राह्मणमुपवेश्याचम्य प्राणानायम्य देशकालौ स्मृत्वांगीकृतप्रायश्चित्तांगत्वेन प्रत्यक्षतया निहितपूर्वांगगोदानमहं करिष्ये । इति सकल्प्य गोप्रतिग्रहीत्रे ब्राह्मणायैतत्ते पाद्यमित्यादिभिरभ्यर्च्य कुण्डलमुद्रिकावर्णसभारान् गृहीत्वा अमुकगोत्रायामुकप्रवरामुकशाखाध्यायिनममुकशर्माण गोदानप्रतिगृहीतार ब्राह्मण त्वामह वृणे ॥ वृतोऽस्मीति प्रतिवचनम् । तत स्वपुरत प्राङ्मुखाया सवत्साया गोरवस्थापनम् । ॐसवत्साय गवे नमः इति तस्या गधमाल्यवस्त्रादिभि पूजनम् । ब्राह्मणहस्ते सुप्रोक्षितादि कृत्वा वामहस्तेन सुवर्णमाज्यपात्र गृहीत्वा तत्र गोपुच्छ प्रक्षिप्य दक्षिणहस्ते सयवकुश जलमादाय देशकालौ सकीर्त्याश्यदिश्य गोपुच्छ गृहीत्वा ॐ गवामगेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छिव मे स्यादिह लोके परत्र च ॥ गावो मे अग्रत सन्तु गावो मे सन्तु पृष्ठत । गावो मे हृदये सन्तु गवा मध्ये वसाम्यहम्॥ यज्ञसाधनभूताया विश्वस्याघौघनाशिनी । विश्वरूपधरो देव प्रीयतामनया गवा॥ इत्युक्त्वा अमुकगोत्रायामुकप्रवरायामुकशाखाध्यायिनेऽमुकशर्मणे ब्राह्मणायामुकगोत्रोऽहममुकशर्मा आरोपितप्रायश्चित्तसाद्गुण्यकाम इमा सवत्सा गा रुद्रदैवत्या यथाशक्त्यलकृता तुभ्य सप्रददे । इत्युक्त्वा तिलयवकुशकुसुमजलाज्यपात्रान्वितगोपुच्छ ब्राह्मणस्य हस्ते दद्यात् । ब्राह्मणोऽपि ॐ देवस्य त्वेति द्यौस्त्वेति वा मत्र पठित्वा रुद्राय गा प्रतिगृह्णामि इति ता प्रतिगृह्य कोदादित्यनुमत्रयते । अथवा प्रणवेन प्रतिगृह्य कोदादित्यनुमत्रयेत् । तत्र प्रतिगृह्णामीत्येव वा वदेत् । तत सुवर्णपरिमित यथाशक्ति वा हिरण्यमादाय कृतस्य गोदानस्य प्रतिष्ठासासिद्धयर्थम्

यज्ञसाधनसंभूता विश्वस्याघौघनाशिनी ॥ विश्वरूपधरो देवः प्रीयतामनया गवा ॥ प्रायश्चित्तपूर्वाङ्गं यथाविहितं गोनिष्क्रयीभूतं यथाशक्तिद्रव्यं अमुकगोत्रामुकशर्मणे तुभ्यमहं संप्रददे न मम ॥ नात्र मूल्ये दक्षिणादानम्॥ततः स्रुवेण स्थंडिलं निर्माय प्रायश्चित्तकर्ता व्याहृतिहोमं कुर्यात् ॥ यथा–कर्ता स्थंडिलसमीप उपविश्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य प्रायश्चित्तपूर्वाङ्गतया विहितं महाव्याहृतिभिराज्येनाष्टोत्तरशतमष्टाविंशतिर्वा हवनं करिष्ये ॥ इति संकल्प्य पुनर्जलं गृहीत्वा–तदङ्गतया अस्मिन् स्थंडिले पञ्चभूसंस्कारपूर्वकम् अग्निप्रतिष्ठापनं करिष्ये॥ इति संकल्प्य पञ्चभूसंस्कारपूर्वकमग्निं प्रतिष्ठापयेत्। तद्यथा–त्रिभिर्दर्भैस्त्रिः परिसमुह्य ३। गोमयेन त्रिरुपलिप्य ३। स्रुवमूलेन यज्ञकाष्ठेन वा प्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्य ३। अनामिकाङ्गुष्ठेन निरूद्धृत्य ३। न्युब्जपाणिना प्रतिरेखं त्रिरभ्युक्ष्य ३। अग्निमानीय स्थंडिलस्याग्नेय्यां निधाय हुं फट् इति क्रव्यादांशं नैर्ऋत्यां दिशि परित्यज्य॥ ॐअग्निर्मूर्द्धादिवः ककुत्पतिः पृथिव्याऽअयम्॥अपाᳬरेताᳬसि जिन्वति॥ ॐ॥विटनामानमग्निं प्रणयामि ॥ इति स्वात्माभिमुखं स्थण्डिलोपरि अग्निं संस्थाप्य वायव्यकोणे तं पूजयेत्–गन्धाक्षतपुष्पं गृहीत्वा–विटनामाग्नये नमः गन्धाक्षतपुष्पाणि समर्पयामि ॥ इति संपूज्य अन्वादध्यात् । हस्ते जलं गृहीत्वा यथा–प्रायश्चित्तपूर्वाङ्गहोमे देवताभिध्यानपरिग्रहार्थमन्वाधानं करिष्ये । इति

---

इमा दक्षिणा तुभ्यमहं संप्रददे न ममेति दक्षिणा दद्यात् । ब्राह्मणोऽपि देवस्य त्वेति द्यौस्त्वेति वा पठित्वा अग्नये त्वेति प्रतिगृह्य कोदादित्यनुमन्त्रयेत् । कृतस्य गोदानविधेः परिपूर्णतास्त्विति वदेत् । ब्राह्मणाशिषां ग्रहणम् । इति प्रत्यक्षपूर्वाङ्गगोदानम् ॥

मङ्कल्प्य समिद्द्वयं गृहीत्वा—प्रजापतिम् इन्द्रमग्निं सोमम् एकैकयाऽऽज्याहुत्या, अत्र प्रधानमग्निं वायुं सूर्यं प्रजापतिं व्यस्तसमस्तव्याहृत्या अष्टाविंशतिसंख्यया आज्येन, पुनरत्र प्रधानं पृथिवीं विष्णुं रुद्रं ब्रह्माणम् अग्निं सोमं सवितारं परमात्मानं प्रजापतिम् अग्निं स्विष्टकृतं एताः ब्रह्मकूर्चदेवताः प्रत्येकं मिलितपञ्चगव्येन एकैकयाहुत्या, अग्निं वायुं सूर्यम् अग्निवरुणौ अग्निवरुणौ अग्निं वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान्वरुणमादित्यमदितिं प्रजापतिम् एता अङ्गप्रधानार्था देवता एकैकयाऽऽज्याहुत्या अस्मिन्प्रायश्चित्तकर्मण्यहं यक्ष्ये । समिद्द्वयं अग्न्याचाद्ध्यात् ॥ अथ कुशकण्डिका—अग्नेर्दक्षिणतो ब्रह्मासनास्तरणं तत्र ब्रह्मोपवेशनम्॥ अस्मिन्कर्मणि त्वं ब्रह्मा भव । भवामीति प्रतिवचनम्॥ तत्र पूर्वेण ब्रह्मणो गमनम् । उत्तरतः प्रणीताप्रणयनम् । ब्रह्मन्नपः प्रणेष्यामि । ॐ प्रणय इति ब्रह्मानुज्ञातः अग्नेरुत्तरतः प्रागग्रं कौशं पूर्वापरमासनद्वयं प्रकल्प्य वारणं सव्यहस्ते कृत्वा दक्षिणहस्तोद्धृतपात्रान्तरोदकेन तत् पूरयित्वा पश्चिमासने निधाय आलभ्य ब्रह्मणो मुखमवलोकयन् पूर्वासने उत्तरतोऽग्नेःस्थापयेत्। ईशान्यादिपूर्वाग्रैस्त्रिभिस्त्रिभिर्दर्भैः अग्नेः परिस्तरणम् । तच प्रागुदगग्रैः । दक्षिणतः प्रागग्रैः । प्रत्यगुदगग्रैः । उत्तरतः प्रागग्रैः॥ अग्नेरुत्तरतः पश्चाद्वा अर्थवत्पात्रासादनम्—पवित्रच्छेदना दर्भास्त्रयः । साग्रे अनन्तर्गर्भे पवित्रे द्वे । प्रोक्षणीपात्रम् । आज्यस्थाली । सम्मार्गकुशाः पञ्च । उपयमनकुशाः सप्त। समिधस्तिस्रः।स्रुवः। आज्यम्।पूर्णपात्रम्॥ दक्षिणा वरो वा॥अन्यान्युपकल्पनीयानि—पञ्चगव्यार्थं सुवर्णादिपात्रं पत्रं पलाशादिपात्रं वा । यज्ञियकाष्ठम् । हरितैः सप्तकुशपत्रैः कृतो ब्रह्मकूर्चः (अथवा सप्तावरैरच्छिन्नाग्रैः शुष्कपर्णैः कुशैः कृतः कूर्चः) पञ्चगव्यं पङ्क्तिरूपेण पृथक् पृथक् आसादयेत्—(यथा—पलाशद्रोणे ताम्राया गोः मूत्रम् अष्टमापम् ।

श्वेतगोः शकृत् षोडशमाषम् ॥ पीतगोः क्षीरं द्वादशमाषम् ॥ नीलाया गोः दधि दशमाषम् ॥ कृष्णाया गोः घृतमष्टमाषम् ॥ ) कुशोदकं चतुर्माषम् ॥ इति पात्रासादनम् ॥ द्वयोः पवित्रयोरुपरि पवित्रत्रयं निधाय द्वयोर्मूलेन द्वौ कुशौ प्रदक्षिणीकृत्य त्रयाणां मूलाग्राण्येकीकृत्य अनामिकाङ्गुष्ठेन द्वयोरग्रं छेदयेत् द्वे ग्राह्ये त्रीण्युत्तरतः क्षिपेत् ॥ प्रणीतोत्तरतः प्रोक्षणीपात्रं निधाय तत्र पात्रान्तरेण चतुर्थांरं प्रणीतोदकं प्रपूर्य पवित्राभ्यामुत्पूय पवित्रे प्रोक्षणीषु निधाय दक्षिणेन हस्तेन प्रोक्षणीपात्रमुत्थाप्य सव्ये पाणौ कृत्वा दक्षिणहस्तमुत्तानं कृत्वा मध्यमानामाङ्गुल्योः मध्यमपर्वाभ्यामपामुद्गिङ्गनम्॥ ताभिस्तासाम्प्रोक्षणम्॥ आज्यस्थाल्याः प्रोक्षणम् ॥ सम्मार्गकुशानाम्प्रोक्षणम् ॥ उपयमनकुशानाम्प्रोक्षणम्॥ समिधाम्प्रोक्षणम् ॥ स्रुवस्य प्रोक्षणम् ॥ आज्यस्य प्रोक्षणम्॥ पूर्णपात्रस्य प्रोक्षणम् । अन्येषामुपकल्पनीयहवनीयद्रव्याणाम्प्रोक्षणम् ॥ यथा—पञ्चगव्यार्थासादितपात्रस्य प्रोक्षणम् ॥ ब्रह्मकूर्चस्य प्रोक्षणम् ॥ पञ्चगव्यस्य प्रोक्षणम् ॥ कुशोदकस्य प्रोक्षणम् ॥ प्रणीताग्न्योर्मध्ये असञ्चरे प्रोक्षणीं निधाय आज्यस्थाल्याम् आज्यनिर्वापः । ब्रह्मणा दक्षिणतः आज्याधिश्रयणम् । स्थण्डिलादुत्तरतः पञ्चगव्यपात्रं निधाय तत्र पञ्चगव्यस्यैकीकरणम्—यथा—पूर्वासादितगोमूत्रं गायत्र्या निक्षिपेत्॥ ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ गन्धद्वारामिति मंत्रेण गोमयं निक्षिपेत् । ॐगन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ आप्यायस्वेति मन्त्रेण गोक्षीरं निक्षिपेत् । ॐआप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम्॥ भवा वाजस्य

संगुथे॥ २२/२ ॥दधिक्राव्णोति मन्त्रेण दधि निक्षिपेत्। ॐदुधिक्राव्णोऽ अकारिषञ्जिष्णोरश्वस्य वाजिनः॥सुरभिनो मुखाकरत्प्रणऽआयूंऽषि तारिषत् ॥ २३/३॥ ॐ तेजोसि इत्यनेन मन्त्रेण आज्यं निक्षिपेत्। ॐ तेजोसि शुक्रमस्यमृतमसि धाम नामासि प्रियन्देवानामनाधृष्टन्देवयजनमसि ॥ ३१/१॥ देवस्यत्वेत्यनेन कुशोदकं क्षिपेत्। देवस्य त्वा सवितुः प्रसुवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ १/१॥ ततः प्रणवेन हस्तेन आलोड्य प्रणवेनैव यज्ञियकाष्ठेन निर्मन्थनम्। प्रणवेनाभिमन्त्र्य ॥ ततः ज्वलदुल्मुकेन आज्यस्य पञ्चगव्यस्य चेति उभयोः ईशानीमारभ्य ईशानीपर्यन्तं पर्यग्निकरणम्। इतरथावृत्तिः ॥ स्रुवस्य प्रतपनम्–दक्षिणहस्तेन स्रुवमादाय प्राञ्चम् अधोमुखमग्नौ तापयित्वा सव्ये पाणौ कृत्वा दक्षिणेन सम्मार्गाग्रैर्मूलतोऽग्रपर्यन्तं सम्मृज्य मूलैरग्रमारभ्य अधस्ताद् मूलपर्यन्तं सम्मृज्य प्रणीतोदकेनाभ्युक्ष्य पुनः पूर्ववत्प्रतप्य दक्षिणतो निदध्यात्। सम्मार्गकुशानग्नौ प्रास्य आज्योद्वासनम् ॥ अग्नेः सकाशादाज्यं गृहीत्वा पूर्वेण नीत्वा अग्नेरुत्तरतः प्रोक्षण्याः पश्चिमे निधाय ततः पुनरुत्थाप्य अग्नेः पश्चादानीय स्थापयेत्। पञ्चगव्यमुत्थाप्य आज्यस्य पूर्वेण प्रदक्षिणमानीय आज्यस्योत्तरतः आसादयेत्। पवित्राभ्याम् आज्योत्पवनम्। अवेक्षणम्। अपद्रव्यनिरसनम्। ताभ्यामेवाज्यलिप्ताभ्यां पवित्राभ्यां प्रोक्षण्याः प्रत्युत्पवनम्। पवित्रे प्रोक्षण्यां निधाय दक्षिणहस्तेन उपयमनकुशानादाय सव्ये गृहीत्वा तिस्रः समिधः तिष्ठन्नग्नावाधाय ततो दक्षिणचुलुकगृहीतेन सपवित्रेण प्रोक्षण्युदकेनाग्नेः ईशानकोणादारभ्य ईशानपर्यन्तं प्रदक्षिणवत्पर्युक्षणम्। इतरथावृत्तिः। पवित्रे प्रणीतासु निधाय अग्नेः प्रदक्षिणीकरणम्। ततः स्थानोपवेशनम्॥ ततो यजमानः दक्षिणं जान्वाच्य कुशैर्ब्रह्मणा अन्वारब्धः उपयमनकुशसहितं प्रसा-

रिताङ्गुलिहस्तं हृदि निधाय समिद्धतमेऽग्नौ मनसा प्रजापतिं ध्याय-न्प्रणवपूर्वकं तूष्णीं स्रुवेण प्राङ्मूर्ध्वमृजुं सन्ततमाज्येन अग्नेरुत्तरप्रदेशे पूर्वाघारमाघारयेत् । मनसा ॐ प्रजापतये ( अत्र न स्वाहाकारः-यजमानः) इदं प्रजापतये न मम ॥ प्रोक्षण्यां संस्रवप्रक्षेपः । ततः अग्नेर्दक्षिणप्रदेशे उत्तराघारमाघारयेत्-ॐइन्द्राय स्वाहा इदमिन्द्राय न मम॥ इत्येतौ पूर्वोत्तरावाघारौ हुत्वा अग्नेरुत्तरार्धपूर्वार्द्धे-ॐ अग्नये स्वाहा इदमग्नये न मम । अग्नेर्दक्षिणार्धपूर्वार्द्धे-ॐसोमाय स्वाहा इदं सोमाय न मम ॥ ततो व्याहृतिहोमं कुर्यात् । ॐकारस्य ब्रह्माऋषिः गायत्री छन्दः परमात्मा देवता महाव्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णि-गनुष्टुप्छन्दांसि अग्निवायुसूर्या देवताः सर्वासां वा प्रजापतिर्देवता प्रायश्चित्ताङ्गाज्यहोमे विनियोगः ॥ १ ॐ भूः स्वाहा इदमग्नये न मम । २ ॐ भुवः स्वाहा इदं वायवे न मम । ३ ॐ स्वः स्वाहा इदं सूर्याय न मम । ४ ॐभूर्भुवः स्वःस्वाहा इदं प्रजापतये न मम ॥ ( केचिदत्र अन्ते सर्वत्र महाविष्णवे पापघ्ने न मम इति त्यागं वदन्ति ॥ ) एवं सप्तवारं होमे अष्टाविंशत्याहुतयो भवन्ति ॥ ततः ब्रह्मकूर्चेन आसा-दितपञ्चगव्येन इरावती इत्यादिना प्रतिमन्त्रेण एकैकाहुतिमिति दशा-हुतीर्दद्यात् ॥ ॐ इरावतीत्यस्य वसिष्ठ ऋषिः त्रिष्टुप्छन्दः पृथिवी देवता । ॐ इदं विष्णुरित्यस्य मेधातिथिर्ऋषिः गायत्री छन्दः विष्णु-र्देवता । ॐमानस्तोक इत्यस्य कुत्स ऋषिः त्रिष्टुप्छन्दः रुद्रो देवता । ॐ ब्रह्मयज्ञानमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता । ॐ अग्निर्दूतमित्यस्य विरूपाक्ष ऋषिः गायत्री छन्दः अग्निर्देवता । ॐ वयःसोमेत्यस्य बन्धुर्ऋषिः गायत्री छन्दः सोमो देवता । ॐ तत्सवितुरित्यस्य विश्वामित्र ऋषिः गायत्री छन्दः सविता देवता । ॐकारस्य ब्रह्मा ऋषिः गायत्री छन्दः परमात्मा देवता । ॐ भूर्भुवः

स्वरिति महाव्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुब्छन्दांसि अग्निवायुसूर्या देवताः सर्वेषां ब्रह्मकूर्चेन मायश्चित्ताङ्गमिलितपंचगव्यहोमे विनियोगः ॥

ॐ इरावती धेनुमती हि भूतः सूयवसिनी मनवे दशस्या ॥ व्यस्कभ्ना रोदसी विष्णवे तेदाधर्त्थं पृथिवीमभितो मयूखैः स्वाहा ॥२॥इदं पृथिव्यै न मम॥ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्॥ समूढमस्य पांसुरे स्वाहा॥२॥ इदं विष्णवे न मम ॥ ॐमानस्तोके

१ अन्ये—पंचगव्यमृचा पूतं जुहुयादग्निसंनिधौ ॥ सप्तपत्रास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः ॥ एतैरुद्धृत्य जुहुयात् पंचगव्यं यथाविधि ॥

२ इरावतीदविष्णुर्मानस्तोकेतिशवती । एतामिश्चरु होतव्यं हुतशेषं पिबेद् द्विजः ॥ इति पराशरवचने मन्त्रचतुष्टयस्यैवाम्नानात् ॥ तथा अग्नये चैव सोमाय सावित्र्या च तथैव च ॥ प्रणवेन तथा हुत्वा स्विष्टकृच्च तथैव च ॥ इति प्रजापतिवचने मन्त्रपंचकमेवोक्तम् ॥ अग्नये स्वाहा सोमाय स्वाहेन्द्राय स्वाहेद विष्णुर्मानस्तोके गायत्र्या प्रजापतेनाव्रदेतानीत्याहुतीर्जुहुयात् इति मरीचिवचने सप्तानामेव मन्त्राणामुपादानात् ॥ अग्नये स्वाहा सोमाय इदं विष्णुर्विचक्रमे । विष्णोर्नुकेन सावित्र्या प्राजापत्येन चैव हि ॥ देवतानामिदं हुत्वा हुतशेषं पिबेद् द्विजः ॥ इति जाबालिना मन्त्राणां षण्णामेवोक्तेरेकतरस्मृत्याश्रयेणेकतरपक्षमवलम्ब्य होममित्याहु ॥ तन्मते शवतीत्यनेन शन्न इन्द्राग्नीति मन्त्रो महार्णवे शनो देवीरिति तु मयूखे ॥

अत्र केचित् इरावतीति मन्त्रस्थाने स्योना पृथिवीति मन्त्रं पठन्ति तथा च चतुर्थाहुतौ ब्रह्मजज्ञानमित्यस्य स्थाने शन्नो देवीरिति मन्त्रं पठित्वा ब्रह्मणे न मम इत्यस्य स्थाने अद्भ्यो न मम इति पठन्ति तत्र मूलं मृग्यम् ॥

तनये मानऽ आयुषि मानो गोषु मानोऽ अश्वेषु रीरिषः ॥ मानो वीरान्रुद्रभामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे स्वाहा॥२३॥ इदं रुद्राय न मम ॥ ॐब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचो वेनऽ आवः ॥ सबुध्न्याऽ उपमाऽ अस्य विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा॥२४॥ इदं ब्रह्मणे न मम ॥ ॐ अग्निं दूतम्पुरोदधे हव्यवाहमुपब्रुवे । देवाँ२ऽआसादयादिह स्वाहा ॥२५॥ इदम् अग्नये न मम ॥ ॐ वयः सोमव्रते तव मनस्तनूषु बिभ्रतः ॥ प्रजावन्तः सचेमहि स्वाहा ॥२६॥ इदं सोमाय न मम॥ ॐतत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि । धियो योनः प्रचोदयात् स्वाहा ॥२७॥ इदं सूर्याय न मम ॥ ॐ स्वाहा इदं परमात्मने न मम ॥ ॐ भूर्भुवः स्वः स्वाहा इदं प्रजापतये न मम॥ ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम ॥ इति ब्रह्मकूर्चेन ( प्रयोगरत्नानुसारी ) पञ्चगव्यहोमः ॥

अथाज्येन भूरादि नवाहुतयः॥ॐभूर्भुवः स्वरिति महाव्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुप्छन्दांसि अग्निवायुसूर्या देवताः ॐ त्वन्नो अग्ने सत्वन्नो अग्ने अयाश्चाग्ने ये ते शतमितिमन्त्राणां वामदेव ऋषिः त्रिष्टुप्छन्दः द्वयोरग्निवरुणौ देवते तृतीयस्याग्निश्चतुर्थस्य वरुणसवितृविष्णुविश्वेदेवा मरुतः स्वर्का देवताः उदुत्तममिति शुनःशेप ऋषिः त्रिष्टुप् छन्दः वरुणादित्यादितयो देवताः सर्वेषां प्रायश्चित्ताज्यहोमे विनियोगः ॥ ॐभूः स्वाहा-इदमग्नये न मम ॥ ॐभुवः स्वाहा-इदं वायवे न मम ॥ ॐस्वः स्वाहा-इदं सूर्याय न मम ॥ ॐ त्वन्नोऽ अग्ने वरुणस्य विद्वान्देवस्य हेडो ऽअवयासिसीष्ठाः॥ यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषाᳬसिप्रमुमुग्ध्यस्मत्स्वाहा ॥३१॥

इदमग्निवरुणाभ्यां न मम ॥ ॐ सत्त्वन्नोऽ अग्नेऽवमो भवोतीनेदिष्ठोऽ अस्याऽ उषसो व्युष्टौ ॥ अवयक्ष्वनो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो नऽ एधि स्वाहा॥ १/१ ॥ इदमग्नीवरुणाभ्यां न मम॥ ॐ अयाश्चाग्ने-स्यनभिशस्तिपाश्चसत्यामित्त्वमयाऽअसि॥अयानो यज्ञं वहास्ययानोधेहि भेषजꣳस्वाहा । इदमग्नये अयसे न मम ॥ ॐयेतेशतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः ॥ तेभिर्नोऽ अद्य सवितोतविष्णुर्विश्वे-मुञ्चन्तु मरुतः स्वर्काः स्वाहा । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम॥ ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमꣳ श्रथाय॥अथावयमादित्यव्रतेतवानागसो ऽअदितये स्याम स्वाहा ॥ १/१ ॥ इदं वरुणायादित्यायादितये च न मम ॥ ॐ प्रजापत स्वाहा इदं प्रजापतये न मम॥ इति नवाहुतयः॥ ततः संस्रवप्राशनम् पवित्राभ्यां मार्जनम् । अग्नौ पवित्रप्रतिपत्तिः॥ ब्रह्मणे पूर्णपात्रदानम् प्रणीतोदकेन सङ्कल्पः—कृतस्य कर्मणः साङ्गतासिद्ध्यर्थं ब्रह्मन् इदं पूर्ण पात्रदक्षिणां तुभ्यमहं संप्रददे ॥ यजमानो वदेत् प्रतिगृह्यताम्—३ प्रतिगृह्णामीति ब्राह्मणो ब्रूयात्॥ प्रणीताविमोकः ॥ आपः शिवा०। ततो यजमानः ग्रामाद्बहिस्तारकोदये व्रतग्रहणं करिष्ये इ[illegible]

१ बहिस्तारकदर्शन इति विष्णुवचने बहिस्तारकोदयकालविधानात् बहि स्तारकोदये होमावशिष्टपञ्चगव्यप्राशनरूपं व्रतं ग्राह्यमिति महार्णवे ॥ माध तु व्रतशब्देन प्रायश्चित्तसंकल्पस्यैवोक्तम् ॥ पूर्वेद्युर्निशामुखे पर्यदुक्तप्रकारेण प्राय श्चित्त सकल्प्यापरेद्यु. प्रातर्होमाद्यङ्गसहित प्रायश्चित्तमारभेत इत्याह ॥ तेनैतन्मतेन सायंकालेनापि होमान्ते पंचगव्यप्राशनम् ॥ तथा स्त्रीशूद्राणां पंचगव्यप्राशने विकल्प इति महार्णवे ॥ प्राशनपक्षे कपिलागव्यं शूद्रेण न पेयम् । स्त्रीशूद्री तु

विप्रान्पृच्छेत् । विप्रा वदेयुः कुरुष्व । इत्यनुज्ञातः प्रणवेन हुतशेषस्य पञ्चगव्यस्य प्राशनं कुर्यात् । यथा—यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके ॥ प्राशनात्पञ्चगव्यस्य दहत्वग्निरिवेन्धनम् ॥ ॐ इति प्रणवेन सर्वं पिबेत्॥ अशक्तौ स्वल्पं पिबेत् ॥ ततः सङ्कल्पितप्रायश्चित्तद्रव्यं नानागोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे इति सङ्कल्प्य विभज्य दत्त्वा उत्तराङ्गानि कुर्यात् ॥

देशकालौ स्मृत्वा प्रारिप्सितस्य प्रायश्चित्तस्य साङ्गतासिद्ध्यर्थम् उत्तराङ्गानि करिष्ये ॥ अथोत्तराङ्गविष्णुश्राद्धम्—हस्ते जलमादाय—अद्यपूर्वोच्चरितवर्तमानशुभपुण्यतिथौ प्रारिप्सितप्रायश्चित्तस्य उत्तराङ्गतया विहितविष्णुश्राद्धसम्पत्तये विष्णूद्देशेन ऽयधिकयुग्मब्राह्मणभोजन-

---

विप्रैः कारयित्वा तूष्णीं पिबत इति स्मृत्यर्थसारे ॥ स्त्रीणामेव पंचगव्यस्य विहितप्रतिषिद्धत्वात् विकल्पः ॥ शूद्रस्य तु नित्यं भवत्येव पंचगव्य न तु निषिद्धम् ॥ रामप्रासं तु शूद्रस्यापि निषिद्धमेवेति तु नवीनाः ॥ ततः प्रायश्चित्ताङ्गभूतहोमः स्त्रीशूद्राणामपि शालाग्नौ निषिद्धोपि लौकिकाग्नौ विप्रद्वारा भवत्येव ॥ कृच्छ्रप्रत्याम्नायभूतप्रधानभूतो होमो जपो वा सर्वथा निषिद्ध एवेति न तत्र ब्राह्मणद्वाराऽपि तयोरधिकारः इति महार्णवे मदनरत्ने च ॥ यत्राङ्गभूतस्य प्रधानभूतस्य वा जपहोमादेः प्रत्यक्षविधिना विधानं तत्राशक्तो विप्रद्वारा प्रतिनिधिकरणेनाधिकारेपि प्रायश्चित्ताङ्गभूतस्य जपहोमादेः तस्मात् शूद्रं समासाद्य सदा धर्मपथे स्थितम् ॥ प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितमिति अंगिरोवचनेऽविशेषेण निषेधादेवानधिकारे ब्राह्मणद्वारापि न तयोः कर्तृत्वम् इति मयूखकारादयः । तथा च स्त्रीशूद्रयोर्होमाधिकारपक्षे होमावशिष्टस्यैव तस्य तद्देवताभ्या प्राशनं कार्यम् ॥ तदनधिकारपक्षे तु तूष्णीं संपादितस्य होमावशिष्टस्यैव प्राशनमिति विशेषः ॥ अस्मिन्नहनि शक्तस्तदोपवासं चरेत् अशक्तश्चेद् हविष्यान्नं भुञ्जीत ॥

पर्याप्तमामान्ननिष्क्रयीभूतं यथाशक्तिरजतद्रव्यं चन्द्रदैवत्यं चतुर्भ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे न मम॥ब्राह्मणेभ्यः पूजनपुरःसरं द्रव्यं दत्वा 'अनेन पापहा महाविष्णुः प्रीयताम्' इति वदेत्॥ इति विष्णुश्राद्धम्॥

अथ उत्तराङ्गगोदानम्। हस्ते जलमादाय प्रारिप्सितप्रायश्चित्तस्य उत्तराङ्गतया विहितं गोनिष्क्रयीभूतं यथाशक्ति रजतद्रव्यं अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे न मम॥ इति पूजनपूर्वकं ब्राह्मणाय दातव्यम्॥ नात्र दक्षिणा॥

ततः तस्मिन्नेवाग्नौ उत्तराङ्गहवनं कर्तव्यम्॥ हस्ते जलमादाय-अद्य-पूर्वोच्चरितप्रारिप्सितप्रायश्चित्तस्य उत्तराङ्गतया विहितं हवनं करिष्ये॥ अथ कुशकण्डिका-अग्नेर्दक्षिणतो ब्रह्मासनम्॥ तत्र ब्रह्मोपवेशनम्॥ अस्मिन्कर्मणि त्वं ब्रह्मा भव। भवामीति प्रतिवचनम्। तत्र पूर्वेण ब्रह्मणो गमनम्। उत्तरतः प्रणीताप्रणयनम्। ब्रह्मन्नपः प्रणेष्यामि॥ ॐ प्रणय इति ब्रह्मानुज्ञातः अग्नेरुत्तरतः प्रागग्रं कौशं पूर्वापरमासनद्वयं प्रकल्प्य वारणं सव्यहस्ते कृत्वा दक्षिणहस्तोद्धृतपात्रान्तरोदकेन तद् पूरयित्वा पश्चिमासने निधाय आलभ्य ब्रह्मणो मुखमवलोकयन्पूर्वासने उत्तरतोऽग्नेः स्थापयेत्। ईशान्यादिपूर्वाग्रैस्त्रिभिस्त्रिभिर्दर्भैः अग्नेः परिस्तरणम्। तच्च प्रागुदगग्रैः। दक्षिणतः प्रागग्रैः। प्रत्यगुदगग्रैः। उत्तरतः प्रागग्रैः॥ अग्नेरुत्तरतः पश्चाद्वा अर्थवत्पात्रासादनम्। पवित्रच्छेदना दर्भास्त्रयः। प्राग्रे अनन्तर्गर्भे पवित्रे द्वे। प्रोक्षणीपात्रम्। आज्यस्थाली। सम्मार्गकुशाः पञ्च। उपयमनकुशाः सप्त। समिधस्तिस्रः। स्रुवः। आज्यम्। पूर्णपात्रम्। दक्षिणा वरो वा॥ द्वयोः पवित्रयोरुपरि पवित्रत्रयं निधाय द्वयोर्मूलेन द्वौ कुशौ प्रदक्षिणीकृत्य त्रयाणां

मूलाग्राण्येकीकृत्य अनामिकाङ्गुष्ठेन द्वयोरग्रं छेदयेत् द्वे ग्राह्ये त्रीण्युत्तरतः क्षिपेत् ॥ प्रणीतोत्तरतः प्रोक्षणीपात्रं निधाय तत्र पात्रान्तरेण चतुर्वारं प्रणीतोदकं प्रपूर्य पवित्राभ्यामुत्पूय पवित्रे प्रोक्षणीपु निधाय दक्षिणेन हस्तेन प्रोक्षणीपात्रमुत्थाप्य सव्ये पाणौ कृत्वा दक्षिणहस्तमुत्तानं कृत्वा मध्यमानामिकाङ्गुल्योः मध्यमपर्वाभ्याम् अपामुदिङ्गनम्। ताभिस्तासाम्प्रोक्षणम् । आज्यस्थाल्याः प्रोक्षणम् । सम्मार्गकुशानां प्रोक्षणम् । उपयमनकुशानाम्प्रोक्षणम् । समिधाम्प्रोक्षणम् । स्रुवस्य प्रोक्षणम् । आज्यस्य प्रोक्षणम् । पूर्णपात्रस्य प्रोक्षणम् । प्रणीताग्न्योर्मध्ये असञ्चरे प्रोक्षणीं निधाय आज्यस्थाल्याम् आज्यनिर्वापः । ब्रह्मणा दक्षिणतः आज्याधिश्रयणम् । ज्वलदुल्मुकेन ईशानीमारभ्य ईशानीपर्यंतम् आज्यस्य पर्यग्निकरणम् । इतरथावृत्तिः । स्रुवस्य प्रतपनम्— दक्षिणेन हस्तेन स्रुवमादाय प्राञ्चमधोमुखमग्नौ तापयित्वा सव्ये पाणौ कृत्वा दक्षिणेन सम्मार्गाग्रैर्मूलतोऽग्रपर्यन्तं संमृज्य मूलैरग्रमारभ्य अधस्तान्मूलपर्यन्तं संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनः पूर्ववत् प्रतप्य दक्षिणतो निदध्यात् । सम्मार्गकुशानग्नौ प्रास्य आज्योद्वासनम् । अग्नेः सकाशादाज्यं गृहीत्वा पूर्वेण नीत्वा अग्नेरुत्तरतः प्रोक्षण्याः पश्चिमे निधाय ततः पुनरुत्थाप्य अग्नेः पश्चादानीय स्थापयेत् । पवित्राभ्याम् आज्योत्पवनम् । अवेक्षणम् । अपद्रव्यनिरसनम् । ताभ्यामेवाज्यलेपाभ्यां पवित्राभ्यां प्रोक्षण्याः प्रत्युत्पवनम् । पवित्रे प्रोक्षण्यां निधाय दक्षिणहस्तेन उपयमनकुशानादाय सव्ये गृहीत्वा तिस्रः समिधः तिष्ठन्नग्नावाधाय ततो दक्षिणचुलुकगृहीतेन सपवित्रेण प्रोक्षण्युदकेनाग्नेः ईशानकोणादारभ्य ईशानपर्यन्तं प्रदक्षिणवत्पर्युक्षणम् । इतरथावृत्तिः ।

पवित्रे प्रणीतासु निधाय अग्नेः प्रदीप्तीकरणम् । ततः स्थानोपविष्टो दक्षिणं जान्वाच्य कुशैर्ब्रह्मणा अन्वारब्धः उपयमनकुशसहितं प्रसारिताङ्गुलिहस्तं हृदि निधाय समिद्धतमेऽग्नौ मनसा प्रजापतिं ध्यायन् प्रणवपूर्वकं तूष्णीं स्रुवेण प्राञ्चमूर्ध्वमृजुं सन्ततमाज्येन अग्नेरुत्तरप्रदेशे पूर्वाघारमाघारयेत् । मनसा ॐ प्रजापतये ( अत्र न स्वाहाकारः-यजमानः ) इदं प्रजापतये न मम ॥ प्रोक्षण्यां संस्त्रवप्रक्षेपः ॥ ततः अग्नेर्दक्षिणप्रदेशे उत्तराघारमाघारयेत्-ॐइन्द्राय स्वाहा इदमिन्द्राय न मम॥इत्येतौ पूर्वोत्तरावाघारौ हुत्वा अग्नेरुत्तरार्धपूर्वार्धे-ॐअग्नये स्वाहा इदमग्नये न मम।अग्नेर्दक्षिणार्धपूर्वार्धे-ॐसोमाय स्वाहा इदं सोमाय न मम॥ इत्याज्यभागौ हुत्वा ततो व्याहृतिहोमं कुर्यात्-ॐकारस्य ब्रह्मा ऋषि गायत्री छन्दः परमात्मा देवता महाव्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुप्छन्दांसि अग्निवायुसूर्या देवताः सर्वासां वा प्रजापतिर्देवता प्रायश्चित्ताङ्गाज्यहोमे विनियोगः-१ ॐ भूः स्वाहा इदमग्नये न मम। २ ॐभुवः स्वाहा इदं वायवे न मम।३ ॐस्वः स्वाहा इदं सूर्याय न मम। ४ ॐभूर्भुवः स्वः स्वाहा इदं प्रजापतये न मम॥ (केचिदत्र अन्ते सर्वत्र महाविष्णवे पापघ्ने न मम इति त्यागं वदन्ति) एवं सप्तवारं होमे अष्टाविंशत्याहुतयो भवन्ति॥ ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम॥

अथाज्येन भूराद्या नवाहुतयः॥ ॐभूर्भुवः स्वरिति महाव्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुप्छन्दांसि अग्निवायुसूर्या देवताः ॐ त्वन्नो अग्ने सत्वन्नो अग्ने अयाश्चाग्ने ये ते शतमितिमन्त्राणां वामदेव ऋषिः त्रिष्टुप्छन्दः द्वयोरग्निवरुणौ देवते तृतीयस्याग्निश्चतुर्थस्य वरुण-

सवितृविष्णुविश्वेदेवा मरुतः स्वर्का देवताः उदुत्तममिति शुनःशेप ऋषिः त्रिष्टुप्छन्दः वरुणादित्यादितयो देवताः सर्वेषां प्रायश्चित्ताङ्गाज्यहोमे विनियोगः ॥ ॐ भूः स्वाहा इदमग्नये न मम ॥ ॐभुवः स्वाहा इदं वायवे न मम ॥ ॐस्वः स्वाहा इदं सूर्याय न मम ॥ ॐ त्वन्नोऽ अग्ने वरुणस्य विद्वान्देवस्य हेडोऽ अवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषाᳬंसि प्रमुमुग्ध्यस्मत् स्वाहा ॥ इदमग्नीवरुणाभ्यां न मम॥ ॐ सत्वन्नोऽ अग्नेवमो भवोतीनेदिष्ठोऽअस्याऽउषसो व्युष्टौ ॥ अवयक्ष्वनो वरुणᳬ रराणोवीहिमृडीकᳬ सुहवो नऽएधि स्वाहा॥ ॥ इदमग्नीवरुणाभ्यां न मम॥ ॐ अयाश्चाग्ने स्यनभिशस्तिपाश्च सत्यमित्वमया ऽअसि ॥ अयानो यज्ञं वहास्ययानो धेहि भेषजᳬ स्वाहा—इदमग्नये अयसे न मम ॥ ॐये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः ॥ तेभिर्नोऽ अद्य सवितोतविष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा—इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ ॐउदुत्तमं वरुणपाशमस्मदवाधमंविमध्यमᳬ श्रथाय ॥ अथावयमादित्यव्रते तवानागसोऽ अदितये स्याम स्वाहा ॥ ॥ इदं वरुणायादित्यायादितये च न मम ॥ ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम ॥ इति नवाहुतयः । ततः संस्रवप्राशनम् ॥ पवित्राभ्यां मार्जनम्॥ अग्नौ पवित्रप्रतिपत्तिः ॥ ब्रह्मणे पूर्णपात्रदानम् । प्रणीतोदकेन संकल्पः—कृतस्य कर्मणः साङ्गतासिद्ध्यर्थं ब्रह्मन् इदं पूर्णपात्रदक्षिणां तुभ्यमहं सम्प्रददे ॥ यजमानो वदेत्—प्रतिगृह्यताम्—ॐ प्रतिगृह्णामीति ब्राह्मणो ब्रूयात् ॥ प्रणीताविमोकः ॥ आपः शिवाः० ॥ ततः कृतस्य पूर्वोत्तराङ्गप्रायश्चित्ताख्यस्य कर्मणः साङ्गता-

सिद्ध्यर्थं यथाशक्ति ब्राह्मणान् भोजयिष्ये । इति संकल्पं कुर्यात् ॥
एवं प्रायश्चित्तं कृत्वा शक्तौ सत्यां दशदानानि कुर्यात् ॥

अथ दशदानानि ॥ यथा—१–गोदानम्–अमुकगोत्रं प्रवरं शाखाध्यायिनम् अमुकशर्माणं भूमिदानप्रतिगृहीतारं ब्राह्मणं त्वामहं वृणे इति ब्राह्मणं वृत्वा ॥ एतत्ते पाद्यं पादप्रक्षालनम् एष तेऽर्घः गन्धः पुष्पञ्च ॥ एवं गन्धमाल्यादिभिस्तं त्रिरभ्यर्च्य । हस्ते कुशयुक्तं जलं गृहीत्वा देशकालौ संकीर्त्य–गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥ इत्युक्त्वा इदं गोनिष्क्रयद्रव्यं रुद्रदैवतम् अमुकसगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे । इति सकुशजलयुक्तं द्रव्यं ब्राह्मणहस्ते दद्यात्। ब्राह्मणः–देवस्य त्वा सवितुः प्रसुवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ [२४] ॥ इति मंत्रं वा द्यौस्त्वा ददातु पृथिवी त्वा गृह्णातु इति मंत्रं पठित्वा रुद्राय गां प्रतिगृह्णामि इत्युक्त्वा प्रतिगृह्णीयात् । ॐ कोदात्कस्मा ऽअदात्कामोदात्कामायादात् ॥ कामोदाता कामः प्रतिग्रहीताकामैतत्ते ॥ [४८] ॥ ॐस्वस्ति । इत्यन्तं मंत्रपठनम्॥ २–भूमिदानम्–ब्राह्मणं संपूज्य हस्ते कुशयुक्तजलमादाय देशकालौ सङ्कीर्त्य–सर्वभूताश्रया भूमिर्वराहेण समुद्धृता । अनन्तसस्यफलदा अतः शान्ति प्रयच्छ मे॥ इति पठित्वा इमां निवर्तनमितां भूमिं विष्णुदैवत्यां सदक्षिणाम् अमुकसगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । इति ब्राह्मणहस्ते कुशयुक्तजलप्रक्षेपः ॥ ब्राह्मणः–देवस्य त्वा०इति द्यौस्त्वा०इति वा मंत्रं पठित्वा विष्णवे भूमिं प्रतिगृह्णामि इत्युक्त्वा प्रतिगृह्णीयात्।कोदात्कस्मा०।ॐस्वस्ति। इत्यन्तं मन्त्रं पठेत्॥ (प्रत्यक्षभूमिदानासंभवे तन्निष्क्रयं दद्यात्॥ तद्यथा–सकुशकुसुमादियुतं

१ दशदानानि–गोभूतिलहिरण्याज्यवासोधान्यगुडानि च ॥ रूप्यं लवणमित्याहुर्दशदानानि पण्डिताः ॥

जलं गृहीत्वा इदं भूमिनिष्कप्रभूतं यथाशक्ति रजतद्रव्यं चन्द्रदैवत्यं तुभ्यमहं सम्प्रददे ॥ ) ३–तिलदानम्–ब्राह्मणं संपूज्य हस्ते कुशयुक्तं जलं गृहीत्वा देशकालसङ्कीर्तनान्ते–महर्षेर्गोत्रसंभूताः कश्यपस्य तिलाः स्मृताः । तस्मादेषां प्रदानेन मम पापं व्यपोहतु ॥ इत्युक्त्वा इमान् तिलान् प्रजापतिदैवतान् सदक्षिणान् अमुकसगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । इत्युक्त्वा ब्राह्मणहस्ते कुशयुतं जलं दद्यात् ॥ ब्राह्मणः–देवस्य त्वा० द्यौस्त्वा० इति वा मन्त्रं पठित्वा प्रजापतये तिलान् प्रतिगृह्णामि इत्युक्त्वा प्रतिगृह्णीयात् ॥ ॐकोदात्० इत्यादि ॐस्वस्त्यन्तं मन्त्रपठनम् ॥ ४–हिरण्यदानम्–ब्राह्मणं संपूज्य हस्ते सकुशजलमादाय देशकालौ संकीर्त्य–हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे॥ इत्युक्त्वा निष्क-परिमितमिदं सुवर्णमग्निदैवतं सदक्षिणाकम् अमुकसगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ॥ इति सकुशजलान्वितं सुवर्णं ब्राह्मणहस्ते दद्यात् ॥ ब्राह्मणः–देवस्य त्वा० द्यौस्त्वा० इति वा मंत्रं पठित्वा अग्नये सुवर्णं प्रतिगृह्णामि इत्युक्त्वा प्रतिगृह्णीयात् ॥ ॐकोदात्० इत्यादि ॐस्वस्त्यन्तं मंत्रपठनम्॥ ५–आज्यदानम्–ब्राह्मणं संपूज्य हस्ते सकुश-जलमादाय देशकालौ संकीर्त्य–कामधेनोः समुद्भूतं सर्वक्रतुषु संस्थि-तम्। देवानामाज्यमाहारो अतःशान्तिं प्रयच्छ मे ॥ इत्युच्चार्य प्रस्थाधि-

---

१ निष्कस्वरूपमुक्तं मनुना। चतुःसौवर्णिको निष्क इति। अत्र सुवर्णग्रहणं सुवर्णपरिमाणप्राप्त्यर्थम्॥ ततश्च सुवर्णचतुष्टयपरिमित रजतं राजतो निष्क इत्यर्थः॥

२ प्रस्थादिस्वरूपं तु मदनरत्ने भविष्यपुराणे। पलद्वय तु प्रसृतं द्विगुणं कुडव-मतम् ॥ चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ॥ आढकैस्तैचतुर्भिश्च द्रोणस्तु कथितो बुधैः ॥ कुंभो द्रोणद्वयं शूर्पः खारी द्रोणस्तु षोडश ॥ द्रोणद्वयस्यैव संज्ञान्तरं शूर्प इति वराहपुराणे ॥

साद्धयकपरिमितम् इदमाज्यं सोमदैवतं सदक्षिणाकम् अमुकसगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । इत्युच्चारपूर्वकं कुशजलान्वितम् आज्यपात्रं विप्रहस्ते दद्यात्॥ ब्राह्मणः—देवस्य त्वा० द्यौस्त्वा० इति वा मन्त्रं पठित्वा सोमाय आज्यं प्रतिगृह्णामि इत्युक्त्वा प्रतिगृह्णीयात्॥ ॐकोदात्० इत्यादि ॐस्वस्त्यन्तं मंत्रपठनम् ॥ ६—वस्त्रदानम्—ब्राह्मणं संपूज्य हस्ते सकुशजलमादाय देशकालौ संकीर्त्य—शीतवातोष्णसंत्राणं लज्जाया रक्षणं परम् । देहालङ्करणं वस्त्रमतः शान्तिं प्रयच्छ मे ॥ इत्युक्त्वा इमे सूक्ष्मवाससी बृहस्पतिर्दैवते सदक्षिणे अमुकसगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे इति सकुशजलयुते वस्त्रे हस्ते गृहीत्वा सदक्षिणे विप्रहस्ते दद्यात्॥ब्राह्मणः—देवस्य त्वा०द्यौस्त्वा० इति वा मन्त्रं पठित्वा बृहस्पतये वस्त्रे प्रतिगृह्णामि इत्युक्त्वा प्रतिगृह्णीयात्॥ॐकोदात्० इत्यादि ॐस्वस्त्यन्तं मंत्रपठनम्॥ ७—धान्यदानम्—ब्राह्मणं संपूज्य हस्ते सकुशजलमादाय देशकालौ संकीर्त्य—सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत्॥प्राणिनां जीवनं यस्मादतः शान्तिं प्रयच्छ मे॥ इत्युक्त्वा सार्द्धखारीपरिमितम् इदं धान्यं विश्वेदेवादैवतं सदक्षिणाकम् अमुकसगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे । इत्युक्त्वा

१ विष्णुधर्मोत्तरे । पल च कुडव प्रस्थ आढको द्रोण एव च । धान्यमानेषु बोद्धव्या क्रमशोऽमी चतुर्गुणा. ॥ द्रोणै षोडशभिर्खारी विंशत्या कुम्भ उच्यते ॥ कुम्भैस्तु दशभिर्वाहो धान्यसख्या प्रकीर्तिता ॥ विंशत्येतत् द्रोणैरित्यनुषज्यते ॥ तेन कुम्भो द्रोणद्वयमिति पूर्वोक्तपक्षाद्विंशतिद्रोणपरिमितः कुंभ इत्यपरः । पल सहस्रपरिमितः कुंभ इति केचित् । एतेषां च पक्षाणां देशकालशक्त्याद्यपेक्षया व्यवस्था ।

तस्मात् धान्यात् मुष्टिमात्रं सकुशजलयुक्तं धान्यं विप्रहस्ते दद्यात् ॥ ब्राह्मणः–ॐदेवस्य त्वा० इति द्यौस्त्वा० इति वा मंत्रं पठित्वा विश्वेभ्यो देवेभ्यो धान्यं प्रतिगृह्णामि इत्युक्त्वा प्रतिगृह्णीयात्॥ॐकोदात्०इत्यादि ॐस्वस्त्यन्तं मंत्रपठनम्॥ ८–गुडदानम्–ब्राह्मणं संपूज्य हस्ते सकुशजलमादाय देशकालसंकीर्तनान्ते–यथा देवेषु विश्वात्मा प्रवरश्च जनार्दनः। सामवेदस्तु वेदानां महायोगस्तु योगिनाम् ॥ प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा। तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥ मम तस्मात्परां लक्ष्मीं ददस्व गुड सर्वदा ॥ इत्युक्त्वा षष्टीपलपरिमितम् इमं गुडं सोमदैवतं सदक्षिणाकम् अमुकसगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ॥ इत्युक्त्वा विप्रहस्ते सकुशजलगुडपात्रं दद्यात् ॥ ब्राह्मणः–देवस्य त्वा० इति द्यौस्त्वा० इति वा मंत्रं पठित्वा सोमाय गुडं प्रतिगृह्णामि इत्युक्त्वा प्रतिगृह्णीयात्॥ ॐकोदात्० इत्यादि ॐस्वस्त्यन्तं मन्त्रपठनम्॥ ९–रजतदानम्–ब्राह्मणं संपूज्य हस्ते सकुशजलमादाय देशकालसंकीर्तनान्ते–प्रीतिर्यतः पितॄणां च विष्णुशङ्करयोः सदा ॥

---

१ पलद्वय तु प्रसृत मुष्टिरेक पल स्मृतम् ॥ अष्ट मुष्टिर्भवेत् किंचित् किंचिदष्टो तु पुष्कलम्। पुष्कलानि च चत्वारि आढकः परिकीर्तित ॥ चतुराढको भवेद्द्रोण इत्येतन्मानलक्षणम्॥ २ अथ द्रव्यमान तु स्कन्दपुराणे। पलद्वयेन प्रसृत द्विगुण कुडवं मतम्। चतुर्भि कुडवै प्रस्थो आढकस्तु चतुर्गुणं चतुराढको भवेद्द्रोण इत्येतद्द्रव्यमानकम्। द्रव्यमानक घृततैलादेरित्यर्थः। ग्रन्थान्तरे। लाजापायसनारिकेलसलिले सूत्रे जले काञ्जिके। द्वात्रिंशत्पलिकोपलैर्धृतिमित प्रस्थो गुडः सस्मृतः ॥ तैलेक्षौ च घृतेषु विंशतिपलैर्दध्नस्तु पञ्चोत्तरै प्रस्थः क्षीरगतो बुधैर्निगदितस्त्रिंशत्पलैरेव च। धृतिरष्टादश ॥ गोपथब्राह्मणे। पञ्चकृष्णलको माषस्तैश्चतुःषष्टिभि. पलम् ॥ पलैर्द्वात्रिंशता प्रस्थो मागधः परिकीर्तित ॥ आढकैस्तैश्चतुर्भि· स्यात् द्रोणः स्याच्चतुराढक इति द्रव्यमानानि ॥

शिवनेत्रोद्भवं रौप्यमतः शान्तिं प्रयच्छ मे ॥ इत्युक्त्वा इदं निष्कत्रयपरिमितं रजतं रुद्रदैवतं सदक्षिणाकम् अमुकसगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे॥ इत्युक्त्वा ब्राह्मणहस्ते सकुशजलान्वितं रौप्यं दद्यात् ॥ ब्राह्मणः—देवस्य त्वा० इति द्यौस्त्वा० इति वा मंत्रं पठित्वा रुद्राय इदं रजतं प्रतिगृह्णामि इत्युक्त्वा प्रतिगृह्णीयात् । ॐ कोदात्० इत्यादि ॐस्वस्त्यन्तं मन्त्रपठनम्॥१०—लवणदानम्—ब्राह्मणं संपूज्य हस्ते सकुशजलमादाय देशकालसंकीर्तनान्ते—यस्मादन्नरसाः सर्वे नोत्कृष्टा लवणं विना। शंभोः प्रीतिकरं नित्यमतः शान्तिं प्रयच्छ मे॥ इत्युक्त्वा सार्द्धखारीपरिमितम् इदं लवणं सोमदैवतं सदक्षिणाकम् अमुकसगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ॥ इत्युच्चारपूर्वकं ब्राह्मणहस्ते कुशजलयुतं लवणं दद्यात् ॥ ब्राह्मणः—देवस्य त्वा० इति द्यौस्त्वा० इति वा मंत्रं पठित्वा सोमाय इदं लवणं प्रतिगृह्णामि इत्युक्त्वा प्रतिगृह्णीयात् ॥ ॐकोदात्० इत्यादि ॐस्वस्तीत्यन्तं मन्त्रपठनम् ॥ दानद्रव्याभावे तत्तन्निष्क्रयभूतद्रव्यं दातव्यम् ॥ निष्क्रये दक्षिणाभावः ॥ एतानि दशदानानि सभ्येभ्यो देयानि ॥ एवं दशदानानि विधाय सभ्यान् प्रणम्य ब्रूयात् ॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं च यत्कृतम् ॥ भवत्प्रसादात्तत्सर्वमच्छिद्रं पूर्णमस्तु मे ॥ यन्मया कृतं पूर्वोत्तराङ्गप्रायश्चित्तं तत् अच्छिद्रमस्तु ॥ इति प्रार्थयेत् ॥ सभ्या वदेयुः—अस्त्वच्छिद्रम्॥व्रतच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि। सर्वं भवतु तेऽच्छिद्रं ब्राह्मणानां प्रसादतः ॥ इति॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु॥ न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ ॐ विष्णवे नमः ॥ ॐ विष्णवे नमः ॥ ॐ विष्णवे नमः॥

इति पूर्वोत्तराङ्गप्रायश्चित्तप्रयोगः समाप्तः ॥

## अथ हेमाद्रिप्रोक्तस्नानसङ्कल्पः ॥

स्वस्तिश्रीसमस्तजगदुत्पत्तिस्थितिलयकारणस्य रक्षाशिक्षाविचक्षणस्य प्रणतपारिजातस्य अशेषपराक्रमस्य श्रीमदनन्तवीर्यस्यादिनारायणस्याचिन्त्यापरिमितशक्त्या ध्रियमाणस्य महाजलौघमध्ये परिभ्रममाणानामनेककोटिब्रह्माण्डानामेकतमेऽव्यक्तमहदहंकारपृथिव्यप्तेजोवाय्वाकाशाद्यावरणैरावृते अस्मिन्महति ब्रह्माण्डखण्डे आधारशक्तिश्रीमदादिवाराहदंष्ट्राग्रविराजिते कूर्मानन्तवासुकितक्षककुलिककर्कोटकपद्ममहापद्मशंखाद्यष्टमहानागैर्ध्रियमाणे ऐरावतपुंडरीकवामनकुमुदांजनपुष्पदन्तसार्वभौमसुप्रतीकाष्टदिग्गजोपरिप्रतिष्ठितानामतलवितलसुतलतलातलरसातलमहातलपाताललोकानामुपरिभागे भूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनोलोकतपोलोकसत्यलोकाख्यसप्तलोकानामधोभागे चक्रवालशैलमहावलयनागमध्यवर्तिनो महाकालमहाफणिराजशेषस्य सहस्रफणामणिमण्डलमण्डिते दिग्दन्तिशुण्डादण्डोद्दंडिते अमरावत्यशोकवतीभोगवतीसिद्धवतीगान्धर्ववतीकाश्र्यवन्त्यलकावतीयशोवतीतिपुण्यपुरीप्रतिष्ठिते लोकालोकाचलवलयितेलवणेक्षुसुरासर्पिर्दधिक्षीरोदकार्णवपरिवृते जम्बूप्लक्षकुशक्रौञ्चशाकशाल्मलिपुष्कराख्यसप्तद्वीपयुते इन्द्रकास्यताम्रगभस्तिनागसौम्यगन्धर्वचारणभारतेतिनवखण्डमंडिते सुवर्णगिरिकर्णिकोपेतमहासरोरुहाकारपञ्चाशत्कोटियोजनविस्तीर्णभूमण्डले अयोध्यामथुरामायाकाशीकाञ्च्यवन्तिकाद्वारावतीतिसप्तपुरीप्रतिष्ठितेसुमेरुनिषधत्रिकूटरजतकूटाम्रकूटचित्रकूटहिमवद्विन्ध्याचलानां हरिवर्षकिंपुरुषवर्षयोश्च दक्षिणे नवसहस्रयोजनविस्तीर्णे मलयाचलसह्याचलविंध्याचलानामुत्तरे स्वर्णप्रस्थचन्द्रप्रस्थचांद्रशुक्तावन्तकरमणकमहारम

णकर्णाचजन्यसिंहलळंकेतिनवखण्डखण्डिते गङ्गाभागीरथीगोदावरीक्षिमायमुनासरस्वतीनर्मदातापीचंद्रभागाकावेरीपयोष्णीकृष्णावेण्याभीमरथीतुंगभद्राताम्रपर्णीविशालाक्षीचर्मण्वतीवेत्रवतीकौशिकीगंडकीविश्वामित्रीसरयूकरतोयाब्रह्मानंदामहीत्यनेकपुण्यनदीविराजितेभरतखंडे भारतवर्षेजंबूद्वीपेरामक्षेत्रेकूर्मभूमौसाम्यवतिकुरुक्षेत्रादिसमभूमौमध्यरेखायाःपूर्वेदिग्भागेश्रीशैलात्पश्चिमदिग्भागे श्रीकृष्णावेण्याकावेरीमध्यदेशेतुंगभद्रायाउत्तरेतीरेश्रीगोदावर्यादक्षिणेतीरेआर्यावर्तान्तर्गतब्रह्मावर्तैकदेशे हेमकूटमातंगमाल्यवत्किष्किंधासहितपंचक्रोशमध्ये चंपकारण्यनैमिषारण्यबदरिकारण्यकामिकारण्यदंडकारण्यार्बुदारण्यधर्मारण्यपद्मारण्यजंबुकारण्यसमस्तपुण्यारण्यानां मध्यदेशे भास्करक्षेत्रे सकलजगत्स्रष्टुःपरार्धद्वयजीविनोब्रह्मणोद्वितीयेपरार्धे एकपञ्चाशत्तमेवर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे अह्नो द्वितीयेयामे तृतीयेमुहूर्तेरथन्तरादिद्वात्रिंशत्कल्पानांमध्ये अष्टमेश्वेतवाराहकल्पेस्वायंभुवादिमन्वंतराणांमध्ये सप्तमे वैवस्वतमन्वंतरे कृतत्रेताद्वापरकलिसंज्ञकानां चतुर्णां युगानांमध्येवर्तमाने अष्टाविंशतितमेकलियुगेप्रथमचरणे भारतवर्षेभारतखंडेजम्बुद्वीपेरामक्षेत्रे परशुरामाश्रमे दंडकारण्यदेशेश्रीगोदावर्याः पश्चिमदिग्भागेश्रीमल्लवणाब्धेरुत्तरेतीरे श्रीशालिवाहनशाकेबौद्धावतारे प्रभवादिषष्टिसंवत्सराणां मध्ये ऽस्मिन्वर्तमाने अमुकनाम्निसंवत्सरे अमुकायनेअमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकराशिस्थितेचंद्रे अमुकराशिस्थितेश्रीसूर्ये अमुकराशिस्थिते श्रीदेवगुरौशेषेषुग्रहेषुयथायथाराशिस्थानस्थितेषुसत्सु एवंगुणविशिष्टायांशुभपुण्यतिथौ ममइहजन्मनि जन्मान्तरे वा बाल्ययौवनवार्द्धक्यावस्थासुजाग्रत्स्वप्नसुषुप्त्यवस्थासु

च वाक्पाणिपादपायूपस्थघ्राणरसनाचक्षुःस्पर्शनश्रोत्रमनोभिश्चरितानां
ज्ञाताज्ञातकामाकाममहापातकोपपातकादिसंचितानां पापानां ब्रह्महनन-
सुरापानस्वर्णस्तेयगुरुदारगमनतत्संसर्गरूपमहापातकानां तद्व्यतिरिक्तानां
बुद्धिपूर्वकाणामबुद्धिपूर्वकाणां च मनोवाक्कायकृतानामुपपातकानां स्पृष्टा-
स्पृष्टसङ्करीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणविहिताकरण-
कर्मलोपजनितानां रसविक्रयकन्याविक्रयहयविक्रयगोविक्रयसुतविक्रय-
धान्यविक्रयखरोष्ट्रविक्रयदासीविक्रयपशुविक्रयपण्यविक्रयजलचरादि
जंतुविक्रयस्थलचरादिविक्रयखेचरादिविक्रयसंभूतानां ब्राह्मणपितृमातृ
गुरुभ्रात्रादितर्जनताडनादिदोषजन्यदेवद्विजगोसंबन्धिभूम्यपहारान्या-
यार्जितद्विजवित्तापहारगुरुपाक्षेपसुहृद्वधस्त्रीवधतडागारामच्छेदन
दहनकर्मविषप्रयोगाभिचारसहसग्रामोन्मादनासच्छास्त्राध्ययनचिकि
त्साप्रायश्चित्तशकुननीतिज्योतिःशास्त्रप्रयोगछन्दोनिन्दाकरणऋणानपा-
करणव्ययस्वकरणन्यायाकरणधरणीवित्तहरणादिधर्मकार्यविघ्नाचरणा-
स्योत्कर्षपरनिन्दानृतभाषणपङ्क्तिभेदहत्यापाकपरिभूतानां ब्रह्महत्यांस
मानां पुंश्चलीमुखास्वादनक्षारलवणोदकपाननखमुखास्वादनमुखनिःसृ
तनीरपानापेयपानकपिलापयःपानपञ्चयज्ञोपासनपरित्यागातिनिषिद्ध
भक्षणकूटसाक्ष्यादीनां सुरापानसमानानां दर्भास्त्रधारणागवैकृत्यशूद्रसे-
वानग्निकत्वब्रह्मद्रोहवह्निशिष्टपुरोहितत्वदेवलकत्वाध्वसरणाश्व...

मनुष्यस्त्रीभूधेनुविक्षेपहरणकृषिकर्महयादिशिक्षाभारवाहित्वशिल्पविद्याभ्यासादीनां स्वर्णस्तेयसमानानां पितृष्वसृमातृष्वसृभ्रातृपत्नीमातुलानीभगिन्याचार्यतनयामातृसपत्नीसखीभार्यामित्रशरणागताधात्रीसाध्वीवर्णोत्तमांत्यजाधगम्यागमनानांगुरुदारगमनसमानानां गजाश्वोष्ट्रखरखड्गमहिषशरभसारमेयशार्दूलसिंहभल्लूकसूकरवृकऋक्षहरिणवानरचतुष्टयजंबूकाविमेषमृगादिप्राणिवधानांसंकरीकरणसमानानाम्॥ मयूरचापभारद्वाजशुकचक्रवाकमीनादिक्रौञ्चवकशशहंसगृहगोधिकावधानामधैर्यादिमलिनीकरणानाम्॥ निन्दितेभ्यो धनादानशूद्रसेवाऽनृतभाषणाब्राह्मणकरणाघ्रेयघ्राणादिजिह्मामैथुनादिकोपात्यंतविषयासक्तकृतघ्नतादीनामपात्रीकरणानाम् ॥ अयोनिपशुयोनिरेतोत्सर्जनयतिगोब्राह्मणवृत्तिच्छेदनपुंमैथुनशास्त्रनिंदागोसंचिततृणसंचयाग्निप्रदानानां जातिभ्रंशकरणानाम्॥ मुखनासारंध्रकरणाहासनमद्यानविनिमयद्रव्य-

१ निक्षेपस्यापहरण नराश्वरजतस्य च । भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतम्॥ अश्वरत्नमनुष्यस्त्रीभूधेनुहरण तथा । निक्षेपस्य च सर्वं हि सुवर्णस्तेयसंमितम्॥ २ मनु —रेत:सेकः स्वयोनीषु कुमारीष्वन्त्यजासु च । सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसम विदुः ॥ याज्ञवल्क्य·—सखिभार्याकुमारीषु स्वयोनिष्वंत्यजासु च । सगोत्रासु सुतस्त्रीषु गुरुतल्पसम स्मृतम् ॥ पितुःस्वसारं मातुश्च मातुलानीं स्नुषामपि । मातु.सपत्नीं भगिनीमाचार्यतनया तथा ॥ आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पग ॥ ३ मनु·—खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा । संकरीकरण ज्ञेय मीनाहिमहिषस्य च॥ ४ कृमिकीटवयोहत्यामद्यानुगतभोजनम् । फलैधःकुसुमस्तेयमधैर्यं च मलावहम्॥ ५ मनु —निन्दितेभ्यो धनादानं वाणिज्यशूद्रसेवनम् । अपात्रीकरण ज्ञेयमसत्यस्य च भाषणम् ॥ ६ ब्राह्मणस्य रुज· कृत्या घ्रातिरघ्रेयमद्ययो । जैह्म्य च मैथुन पुंसि जातिभ्रंशकरं स्मृतम् ॥

पजीवनविषमवाक्कशादंडपाशसंग्रहणक्रीडानाट्यतत्कालदंतधावनाभ्यं-
गमैथुनक्षौरनिस्वापादीनाम् ॥ वेश्यागमनशूद्रीगमनदासीगमनविधवा-
गमनकन्यागमनपितृव्यपत्नीगमनरजस्वलागमनस्वगोत्रागमनतिर्य-
ग्योनिगमनप्रतिलोमजागमनसाधारणस्त्रीगमनानृतौभार्याभिगमनसुत-
वधूगमनानाम् ॥ एकादश्यन्नशूद्रान्नगणिकान्नगणान्नाभिन्नकांस्यभो-
जनादितालवृक्षफलभक्षणपलाण्डुभक्षणक्रमुकताम्बूलादिचर्वणानाम् ॥
अहःस्वप्नासंगमचित्रवस्त्रालंकारस्वप्नेन्द्रियनिपातितानाम्॥संधानादिना-
ष्टमीचतुर्दशीदिवाभोजनभानुवारे पर्वरात्रिभोजनादिग्रहिण्यागर्भिण्या-
गमनमनोरथक्षारमात्याऽपतितप्रेरिताऽतुरुष्कान्नोच्छिष्टान्नकारागृह-
निवासभोजनतुरुष्कमध्येनिवासतुरुष्कस्पृष्टद्रव्योपभोगतुरुष्कस्पर्शतुरु-
ष्कदेशनिवासादीनाम्॥कुग्रामवासवादनिष्ठुरदुर्गृहदुर्भाण्डदुर्भोजना-
पक्वपाकयत्नकटकाशनखनिकृतननदीलंघनसमुद्रस्नानानिमित्तभा-
र्याविसर्जनब्राह्मणद्वेषद्विजभेदमित्रभेदस्त्रीपुरुषभेदस्थूलसूक्ष्मजीवहिंस-
नक्रूरकर्मानृतलुब्धकपिशुनचौरपाखंडनारीलंपटचाण्डालशवास्थिस्पर्श-
गृंजनभक्षणलशुनभक्षणमसूरान्नभक्षणमार्जारोच्छिष्टभोजनपतितपङ्क्ति-
भोजनपतितसंभाषणादीनाम्॥बालस्तेयऋणापाकरणानाहिताग्निता-
पक्रयपारिविद्भृतकाध्ययनादानभृतकाध्यापनपरदारपरावित्तशतसल्य-
स्त्रीशूद्रक्षत्रविड्वंधुनिंदार्थोपजीवननास्तिक्यव्रतलोपकुप्यपशुस्वाध्या-
यत्यागस्तेयायाज्ययाजनपितृमातृसुतत्यागतडागारामविक्रयकन्यासंदू-
षणपरनिंदकयाजनतत्कन्याप्रदानकौटिल्यव्रतलोपनस्वार्थक्रियारंभप-
रस्त्रीनिषेवणस्वाध्यायाग्निसुतत्यागबांधवत्यागेन्धनार्थद्रुमच्छेदनस्त्रीहिं-
सौषधीजीवनहिंस्रयंत्रविधानव्यसनात्मविक्रयशूद्रप्रेष्यहीनयोनिनिषेव-
णानाम्॥प्रमवासपराजपुष्टत्वासच्छास्त्राधिगतमाकाराधिकारित्वभार्या-
विक्रयाद्युपपातकानाम्॥तथैकादश्याहादिश्राद्धान्नभोजनहस्तदत्तशूद्रदत्त-

घृतादिभोजनापोशनरहितभोजनयज्ञोपवीतरहितान्नभोजनपरान्नभोजनरतोमूत्रादिभक्षणमृच्छोष्टभक्षणवैश्वदेवरहितादिदूषितान्नभोजनशूद्रादिम्लेच्छान्नभोजनपुंसवनसीमंतोन्नयनादिभोजनजातकर्मादिभोजननीलवस्त्रपरिधानभोजनाच्छिष्टभोजनकुत्सितपंक्तिभोजनचांडालकूपभांडोदकपानचांडालस्पृष्टजलक्षीरादिपानद्विजद्रव्यापहरणश्राद्धदिनेगमनदिवामैथुनोन्मादकद्रव्यभक्षणसूर्योदयास्तशयनपतितादिदुष्टप्रतिग्रहप्रायश्चित्तद्रव्यप्रतिग्रहस्वनिषिद्धवृत्तिधनार्जनमिथ्याब्राह्मणक्रोधोत्पादनबलात्कारितम्लेच्छादिसंसर्गम्लेच्छभाषणपरस्परानुरक्तद्वेषोत्पादनेन्द्रधनुःप्रदर्शनश्राद्धनिमंत्रितब्राह्मणानाह्वानदेवागारकृतेष्टशिलादिहरणव्रतभङ्गखरोष्ट्रादियानशिवनिर्माल्यस्पर्शशिवद्रव्योपजीवनविष्णुद्रव्योपजीवनोपाधिकत्रैवर्णिकदेवार्चनद्वेष्याभिचारणकूटमंत्रकूटहोमकरणपूज्यापूजनापूज्यपूजनपरवृत्तिहरणशरणागतपरित्राणाकरणकृतोपकारविस्मरणविविधकपटवृत्त्युपजीवनपरविवाहान्तरायकरणदेवर्षिद्विजनिन्दाकरणपरमसन्मानदूरीकरणगुणयुक्तस्यापमानकरणाकालभोजनादेशभोजनसार्वकालिकपरद्वेष्याभिनिवेशपरमार्थचिन्तनयजनयाजनहोमदानान्तरायकरणादिपापानां विनाशार्थं श्रीपरमेश्वरप्रीत्यर्थं देवब्राह्मणसवितृसूर्यनारायणसन्निधौ अमुकतीर्थे स्नानमहं करिष्ये ॥

इति हेमाद्रिप्रोक्तस्नानसंकल्पः ॥

अथ नद्यादौ नित्यस्नानप्रयोगः—स्नानकर्ताघटिकाद्वयावशिष्टायां रात्र्यां मृदम् आर्द्रगोमयंकुशान्तिलान्सुरभीणिपुष्पाणिभस्मचा-

---

१ मन्त्राणां संपूर्णतया सविस्तरो नित्यस्नानप्रयोगो द्रष्टव्यश्चेत् अस्माकं 'ब्रह्मनित्यकर्मसमुच्चये' द्रष्टव्यः॥ अरुणकिरणयुक्ताप्राचीदिशमवलोक्यस्नायात्॥
२ घटिकाद्वयावशिष्टायां रात्र्यांगच्छेज्जलाशये। तिलगन्धाक्षतैःपुष्पैर्दर्भैःसहितःशुचिः ॥ प्रातर्मध्याह्नयोः स्नानंवानप्रस्थगृहस्थयोः। यतेस्त्रिषवणंप्रोक्तंसकृत्तुब्रह्म-

दाय नद्यादितीर्थतटेगत्वाआनीतसम्भारान्छुचौदेशेपृथक्पृथक्संस्थाप्य तदनन्तरंहस्तौपादौचप्रक्षाल्यकुशपवित्रं धारयेत्॥तस्य मंत्रः–ॐपवित्रेस्थोवैष्णव्यौसवितुर्वः प्रसवऽउत्पुनाम्म्यच्छिद्रेणपवित्रेण सूर्य्यस्य रश्मिभिः॥ १॥तस्यतेपवित्रपतेपवित्रंपूतस्ययत्कामः पुनेतच्छकेयम्॥ ॥ २॥ अनेनमन्त्रेणकुशपवित्रंधृत्वापश्चात्बद्धशिखःछाशिखःयज्ञोपवीती- जानूर्ध्वजलेतिष्ठन् अन्यथातूपविश्याचमनं कुर्यात् ॥ ॐभूः पुनातु । ॐभुवः पुनातु । ॐस्वः पुनातु। पश्चात्प्रवाहाभिमुखो वा सूर्याभिमुखः सङ्कल्पं कुर्यात्॥ यथा–अद्यपूर्वोच्चारितएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौ ममात्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मम इह जन्मनि जन्मान्तरे वा कायिकवाचिकमानसिकसांसर्गिकज्ञाताज्ञातस्पर्शास्पर्शभुक्ताभुक्तपीतापीतादिसकलपातकानिरासपूर्वकमासनभोजनशयनगमनादिष्वनृतभाषणादिदोषनिरासद्वारा श्रीपरमेश्वरप्रीत्यर्थममुकेतीर्थे

---

चारिणः॥ प्रातःस्नानं सनक्षत्रं सन्ध्या नक्षत्रसंयुता । होमः प्रागुदयाद्भानोर्गायत्र्यास्तु ततो जपः ॥

१ दक्षिणंबाहुमुद्धृत्यवामस्कन्धेनिवेशितम्। यज्ञोपवीतमित्युक्तदेवकार्येषुशस्यते॥
२ स्रोतसोऽभिमुखं स्नायान्नदीषुप्रवहज्जले । स्थावरेचतडागेचरवेरभिमुख सदा ॥
स्रोतसोऽभिमुखोमज्जेद्यत्रापःप्रवहन्ति वै । स्थावरेषुचसर्वेषुआदित्याभिमुखस्तथा ॥
तडागादिषुतोयेषुप्रत्यर्कं स्नानमाचरेत् । नद्यासस्वसुचस्नायात्प्रतिस्रोत.स्थितोद्विजः॥
यायाःसमुद्रगानद्यस्तासुस्नानतुसमुखम् । सर्वेषाशाखिनामेतन्निनावाजसनेयिनः ॥
३ नदीदेवनिखातेषुतडागेषुसरस्सुच । स्नानं समाचरेन्नित्यं गर्तप्रस्रवणेषु च ॥
निपानादुद्धृतपुण्यं ततः प्रस्रवणोदकम् । ततोऽपिसारसपुण्य ततोनाद्येयमुच्यते ।
तीर्थतोयंततःपुण्य गङ्गातोयंततोऽधिकम् ॥

प्रातःस्नानमहं करिष्ये॥इतिसङ्कल्प्यतीर्थप्रार्थनाकुर्यात् यथा—त्वं राजा-सर्वतीर्थानात्वमेवजगतःपिता । याचितंदेहिमेतीर्थंतीर्थराजनमोऽस्तुते॥ अपामधिपतिस्त्वंचतीर्थेषुवसतिस्तव । वरुणायनमस्तुभ्यं स्नाना-नुज्ञां प्रयच्छमे॥ गङ्गेचयमुनेचैवगोदावरिसरस्वति । कावेरिनर्मदेसिन्धो जलेऽस्मिन्सन्निधिंकुरु ॥ इति संप्रार्थ्य अधोलिखितमंत्रेणन्युब्जा-ञ्जलिहस्तेनतीर्थाभिमंत्रणंकुर्यात् । ॐउरुᳪहिराजावरुणश्चकारसूर्य्यायु पन्थामन्वेतवाऽउ ॥ अपदेपादाप्रतिधातवेकरुतापवक्ताहृदयाविध-श्चित् ॥ नमोवरुणायाभिष्ठितोवरुणस्यपाशः—॥ २३/८ ॥ इत्यभिमन्त्र्यप्रश्चा-ज्जलावर्तनम्—ॐ येतेशतंवरुणयेसहस्रंयज्ञियाःपाशावितताम्महान्तः । तेभिर्नोऽअद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्काः ॥ पा० सू० ॥ इतिमंत्रेणजलंदक्षिणहस्ताङ्गुलिभिर्दक्षिणावर्तेत्रिवारंभ्रामयेत् ॥ पूर्णा-ञ्जलिनाऽपोग्रहणम् ॥ ॐसुमित्रियानऽआपऽओषधयःसन्तु ॥ २२/६ ॥ इतिमन्त्रेण जलाञ्जलिं गृहीत्वा—दुर्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टि यञ्चवयन्द्विष्मः ॥ २२/६ ॥ इतिमन्त्रेणाञ्जलिस्थमुदकं स्ववामभागेतीर्थ-तटे क्षिपेत् ॥ मृत्तिकामादायतस्यास्त्रिभागान्कृत्वा प्रथमभागं वाम-हस्तेन गृहीत्वा तेन नाभेरधः कटिप्रदेशमनुलेपयेत् ।[१] हस्तं प्रक्षाल्य पुनस्तेनैवहस्तेन द्वितीयभागेनवस्तिऊरूजङ्घेचरणौकरौचप्रत्येकंतूष्णीं त्रिस्त्रिरनुलिप्यपुनर्हस्तंप्रक्षाल्याचम्यतीर्थोदकंनमस्कुर्यात् ॥ ततस्तृती-यभागमादाय ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढ-मस्य पाᳪसुरे स्वाहा ॥ १५/५ ॥ इतिमन्त्रेणतृतीयभागेनदक्षिणहस्तेन ललाटादिनाभिपर्यन्तानिगात्राण्युपालिप्यहस्तं प्रक्षाल्याचम्यतीर्थोदकं

१ अस्नातस्तुपुमान्नार्हो जपहोमादिकर्मसु । प्रात स्नानतदर्थंतुनित्यस्नानप्रकी-र्तितम् ॥ स्नानमूला क्रिया सर्वा स्मृतिश्रुत्युदितानृणाम् । तस्मात्स्नाननिषेवेत श्रीपुष्ट्यारोग्यवर्द्धनम् ॥ २ सङ्कल्पश्चयथाकुर्यात्स्नानदानव्रतादिके ॥

नमस्कुर्यात् ॥ अश्वक्रान्तेरथक्रान्तेविष्णुक्रान्तेवसुन्धरे । उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतम् ॥ मृत्तिके ब्रह्मपूतासिकाश्यपेनाभिवन्दिता । त्वयाहतेनपापेनगच्छामिपरमांगतिम्॥ इति संप्रार्थ्य ॥ नाभिमात्रंतीर्थेजलंप्रविश्यसूर्याभिमुखःस्थित्वा । ॐआपोऽअस्मान्मातरः॑शुन्धयन्तुघृतेननोघृतप्वः॑पुनन्तु ॥ विश्वᳪ हिरिप्रम्प्रवहन्तिदेवी?॥-॥ इतिमंत्रेण निमज्य पुनः–ॐउदिदाभ्युᳪ शुचिरापूतऽएमि॥-॥ इतिमंत्रेणद्वितीयवारंनिमज्यपुनस्तूष्णींनिमज्योन्मज्याचामेत् ॥ ततोगोमयमादायतस्यत्रिभागान्कृत्वाप्रथमभागं वामहस्तेगृहीत्वातेननाभेरधःकटिप्रदेशमनुलेपयेत् ॥ हस्तंप्रक्षाल्यपुनस्तेनैव हस्तेनद्वितीयभागेनबस्तिम् ऊरूजङ्घेचरणौकरौच प्रत्येकंतूष्णींत्रिस्त्रिरनुलिप्यपुनर्हस्तंप्रक्षाल्याचम्यतीर्थोदकंनमस्कुर्यात्॥पुनस्तृतीयभागमादाय ॥ अग्रमग्रंचरन्तीनामोषधीनांवनेवने । तासां वृषभपत्नीनांपवित्रं कायशोधनम्॥ तन्मेरोगांश्चशोकांश्चपापंमेहरगोमय॥ इतिमंत्रेणगोमयमभिमंत्र्य ॥ ॐमानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः॥मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तःसदमित्त्वाहवामहे॥᳴॥ इतिमंत्रेण तृतीयभागेनललाटादिनाभिपर्यन्तानिगात्राण्युपलिप्यक्षालयेत्॥भस्मादाय॥ॐअग्निरितिभस्म वायुरितिभस्मजलमितिभस्मस्थलमितिभस्मव्योमेतिभस्मसर्वᳪहवाइदं भस्ममनएतानिचक्षूᳪषिभस्मानि॥ इतिमंत्रेणभस्माभिमन्त्र्य॥ ॐप्रसद्यभस्मनायोनिमपश्चपृथिवीमग्ने ॥ सᳪसृज्यमातृभिष्ट्वञ्ज्योतिष्मान्पुनरासदः॥᳴॥ इतिमंत्रेणललाटाद्यङ्गेषुभस्मलेपनंकुर्यात् ॥ ततोवक्ष्यमाणैरष्टभिर्मंत्रैःप्रतिमंत्रंकुम्भमुद्रयाद-

१ इदंभस्मानुलेपनंक्षेपकंकात्यायनपरिशिष्टसूत्रेतुनोक्तम् ॥ २ दक्षाङ्गुष्ठंपराङ्गुष्ठेक्षिप्त्वाहस्तद्वयेनतु । सावकाशामेकमुष्टिंकुर्यात्साकुम्भमुद्रिका ॥

क्षिणचुलुकेनवाशिरोऽभिषिञ्चेत्॥ ॐइमम्मे०॥१/२१॥ॐतत्त्वांया०॥२/२१॥
ॐत्वन्नोऽअग्ने०॥३/२१॥ॐसत्त्वन्नोऽअग्ने०॥४/२१॥ॐमापोमौषधी०॥२२/६॥
ॐउदुत्तमं०॥१२/१२॥ॐमुञ्चन्तुमा०॥१२/१२॥ॐअवभृथनिचु०॥८/३॥एतैर्मंत्रैर-
भिषेचनंकृत्वापश्चान्निमज्योन्मज्याचामेत् ॥ ततोवक्ष्यमाणमंत्रैःप्रतिमंत्रं
कुशत्रयेणसजलेन नाभिदक्षिणपार्श्वमारभ्यपाणिशिरोपरिनीत्वानाभि-
वामपार्श्वपर्यन्तंमदक्षिणमात्मानंपावयेत् ॥ ॐयथा—आपोहिष्ठामयो-
भुवस्तानऽऊर्जे दधातन ॥ महेरणायचक्षसे॥११/५०॥ ॐयोवः—शिवतमो-
[illegible]

ॐहविष्मती०॥१/१०॥ॐदेवीरापो०॥१/६॥ॐकार्षिरसि०॥३/६॥ॐअपो-
देवा०॥-/-॥द्रुपदादिव०॥२०/२०॥ॐशन्नोदेवी०॥१२/३६॥ॐअपार्ठ०रसु०॥९/३॥
ॐअपोदेवी० ॥१२/२६॥ ॐपुनन्तुमा० ॥१९/३७॥ ॐअग्नऽआयूंषि॥१९/३८॥
ॐपुनन्तुमा०॥१९/३९॥ ॐपवित्रेण० ॥१९/४०॥ ॐयत्तेपवित्र० ॥१९/४१॥ ॐपव-
मानः०॥१९/४२॥ॐउभाभ्यां०॥१९/४३॥ॐवैश्वदेवी०॥१९/४४॥एभिर्मंत्रैःसजलेन
कुशत्रयेणनाभिदक्षिणपार्श्वमारभ्यशिरोवधिनीत्वानाभिवामपार्श्वपर्यन्तं
मदक्षिणमात्मानंपावयेत् ॥ पश्चादुदकंस्पृशेत् ॥ ततोमार्जनम्—तस्य
मंत्राः—ॐचित्पतिर्म्मा० ॥४/४॥ इतिमंत्रेणनाभेरूर्ध्वंमार्जयित्वा ॥ ततं
नाभेर्मध्येमार्जनम्—ॐवाक्पतिर्म्मा०॥ इतिमंत्रेणनाभेर्मध्यं मार्जयित्वा।
ततोनाभेरधोमार्जनम्—देवोमांस०॥ इतिमंत्रेणनाभेरधोमार्जयित्वाततः
सर्वाङ्गमार्जनम्—ॐचित्पतिं०॥४/४॥इतिसंपूर्णमन्त्रेणसर्वाङ्गंमार्जयित्वा।
ततोऽधोलिखितमंत्रैःकुशैःपुनर्मार्जयेत् ॥ यथा—ॐइमम्मेव० ॥१/२१॥ ॐ
पुनातु ॥ ॐतत्त्वांया० ॥२/२१॥ ॐभूः पुनातु ॥ ॐत्वन्नोऽअ० ॥३/२१॥
ॐभुवःपुनातु॥ॐसत्त्वन्नोऽअ०॥४/२१॥ॐस्वःपुनातु॥ॐआपोमौप०॥२२/१॥

ॐमहःपुनातु॥ॐउद्वुत्तमं०॥ ॥ॐजनः पुनातु॥ ॐमुञ्चन्तुमा०॥ ॥ ॐतपःपुनातु॥ॐअवभृथनि०॥ ॥ॐसत्यंपुनातु ॥ ॐतत्सवितुर्वरे०॥ ॥ ॥ॐसर्वेपुनातु॥ इतिकुशैर्मार्जयित्वोऽन्तर्जलेमग्नोऽनुच्छ्वसन्नघमर्षणं कुर्यात्॥ ॐद्रुपदादिव०॥ ॥ इतिमंत्रंत्रिःपठेत्॥पश्चात्स्नानाङ्गतर्पणम्॥

१ अपामार्गैस्तथादूर्वाभिर्मार्जनंश्रावण्यादिनैमित्तिकस्नानेकुर्यान्नतुनित्यस्नाने ॥ तद्यथा ॥ अपामार्गेणमार्जनम् ॥ ॐअपाघमित्यस्यशुनःशेपऋषिर्लिङ्गोक्ता देवता अनुष्टुप्छन्दःमार्जनेविनियोगः—ॐअपाघमपकिल्बिषमपकृत्यामपोरपः ॥ अपामार्गत्वमस्मदपदुःष्वप्न्यंसुव॥ ॥ इतिमंत्रेणापामार्गपत्रैस्त्रिभिर्मार्जयेत् ॥ ततः—दूर्वाङ्कुरेणमार्जनम्—काण्डात्काण्डादित्यस्याग्निरृषिर्दूर्वेष्टकादेवताअनुष्टुप्छन्दःमार्जने विनियोगः—ॐकाण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि॥ एवानोदूर्वेप्रतनुसहस्रेण शतेनच ॥ ॥ इतिमन्त्रेणदूर्वाभिस्त्रिर्मार्जयेत् ॥ २ पक्षान्तरेणाघमर्षणंतुपड्विधमस्ति ॥ तत्रैकपक्षस्तुप्रयोगेसूचितोऽस्ति ॥ द्वितीयः पक्षः—ॐऋतंचसत्यंचाभीद्धात्तपसोध्यजायत ॥ ततोरात्र्यजायततततःसमुद्रोऽअर्णवः । समुद्रादर्णवादधिसंवत्सरोऽअजायत । अहोरात्राणिविदधद्विश्वस्य मिषतोवशी । सूर्याचन्द्रमसौधाताथापूर्वमकल्पयत् । दिवंचपृथिवींचान्तरिक्षमथोस्वः ॥ ८ ॥ इतित्रिःपठेत् ॥ तृतीयःपक्षः—ॐआयंगौःपृश्निरक्रमीदसदन्मातरम्पुरः ॥ पितरंचप्रयन्स्वः ॥ ॥ इतित्रिःपठेत्॥ चतुर्थःपक्षः—सशिरसप्राणायामम्॥ यथा—ॐभूःॐभुवः ॐस्वःॐमहःॐजनःॐतपः ॐसत्यम्ॐतत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् । ॐ आपोज्योतीरसोमृतं ब्रह्म भूर्भुवः स्वरोम् ॥ ॥ इतित्रिःपठेत् ॥ पञ्चमःपक्षः—ॐ इतित्रिः पठेत् ॥ षष्ठःपक्षः—परमात्मानं विष्णुंशेषशायिनं सायुधं सश्रीकमेकाग्रमनसास्मरेत् ॥ ३ नित्यंनैमित्तिकंकाम्यं त्रिविधंस्नानमुच्यते । तर्पणंतुभवेत्तस्यतदङ्गत्वेन कीर्तितम् ॥

प्रथमंदेवतर्पणम्—पूर्वाभिमुखःसन्कुशत्रयं गृहीत्वातदग्रैःसव्येनदेवतीर्थेनोंकारपूर्वकंदेवेभ्यएकैकमञ्जलिंदद्यात् ॥ ॐब्रह्मादयोदेवास्तृप्यन्ताम् । ॐभूर्देवास्तृप्यन्ताम् । ॐभुवर्देवास्तृ० । ॐस्वर्देवास्तृ० । ॐभूर्भुवः स्वर्देवास्तृ० ॥ द्वितीयमृषितर्पणम्—उदगग्रान्दर्भान्धृत्वातदग्रैर्निवीती प्रजापतितीर्थेनोंकारपूर्वकमृषिभ्यो द्वौद्वावञ्जलीदद्यात् । ॐसनकादिद्वैपायनादयऋषयस्तृ० ॥ ॐभूर्ऋषयस्तृ० । ॐभुवर्ऋषयस्तृ० । ॐस्वर्ऋषयस्तृ० । ॐभूर्भुवःस्वर्ऋषयस्तृ० ॥ तृतीयं पितृतर्पणम्—अग्रान्दक्षिणाग्रमूलान्दर्भान्धृत्वाऽपसव्येनपितृतीर्थेनोंकारपूर्वकंपितृभ्यस्त्रींस्त्रीन् तिलमिश्राञ्जलीन्दद्यात् । ॐकव्यवाडनलादयः पितरस्तृ० । ॐभूः पितरस्तृ० । ॐभुवः पितरस्तृ० । ॐस्वः पितरस्तृ० । ॐभूर्भुवः स्वः पितरस्तृ० ॥ तत आचम्य सव्येनतिलमिश्राञ्जलिंगृहीत्वायक्ष्मतर्पणं कुर्यात्॥तद्यथा-यन्मयादूषितंतोयंशारीरमलसंभवात्।तस्यपापस्यशुद्ध्यर्थं यक्ष्मैतत्तेतिलोदकम् ॥ इतिमंत्रेणतीर्थतटेतिलमिश्रजलाञ्जलिंनिक्षिपेत् ॥ पश्चात् शिखोदकत्यागः—लतागुल्मेषुवृक्षेषुपितरोयेव्यवस्थिताः । ते सर्वेतृप्तिमायान्तु मयोत्सृष्टैः शिखोदकैः ॥ इतिमंत्रेण स्वदक्षिणभागे शिखाग्रंनिष्पीडयेत्॥ततोजलाद्बहिर्निष्क्रम्याहतेश्वेतेधौतेवाससीपरिधाय भस्मादिधारयित्वा गृहं व्रजेत् ॥ इति नद्यादौ नित्यस्नानप्रयोगः ॥

---

१ हस्तौकृत्वातिलैःपूर्णौजलस्थस्तर्पयेत्पितॄन् । स्थलस्थेननकर्तव्यपितॄणातृप्तिमिच्छता ॥ २ कार्पासंकटिमुक्तंचकौशेयंभोजनोत्तरम् । क्षाळनाच्छुद्धिमाप्नोति ऊर्णावातेनशुद्ध्यति ॥ ३ विभूतिर्यस्यनोभालेनाङ्गेरुद्राक्षधारणम् । नहिशिवमयं वाणीत यजेदन्त्यजंयथा ॥ श्राद्धेयज्ञेजपेहोमेवैश्वदेवेसुरार्चने । भस्मत्रिपुण्ड्रैःपूतात्मा मृत्युंजयतिमानवः ॥ ४ स्नात्वाशिरोनावधुनेत् । म्लेच्छान्त्यजपतितैःसभाषणं न कुर्यात् ॥

## ॥ अथ संक्षिप्त-यज्ञोपवीत धारणविधिः ॥

स्नात्वा शुद्धवस्त्र परिधाय आसने उपविश्य भस्मधारणं शिखाबन्धनं च कृत्वा आचमनं प्राणायाम च कृत्वा संकल्प कुर्यात्॥ अद्य पूर्वोच्चरित० अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे एवं ग्रहगणविशेषेण विशिष्टायां शुभपुण्यतिथौ मम अमुकगोत्रोत्पन्नस्य अमुकशर्मणः ( अमुकवर्मणः अमुकगुप्तस्य वा ) श्रौतस्मार्तकर्मानुष्ठानसिद्ध्यर्थम् अमुककर्माङ्गत्वेन नवीन यज्ञोपवीतधारणमहं करिष्ये । इति सकल्पं कृत्वा धारणीयानि यज्ञोपवीतानि जान्वोः स्थिरीकृत्य तेषु इदं विष्णुरितिमन्त्रेण दक्षिणाङ्गुष्ठं त्रिर्भ्रामयित्वा सूत्रत्रिगुणीकरणं कुर्यात्॥ यथा–सूत्रत्रिगुणीकरणम्–इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहा ॥$\frac{५}{१५}$॥ इति सूत्रत्रिगुणीकरणं कृत्वा यज्ञोपवीतानि प्रक्षालयेत् । यथा–यज्ञोपवीतप्रक्षालनम्–ॐ आपो हि ष्ठा मयो भुवस्ता नऽऊर्जे दधातन । महे रणाय चक्षसे ॥ १$\frac{११}{५०}$ ॥ ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥२$\frac{११}{५१}$॥ ॐ तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः॥३$\frac{११}{५२}$॥ ततो यज्ञोपवीतानि करसंपुटे कृत्वा दशवारं गायत्री मन्त्रेण अभिमन्त्रयेत् । ॐभूर्भुवः स्वः ॐतत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात्॥४$\frac{३}{३५}$॥ इत्यभिमन्त्र्य तंतुषु च ग्रन्थिषु देवतावाहनादिकं कुर्यात् । यथा–तन्तुग्रन्थिषु देवतावाहनम् ॥ ॐ प्रथमतन्तौ–ॐकाराय नमः ॐकारमावाहयामि ॥ १ ॥

---

१ सविस्तरो 'यज्ञोपवीतधारणविधि' कर्तव्यश्चेत् अस्माकं 'ब्रह्मनित्यकर्मसमुच्चये' द्रष्टव्य ।

द्वितीयतन्तौ—ॐ अग्निर्दूतं० ॥२२॥ अग्नये नमः अग्निम् आ० ॥२॥ तृतीयतन्तौ—ॐ नमोऽस्तु सर्पेभ्यो० ॥ ३६ ॥ नागेभ्यो नमः नागान् आ० ॥३॥ चतुर्थतन्तौ—ॐ त्रयः सोम० ॥२१॥ सोमाय नमः सोमम् आवाहयामि ॥ ४ ॥ पंचमतन्तौ—ॐउदीरता० ॥ ३९ ॥ पितृभ्यो नमः पितॄन् आ० ॥ ५ ॥ षष्ठतन्तौ—ॐ प्रजापते० ॥६३॥ प्रजापतये नमः प्रजापतिम् आ० ॥ ६ ॥ सप्तमतन्तौ—ॐ आनो नियु० ॥ २६ ॥ अनिलाय नमः अनिलम् आ०॥७॥ अष्टमतन्तौ—ॐ सुगावो देवा८० ॥२८॥ यमाय नमः यमम् आवा० ॥८॥ नवमतन्तौ—ॐ विश्वेदेवास० ॥३४॥ विश्वेभ्यो देवेभ्यो नमः विश्वान् देवान् आवाहयामि ॥ ९ ॥ इति तन्तुषु देवानावाह्य ग्रन्थिमध्ये ब्रह्मादिदेवानावाहयेत् । यथा— ॐब्रह्मजज्ञा० ॥ ३ ॥ ॐइदं विष्णु० ॥ १५ ॥ ॐत्र्यम्बकं० ॥६०॥ यज्ञोपवीतग्रंथिमध्ये ब्रह्मविष्णुरुद्रेभ्यो नमः ब्रह्मविष्णुरुद्रान् आवाहयामि ॥ इति आवाहयित्वा ॐमनोजूति० ॥ १२ ॥ आवाहितदेवाः सुप्रतिष्ठिता वरदा भवत ॥ इति प्रतिष्ठाप्य ततः पूजनं कुर्यात् ॥ प्रणवाद्यावाहितयज्ञोपवीतदेवताभ्यो नमः गन्धाक्षतपुष्पाणि समर्पयामि ( वा मानसोपचारैः संपूजयेत् ) ॥ ततो यज्ञोपवीतं ध्यायेत् । यथा— यज्ञोपवीतध्यानम्—प्रजापतेर्यत्सहजं पवित्रं कार्पाससूत्रोद्भवब्रह्मसूत्रम्॥ [illegible] च यशः प्रकाशं जपस्य सिद्धिं कुरु ब्रह्मसूत्रम् ॥ इति [illegible] यज्ञोपवीतानि सूर्याय प्रदर्शयेत् । यथा—सूर्याय यज्ञोपवीतप्रदर्शनम् । ॐ उदुत्यं० ॥३३॥ ॐ चित्रन्दे० ॥ ४२ ॥ ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम

शरदं÷ शतं भूयंश्च शरदं÷ शतात् ॥ [१]३६ ॥ ततो यज्ञोपवीतानि धारयेत् । यथा—यज्ञोपवीतधारणम्—यज्ञोपवीतमिति मन्त्रस्य परमेष्ठी ऋषिः लिङ्गोक्ता देवता त्रिष्टुप्छन्दः यज्ञोपवीतधारणे विनियोगः । ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥ इति एकं यज्ञोपवीतं दक्षिणहस्तेन धृत्वा आचमनं कुर्यात् । एवं द्वे त्रीणि यथोक्तानि वा धारयेत् ॥ प्रतियज्ञोपवीत-धारणान्ते आचमनं कुर्यात् ॥ ततो जीर्णयज्ञोपवीतानि त्यजेत् । यथा—जीर्णयज्ञोपवीतत्यागः—ॐ समुद्रङ्गच्छ० ॥[२]१॥ एतावद्दिनपर्यंतं ब्रह्मत्वं धारितं मया । जीर्णत्वात्त्वत्परित्यागो गच्छ सूत्र यथासुखम् ॥ १ ॥ इति मन्त्रेण जीर्णयज्ञोपवीतं शिरोमार्गेण निःसार्य शुद्धभूमौ त्यजेत् । पश्चात् यथाशक्ति गायत्रीमन्त्रजपं कुर्यात् ॥ पश्चात् संकल्पं कुर्यात् । यथा—अर्पणम् । अनेन नवीनयज्ञोपवीतधारणार्थकृतेन यथाशक्ति गायत्रीजपकर्मणा श्रीसविता देवता प्रीयतां न मम ॥ पुनः संकल्पः । अनेन नवीनयज्ञोपवीतधारणाख्येन कर्मणा मम श्रौतस्मार्तकर्मानुष्ठान-सिद्धिद्वारा श्रीभगवान् परमेश्वरः प्रीयतां न मम ॥

॥ इति संक्षिप्तयज्ञोपवीतधारणविधिः ॥

---

१ सूतके मृतके चैव गते मासचतुष्टये ॥ नवयज्ञोपवीतानि धृत्वा जीर्णानि संत्यजेत् ॥ २ सप्रणवव्याहृतिभिर्वा जीर्णयज्ञोपवीतत्यागः कार्यः ॥

## ॥ अथ यज्ञमण्डपादिकरणाङ्गीभूतभूम्यादिपूजनम् ॥

तत्रादौ परीक्षापूर्वकं मण्डपार्थं यागोचितभूमिपरिग्रहं कृत्वा मार्जनं-खननदहनाद्यपसारणादिशोधितां शल्यनिरसनपूर्विकां शुद्धमृद्भिरापूरितां दृढां भूमिं समां कृत्वा तत्र मण्डपकुण्डादिकं विदध्यात् ॥ तत्र पूर्व-स्वसमीपे गन्धादिपूजासम्भारोपकल्पनम् ॥ हस्ते जलमादाय देशकालौ संकीर्त्य चिकीर्षितमण्डपकुण्डादीनां निर्विघ्नफलसिद्धिकामो गणेशपूजां करिष्ये॥ तत्रादौ दिग्रक्षणं कलशाराधनं दीपपूजनञ्च करिष्ये इति दिग्रक्षणादि कृत्वा षोडशोपचारैर्गणेशपूजां कुर्यात् ॥ तद्यथा–

ध्यानम्–सिन्दूराभं त्रिनेत्रं पृथुतरजठरं हस्तपद्मैर्दधानं दन्तं पाशाङ्कुशेष्टान्युरुकरविलसद्बीजपूराभिरामम् ॥ बालेन्दुद्योतमौलिं करिपतिवदनं दानपूर्वार्धगण्डं ध्यायेच्छान्त्यर्थमीशं गणपतिममलं रक्तवस्त्राङ्गरागम्॥१॥ ॐगुणानान्त्वागुणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे वसो मम॥आहमजानिगर्भधमात्वमजासिगर्भधम्॥२३/१९॥ॐभूर्भुवः स्वः गणपतये नमः ध्यायामि॥

आवाहनम्–ॐसहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिꣳ सुर्वतं० ॥ ३१/१ ॥ ॐभूर्भुवः स्वः गणपतये नमः आवाहयामि ॥

आसनम्–ॐ पुरुषऽएवेदꣳ सर्वं यद्भूतं यच्च भाव्यम्॥उतामृतत्वस्ये० ॥३१/२॥ ॐभूर्भुवः स्वः गणपतये नमः आसनं समर्पयामि ॥

पाद्यम्–ॐ एतावानस्य महिमातो ज्यायाँश्च पूरुषः ॥ पादोस्य-विश्वा० ॥३१/३॥ ॐभूर्भुवः स्वः गणपतये नमः पाद्यं समर्पयामि ॥

---

१ ज्ञात्वा पूर्वं धरित्रीं दहनखननसम्प्लावनैः संविशोध्य पश्चात्कृत्वा समानां मुकुरजठरवद्वाचयित्वा द्विजेन्द्रैः ॥ पुण्याहं कूर्मशेषौ क्षितिमपि कुसुमाद्यैः समाराध्य शुद्धे वारे तिथ्यादौ कुर्यात्सुरपतिककुभः साधनं मण्डपार्थं ॥ कुण्डसिद्धिः ॥५॥

॥ अर्घ्यम्—ॐ त्रिपादूर्द्ध्व उदैत्पुरुषः पादोस्येहाभवत्पुनः॥ ततोवि० ॥३१॥ ॐ भूर्भुवः स्वः गणपतये नमः अर्घ्यं समर्पयामि ॥

आचमनीयम्—ॐ ततो विराडजायत विराजोऽ अधिपूरुषः०॥३१॥ ॐभूर्भुवः स्वः गणपतये नमः आचमनीयं समर्पयामि ॥

पञ्चामृतस्नानम्—ॐ घृतेन सीता मधुना समज्यतां विश्वैर्देवैर-नुमता मरुद्भिः॥ ऊर्जस्वती पयसा पिन्वमानास्मान्त्सीते पयसा-भ्याववृत्स्व ॥ १२ ॥ ॐ भूर्भुवः स्वः गणपतये नमः एकतन्त्रेण मिलितपञ्चामृतस्नानं समर्पयामि । पञ्चामृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ पञ्चामृताङ्ग-त्वेन गन्धाक्षतपुष्पाणि समर्प्य निर्माल्यमुत्तरे विसृज्य पुनः गन्धाक्षत-पुष्पाणि समर्प्याभिषेकं कुर्यात् ॥

अभिषेकः—ॐ गणानान्त्वा गणपतिᳪ हवामहे प्रिया० ॥ २३ ॥ ॐ भूर्भुवः स्वः गणपतये नमः अभिषेकस्नानं समर्पयामि ॥

शुद्धोदकस्नानम्—ॐशुद्धवालः सर्वशुद्धवालो मणिवालस्तऽआ-श्विनाः श्येतः श्येताक्षोरुणस्ते रुद्राय पशुपतये कर्णा यामाऽअव-लिप्ता रौद्रा नभोरूपाः पार्जन्याः ॥ २४ ॥ ॐभूर्भुवः स्वः गणपतये नमः शुद्धोदकस्नानं समर्पयामि । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ पश्चात् देवं वस्त्रेण प्रमृज्य स्वस्थाने स्थापयेत् ॥

वस्त्रम्—ॐ सुजातो ज्योतिषा सह शर्म्म वरूथमासदत्स्वः ॥ वासोऽ अग्ने विश्वरूपᳪ संव्ययस्व विभावसो ॥ ११ ॥ ॐ भूर्भुवः स्वः गणपतये नमः वस्त्रोपवस्त्रे समर्पयामि ॥ वस्त्रान्ते आचमनीयं सम०॥

यज्ञोपवीतम्—ॐ तस्माद्यज्ञा० ॥३१॥ ॐभूर्भुवः स्वः गणपतये नमः यज्ञोपवीतं समर्पयामि ॥ यज्ञोपवीतान्ते आचमनीयं समर्पयामि ॥

गन्धः—ॐ त्वाङ्गन्धुर्वाऽ अंखनँस्त्वामिन्द्रुस्त्वाम्बृहुस्पतिः ॥ त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥ ऱ्र ॥ ॐ भूर्भुवः स्वः गणपतये नमः गन्धं समर्पयामि ॥

अक्षताः—ॐ अक्षन्नमीमदन्त ह्यवं प्रियाऽ अंधूषत॥ अस्तोषत स्वभानवो विप्रा न विष्ठया मती योजान्विन्द्र ते हरी ॥ ॐ भूर्भुवः स्वः गणपतये नमः अक्षतान्समर्पयामि ॥

पुष्पाणि—ॐ ओषंधीः प्रतिमोदद्ध्वम्पुष्पंवतीः प्रसूवंरीः ॥ अश्वाऽ इव सुजित्वंरीर्वीरुधः पारयिष्ण्वः ॥ ॐ भूर्भुवः स्वः गणपतये नमः ऋतुकालोद्भवानि पुष्पाणि समर्पयामि ॥

सौभाग्यद्रव्याणि—ॐ अहिंरिव भोगैः पर्य्येति बाहुञ्ज्यायां हेतिम्परिबाधमानः॥ हुस्तुघ्नो विश्वां वुयुनांनि विद्वान्पुमान्पुमांसं सम्परिपातु विश्वतः ॥ ॐ भूर्भुवः स्वः गणपतये नमः सौभाग्यद्रव्याणि समर्पयामि ॥

धूपः—ॐ अश्वंस्य त्वा वृष्ण्णंः शुक्ना धूंपयामि देवुयजंने पृथिव्याः ॥ मुखाय त्वा मुखस्य त्वा शीर्ष्णे ॥ अश्वंस्य त्वा वृष्ण्णंः शुक्ना धूंपयामि देवुयजंने पृथिव्याः ॥ मुखाय त्वा मुखस्यं त्वा शीर्ष्णे ॥ अश्वंस्य त्वा वृष्ण्णंः शुक्ना धूंपयामि देवुयजंने पृथिव्याः । मुखाय त्वा मुखस्यं त्वा शीर्ष्णे ॥ मुखाय त्वा मुखस्यं त्वा शीर्ष्णे । मुखाय त्वा मुखस्यं त्वा शीर्ष्णे । मुखाय त्वा मुखस्यं त्वा शीर्ष्णे ॥ ॥ ॐ भूर्भुवः स्वः गणपतये नमः धूपमाघ्रापयामि ॥

दीपः—ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत० ॥१२॥ ॐ भूर्भुवः स्वः गणपतये नमः दीपं दर्शयामि ॥

नैवेद्यम्—ॐ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ॥ प्रप्रदातारन्तारिषऽ ऊर्जन्नोधेहि द्विपदे चतुष्पदे ॥ ६३ ॥ ॐ भूर्भुवः स्वः गणपतये नमः नैवेद्यं निवेदयामि ॥ ॐप्राणाय स्वाहा । ॐ अपा० इत्यादिपञ्चप्राणाहुतीर्दद्यात् ॥ नैवेद्यमध्ये पानीयं समर्पयामि । उत्तरापोशनं समर्पयामि । हस्तप्रक्षालनं समर्पयामि । मुखप्रक्षालनं समर्पयामि । आचमनीयं समर्पयामि । करोद्वर्तनार्थे चन्दनं सम० ॥

फलम्—ॐ याः फलिनीर्याऽ अफलाऽ अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वꣳ हसः ॥ ६३ ॥ ॐ भूर्भुवः स्वः गणपतये नमः नानाविधफलानि समर्पयामि ॥

मुखवासार्थे ताम्बूलम्—ॐ उतस्मास्य द्रवतस्तुरण्यतः० ॥१५॥ ॐ भूर्भुवः स्वः गणपतये नमः मुखवासार्थे ताम्बूलं समर्पयामि ॥

दक्षिणा—यद्दत्तंयत्परादानंयत्पूर्तं याश्च दक्षिणाः ॥ तदग्निर्वैश्वकर्म्मणः स्वर्द्देवेषु नो दधत्॥६२॥ ॐ भूर्भुवः स्वः गणपतये नमः सुवर्णपुष्पदक्षिणा समर्पयामि ॥

नीराजनम्—ॐ ये देवासो दिव्येकादशस्थ पृथिव्यामध्येकादशस्थ ॥अप्सुक्षितो महिनैकादशस्थते देवासो यज्ञमिमञ्जुषद्ध्वम्॥ ॥१७॥ ॐ भूर्भुवः स्वः गणपतये नमः कर्पूरार्तिक्यं दर्शयामि॥ जलेन प्रदक्षिणावर्तनम् । पुष्पैर्देववन्दनम् । अभिवन्दनम् । आत्मवन्दनम् । हस्तप्रक्षालनम् ॥

मन्त्रपुष्पाञ्जलिः—ॐ यज्ञेन यज्ञमयजन्त देवास्तानि० ॥ ३४६ ॥ ॐ भूर्भुवः स्वः गणपतये नमः मन्त्रपुष्पाञ्जलिं समर्पयामि ॥

प्रदक्षिणा—ॐ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः० ॥ ॐ भूर्भुवः स्वः गणपतये नमः प्रदक्षिणां समर्पयामि ॥

विशेषार्घ्यम्—अर्घ्यपात्रे जलं प्रपूर्य गन्धाक्षतपुष्पहिरण्यसहितं नारिकेलं वा पूगीफलं धृत्वा—रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक ॥ भक्तानामभयं कर्ता त्राता भव भवार्णवात् ॥ द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो ॥ वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद । अनेन फलदानेन फलदोऽस्तु सदा मम ॥ ॐ भूर्भुवः स्वः गणपतये नमः विशेषार्घ्यं समर्पयामि ॥

प्रार्थनापूर्वकनमस्कारः—आवाहनं न जानामि न जानामि तवार्चनम् ॥ पूजां चैव न जानामि क्षमस्व परमेश्वर ॥ १ ॥ अन्यथा शरणं नास्ति त्वमेव शरणं मम । तस्मात्कारुण्यभावेन क्षमस्व परमेश्वर ॥ गतं पापं गतं दुःखं गतं दारिद्र्यमेव च ॥ आगता सुखसंपत्तिः पुण्याच्च तव दर्शनात् ॥ ॐ भूर्भुवः स्वः गणपतये नमः प्रार्थनापूर्वकं साष्टाङ्गं नमस्करोमि ॥ हस्ते जलं गृहीत्वा—अनेन यथाज्ञानेन यथा मिलितोपचारद्रव्यैः ध्यानावाहनादिषोडशोपचारैरन्योपचारैश्च कृतपूजनेन गणपतिः प्रीयताम् ॥

ततो यजमानो ब्राह्मणैः सूक्ष्मतया पंचवाक्यैः सति समये संपूर्णतया वा पुण्याहवाचनं कारयित्वा ततो भूम्यादीना पूजन कुर्यात् ॥

१ पुण्याहवाचनाङ्गीभूतकलशस्थापनादिविधिं तत्तन्मन्त्रै कृत्वा ब्राह्मण ब्राह्मणान् वा वृत्वा यजमानो भो ब्राह्मणा' मह्य सहकुटुम्बिने इत्यादिकमुक्त्वा

यथा ॥ हस्ते जलमादाय—देशकालौ सङ्कीर्त्य करिष्यमाणमण्डपकुण्डादिकरणाङ्गत्वेन भूमिकूर्मानन्तपूजां करिष्ये ॥ इत्येवं सङ्कल्प्य । भूमिध्यानम्—चतुर्भुजां शुक्लवर्णां कूर्मपृष्ठोपरिस्थिताम् ॥ पद्मशङ्खचक्रशूलधरां च वरदाननाम्॥ आवाहनम्—ॐ आगच्छ सर्वकल्याणि वसुधे लोकधारिणि ॥ पृथिवि ब्रह्मदत्तासि कश्यपेनाभिवन्दिता ॥ इत्यावाह्य ॥ ॐ भूरसीत्यस्य प्रजापतिर्ऋषिः प्रस्तारपङ्क्तिश्छन्दः भूमिर्देवता भूम्यै पुष्पाञ्जलिदाने विनियोगः ॥ ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ॥ पृथिवीं यच्छ पृथिवीन्दृꣳह पृथिवीम्माहिꣳसीः ॥ भूम्यै नमः पुष्पाञ्जलिं समर्पयामि ॥ इति सफलपुष्पाञ्जलिदानम् ॥ ॐ उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ दंष्ट्राग्रैर्लीलया देवि यज्ञार्थं प्रणमाम्यहम् ॥ इति दण्डवत्प्रणम्य ॥ अर्घ्यपात्रे जलं प्रपूर्य गन्धाक्षतपुष्पहिरण्यसहितम् अष्टाङ्गार्घ्यं गृहीत्वा जानुभ्यां धरणीं गत्वा । ॐ ब्रह्मणा निर्मिते देवि विष्णुना शङ्करेण च । पार्वत्या चैव गायत्र्या स्कन्दवैश्रवणेन च ॥ यमेन पूजिते देवि धर्मस्य विजिगीषया । सौभाग्यं देहि पुत्रांश्च धनं रूपं च पूजिता ॥ गृहाणार्घ्यमिमं देवि सौभाग्यं च प्रयच्छ मे ॥

---

करिष्यमाणहोमात्मकमहारुद्रकर्माङ्गीभूतकुण्डमंडपादिकरणार्थं भूम्यादिदेवाना पूजाकर्मणः पुण्याहं भवन्तो ब्रुवन्तु । अस्तु पुण्याहम् ॥ कल्याणं भवन्तो ब्रुवन्तु । अस्तु कल्याणम् ॥ ऋद्धिं भवन्तो ब्रुवन्तु । कर्म ऋद्ध्यताम् ॥ स्वस्ति भवन्तो ब्रुवन्तु । आयुष्मते स्वस्ति ॥ श्रीरस्त्विति भवन्तो ब्रुवन्तु । अस्तु श्रीः ॥ इति पंचवाक्यैः पुण्याहवाचनं कारयेत् ॥ २ सविस्तरो पुण्याहवाचनप्रयोगो महारुद्रप्रयोगस्य सप्तमे पत्रे द्रष्टव्यः ॥

इत्यर्घ्यं दत्वा ॥ ॐ भूरसीत्यस्य प्रजापतिर्ऋषिः प्रस्तारपङ्क्तिछन्दः भूमिर्देवता भूमिपूजने विनियोगः । ॐभूरसि भूमिरस्यदितिरसि विश्वधाया०॥ १३/१८ ॥ भूम्यै नमः इत्यनेन गन्धादिभिः पञ्चोपचारैरभ्यर्च्य वा नाममन्त्रेणार्चनम् ॥ उपचारानिमास्तुभ्यं ददामि परमेश्वरि । भक्त्या गृहाण देवेशि त्वामहं शरणागतः ॥ ॐ सपरिवारायै भूम्यै बलिं समर्पयामि । इति गन्धपुष्पपायसलाजासक्तुभिः सघृतैःसदीपैर्महाबलिदानं कुर्यात् ॥ ततो बद्धाञ्जलिर्निम्नोक्तैः श्लोकैः प्रार्थयेत् ॥ नन्दे नन्दय वासिष्ठे वसुभिः प्रजया सह । नमो भार्गवदायादे देश जाना सुखावहे ॥ सर्वबीजसमायुक्ते सर्वरत्नौषधीवृते । रुचिरं नन्दने नन्दे वासिष्ठे रम्यतामिह ॥ प्रजापतिसुते देवि चतुरस्रे महीयसि । सुभगे सुव्रते देवि गृहे काश्यपि रम्यताम् ॥ पूर्णे गिरीशदायादे पूर्णं कामं कुरुष्व मे । भद्रे काश्यपदायादे कुरु भद्रां मतिं मम ॥ तुपकेशैश्च पाषाणैर्वल्मीकाङ्गारवर्जिते । विष्णुशक्तिसमुद्भूते शङ्खपर्णे वसुन्धरे ॥ अनेकरत्नसम्पन्ने भूमि देवि नमोऽस्तु ते । इष्टदे त्वं प्रयच्छेष्टं त्वा प्रतिष्ठापयाम्यहम् ॥ देशस्वामिपुरस्वामिगृहस्वामिपरिग्रहे । मनुष्यधनहस्त्यश्वपशुवृद्धिकरी भव ॥ इति प्रार्थना॥ ततः कूर्मानन्तपूजनम्॥ ॐ यस्य कूर्म इत्यस्य प्रजापतिर्ऋषिः लिङ्गोक्ता देवता कूर्मपूजन विनियोगः ॥ ॐ यस्य कुर्म्मो गृहे हुविस्तमग्ने वर्द्धया त्वम् ॥ तस्मै देवाऽअधिब्रवन्नयञ्चब्रह्मणस्पतिं— ॥ १७/५२ ॥ इत्यनेन मन्त्रेण कूर्मपूजा विधाय॥ स्योना पृथिवीत्यस्य मेधातिथिर्ऋषिः गायत्री छन्दः अनन्तो देवता अनन्तपूजने विनियोगः ॥ ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म्म सप्रथाः ॥ ३५/२१ ॥ इत्यनेन मन्त्रेण

वा नाममन्त्रेण अनन्तपूजा। भूमिकूर्मानन्तपूजायां यत् न्यूनातिरिक्तं तत्सर्वं परिपूर्णमस्तु॥ अस्तु परिपूर्णम्॥ आवाहनं न जानामि न जानामि तवार्चनम्। पूजां चैव न जानामि क्षमस्व परमेश्वरि॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु॥ न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्॥ इति प्रार्थयेत्॥ इति भूम्यादिपूजनम्॥

---

## ॥ संक्षेपेण महारुद्रशतचण्डीविष्णुयागोपयोगी मण्डपकुण्डवेदीप्रकारः॥

**भूमिसमचतुरस्रप्रकारः**—मण्डपस्य प्राधान्यात् प्रथमं मण्डपस्याधममध्यमोत्तमव्यवस्थया यादृशमण्डपरचनाऽभीप्सिता भवेत् तदनुरूपां तादृशीं भूमिं शोधनकृतदिगभिप्रायेण समन्तात्समां

---

१ अत्रावसरे भूम्यादीनां पूजनानन्तरं विश्वकर्मणः सूत्रकारस्य गजस्थदेवतानां खनित्रस्य वास्तुपुरुषस्य च क्रमेण विश्वकर्मणे नमः, सूत्रकाराय नमः, गजस्थदेवताभ्यो नमः, खनित्राय नमः, वास्तुपुरुषाय नम इति नाममन्त्रेण षोडशोपचारैः पञ्चोपचारैर्वा पूजनं कृत्वा दशदिक्षु इन्द्रादिदेवानपि सपूज्य भूम्यादिसर्वदेवताभ्य एकतन्त्रेण पृथक् पृथक् वा बलिदानं केचित् यच्छन्ति परं तत्र विशिष्टप्रमाणाभावात् शिष्टाचारं मत्वा कर्तव्यं चेत्कर्तव्यं कृते फलमकृते न दोषः॥ एवमेव पूजनानन्तरं खातकोणे सामान्यतः आग्नेयकोणे वा गर्तं कृत्वा तत्रापि भूम्यादीनां पूजनं कृत्वा शुभलग्ने मण्डपस्य स्तम्भारोपणं कर्तव्यम्। अत्र प्रमाणार्थं मूलं मृग्यम्॥ तदनन्तरं च पञ्चगव्यमन्त्रैः पञ्चगव्यं कृत्वा तेन इरावतीत्यादिनवमन्त्रैः भूम्याः प्रोक्षणं च रक्षोघ्नमन्त्रैः सर्षपविकिरणं कर्तव्यमित्यपि अनुष्ठानप्रकाशादिग्रन्थेषु दृश्यते।

चतुरस्रा विदध्यात् ॥ प्रथमं दिक्शोधनसमये पूर्वादिदिक्चतुष्टये तत्तन्नामोपलक्षितेषु विन्दुषु शङ्कून् निवेश्य ततो मण्डपविस्तारमित-मजरत् सूत्रं द्विपाशं मध्याङ्कितं विधाय सूत्रस्यैकं प्रान्तं पूर्वशङ्कौ द्वितीयं दक्षिणशङ्कौ बध्नीयात् । तत्पश्चात् सूत्रमध्याङ्कितं चिह्नम् अग्निकोणदेशे चाकर्षयेत् । यत्र चिह्नं पतेत् तत्रैवाग्नेयी दिगिति । एवं दक्षिणपश्चिमशङ्कुभ्यान्निर्ऋतिदिक् । पश्चिमोत्तरशङ्कुभ्यां वायवी दिक् । उत्तरपूर्वशङ्कुभ्यामैशानी दिग् इति ( उत्तरदिक्सूचकयन्त्रादिद्वारैव पूर्वादिदिशं निश्चिता वा कृत्वा) चतस्रो विदिशः स्थिराः सम्पद्यन्ते। इत्थं कृत्वा मण्डपार्थे यतेत ॥

अथमादिमण्डपमानम्—मण्डपस्य तु सर्वकर्माङ्गतया विहि-तत्वात् विहितेषु तीर्थादिस्थानेषु वा कस्मिंश्चिदपि स्थाने समीकृतायां भूमौ दीर्घविस्तारयोर्दशहस्तो द्वादशहस्तो वा कनिष्ठः, चतुर्दशहस्तः षोडशहस्तो वा मध्यमः, अष्टादशादिहस्तः श्रेष्ठो मण्डपः कार्यः ॥ तुलादानादौ तु सर्वसमावेशाय विंशतिहस्त एवेति विशेषः । इति सर्वसाधारणो मण्डपः ॥ शतचण्ड्यां षोडशहस्तं सहस्रचण्ड्यां विंशति हस्त मण्डपप्रमाणम् इति रामवाजपेयः ॥ कुण्डमण्डपनिर्णायकग्रन्थेषु अनेकमानमण्डिता मण्डपा दृश्यन्ते । प्रायः सर्वत्र षोडशहस्त

१ दिगन्तशङ्कुद्वयग द्विपाश विस्तारतुल्य तु गुण दलाके । कोणे प्रकर्षे-दिति वेदकोणेष्वेव चतुष्कोणमतीव साधु ॥ कुण्डसिद्धि ॥ १४ ॥

२ कुण्डसिद्धौ—दश १० सूर्य १२ करोमितोऽधम स्यादिन १२ शक्र १४ प्रमितै करैस्तु मध्य । धृति १८ भूप १६ करोमितो वरीयान् नख २० हस्तोऽप्यथ मण्डपस्तुलायाम् ॥ १६ ॥

मितो मण्डपो गृह्यते । मण्डपभूमानमुत्तमादिव्यवस्थया परिकल्प्य यजमानस्य स्वपंचमांशेन हस्तार्द्धोच्चं हस्तोच्छ्रायं वा इष्टकादिनिर्म्मितं समचतुरस्रं मण्डपस्थलं सुचतुरशिल्पिभिर्निर्माय तत्र मण्डपं विदध्यात्॥ ततो मण्डपस्य चतुर्दिक्षु द्वयोर्द्वयोः स्तम्भयोर्मध्ये मध्यभागेषु चत्वारि द्वाराणि कार्याणि तानि चाल्पे मण्डपे तु चतुस्त्रिंशत् ३४ अङ्गुलमानानि ज्ञातव्यानि, मध्यममण्डपे चतुरङ्गुलाधिकद्विहस्तमितानि, उत्तमे अष्टाङ्गुलाधिकद्विहस्तमितानि च कर्तव्यानि। तथा च मध्यभागे शिखरं निर्माय द्वारवर्जम् एवं मण्डपं कटैर्ऋजुवंशैश्छादयेत्। स्तम्भकानपि सुवस्त्रसमूहैश्छादयेत् ॥ ततो द्विहस्तनिखातानां दशहस्तवंशानामुपरि पञ्चहस्तदीर्घान् द्विहस्तमितविस्तारान् चतुष्कोणाकारान् गैरिकादिभिर्लिखितस्वस्वदिक्पालादिवाहनान् प्राच्यादिक्रमेणाष्टौ पीतादिवर्णकान् पटनिर्मितध्वजान् दद्यात्। यथा प्राच्यां

१ कृतोर्द्ध्वबाहोः समभूगतस्य कर्तुः शराशः प्रपदोच्छ्रितस्य । यो वा स हस्तोऽस्य जिनांशकोऽपि स्यादङ्गुलं तत्तदिमांशका ये॥ कु.सि. ॥४॥ तद्धस्तस्यैव कुण्डमण्डपादिषु गणपत्यादिस्थण्डिलेषु च मानं गृह्यते ॥ २ उच्चां भूमिं मण्डपस्य प्रकुर्यात् हस्तोन्मानामर्धहस्तोन्मितां वा ॥ मध्ये भूमिं मण्डपेनोन्मिताञ्च त्यक्त्वा कुर्यात् मण्डपश्चेत् द्वितीयः ॥ कु. सि. ॥१५॥ (यत्र प्रतिष्ठादौ मण्डपद्वयं तत्र कृतमण्डपेन समां भूमिं मध्ये त्यक्त्वा द्वितीयं मण्डपं कुर्यात् ॥) सिद्धान्तशेखरे—स्थलादर्काङ्गुलोच्छ्रायं मण्डपस्थलमीरितम्॥ महाकपिलपञ्चरात्रे—उच्छ्रायो हस्तमानं स्यात् सुसमं च सुशोभनम्॥ ३ कुण्डार्के—दिक्षु द्वारो द्विहस्ता उपरिचतुरिभैरङ्गुलैरेधिताः स्युः ॥११॥ ४ कुण्डसिद्धौ—मध्यभागशिखरं रचयित्वा छादयेदपि कटैर्ऋजुवंशैः । द्वारवर्जमिह मण्डपमेनं स्तम्भकानपि सुवस्त्रसमूहैः ॥ २२ ॥

पीतवर्णे ध्वजे तद्दिक्पतीन्द्रस्य वाहनमैरावतम् । आग्नेय्यां रक्तवर्णे ध्वजे अग्निवाहनं छागम् ॥ दक्षिणस्यां कृष्णवर्णे ध्वजे यमवाहनं महिषम् । नैर्ऋत्यां नीलवर्णे ध्वजे निर्ऋतिवाहनं सिंहम् । वारुण्यां श्वेतवर्णे ध्वजे वरुणवाहनं मत्स्यम् । वायव्यां धूम्रवर्णे ध्वजे वायुवाहनं हरिणम् । उत्तरे श्वेतवर्णे ध्वजे कुबेरवाहनमश्वम् ॥ ऐशान्यां श्वेतवर्णे ध्वजे ईशवाहनं वृषभम् । एवं क्रमेण लिखित्वा दद्यात् । तत उपरोक्त-दिक्पालध्वजवर्णानुरूपाः सप्तहस्तदीर्घा एकहस्तविस्तारास्त्रिकोणा-कारा अष्टौ पताका देयाः ॥ तत्रापि क्रमात् ता वज्र–शक्ति–दण्ड–खड्ग–पाश–अङ्कुश–गदा–त्रिशूल–लक्ष्मसहिता विधाय च नवमीं पताकां पूर्वेशानयोर्मध्ये ब्रह्मणः ( आचार्य कुण्डसमीपे ) रक्तां ग्रन्या-न्तरे श्वेतवर्णामथवा कमण्डलुना अङ्कितां हंसान्वितां च कृत्वा दशमीं-पताकां च पश्चिमनैर्ऋत्ययोर्मध्ये अनन्तस्य गरुडान्वितां दद्यात् । मण्डपस्योपरि दशहस्तमितं सप्तहस्तायतं त्रिहस्तविस्तृतं चित्रं क्षुद्र-घण्टिकाभिर्युक्तम्, शैवे शाक्ते त्रिशूलाङ्कितम्, वैष्णवे चक्राङ्कितं रमणीयकं ध्वजं दद्यात् ॥ ततो नारिकेलदलादिभिः मण्डपमाच्छाद्य मण्डपं वस्त्रादिभिः पुष्पपल्लवैः कदलीस्तम्भैश्चैवं भूषयेत् यतो देव-

---

१ विशदा नवमी शुभा पताका पुरुहूतेशदिगन्तरा विधेया । दशमी दिति-जस्य वरुणस्य मध्ये स्यादिति केचिदाहुराचार्याः ॥ २ दशमी पताकाया उल्लेख कुण्डसिद्धिकुण्डार्कादिग्रन्थेषु नास्ति किन्तु रुद्रकल्पद्रुमग्रन्थे मण्डपपूजने दिक्पाल-पूजनावसरे उच्छ्रिनकरणस्य लिखितमस्ति ॥ ३ परशुरामः—त्रिहस्तविततो दीर्घो दशहस्तो विचित्रितः । चामरेणान्वितः शीर्षे प्रान्ते सक्षुद्रघण्टिकः । दशहस्तो-न्नतो दण्डे पुष्पगन्धैः समन्वितः ॥

प्रधानके मध्यभागे कुण्डकरणे न दोषः । एवं च नारायणभट्टः, निर्णयसिन्धुः, शान्तिरत्नः, स्कान्दः इत्यादीनां बहुग्रन्थेष्वपि तस्य प्रमाणं वर्तते ॥ वेदपारायणाङ्गहवननवशतसहस्रचण्ड्यादिहवने तथैकादशिनीमारभ्य लघुरुद्रमहारुद्रातिरुद्रहवनेषु मंडपस्य मध्यभागे कुण्डं कार्यं तदेव शुभदमित्यर्थः ॥ एवं च विष्णुयागे मध्यवेदी उक्ता तस्मिन्नुत्तरस्यामेव कुण्डः । यत्र शतचण्ड्यादिदेव्युद्देशेन होमः क्रियते तत्र देव्या मध्यवेदी चेत् कुण्डविधानमुत्तमपक्षे पश्चिमस्यां दिशि द्विहस्तं सहस्रचण्ड्यां चतुर्हस्तं षड्हस्तं वा चतुरस्रकुण्डं पद्मकुण्डं वा कुर्यात् ॥

पूर्वम् आहुतिसङ्ख्याङ्कसदृशं सर्वत्र यागकार्ये एकद्वित्रिचतुर्हस्ताद्यन्यतरहस्तप्रमाणं स्वीकृत्य मण्डपे यथोक्तस्थले स्वपञ्चमांशं निष्कास्य चतुरस्रं कुण्डं विधाय शतार्द्धे आहुतौ रत्निप्रमाणः कुण्डः कार्यः । शतपरिमिते अरत्निप्रमाणं स्यात् । सहस्रे हस्तं स्यात् । अयुतहवने हस्तद्वयम् । लक्षे चतुर्हस्तम् । प्रयुतहवने षट्करम् । कोटौ ककुभिः वा अपरे नृपकरं प्राहुः ॥ सक्षेत्रसमखातं क्रमात् उपरितः चतुस्त्र्यङ्गुलमानत्रिमेखलान्वितं सकण्ठं सनाभि सयोनिकुण्डं कुर्यात् ।

---

१ पञ्चमाशलक्षण तु पृष्ठतो ६५तमे पृष्ठे टिप्पण्या दत्तम्॥ २ कुण्डसिद्धयाम्—शतार्द्धे रत्नि. स्याच्छतपरिमितेऽरत्निमितत सहस्रे हस्त स्यादयुतहवने हस्तयुगलम्। चतुर्हस्त लक्षे प्रयुतहवने षट्करमिभैः ककुब्भिर्वा कोटौ नृपकरमपि प्राहुरपरे ॥ ॥ ३५ ॥ ३ कुण्डसिद्धौ—खात क्षेत्रसम प्राहुरन्ये तु मेखला विना । कण्ठो जिनाशमान स्याद् अकोश इति चापरे ॥ ४८ ॥ ४ अधमा मेखलैका स्यात् मध्यमं मेखलाद्वयम् । श्रेष्ठास्तिस्रोऽथवा द्वित्रिपञ्चस्वधमतादिकम् ॥ ४९ ॥ ५ योनिर्व्यासार्धदीर्घा त्रितितिगुणलवादायताग्निद्विभागा तुङ्गा तावत् समन्तात् परिधिरुपरिगा तावदभेण रम्यम्॥ निम्न कुण्ड निशती वळपदत्युगेनान्विताऽधोविशाला मूलात् सच्छिद्रनालान्तरवटरुचिराऽश्वत्थपत्राकृतिर्वा॥कुण्डसिद्धिः॥५४॥

भक्त्युत्पादको भवेदिति । ततो मण्डपात् बाह्ये द्वारसम्मुखे हस्तान्तरे पूर्वादिक्रमेण अश्वत्थौदुम्बरप्लक्षन्यग्रोधवृक्षकाष्ठैः, अभावे वा एतेषां यथालाभेनैकेन तोरणानि रचयेत् ।

## ॥ संक्षेपतः मण्डपकुण्डवेदीरचनाप्रकारः ॥

नवकुण्डकरणे तु पूर्वे चतुरस्रः, आग्नेय्याम् योनिः, दक्षिणस्याम् अर्धचन्द्रः, नैर्ऋत्यां त्रिकोणः, पश्चिमस्या वर्तुलः, वायव्यां षट्कोणः, उत्तरस्यां पद्माकारः, ईशान्याम् अष्टकोणः, पूर्वेशानयोर्मध्ये नवम आचार्यकुण्डश्चतुरस्रो वा वर्तुलाकारः कर्तव्यः ॥ पंचकुण्डकरणे पूर्वे चतुरस्रः । दक्षिणस्याम् अर्धचन्द्रः । पश्चिमस्यां वृत्तः । उत्तरस्यां पद्मः । ईशान्याम् चतुरस्रः ॥ एककुण्डः कर्तव्यश्चेत् पश्चिमायां वा उत्तरस्याम् ईशान्यां वा केवलं चतुरस्रः कर्तव्यः। कुण्डरत्नावल्याम्—एकं कुण्डं शुभदं मध्ये शान्तौ जपाङ्गहवनेषु । आरभ्यैकादशिनीं लघुमहदतिरुद्रहवनविधौ ॥ इति वचनानुसारेणैव महारुद्रादौ होम-

---

१ कुण्डसिद्धौ—पूर्वादिदिक्षु रचयेदपि तोरणानि न्यग्रोधजंबुफलपिप्पलवृक्ष-राजैः ॥ अश्वत्थजंतुफलपर्कटिभूरिपद्भिर्वैणवभभानत इमान्यथ वैककेन ॥ २३ ॥ हस्ताद्बहिर्मण्डपतः शरागस्वरैः करैस्तान्यधमादिकेषु । दीर्घाणि च प्राहुरथायतिः स्यात् तेषा द्विहस्ता चरणप्रवृद्धया ॥२४॥ २ कुण्डसिद्धौ—प्राच्याश्चतुष्कोणभगे-न्दुखण्डत्रिकोणवृत्तागभुजाब्जानि । अष्टाश्रि शक्रेश्वरयोस्तु मध्ये वेदाश्रि वा वृत्तमुशन्ति कुण्डम् ॥ ३१ ॥ ३ कुण्डसिद्धौ—आशेशकुण्डैरिह पञ्चकुण्डी चैकं यदा पश्चिमसोमशैवे । वेद्याः सपादेन करेण यद्वा पादान्तरेणाखिलकुण्ड-संस्था ॥ ३२ ॥

सर्वत्र नाभिरपि कुण्डस्य मध्यभागे कुण्डाकृतिः पद्माकृतिर्वा निवेशनीया । किन्तु पद्मकुण्डे नाभिः योनिकुण्डे योनिश्च न विधेया ।

वेदीमानम्—महारुद्रयागे तु रुद्रवेदी ऐशान्यामेव विहिता । शतचण्ड्यां मध्यभागे अष्टांशा वेदी भवेत् । शतचण्ड्यादौ यदि मध्ये कुण्डं कृतं चेत् मुख्यवेदी पूर्वस्यामीशान्यां वा कर्तव्या ॥ अस्माकं मतं तु मध्यवेदीविषयकमेव ॥ विष्णुयागे तु वेदी मध्यभागे चतुरस्रा कार्या । सर्वत्र हस्तोच्छ्रा विधेया । कुण्डव्यासप्रमाणाऽपि प्रधानदेवता-

---

१ वेदी त्रिभागेन समाकरोच्चा ॥१७॥ इति मण्डपकुण्डसिद्धौ । त्रिभागं मण्डपं कृत्वा मध्यभागस्तु वेदिका । हस्तमात्रं तदुत्सेधं चतुरस्रं समन्ततः ॥ इति क्रियासारे वसिष्ठमतेऽपि च ॥ २ मध्यभागे कुण्डकरणे तु कुण्डादीशान्या मण्डपमध्य एव रुद्रवेदी कार्या । (तदुक्तं) गर्तस्योत्तरपूर्वेण स्थण्डिलं हस्तमात्रकम् । द्विवप्रं चतुरस्रं च वितस्त्युच्छ्रायसम्मितमिति । ( गर्तात्कुण्डादीशान्यामित्यर्थः ।) तत्र षडङ्गुलोच्छ्रायः प्रथमो वप्रः । त्र्यङ्गुलोच्छ्रायो द्वितीयो वप्रः । विस्तारस्तु द्वयोर्द्व्यङ्गुलमेव । वप्रोपरि सप्ताङ्गुलोच्छ्राया हस्तविस्तृता च सुश्लक्ष्णा कार्या । वप्रैः सह द्वादशाङ्गुलोच्चता भवति । इति रुद्रकल्पद्रुमे ॥ कुण्डरत्नावल्याम्—रुद्रादौ हवनेऽथ वेदिरपत्रा वेदा ४ ग ६ नागैः ८ करेणैक १ द्वि २ त्रिभि ३ रंगुलैश्च कथिता राजादिषु न्यूनता ॥ ३ षोडशहस्तमण्डपे अष्टादशाङ्गुलाधिकहस्तेन विंशतिहस्ते चतुर्विंशत्यङ्गुलाधिकहस्तेन कोणेषूभयतोऽङ्कयित्वाऽष्टसूत्रदानात् अष्टास्रमिति राघवभट्टः ॥ ४ सिद्धान्तशेखरे—यावान् कुण्डस्य व्यासस्तावत्प्रमाणा प्रधानवेदी इति ॥ सुबोधिन्याम्—इष्टिकाभिश्चिता रम्या समंताद्ब्राह्मणस्य तु । एकद्वित्र्यङ्गुलैर्न्यूना सैव क्षत्रादिषु त्रिषु ॥ महामंडपवेदिः स्याच्चतुःषडष्टहस्तका ॥ सक्तसार्द्धे द्विहस्तोच्चा हीनमध्योत्तमा क्रमात् ॥ पूर्वस्यामीशान्यां वा वेदी स्याच्चेत्कुण्डमानसदृशाऽपि केचिन्मन्यन्ते ॥

वेदी भवति । महामण्डपवेदी तु सकृत्सार्द्धद्विहस्तप्रमाणोच्चा चतुरादिहस्तविस्तृता एकाद्यङ्गुलप्रमाणन्यूना वर्णक्रमेण भवति । पञ्चकुण्डीनवकुण्डीपक्षे तु मध्य एव प्रधानदेवस्य वेदी भवति । वस्तुतस्तु चतुरस्रा चतुष्कोणा वेदी सर्वफलप्रदेति । सिद्धान्तशेखरवचनान्मुख्या चतुरस्रैव सर्वत्र ॥ इति वेदिकाविधानम् ।

मण्डपस्यैशान्यां हस्तमात्रोच्चं समचतुरस्रं त्रिवप्रान्वितञ्च ग्रहस्थापनार्थं ग्रहपीठम् ( महारुद्रे ईशान्यामेव रुद्रवेदी भवति तदा रुद्रवेद्या दक्षिणभागे ग्रहवेदी विधेया) । आग्नेय्यां हस्तमात्रसमचतुरस्रं द्वादशाङ्गुलोच्चं समात्रकं गणपतिपीठम् । तदुत्तरे तत्समानमेव योगिनीपीठम् । नैर्ऋत्यां हस्तमात्रसमचतुरस्रं द्वादशाङ्गुलोच्चं चतुरङ्गुलोच्चं वा वास्तुपीठम्। वायव्यकोणे हस्तमात्रसमचतुरस्रं द्वादशाङ्गुलोच्चं क्षेत्रपालपीठम् । तद्दक्षिणे चतुस्त्रिंशदङ्गुलसमचतुरस्रं द्वादशाङ्गुलोच्चं स्नानपीठम्(वारुणपीठम् ) विधेयम् । इति संक्षेपतः कुण्डमण्डपरचनाप्रकारः ॥

मण्डपकुण्डादिरचनाप्रकारस्तु संक्षेपेणात्र स्पष्टीकृतः अतीव परिस्फुटप्रकारास्तु तत्तद्विषयकशास्त्रे द्रष्टव्याः । अस्मिन् ग्रन्थेऽस्माभिस्तु ग्रन्थविस्तृतिभयात् दिङ्मात्रमेव प्रदर्शितम् ॥

इति संक्षेपतः मण्डपकुण्डवेदीप्रकारः ॥

---

१ सर्वपीठानां मानादीनां प्रमाणं तु विस्तरेण तत्र तत्र स्थापनप्रकरणे टिप्पण्यां द्रष्टव्यम् ।

# ॥ हवनात्मकमहारुद्रप्रयोगः ॥

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीभाईशङ्कराज्जातः स उमाशङ्करो द्विजः ॥ पिता मे सुकृती जन्मप्रदाता गुरुरादिमः ॥ १ ॥ शुक्लोपाह्वमहानन्दतनयो देवशङ्करः ॥ दीक्षागुरुर्द्वितीयोऽगात्पश्चाद्भूत्वा यतिर्दिवम् ॥२॥ वेदान्तादिबृहद्विद्यां सरहस्यामुपादिशत् ॥ गुरुः श्रीचेतनानन्दब्रह्मचारी तृतीयकः ॥३॥ एतान् गुरुत्रयीं स्मृत्वा दुर्गाशङ्करशास्त्रिणा ॥ होमात्मकमहारुद्रप्रयोगोऽयं विरच्यते ॥ ४ ॥ श्रमोऽयं क्रियते नूनं परोपकृतये मया ॥ स्यान्न्यूनमिह यत्किञ्चित्क्षन्तव्यं तत्स्वयं बुधैः ॥ ५ ॥

अथ हवनात्मकमहारुद्रप्रयोगप्रारम्भः ॥ कृतमङ्गलस्नानः स्वलङ्कृतः सम्भृतमङ्गलसम्भारो निर्णेजनान्तपञ्चमहायज्ञान्तकृतनित्यक्रियः परिहिताहतसोत्तरीयवासाः यजमानो मङ्गलरङ्गवल्लीमण्डितशुद्धस्थले श्रीपर्ण्यादिप्रशस्तदारुनिर्मिते कुशोत्तरकम्बलाद्यास्तृते स्वासने ऊर्णावस्त्राच्छादिते पीठे प्राङ्मुख उपविश्य पत्नीं स्वदक्षिणतः प्राङ्मुखीमुपवेशयेत् ॥

शिखाबन्धनम्—मानस्तोक इति मन्त्रस्य कुत्सऋषिः जगती छन्दः एको रुद्रो देवता शिखाबन्धने विनियोगः ॥ ॐमानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः ॥ मानोव्वीरान्रुद्रभामिनोव्वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ ११ ॥ इत्यङ्गुष्ठमात्रां शिखां नैर्ऋत्यां बध्नीयात् ॥

पवित्रधारणम्—सव्यहस्ते कुशत्रयं दक्षिणहस्ते कुशद्वयं धारयेत्—ॐ पुवित्रेस्थो वैष्णुव्व्यौ सवितुर्व्वः प्रसुवऽउत्पुनाम्यच्छिद्रेणपवित्रेण सूर्य्यस्यरश्मिभिः ॥१२॥ तस्य ते पवित्रपते पुवित्रपूतस्य यत्कामः पुनेतच्छंकेयम् ॥३॥ अनामिकयोरेकैकं पवित्रं धारयेत् ॥

आचमनम्—ॐकेशवाय नमः स्वाहा। ॐनारायणाय नमः स्वाहा। ॐमाधवाय नमः स्वाहा ॥ हस्तप्रक्षालनम्—ॐगोविन्दाय नमः ॥

प्राणायामः—प्रणवस्य परब्रह्म ऋषिः। परमात्मा देवता। दैवी गायत्रीछन्दः। भूरादिसप्तव्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा ऋषयः। अग्निवायुसूर्यबृहस्पतिवरुणेन्द्रविश्वेदेवादेवताः। गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छन्दांसि। तत्सवितुरित्यस्य विश्वामित्रऋषिः। सविता देवता। गायत्रीछन्दः। आपोज्योतिरित्यस्य प्रजापतिर्ऋषिः। ब्रह्माग्निवायुसूर्या देवताः। यजुश्छन्दः। सर्वेषां प्राणायामे विनियोगः। ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यम् ॐतत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥३५॥ ॐआपोज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोम् ॥ एवं पूरकः कुम्भकः रेचकः क्रमेण त्रिवारं पठेत् ॥

यजमानललाटे तिलकं कुर्यात्—ॐस्वुस्तिनुऽइन्द्रोवृद्धश्रवाः स्वुस्तिनः पूषाविश्ववेदाः ॥ स्वुस्तिनुस्तार्क्ष्योऽअरिष्टनेमिः स्वुस्तिनो बृहुस्पतिर्दधातु ॥ २६ ॥ स्वस्तिस्तु याऽविनाशाख्या पुण्यकल्याणवृद्धिदा। विनायकप्रिया नित्यं वरदाऽस्तु सदा तव ॥

भद्रसूक्तं पठेत्—ॐआनोभुद्राः क्रतवोयन्तुविश्वतोदब्धासोऽअपरीतासऽउद्भिदः। देवानोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥१४॥ देवानांभुद्रासुमुतिर्ऋजूयुतान्देवानांरातिरभिनोनिवर्त्तताम्। देवानांसुख्यमुपसेदिमावुयन्देवानऽआयुःप्रतिरन्तुजीवसे ॥ १५ ॥

तान्पूर्वयानिविदाहूमहेवयम्भगम्मित्रमदितिन्दक्षमस्रिधम् ॥ अर्य्यमणं
वरुणꣳसोममश्विनासरस्वतीनꣳसुभगामयस्करत् ॥१६/२५॥ तन्नोवातोमयो-
भुवातुभेषजन्तन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणꣳ सोमसुतोम-
योभुवस्तदश्विनाशृणुतन्धिष्ण्यायुवम्॥१७/२५॥तमीशानञ्जगतस्तस्थुषस्प-
तिन्धियञ्जिन्वमवसेहूमहेवयम्॥पूषानोयथावेदसामसद्वृधेरक्षितापायुर-
दब्धꣳस्वस्तये॥१८/२५॥स्वस्तिनऽइन्द्रोवृद्धश्रवाꣳस्वस्तिनः-पूषाविश्ववेदाꣳ॥
स्वस्तिनस्ताक्ष्योऽअरिष्टनेमिꣳस्वस्तिनोबृहस्पतिर्दधातु ॥१९/२५॥ पृषद-
श्वामरुतꣳपृश्निमातरꣳशुभंय्यावानोविदथेषुजग्मयꣳ॥अग्निजिह्वामनवꣳ
सूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह ॥ २०/२५ ॥ भद्रङ्कर्णेभिꣳशृणुयाम
देवाभद्रम्पश्येमाक्षभिर्य्यजत्राꣳ ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि
देवहितंयदायुः ॥ २१/२५ ॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्राजर-
सन्तनूनाम् ॥ पुत्रासोयत्रपितरोभवन्तिमानोमध्यारीरिषतायुर्गन्तोꣳ
॥ २२/२५ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः॥ विश्वे-
देवाऽअदितिꣳपञ्चजनाऽअदितिर्जातमदितिर्जनित्वम् ॥ २३/२५ ॥ द्यौः
शान्तिरन्तरिक्षꣳशान्तिः-पृथिवीशान्तिरापꣳशान्तिरोषधयꣳशान्तिः-॥
वनस्पतयꣳशान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिꣳसर्वꣳशान्तिꣳ शान्ति-
रेवशान्तिꣳसामाशान्तिरेधि ॥१७/३६॥ यतोयतꣳसमीहसेततोनोऽअभयं-
कुरु ॥ शन्नः-कुरुप्रजाभ्योभयन्नꣳपशुभ्यः- ॥ २२/३६ ॥ सुशान्तिर्भवतु ॥

देवतानमस्कारः—श्रीमन्महागणाधिपतये नमः इष्टदेवताभ्यो नमः कुलदेवताभ्यो नमः ग्रामदेवताभ्यो नमः स्थानदेवताभ्यो नमः वाणीहिरण्यगर्भाभ्यां नमः श्रीलक्ष्मीनारायणाभ्यां नमः श्रीउमामहेश्वराभ्यां नमः शचीपुरन्दराभ्यां नमः मातापितृचरणकमलेभ्यो नमः सर्वेभ्यो देवेभ्योनमः श्रीगुरुभ्योनमः श्रीपरमगुरुभ्यो नमः श्रीपरमेष्ठि-

गुरुभ्यो नमः श्रीपरात्परगुरुभ्यो नमः सर्वेभ्यो ब्राह्मणेभ्यो नमो नमः निर्विघ्नमस्तु ॥ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः॥धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते॥शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ॥ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः।येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः । देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् । सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये ॥

**सङ्कल्पः**—ॐविष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्त्तमानस्य अद्य ब्रह्मणः द्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे प्रथमचरणे भरतवर्षे जम्बुद्वीपे रामक्षेत्रे परशुरामाश्रमे दण्डकारण्यदेशे श्रीगोदावर्याः पश्चिमदिग्भागे श्रीमल्लवणाब्धेरुत्तरतीरे अमुके श्रीशालिवाहनशके अमुकनामसंवत्सरे. तथा अमुके श्रीविक्रमवर्षे अमुकनामसंवत्सरे अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु

ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं गुणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकसगोत्रोऽमुकशर्माऽहं मम सर्वापच्छान्तिपूर्वकं दीर्घायुर्विपुलधनधान्यपुत्रपौत्राद्यनवच्छिन्नसन्ततिवृद्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिद्धये कायिकाद्यखिलपापक्षयपूर्वकधर्मार्थकाममोक्षेतिचतुर्विधपुरुषार्थसिद्ध्यर्थे श्रीमृत्युञ्जयदेवताप्रीतये एक षष्ट्युत्तरशतधामन्त्रविभागपक्षेण अद्यदिनमारभ्य पञ्चाहपक्षाश्रयेण सग्रहमखहवनात्मकमहारुद्रं करिष्ये ॥

पुनर्जलमादाय—तदङ्गतया गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारापूजनं आयुष्यमन्त्रजपं नान्दीश्राद्धञ्चाहं करिष्ये॥

पुनर्जलमादाय—तत्रादौ दिग्रक्षणं कलशार्चनं च करिष्ये ।

दिग्रक्षणम्—वामहस्ते गौरसर्षपान्गृहीत्वा—ॐ रक्षोहणंवलगहनंवैष्णवीमिदमहन्तंवलगमुत्किरामियम्मेनिष्ट्योयममात्योनिचखानेदमहन्तंवलगमुत्किरामियम्मेसमानोयमसमानोनिचखानेदमहन्तंवलगमुत्किरामियम्मेसबन्धुर्य्यमसबन्धुर्निचखानेदमहन्तंवलगमुत्किरामियम्मेसजातोयमसजातोनिचखानोत्कृत्याङ्किरामि॥२३/५॥ रक्षोहणोवांवलगहनऽप्रोक्षामिवैष्णवान्रक्षोहणोवांवलगहनोवनयामिवैष्णवान्रक्षोहणोवांवलगहनोवस्तृणामिवैष्णवान्रक्षोहणौवांवलगहनाऽउपदधामिवैष्णवीरक्षोहणौवांवलगहनौपर्य्यूहामिवैष्णवीवैष्णवमसिवैष्णवास्थ ॥२४/५॥रक्षसाम्भागोसिनिरस्तꣳरक्षऽइदमहꣳरक्षोभितिष्ठामीदमहꣳरक्षो-

१ अत्रानेकेषु पक्षेषु यो मन्त्रविभागपक्ष आश्रयणीयः स वक्तव्यः ॥

दत्॥२१॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम्। सर्वेषामवरोधेन महारुद्रं समारभे॥यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः। स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु॥ भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः। स्थानादस्माद्‌व्रजन्त्वन्यत्स्वीकरोमि भुवस्त्विमाम्। भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन। ते सर्वेऽप्यपगच्छन्तु रुद्रयागं करोम्यहम्॥ एतैर्मन्त्रैः सर्वदिक्षु विकिरेत्॥

भैरवनमस्कारः—तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम। भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि॥ वामपादतलपार्श्वेन भूमिं त्रिः प्रहृत्य उदकस्पर्शः॥

---

१ उदकस्पर्शनिर्णयः॥ कात्यायनः—रौद्रं राक्षसमासुरमाभिचारणिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चालभ्योपस्पृशेदपः॥अत्र चकारग्रहणात् तद्दैवतं कर्म,कृत्वेति कर्कोपाध्यायादयः सर्वे कल्पसूत्रभाष्यकारा व्याख्यातवन्तः॥ हेमाद्रौ याज्ञवल्क्योपि—रौद्रपित्र्यासुरान्मन्त्रांस्तथा चैवाभिचारकान्। व्याहृत्यालभ्य चात्मानमपः स्पृष्ट्वाऽन्यमाचरेत्॥ अपामुपस्पर्शनम् आचमनमिति हेमाद्रिणा व्याख्यातं लिङ्गात्॥ प्राङ्तिष्ठन्नप उपस्पृशतीति प्रकृत्य तेन पूतिरन्तरतोमेध्या वा आपो मेध्यो भूत्वा व्रतमुपायानीति॥ आलम्भमात्रं वा आचमनानुपदेशात्तस्य च नैमित्तिकत्वाच्छन्दसामर्थ्याच्च॥अप उपस्पृशतीति लिङ्गमर्थवादमात्रं दीक्षास्नानवदिति कर्कः॥ छन्दोगपरिशिष्टे कात्यायनः—पित्र्यमन्त्रानुद्रवणे आत्मालम्भे ह्यवेक्षणे। अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे॥मार्जारमूषकस्पर्शे ह्याकुष्टे क्रोधसम्भवे। निमित्तेष्वेषु सर्वत्र कर्म कुर्वन्नपः स्पृशेत्॥ अनुद्रवणमुच्चारणम्॥ आत्मालम्भो हृदयस्पर्शः॥ अवेक्षणमपि तस्यैव॥ अत्र पित्र्यमन्त्रोच्चारणात्मालम्भावेक्षणानि यज्ञादौ विहितान्येव ग्राह्याणि न लौकिकानि॥प्रहासे महति हासे न स्मितमात्रे॥ मार्जारस्य मार्जारकृत एव॥ स्वयंकृते [illegible] स्नानस्योक्तत्वादित्युक्तमाचारादर्शे॥ आकुष्टे परुषभाषणे॥ क्रोधसम्भवो मानसि-

कलशार्चनम्—स्ववामभागे अक्षतपुञ्जोपरि पूजार्थजलपूरितकलशं संस्थाप्यतत्रवरुणावाहनम्-तत्त्वायामीत्यस्य शुनःशेपऋषिःत्रिष्टुप्छन्दः वरुणो देवता वरुणावाहने विनियोगः—ॐतत्त्वायामिब्रह्मणावन्दमानु- स्तदाशास्तेयजमानोहविर्भिः॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽ आयुःप्रमोषीः॥ ॐभूर्भुवः स्वः अस्मिन्कलशे वरुणं साङ्गं सपरि- वारं सायुधं सशक्तिकम् आवाहयामि स्थापयामि ॥ प्रतिष्ठापनम्—ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमं- न्दधातु ॥ विश्वेदेवासऽइहमादयन्तामोꣳम्प्रतिष्ठ॥ ॐवरुणायनमः वरुण सुप्रतिष्ठितो वरदो भव ॥ कलशाभिमन्त्रणपूर्वकदेवतावाहनम्—

---

कोपि॥ हेमाद्रौ बृहस्पतिनाप्येवमेवोक्तम् ॥ अपः स्पृशेदित्यनेनापां स्पर्शनमेव निर- क्षितं न त्वाचमनमिति ॥ भर्तृयज्ञपितृभूतिकर्कोपाध्यायवासुदेवगर्गश्रीअनन्तदेव- याज्ञिकादयः सर्वे कल्पसूत्रभाष्यकारा व्याख्यातवन्त ॥ सम्प्रदायादयः पद्धतिका- राश्च ॥ अत्र सर्वेषु वाक्येष्वपः स्पृशेदिति पाठादपःस्पर्शो जलस्पर्श एव याज्ञिक- सम्प्रदायाविरुद्धः ॥ येषु तु उपस्पृशेदिति पाठस्तत्र तु उपस्पर्शनम् आचमनमि- त्युक्तमाचारादर्शे ॥ आपस्तम्बः—स्वप्ने क्षवथौ श्वालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं गत्वा अमेध्यं चोपस्पृश्याप्रयतं च मनुष्यं नीवीं च परिधायाप उपस्पृशेत्॥ हेमाद्रौ मार्कण्डेयपुराणे—क्षुतादौ सम्यगाचामेत्स्पृशेद्वा- र्द्रतृणादिकम्॥ कुर्यातालम्भनं वापि दक्षिणश्रवणस्य वै॥ यथाविभवतो ह्येतत्पूर्वाभावे ततः परम्॥ न विद्यमाने पूर्वत्र ह्युत्तरप्राप्तिरिष्यते॥ वसिष्ठः—क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने ॥ पञ्चस्वेतेषु चाचामेच्छ्रोत्रं वा दक्षिणं स्पृशेत् ॥ पराशरः— क्षुते निष्ठीविते चैव दन्तच्छिष्टे तथानृते ॥ पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत्॥मदनरत्ने बौधायनः—प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा॥ विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत् ॥ आदित्यो वरुणः सोमो वह्निर्वायुस्तथैव च ॥ विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवता· ॥

अनामिकया कलशं स्पृष्ट्वा—कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा। ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः। अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः॥ अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा। आयान्तु देवपूजार्थं दुरितक्षयकारकाः॥ गङ्गे च यमुने चैव गोदावरि सरस्वति। कावेरि नर्मदे सिन्धो जलेऽस्मिन्सन्निधिं कुरु॥ ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे। तेन सत्येन मे देव तीर्थं देहि दिवाकर॥ पूजनम्—पूर्वे ऋग्वेदाय नमः॥ दक्षिणे यजुर्वेदाय नमः॥ पश्चिमे सामवेदाय नमः॥ उत्तरे अथर्वणवेदाय नमः॥ कलशमध्ये अपाम्पतये वरुणाय नमः॥ कलशाधिष्ठातृदेवताभ्यो नमः ध्यायामि॥ कलशाधिष्ठातृदेवताभ्यो नमः आसनार्थे अक्षतान्समर्पयामि॥ कलशाधिष्ठातृदेवताभ्यो नमः पाद्यं समर्पयामि॥ कलशाधिष्ठातृदेवताभ्यो नमः अर्घ्यं समर्पयामि॥कलशाधिष्ठातृदेवताभ्योनमः आचमनीयं समर्पयामि॥ कलशाधिष्ठातृदेवताभ्यो नमः स्नानं समर्पयामि॥ कलशाधिष्ठातृदेवताभ्यो नमः वस्त्रार्थमक्षतान्समर्पयामि॥ कलशाधिष्ठातृदेवताभ्यो नमः यज्ञोपवीतार्थमक्षतान्समर्पयामि॥ कलशाधिष्ठातृदेवताभ्यो नमः गन्धं समर्पयामि॥ कलशाधिष्ठातृदेवताभ्योनमः अक्षतान् समर्पयामि॥ कलशाधिष्ठातृदेवताभ्योनमः पुष्पाणि समर्पयामि॥कलशाधिष्ठातृदेवताभ्यो नमः सौभाग्यद्रव्याणि समर्पयामि॥कलशाधिष्ठातृदेवताभ्यो नमः धूपमाघ्रापयामि॥ कलशाधिष्ठातृदेवताभ्योनमः दीपं दर्शयामि॥कलशाधिष्ठातृदेवताभ्यो नमः नैवेद्यं समर्पयामि॥ कलशाधिष्ठातृदेवताभ्यो नमः सपूगीफलताम्बूलं समर्पयामि॥ कलशाधिष्ठातृदेवताभ्यो नमः हिरण्यगर्भदक्षिणां समर्पयामि॥कलशाधिष्ठातृदेवताभ्यो नमः नीराजयामि॥

मन्त्रपुष्पाञ्जलिः—ॐतत्त्वायामि०॥कलशाधिष्ठातृदेवताभ्यो नमः मन्त्र-पुष्पाञ्जलिं-समर्पयामि ॥ कलशाधिष्ठातृदेवताभ्यो नमः प्रार्थनापूर्वकं नमस्करोमि॥अनया पूजया कलशाधिष्ठातृदेवताः साङ्गाः सपरिवाराः प्रीयन्ताम्॥कलशं प्रार्थयेत्–देवदानवसंवादे मध्यमाने महोदधौ। उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम्॥त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्यवसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ॥ त्वत्प्रसादादिमां पूजा कर्तुमीहे जलोद्भव । सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा॥अङ्कुशमुद्रया सर्वाणि तीर्थानि ध्यात्वाऽऽवाह्य वं इति धेनुमुद्रया अमृतीकृत्य हूँ इति कवचेनावगुण्ठ्य मत्स्यमुद्रयाऽऽच्छाद्य वं वरुणायनमः इत्यनेनाष्टवारमभिमन्त्र्य तस्मादुदकादुदकं गृहीत्वा स्वात्मानं स्वशिरश्च सम्प्रोक्षेत्–ॐआपो हिष्ठा०॥ अपवित्रः पवित्रो वा०॥ पुनः स्वल्पोदकमादाय पूजासम्भारान्सम्प्रोक्ष्य तां च भूमिं संप्रोक्ष्य कलशमुद्रां प्रदर्शयेत्॥ दीपपूजनम्–घृतदीपं प्रज्वाल्य निर्वातस्थले निधाय–ॐअग्निर्ज्योतिर्ज्योतिष्मान्रुक्मोवर्चसावर्चस्वान् ॥ सुहुस्तुदाऽभ्रसिसुहस्तांपत्त्वा॥ ॥ ॐभूर्भुवः स्वः दीपस्थदेवतायैनमः आवाहयामि सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि नमस्करोमि ॥

अथ गणपतिपूजनम्–ताम्रपात्रे सिद्धिबुद्धिसहितं महागणपतिं संस्थाप्य । ध्यानम्–उच्चैर्ब्रह्माण्डखण्डद्वितयसहचरं कुम्भयुग्मं दधानं प्रेङ्खं नागारिपक्षप्रतिभटविकटश्रोत्रतालाभिरामम् । देवं शम्भोरपत्यं भुजगपतितनुस्पर्धिवर्धिष्णुहस्तं ध्याये पूजार्थमीशं गणपतिममलं श्रीश्वर कुञ्जरास्यम्॥ ॐभूर्भुवःस्वः सिद्धिबुद्धिसहितमहाग० नमः ध्यायामि॥

आवाहनम्—ॐगुणानान्त्वा०॥ॐभूर्भुवः स्वः सिद्धिबुद्धिसहितमहागण-पतयेनमः गणपतिम् आवाहयामि॥ प्रतिष्ठापनम्—ॐमनोजूतिर्जुषता० ॐसिद्धिबुद्धिसहितगणेश सुप्रतिष्ठितो वरदो भव॥ आसनम्—ॐवर्मोऽस्मिसमानानामुद्यतामिवसूर्यः।इमन्तमभितिष्ठामियोमाकश्चाभिदासति॥ ॐभूर्भुवःस्वः सि०महागणप० आसनं समर्पयामि॥पाद्यम्—ॐएतावानस्यमहिमातोज्यायाँश्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतन्दिवि॥ ३/३॥ॐभूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतयेनमः पाद्यं समर्पयामि॥ अर्घ्यम्—ॐधामन्तेविश्वम्भुवनमधिश्रितमन्तः समुद्रेहृद्यन्तरायुषि ॥ अपामनीकेसमिथेयऽआभृतस्तमश्यामधुमन्तन्तऽऊर्मिम् ॥ १७/९९ ॥ ॐभूर्भुवः स्वः सिद्धिबुद्धिसहितम० अर्घ्यं समर्पयामि ॥ आचमनीयम्—ॐइमम्मेवरुणश्रुधीहवमद्याचमृडय॥त्वामवस्युराचके॥ ॥ २/१॥ ॐभूर्भुवःस्वः सि० म० आचमनीयं समर्पयामि॥पयःस्नानम्— ॐपयःपृथिव्यांपयऽओषधीषु पयोदिव्यन्तरिक्षे पयोधाः॥ सोमस्यरूपंवाजिनःसौम्यस्यरूपमाविश॥ ३/३॥ॐभूर्भुवःस्वः सि०म० पयःस्नानं स०। पयःस्नानान्ते शुद्धोदकस्नानंसमर्पयामि। शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि॥ दधिस्नानम् ॐदधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः—॥सुरभिनोमुखाकरत्प्रणऽआयूंषितारिषत्॥ ३/३॥ ॐ भू० सि० म० दधिस्नानं स०दधिस्नानान्ते शुद्धोदकस्नानं स०। शुद्धोदकस्नानान्ते आचमनीयं स०। घृतस्नानम्—घृतेनाञ्जन्त्सम्पथोदेवयानान्प्रजानन्वाज्यप्येतुदेवान्॥अनुत्वासप्तेप्रदिशः—सचन्ताᳬस्वधामस्मैयजमानायधेहि॥ ॥ २/३॥ ॐभू० सि० म०घृतस्नानं स० । घृतस्नानान्ते शुद्धोदकस्नानं स०। शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि॥ मधुस्नानम्—स्वाहा-

मुरुश्चिर्द्दपरिश्रीयस्वदिव?सुᳬस्पृशस्पाहि॥मधुमधुमधु॥३॥ॐभूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः मधुस्नानं समर्पयामि । मधुस्नानान्ते शुद्धोदकस्नानं स०। शुद्धोदकस्नानान्ते आचमनीयं स० ॥ शर्करास्नानम्—ॐअपाᳬरसमुद्वयसᳬसूर्य्येसन्तᳬसमाहितम् ॥ अपाᳬरसस्ययोरसस्तंवोगृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम्॥३॥ ॐभू०स्वः सि० म० शर्करास्नानं स० । शर्करास्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं स०॥गन्धोदकस्नानम्—ॐगन्धर्वस्त्वाविश्वावसुᳬपरिदधातुविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडित? ॥३॥ ॐभूर्भुवः स्वः सि०म० गन्धोदकस्नानं स०। गन्धोदकस्नानान्ते शुद्धोदकस्नानं स०।शुद्धोदकस्नानान्ते आचमनीयं स०॥उद्वर्तनस्नानम्—ॐअᳬशुनातेऽअᳬशु?पृच्यताम्परुषापरुः—॥ गन्धस्तेसोममवतुमदायरसोऽअच्युतः ॥३॥ॐभूर्भुवःस्वःसि०म०उद्वर्तनस्नानं स०। उद्वर्तनस्नानान्ते शुद्धोदकस्नानं स०। शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि॥सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्प्य निर्माल्यमुत्तरे विसृज्य अभिषेकः—ॐनमस्ते गणपतये त्वमेव प्रत्यक्षं तत्त्वमसि त्वमेव केवलं कर्त्तासि त्वमेव केवलं धर्त्तासि त्वमेव केवलं हर्तासि त्वमेव सर्वं खल्विदं ब्रह्मासि त्वं साक्षादात्माऽसि नित्यम् ऋतं वच्मि सत्यं वच्मि अव त्वं माम् अव वक्तारम् अव श्रोतारम् अव दातारम् अव धातारम् अवानूचानमव शिष्यम् अव पश्चात्तात् अव पुरस्तात् अवोत्तरात्तात् अव दक्षिणात्तात् अव चोर्द्ध्वात्तात् अवाधरात्तात् सर्वतो मां पाहि पाहि समन्तात् त्वं वाङ्मयस्त्वं चिन्मयस्त्वमानन्दमयस्त्वं ब्रह्ममयः त्वं सच्चिदानन्दाद्वितीयोऽसि त्वं प्रत्यक्षं ब्रह्मासि त्वं ज्ञानमयो विज्ञानमयोऽसि सर्वं जगदिदं त्वत्तो जायते सर्वं जगदिदं त्वत्तस्तिष्ठति सर्वं जगदिदं त्वयि लयमेष्यति सर्वं जगदिदं

त्वयि प्रत्येति त्वं भूमिरापोऽनलोऽनिलो नभः त्वं चत्वारि वाक्पदानि त्वं गुणत्रयातीतः त्वं देहत्रयातीतः त्वं कालत्रयातीतः त्वम् अवस्थात्रयातीतः त्वं मूलाधारस्थितोऽसि नित्यं त्वं शक्तित्रयात्मकः त्वां योगिनो ध्यायन्ति नित्यं त्वं ब्रह्मात्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चंद्रमास्त्वं ब्रह्म भूर्भुवःस्वरोम् गणादीन्पूर्वमुच्चार्य वर्णादींस्तदनन्तरम् अनुस्वारः परतरः अर्धेन्दुलसितं तारेणरुद्धम् एतत्तवमनुस्वरूपम् गकारः पूर्वरूपम् अकारो मध्यमरूपम् अनुस्वारश्चान्त्यरूपं विन्दुरुत्तररूपं नादः सन्धानं संहिता सन्धिः सैषा गणेशविद्या गणक ऋषिः निचृद्गायत्रीछन्दः गणपतिर्देवता ॐगंगणपतयेनमः। एकदन्ताय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्तिः प्रचोदयात् ॥ एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम् । रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् ॥ रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् । रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् ॥ भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् । आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् ॥ एवं ध्यायति यो नित्यं स योगी योगिनां वरः॥ नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्ते अस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्तये नमः ॐअमृताभिषेकोऽस्तु। ॐभूर्भुवः स्वः सि० म० अभिषेकस्नानं समर्पयामि ॥ शुद्धोदकस्नानम्—ॐशुद्धवालःसर्वशुद्धवालोमणिवालस्तऽआश्विनाः श्येतः श्येताक्षोऽरुणस्तेरुद्रायपशुपतये कर्णायामाऽअवलिप्ता रौद्रानभोरूपाःपार्ज्जन्याः ॥ $\frac{२}{२४}$ ॥ ॐभूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः शुद्धोदकस्नानं समर्पयामि॥शुद्धोदकस्नानान्ते आचमनीयं समर्प०॥ ततो गणेशं वस्त्रेण प्रमृज्य रक्तवस्त्रमसारिते मृन्मये पीठे पट्टे वा अरुणाक्षतैर्गोधूमैर्वा कृतेऽष्टदले पद्मे गन्धानुलेपनपूर्वकं संस्थाप्य वस्त्रम्—ॐसुजातोज्योतिषासहशर्म्मवरूथमासदत्स्वः— ॥ वासोऽअग्ने-

ग्रिश्वरूपꣳसंछंयस्वविभावसो॥४/१॥ ॐभू० सि० म० वस्त्रं समर्पयामि॥ वस्त्रान्ते आ०स०॥ उपवीतम्—यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ ॐभूर्भुवःस्वःसि०म०यज्ञोपवीतं समर्पयामि॥यज्ञोपवीतान्ते आ०स०॥ गन्धम्—ॐत्वाङ्गन्धर्वाऽअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः—॥ त्वामोषधे सोमोराजाविद्वान्यक्ष्मादमुच्यत॥१/२॥ॐभू०सि०म०गन्धं समर्पयामि॥ अक्षताः—ॐअक्षन्नमीमदन्तह्यवप्रियाऽअधूषत ॥ अस्तोषतस्वभानवो-विप्रानविष्ठयामतीयोजान्विन्द्रतेहरी॥५/१॥ॐभूर्भुवःस्वःसि०म० अक्षता-न्समर्पयामि॥ पुष्पाणि—ॐओषधीꣳप्रतिमोदध्वम्पुष्पवतीꣳप्रसूवरीꣳ॥ अश्वाऽइवसजित्वरीर्वीरुधः—पारयिष्ण्वः—॥१/२॥ ॐभूर्भुवःस्वः सि०म० पुष्पाणि समर्पयामि॥ दूर्वाङ्कुराः—काण्डात्काण्डात्प्ररोहन्तीपरुषꣳपरुष-स्परि॥एवानोदूर्वेप्रतनुसहस्रेण शतेनच॥१/३॥ॐभूर्भुवःस्वःसि०म०दूर्वा-ङ्कुरान्स० ॥ सौभाग्यद्रव्याणि—ॐअहिरिवभोगैःपर्य्येतिबाहुञ्ज्यायाहे-तिम्परिबाधमानꣳ॥ हस्तघ्नोविश्वावयुनानिविद्वान्पुमान्पुमाꣳसम्परि-पातुविश्वतः—॥१/१॥ ॐभू० सि० म० सौभाग्यद्रव्याणि समर्पयामि॥ धूपम्—ॐअश्वस्यत्वावृष्ण्णः—शक्नाधूपयामिदेवयजनेपृथिव्याः॥मखाय-त्वामखस्यत्वाशीर्ष्णे॥अश्वस्यत्वावृष्ण्णः—शक्नाधूपयामिदेवयजनेपृथि-व्याः॥मखायत्वामखस्यत्वाशीर्ष्णे॥अश्वस्यत्वावृष्ण्णः—शक्नाधूपयामि देवयजनेपृथिव्याः॥ मखायत्वामखस्यत्वाशीर्ष्णे॥मखायत्वामखस्य त्वाशीर्ष्णे ॥ मखायत्वामखस्यत्वाशीर्ष्णे ॥ मखायत्वामखस्यत्वा शीर्ष्णे॥१/३॥ ॐभूर्भुवः स्वः सि० महा० धूपमाघ्रापयामि॥ दीपम्—ॐचन्द्रमाऽअप्स्वन्तरासुपर्णोधावतेदिवि॥ रयिम्पिशङ्गम्बहुलम्पुरुस्पृ-

ह्रुइहरिरेतिकनिक्रदत्॥१०/३३॥ ॐभू० स्वः सि० महा० दीपं दर्शयामि॥
नैवेद्यम्—अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः॥प्रप्रदातारन्तारिषऽ-
ऊर्ज्जन्नोधेहिद्विपदेचतुष्पदे ॥६३/११॥ गायत्रीमन्त्रेण सम्प्रोक्ष्य धेनुमुद्रां
प्रदर्श्य ग्रासमुद्रया—ॐप्राणायस्वाहा ॐअपानायस्वाहाॐव्यानायस्वा०
ॐउदानायस्वाहा ॐसमानायस्वाहा॥ ॐभू०स्वः सि०म० नैवेद्यं निवे-
दयामि॥ पूर्वापोशनं स० ॥ नैवेद्यमध्येपानीयम्—एलोशीरलवङ्गादिक-
पूरपरिवासितम् । प्राशनार्थे कृतं तोयं गृहाण परमेश्वर॥ ॐभूर्भुवः स्वः

---

१ नैवेद्यविचारः शारदातिलके—स्वादूपदंशं विमलं पायसं सहशर्करम्। कदलीफलसंयुक्तं साज्यं मंत्री निवेदयेत्॥ तत्र तत्र जलं दद्यादुपचारान्तरान्तरम् ॥ नैवेद्यलक्षणम्—निवेदनीयं यद्द्रव्यं प्रशस्तं प्रयतं तथा॥तद्भक्ष्यार्हं पञ्चविधं नैवेद्यमिति कथ्यते ॥ भक्ष्यं भोज्यं च लेह्यं च पेयं चूष्यं च पंचमम् । सर्वत्र चैतन्नैवेद्यमाराध्यास्ये निवेदयेत्॥ नैवेद्यपात्राणि—तैजसेषु च पात्रेषु सौवर्णे राजते तथा । ताम्रे वा प्रस्तरे वापि पद्मपत्रेऽथवा पुनः॥यज्ञदारुमये वापि नैवेद्यं स्थापयेद् बुधः। सर्वाभावे च माहेये स्वहस्तघटिते यदि ॥ नैवेद्यकालः—अर्वाग्विसर्जनाद्द्रव्यं नैवेद्यं सर्वमुच्यते । विसर्जिते जगन्नाथे निर्माल्यं भवति क्षणात् ॥ नैवेद्यस्थापनक्रमो गौतमीये——नैवेद्यं दक्षिणे भागे पुरतो वा न पृष्ठतः। दक्षिणं तु परित्यज्य वामे चैव निधापयेत् ॥ अभोज्यं तद्भवेदन्नं पानीयं च सुरोपमम् ॥ आह्निकतत्त्वे—तृषार्ताः पशवो रुद्धाः कन्यका च रजस्वला। देवता च सनिर्माल्या हन्ति पुण्यं पुराकृतम्॥ देवलः—चाण्डालेन शुना वापि दृष्टं हविरयाज्ञिकम् । विडालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत्॥ पद्मपुराणे—हविः शाल्योदनं दिव्यमाज्ययुक्तं सशर्करम् । नैवेद्यं देवदेवाय यावकं पायसं तथा॥ नैवेद्यवस्त्वलाभे तु फलानि च निवेदयेत्। फलानामप्यलाभे तु तोयान्यपि निवेदयेत् ॥ नैवेद्यभक्षणाभक्षणविचारः कालिकापुराणे—यो यद्देवार्चनरतः स तन्नैवेद्यभक्षकः । केवलं सौरशैवे तु वैष्णवो नैव भक्षयेत्॥

से० म० मध्येपानीयं स० उत्तरापोशनं स० हस्तप्रक्षालनं स० मुखप्रक्षालनंस० आचमनीयं स० करोद्वर्तनार्थेगन्धं समर्पयामि॥मुखवासार्थे ताम्बूलं–ॐ उतस्मास्यद्रवतस्तुरण्यतः पुर्णन्नवेरनुवातिप्रगर्द्धिनः ॥ श्येनस्येवध्रजतोऽअङ्कसम्परिंदधिक्राव्ण्णः सुहोर्जातरित्रतःस्वाहा॥२५॥ ॐ भू० सि० म० ताम्बूलंस०॥फलम्–ॐ याः फलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वꣳहसः॥२६॥ ॐ भू०सि० म० फलं स० ॥ दक्षिणा–ॐयद्दत्तँयत्परादानँयत्पूर्तंयाश्च दक्षिणाः॥तदग्निर्वैश्वकर्मणःस्वर्द्देवेषुनोदधत्॥२७॥ॐ भूर्भुवःस्वः सि० म०सुवर्णपुष्पदक्षिणां स०॥कर्पूरारार्तिक्यम्–ॐआरात्रिपार्थिवꣳरजः पितुरप्रायिधामभिः ॥ दिवःसदाꣳसिबृहतीवितिष्ठसऽआत्वेषंवर्त्तते

नमानं त्वन्यनैवेद्यं भक्षयेदन्यदेवतः ॥ शिवनैवेद्ये विशेषः भविष्ये––शालग्रामोद्भवे लिंगे बाणलिंगे स्वयंभुवि । रसलिंगे तथार्षे च सुप्रसिद्धप्रतिष्ठिते ॥ हृदये चन्द्रकान्ते च स्वर्णरौप्यादिनिर्मिते । चान्द्रायणसमं ज्ञेयं शम्भोर्नैवेद्यभक्षणम् ॥ लिंगे स्वयंभुवे बाणे रत्नजे रसनिर्मिते । सिद्धप्रतिष्ठिते चैव न चण्डाधिकृतिर्भवेत् ॥ यत्र चण्डाधिकारोस्ति तद्भोक्तव्यं न मानवैः । चण्डाधिकारो नो यत्र भोक्तव्यं तत्र भक्तितः॥ हेमाद्रौपरिशिष्टे–अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम् । शालग्रामशिलासङ्गात्सर्वं याति पवित्रताम्॥पुरश्चरणचन्द्रिकायाम्–सुपुष्पात्मना पुष्पमात्रायोद्वासयेत्सुधीः । निर्माल्यं मस्तके धार्यं सर्वाङ्गेष्वनुलेपनम् ॥ नैवेद्यं चोपभुंजीत दत्वा तद्भक्तिशालिने ॥ ( भक्तिशालिने विष्वक्सेनायेत्यर्थः ) गौतमीये–गणेशे वक्रतुंडाय सूर्ये चण्डांशवेऽर्पयेत् । विष्णौ तु विष्वक्सेनाय शिवे चण्डेश्वराय च ॥शक्त्युच्छिष्टे शेसिकायै दद्यादर्चनसिद्धये । अन्यथा नैव सिद्धिः स्यादर्चको नरकं व्रजेत् ॥ देवनिर्माल्यत्यागे दोषः रुद्रयामले–निवेदितं च यद्द्रव्यं भोक्तव्यं तद्विधानतः । तत्र चेद्भ्रश्यते मोहाद्रोक्तुमायान्ति देवताः ॥

तमं— ॥ ३२/३४ ॥ ॐभूर्भुवः स्वः सि० म० कर्पूरार्तिक्यं दर्शयामि ॥ मन्त्रपुष्पाञ्जलिः—अञ्जलौ पुष्पाण्यादायतिष्ठन्—ॐनमोगणेभ्योगणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोविरूपेभ्योविश्वरूपेभ्यश्चवोनमः—॥ २५/१६ ॥ॐभूर्भुवःस्वः सिद्धिबुद्धिसहितम० मन्त्रपुष्पाञ्जलिं समर्पयामि॥प्रदक्षिणा—ॐसप्तास्यासन्परिधयस्त्रिःसप्तसमिधः—कृताः॥ देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम्॥ १५/३१ ॥ॐभूर्भुवःस्वःसि०म०प्रदक्षिणा समर्पयामि॥ अर्घपात्रे जलं प्रपूर्य रक्तचन्दनपुष्पाक्षतसहितं नारिकेलं च धृत्वा विशेषार्घः—रक्ष रक्ष गणाध्यक्ष रक्षत्रैलोक्यरक्षक। भक्तानामभयंकर्ता त्राता भवभवार्णवात्॥द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो। वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद॥ अनेन सफलार्घेण फलदोऽस्तु सदा मम॥ॐभूर्भुवः स्वः सि० म० विशेषार्घं स०॥प्रार्थना—विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय। नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः। नमस्ते रुद्ररूपाय करिरूपाय ते नमः॥ विष्णुरूपस्वरूपाय नमस्ते ब्रह्मचारिणे। भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ॥ लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय। निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ त्वां विघ्नशत्रुदलनेति च सुन्दरेति भक्तप्रियेति सुखदेति वरप्रदेति। विद्याप्रदेत्यघहरेति च ये स्तुवन्ति तेभ्यो गणेशवरदो भव नित्यमेव॥ ॐभूर्भुवःस्वः सिद्धिबुद्धिस० म० प्रार्थनापूर्वकं नमस्करोमि। अनया पूजया सिद्धिबुद्धिसहितः महागण० साङ्गः सपरिवारः प्रीयतां न मम ॥

इति गणपतिपूजाप्रयोगः ॥

---

## ॥ अथ पुण्याहवाचनप्रयोगः ॥

स्वपुरतः शुद्धायां भूमौ पञ्चवर्णैस्तन्दुलैर्वाऽष्टदलं कर्तव्यम् ॥ तत्र भूमिं स्पृष्ट्वा—ॐ मही द्यौः पृथिवी च न ऽइमं यज्ञम्मिमिक्षताम् ॥ पिपृतान्नो भरीमभिः ॥ $\frac{३३}{८}$ ॥ तत्र यवप्रक्षेपः—ॐ ओषधयः समवदन्त सोमेन सह राज्ञा ॥ यस्मै कृणोति ब्राह्मणस्त $\overset{\text{ᳫ}}{\phantom{}}$ राजन्पारयामसि ॥ $\frac{१२}{९६}$ ॥ अष्टदलोपरि कलशं-

१ पुण्याहवाचनसूत्रम्—अथ पुण्याहवाचनमृद्धिपूर्तेष्वृद्धिर्विवाहान्तापत्यसंस्कारा प्रतिष्ठो द्यापनादि पूर्तं तत्कर्मणश्चादौ तया कुर्याच्छुचिः स्वलङ्कृतो वाचयिता तथाभूत सद्मनि मङ्गलसम्भारान्सम्भृत्य ब्राह्मणान्प्रशस्तांल्लक्षणसम्पन्नान्गन्धादिभिरभ्यर्च्य दक्षिणया तोषयेदथ ते प्राङ्मुखा प्रसन्नाः दर्भपाणयस्तिष्ठेयुर्दक्षिणतो वाचयितोदङ्मुखा सत्कार्यांश्चाचार्यास्तुर्दक्षिण पार्श्वमभितिष्ठेयुरथ वाचयिता दर्भपाणिरपापूर्णं कुम्भं स्वाचितं सपत्न्यमुखं भृत्वा तिष्ठ समाहितोमन पचदशास्त्वन्तानि वाक्यान्युक्त्वा तन्नाम्ना कर्मदेवता प्रीयन्तामिति ब्रूयुरथ वाचयित पूर्वतस्तान्प्राङ्मन पठित्वा त्रिस्त्रिर्मन्द्रमध्योच्चस्वरैरोंपुण्याहं भवन्तो ब्रुवन्त्वोंकल्याणं भवन्तो ब्रुवन्त्वों स्वस्ति भवन्तो ब्रुवन्त्वोमृद्धिं भवन्तो ब्रुवन्त्विति ब्रूयात्तेपि तथा प्रत्यक् प्रतिब्रूयुरोम्प्रदयनामि युद्धौ ब्रूयुरथ प्राङ्मुखमासीन सामात्यकर्तारं ब्राह्मणा सपत्न्यदर्भपाणय शान्तिपाविन्नलिङ्गाभिर्ऋग्भि सिंचयु गुरुभ्यो नीराजनादिमङ्गलानि कुर्वन्ति ॥ अन्यत्र—पुण्याहानि सम्मासे विवाह चौलके तथा । मतबन्धे च यज्ञादौ तथा च दानकर्मणि ॥ गृहारम्भे धनप्राप्तौ तीर्थाभिगमने तथा । नवग्रहमखे शान्त्याद्भुतेषु तथैव च ॥ गृहप्रवेशने चैव ग्रामस्याभिनवेशने । तुरङ्गाणां गजबन्धे दासादीनां च सङ्ग्रहे ॥ अन्यस्मिन्नपि सर्वस्मिञ्छुभ कर्मणि चोदिते । वाचनीया द्विजाः सर्वे वेदशास्त्रपरायणाः ॥ इति विधानरत्नमालायाम् ॥ अपरं च—सम्पूज्य गन्धमाल्याद्यैर्ब्राह्मणान्स्वस्ति वाचयेत् । धर्मकर्मणि माङ्गल्ये सङ्ग्रामेऽद्भुतदर्शने ॥ इति व्यास ॥ एतदेव निरोङ्कारं कुर्यात्क्षत्रियवैश्ययोरिति दानखण्डवचनाद्ब्राह्मणस्य ओंकारपूर्वकं क्षत्रिय वैश्ययोर्निरोङ्कारं शूद्रस्य स्वस्तिमात्रम् ॥ २ ॥ कलशस्थापनं कार्यं कमलेऽष्टदलेऽमले ॥ इति परशुराम ॥ ३ ॥ क्रमेण कलशं स्थाप्य पूर्णपात्रं च सर्वशः । वरुणं तत्र सम्पूज्य गङ्गाद्या वाहनादिकम् ॥ स्वर्णं वा राजतं वापि ताम्रमृण्मयजं तु वा । अकालभग्नं चैव सर्वलक्षणसंयुतम् ॥ पञ्चाशांगुलवैपुल्यमुत्सेधे षोडशाङ्गुलम् । द्वादशाङ्गुलकं मूलं मुखमष्टाङ्गुलं तथा ॥ इति ॥

स्थापनम्—ॐ आजिघ्रकलशम्मह्यात्वाविशन्त्विन्दवः। पुनरूर्ज्जानिवर्त्तस्वसानः सहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः ॥ ४२/८ ॥ कलशे जलपूरणम्—ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्थो वरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ ३६/४ ॥ गन्धप्रक्षेपः—ॐ त्वाङ्गन्धर्वाऽअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामोषधेसोमोराजाविद्वान्यक्ष्मादमुच्यत ॥ ९८/१२ ॥ धान्यप्रक्षेपः—ॐ धान्यमसिधिनुहिदेवान्प्राणायत्त्वोदानायत्वा व्यानायत्त्वा ॥ दीर्घामनुप्रसितिमायुषेधान्देवोवः सविताहिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनाम्पयोसि ॥ २०/१ ॥ सर्वौषधीप्रक्षेपः—ॐ याऽओषधीः पूर्वाजातादेवेभ्यस्त्रियुगम्पुरा ॥ मनैनुबभ्रूणामहः शतन्धामानिसप्तच ॥ ७५/१२ ॥ दूर्वाप्रक्षेपः—ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषः परुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ २०/१३ ॥ पञ्चपल्लवप्रक्षेपः—ॐ अश्वत्थेवोनिषदनम्पर्णेवोवसतिष्कृता ॥ गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥ ७९/१२ ॥ सप्तमृद्प्रक्षेपः—ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः शर्म्मसप्रथाः ॥ १३/३६ ॥ फलप्रक्षेपः—ॐ याः फलिनीर्य्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वंहसः ॥ ८९/१२ ॥ पञ्चरत्नप्रक्षेपः—ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ २५/११ ॥ हिरण्यप्रक्षेपः—ॐ हिरण्यगर्भः समवर्त्तताग्रेभूतस्यजातः पतिरेकऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥ ४/१३ ॥ रक्तसूत्रेण वस्त्रेण च वेष्टयेत्—ॐ युवासुवासाः परिवीतआगात्सउश्रेयान्भवति-

---

१ केचन सूत्रवेष्टने—ॐ सुजातोज्ज्योतिषासहशर्म्मवरूथमासदत्स्वः—॥ वासोऽअग्नेविश्वरूपर्ठ०संव्ययस्वविभावसो ॥ ४०/११ ॥ इति मन्त्र वा पठन्ति॥ १॥

जायमानः ॥ तंधीरासःकवयउन्नयन्तिस्वाध्योमनसादेवयन्तः ॥ पा०गृ० का०२कं०२मं०९ ॥ पूर्णपात्रमुपरिन्यसेत्—ॐपूर्णादर्व्विपरापतसुपूर्णा-पुनरापत ॥ वस्नेवविक्रीणावहाऽइषमूर्ज्जᳫशतक्रतो ॥ $\frac{४९}{३}$ ॥ वरुण-मावाहयेत्—ॐतत्त्वायामीत्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणो देवतावरुणावाहने विनियोगः । ॐतत्त्वायामिब्रह्मणावन्दमानस्तदा-शास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशᳫसमानऽआयुः प्रमोषीः ॥ $\frac{१८}{४९}$ ॥ ॐभूर्भुवः स्वः अस्मिन्कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकम् आवाहयामि स्थापयामि ॥ प्रतिष्ठापनम्—ॐमनोजूति-र्ज्जुषतामाज्ज्यस्यबृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञᳫसमिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामोम्प्रतिष्ठ ॥ $\frac{१३}{२}$ ॥ ॐवरुणाय नमः वरुण सुप्र-तिष्ठितो वरदो भव ॥ ॐभूर्भुवः स्वः वरुणाय नमः चन्दनं समर्पयामि ॥ इत्यादिपञ्चोपचारैः संपूज्य तत्त्वायामीति पुष्पाञ्जलिं समर्प्य अनेन पूजनेन वरुणः प्रीयताम् ॥ ततः अनामिकया कलशं स्पृष्ट्वा अभि-मन्त्रयेत्—कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशाम्बु-समाश्रिताः । अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा ॥ आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥ ततः गायत्र्यादिभ्यो नमः इत्यनेन पञ्चोपचारैरभ्यर्च्य कलशं प्रार्थयेत्—देवदानवसंवादे मथ्यमाने महोदधौ ।

१ धातुजं मृण्मयं वापि कलशं यत्प्रतिष्ठितम् । तद्व्याप्तदेशदीर्घं च चतुरङ्गुलमुच्छ्रितम् ॥ सिततन्दुलपूर्णं च पूर्णपात्रं प्रकीर्तितम् ॥ २ स्पृशन्ननामिकाग्रेण क्वचिदालोकयन्नपि । अनुमन्त्रणं सर्वत्र सदैवमभिमन्त्रयेत् ॥

उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्य वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठन्ति सर्वेपि यतः कामफलप्रदाः । त्वत्प्रसादादिदं कर्म कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय । सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते । पाशपाणे नमस्तुभ्यं पद्मिनीजीवनायक । पुण्याहवाचनं यावत्तावत्त्वं सन्निधो भव ॥ ततः स्वस्तिवाचनार्थं युग्मविप्रान्संपूज्य ॥ अवनिकृत-जानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना स्वर्णपूर्णकलशं धारयित्वा वदेत्—ॐत्रीणिपदाविचक्रमेविष्णुर्गोपाऽअदाभ्यः ॥ अतोधर्माणिधारयन् ॥ ३४/१८ ॥ दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु ॥ विप्रा वदेयुः—तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु ॥ पुनः—ॐत्रीणितऽआहुर्दिविबन्धनानित्रीण्यप्सुत्रीण्यन्तःसमुद्रे ॥ उतेवमेवरुणश्छन्त्स्यर्वन्यत्रातऽआहुःपरमञ्जनित्रम् ॥ २९/१५ ॥ दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु ॥ पुनः—ॐत्रयादेवाऽएकादशत्रयस्त्रिꣳशाःसुराधसः ॥ बृहस्पतिपुरोहितादेवस्यसवितुःसवे ॥ देवादेवैरवन्तुमा ॥ २०/११ ॥ दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च । तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु ॥ अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् ।

ब्राह्मणानां करे न्यस्ताः शिवा आपो भवन्तु ताः ॥ ब्राह्मणानां हस्ते सुप्रोक्षितमस्तु॥शिवा आपः सन्तु। सन्तु शिवा आपः॥ सौमनस्यमस्तु। अस्तु सौमनस्यम्॥ अक्षतं चारिष्टं चास्तु। अस्त्वक्षतमरिष्टं च॥ गन्धाः पान्तु सौमङ्गल्यं चास्त्विति भवन्तो ब्रुवन्तु। ॐ गन्धाः पान्तु सौमङ्गल्यं चास्तु॥ अक्षताः पान्तु आयुष्यमस्त्विति भवन्तो ब्रुवन्तु। ॐअक्षताः पान्तु आयुष्यमस्तु॥ पुष्पाणि पान्तु सौश्रियमस्त्विति भवन्तो ब्रुवन्तु। ॐपुष्पाणि पान्तु सौश्रियमस्तु॥ ताम्बूलानि पान्तु ऐश्वर्यमस्त्विति भवन्तो ब्रुवन्तु। ॐताम्बूलानि पान्तु ऐश्वर्यमस्तु॥ पूगीफलानि पान्तु बहुफलमस्त्विति भवन्तो ब्रुवन्तु। ॐपूगीफलानि पान्तु बहुफलमस्तु॥ दक्षिणाः पान्तु बहुदेयं चास्त्विति भवन्तो ब्रुवन्तु। ॐदक्षिणाः पान्तु बहुदेयं चास्तु॥ ॐदीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रञ्चास्त्विति भवन्तो ब्रुवन्तु। ब्राह्मणा वदेयुः—ॐदीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चास्तु॥ यजमानो वदेत्— कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमोङ्कारमादिं कृत्वा ऋग्यजुःसामाथर्वणाशीर्वचनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये। ॐवाच्यताम्॥ आशीर्वादः॥ ब्राह्मणानां हस्तेष्वक्षतान्दद्यात्॥ यजुः—ॐभद्रङ्कर्णेभिः शृणुयाम देवा भद्रम्पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः॥ २१/२५ ॥ ॐदेवानां भद्रा सुमतिर्ऋजूयतान्देवानाꣳरातिरभि नो निवर्तताम्॥ देवानाꣳसख्यमुपसेदिमा वयन्देवा न आयुः प्रतिरन्तु जीवसे॥ १५/२५ ॥ ॐदीर्घायुस्त ओषधे खनिता यस्मै च त्वा खनाम्यहम्॥ अथो त्वन्दीर्घायुर्भूत्वा-

शतवंल्शाविरोहताव् ॥ ११/१२ ॥ ॐऋक्—द्रविणोदाद्रविंणसस्तुरस्यद्रवि-
णोदाःसनंरस्यप्रयंसत ॥ द्रविणोदावीरवंतीमिषंनोद्रविणोदारासतेदीर्घ-
मायुः ॥ अष्टक १ ७/७ ॥ यजुः ॐद्रविणोदाःपिपीषतिजुहोतप्रचंतिष्ठत ॥
नेष्ट्रादृतुभिरिष्यत ॥ २२/२६ ॥ साम—ॐदेवो३वो३द्रविणोदाः । पूर्णां
विवष्ट्वासिचं । उद्वा१सिंचा २ । ध्वमुपवापृणध्वं । आदिद्वोदे१ । वओहते ।
इडा२३भा३४३ । ओ२३४५ई । डा ॥ वेयगानस्य द्वितीयप्रपाठकस्य
प्रथमार्द्धे साम२४ ॥ अथर्वणः—ॐधातारातिःसवितेदंजुषंताम्प्रजाप
तिर्निधिपतिर्नोअग्निः ॥ त्वष्टाविष्णुःप्रजयासंरराणोयजमानायद्रविणं
दधातु ॥ का०७अ०२सू०१७मं०४ऋक्—ॐसवितापश्चातात्सवितापु
रस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंसावि
तानोरासतांदीर्घमायुः ॥ ७ ११/८ ॥ यजुः—सवितात्वासवानांसुवताम
ग्निर्गृहपतीनांसोमोवनस्पतीनाम् ॥ बृहस्पतिर्वाचऽइन्द्रोज्यैष्ठ्या
यरुद्रःपशुभ्योमित्रःसत्योवरुणोधर्म्मपतीनाम् ॥ ३९/५ ॥ साम—
ॐऊर्द्ध्वऊषुणा३ऊता२३४याई । तिष्ठादेवोनसविता । ऊर्द्ध्वोवा२३जा ।
स्यासनिता । यादंजिभीः२ः । वाघाद्भीः२ः । वीवी१ । हैयामा२३हा
३४३ई । डे२३४५ई । डों ॥ वेयगानस्य द्वितीयप्रपाठकस्य प्रथमार्द्धे
साम २६ ॥ अथर्वणः—ॐअभयंद्यावापृथिवीइहास्तुनोभयंसोमःसवि-
तानःकृणोतु॥अभयन्नोस्तूर्वा१न्तरिक्षंसप्तऋषीणांचहविषाभयन्नोऽस्तु॥
का०६अ०४सू०४०मं०१ ॥ ६ १/२० ॥ऋक्—ॐनवोनवोभवतिजायमानो-
ह्नांकेतुरुषसामेत्यग्रम्॥भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतेदीर्घमायुः

॥ ८ २३/३ ॥ यजुः—ॐनतद्रक्षाᳪसिनपिशाचास्तरन्तिदेवानामोजःप्पथमुजᳪह्येतत् ॥ योबिभर्त्तिदाक्षायणᳪहिरण्यᳪसदेवेषुकृणुतेदीर्घमायुᳪसमनुष्येषुकृणुतेदीर्घमायुः ॥ ५१/३४ ॥ साम—चंद्रमाआउवा । प्सुवान्ताराउवा । सुपर्णो धाउवा । वतोदिवि । न वोहिराउवा । ण्यनाइमायाउवा । पदंविंदाउवा । तिविद्युताः । वित्तंमाआउवा । स्यरोदा २३ सा ३४३ ई । ओ २३४५ई । डा ॥ वेयगानस्य एकादशमपाठकस्य प्रथमार्द्धे साम २१ ॥ अथर्वणः—नैनंरक्षांसिनपिशाचाःसहंतेदेवानामोजःप्रथमजंह्येतत् ॥ योबिभर्त्तिदाक्षायणंहिरण्यंसजीवेषुकृणुतेदीर्घमायुः ॥१ ३/३५॥ ऋक्—ॐउषादिविदक्षिणावंतोऽअस्थुर्येऽअश्वदाःसहतेसूर्येण ॥ हिरण्यदाऽअमृतत्वंभजंतेवासोदाःसोमप्रतिरंतऽआयुः ॥ ८ ३/६ ॥ यजुः—ॐउद्यातेजातमन्धसोदिविसद्भूम्यादंदे। उग्रᳪशर्म्ममहिश्रवः॥ १६/२६॥ साम—उच्चाता २ ईजातमंधसाः । दिवाई । सा१भू२। मिया२१ ददाई। उग्राᳪशर्म्मा महा२३ईश्रवाउ । वा३ । स्तोपे२३४५ ॥ वेयगानस्यद्वादशमपाठकस्य द्वितीयार्द्धे साम १३ ॥ अथर्वणः—ॐउद्योपतन्तमरुणंसुपर्णंमध्येदिवस्तरणिंभ्राजमानम् ॥ पश्यांमत्वासवितारंयमाहुरजस्रं-

---

१ अत्र-ॐअहोरात्राभ्यांनक्षत्रेभ्यःसूर्याचन्द्रमसाभ्याम् ॥ भद्राहमस्मभ्यंराजंशकधूमत्वंकृधि ॥ काण्ड ६ अनुवाक १३ सूक्त १२८ मन्त्र ३ इत्यपिपठंति॥

२ अत्र—ॐउच्चैर्घोषोदुंदुभिः सत्वनायन्वानस्पत्यःसंभृतउस्रियाभिः ॥ वाचंक्षुणुवानोदमयन्त्सपत्नान्सिंहइवजेष्यन्नभितंस्तनीहि ॥ का० ५ अ० ४ सू० २० मं० १ इत्यपि मन्त्रं पठन्ति ॥

ज्योतिर्यद्विन्दुदग्निः ॥ का० १२ अ०२मं० ३६ इत्याशीर्वादः ॥ +व्रतजपनियमतपःस्वाध्यायक्रतुदयादमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् ॥ * समाहितमनसः स्मः ॥ + प्रसीदन्तु भवन्तः ॥ प्रसन्नाः स्मः ॥ + ॐशान्तिरस्तु ॥ अस्तु[१] ॥ॐपुष्टिरस्तु ॥ ॐतुष्टिरस्तु । ॐवृद्धिरस्तु । ॐअविघ्नमस्तु । ॐआयुष्यमस्तु । ॐआरोग्यमस्तु । ॐशिवं कर्मास्तु । ॐकर्मसमृद्धिरस्तु । ॐवेदसमृद्धिरस्तु । ॐशास्त्रसमृद्धिरस्तु । ॐधनधान्यसमृद्धिरस्तु । ॐपुत्रपौत्रसमृद्धिरस्तु । ॐइष्टसंपदस्तु । ॐअरिष्टनिरसनमस्तु । ॐयत्पापं रोगमशुभमकल्याणं तद्दूरे प्रतिहतमस्तु ॥ ॐयच्छ्रेयस्तदस्तु ॥ ॐउत्तरे कर्मणि निर्विघ्नमस्तु ॥ ॐउत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ ॐउत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यन्ताम् ॥ ॐतिथिकरणमुहूर्तनक्षत्रग्रहलग्नसंपदस्तु ॥ पात्रे उदकसेकः ॥ ॐतिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम् ॥ ॐतिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे साधिदेवते प्रीयेताम् ॥ ॐदुर्गापाञ्चाल्यौ प्रीयेताम् ॥ ॐअग्निपुरोगा विश्वेदेवाःप्रीयन्ताम् ॥ ॐइन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम् ॥ ॐमाहेश्वरीपुरोगा उमामातरःप्रीयन्ताम् ॥ ॐअरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम् ॥ ॐविष्णुपुरोगाः सर्वेदेवाः प्रीयन्ताम् ॥ ॐब्रह्मपुरोगाः सर्वेवेदाः प्रीयन्ताम्॥ॐब्रह्म च ब्राह्मणाश्च प्रीयन्ताम्॥ॐश्रीसरस्वत्यौप्रीयेताम्॥ॐश्रद्धामेधे प्रीयेताम्॥ॐभगवती कात्यायनी प्रीयताम्॥ ॐभगवती माहेश्वरी प्रीयताम् ॥ ॐभगवती ऋद्धिकरी प्रीयताम् ॥ ॐभगवती सिद्धिकरी प्रीयताम् ॥ ॐभगवती पुष्टिकरी प्रीयताम् ॥

---

+ यजमानो वदेत् ॥ * ब्राह्मणा वदेयुः ॥ १ अस्तु इति द्विजाः सर्वत्र प्रतिवचनं वदेयुः ॥

ॐभगवती तुष्टिकरी प्रीयताम् ॥ ॐभगवन्तौ विघ्नविनायकौ प्रीयेताम् ॥ ॐसर्वाः कुलदेवताः प्रीयन्ताम् ॥ ॐसर्वा ग्रामदेवताः प्रीयन्ताम् ॥ बहिः—ॐहताश्च ब्रह्मद्विषः ॥ ॐहताश्च परिपन्थिनः ॥ ॐहताश्च विघ्नकर्तारः ॥ ॐशत्रवः पराभवं यान्तु ॥ॐशाम्यन्तु घोराणि ॥ ॐशाम्यन्तु पापानि ॥ ॐशाम्यन्त्वीतयः ॥ पुनःपात्रे—ॐशुभानि वर्द्धन्ताम् ॥ ॐशिवा आपः सन्तु ॥ ॐशिवा ऋतवः सन्तु ॥ ॐशिवा ओषधयः सन्तु ॥ ॐशिवा नद्यः सन्तुः ॥ ॐशिवा गिरयः सन्तु ॥ ॐशिवा अतिथयः सन्तु ॥ ॐशिवा अग्नयः सन्तु ॥ ॐशिवा आहुतयः सन्तु ॥ ॐअहोरात्रे शिवे स्याताम् ॥ ऋक्—शन्नः कनिंक्रदद्देवःपर्जन्योअभिवर्षतु ॥ शन्नोद्यावापृथिवीशंप्रजाभ्युः शन्नएधिद्विपदेशंचतुष्पदे ॥ ऋ० ब्र० शान्तिपाठे परिशिष्टमन्त्र ८ ॥ यजुः—ॐनिकामेनिकामेन६ पर्जन्योवर्षतुफलंवत्योनऽओषधय६पच्यन्तांय्योगक्षेमोनः कल्पताम् ॥ २२/२२ ॥ ब्राह्मणम्—ॐनिकामेनिकामेन६पर्जन्योवर्षत्वितिनिकामेनिकामे वै तत्र पर्जन्योवर्षतियत्रैतेनयज्ञेनयजन्तेफलवत्योन ऽ ओषधय ६पच्यन्तामितिफलवत्यो वै तत्रौषधय६पच्यन्तेयत्रैतेनयज्ञेनयजन्तेयोगक्षेमोन ६ कल्पतामितियोगक्षेमोवैतत्रकल्पतेयत्रैतेनयज्ञेनयजन्तेतस्माद्यत्रैतेनयज्ञेनयजन्तेक्लृप्त६ प्रजानांयोगक्षेमोभवति ॥ साम—ॐत्वष्टा ३४ । नो दैवियं वचाः । पर्जन्योब्रह्मणस्पा२ ३तीः। पुत्रैर्भ्रातृभिरदितिर्नुपातु २३ नाः । दुष्टारा २३ न्त्रा । मणंरा २३ चा ३४३ ः । ओ२३४५ ई । डो ॥ वेयगानस्य अष्टममपाठकस्य प्रथमार्द्धस्य साम २० ॥ अथर्वणः—गणास्त्वोपगायन्तुमारुताःपर्जन्यघोषिणः पृथक् ॥ सर्गावर्षस्यवर्षतोवर्षन्तुपृथिवीमनु॥ का० ४ अ० ३ सू०

१५ मं० ४ ॥ ॐशुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् ॥ ॐभगवान्नारायणः प्रीयताम् ॥ ॐभगवान्पर्जन्यः प्रीयताम् ॥ ॐभगवान्स्वामी महासेनः प्रीयताम् ॥ ॐपुरोनुवाक्यया यत्पुण्यं तदस्तु ॥ ॐयाज्यया यत्पुण्यं तदस्तु ॥ ॐवषट्कारेण यत्पुण्यं तदस्तु ॥ ॐप्रातःसूर्योदये यत्पुण्यं तदस्तु ॥ ॐपुण्याहकालान्वाचयिष्ये । ॐवाच्यताम् ॥ ब्राह्म्यं पुण्यं महद्यच्च सृष्ट्युत्पादनकारकम् । वेदवृक्षोद्भवं नित्य तत्पुण्याहं ब्रुवन्तुनः ॥ भो ब्राह्मणाः मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य सग्रहमखमहारुद्राख्यस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु ॥ ॐअस्तु पुण्याहम् ॥ एवं त्रिः ॥ ऋक्-ॐउद्गातेवशकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि ॥ वृषेववाजीशिशुमतीरपीत्यासर्वतोनः शकुनेभद्रमावदविश्वतोनःशकुनेपुण्यमावद ॥ २ $\frac{२२}{८}$ ॥ यजुः-ॐपुनन्तुमादेवजनाः पुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥ $\frac{३६}{१९}$ ॥ ब्राह्मणम्-ॐसयःकामयेतमहत्प्राप्नुयामित्युदगयनऽआपूर्यमाणपक्षेपुण्याहेद्वादशाहमुपसद्व्रतीभूत्वौदुम्बरेकंसेचमसेवासर्वौषधफलानीतिसम्भृत्यपरिसमुह्यपरिलिप्याग्निमुपसमाधायावृताज्यसंस्कृत्यपुंसानक्षत्रेणमन्थसन्नीयजुहोति ॥ साम-ॐपुनानःसोमा२धारा२३४ या । आपोवसानोअर्षस्यारत्नधायोनिमृतस्यसा २ ईद साई । ओहा२उवा । उत्सोदेवोहिरा २३हाई । ओहा ३ उवा । प्यया । ओ । ३होवा । हो५ई । डा ॥ वेयगानस्य चतुर्दशप्रपाठकस्य प्रथमार्द्धे साम३५ ॥

अथर्वणः—ॐपुनन्तुंमादेवजनाःपुनन्तुमनसोधिया ॥ पुनन्तुविश्वाभूतानि पवमानःपुनातुमा ॥ काण्ड ६अ०२सू० १९मं० १॥ पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम् । ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः॥ भोब्राह्मणाः मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य सग्रहमखमहारुद्राख्यस्य कर्मणः कल्याणं भवन्तो ब्रुवन्तु॥ॐअस्तु कल्याणम् ॥एवं त्रिः॥ऋक्—ॐअपा सोममस्तमिन्द्रप्रयाहिकल्याणीर्जायासुरणंगृहेते ॥ यत्रारथस्यबृहतोनिधानंविमोचनंवाजिनोदक्षिणावत् ॥ ३ $\frac{२०}{३}$ ॥ यजुः—ॐयथेमांवाचंकल्याणीमावदानिजनेभ्यः ॥ ब्रह्मराजन्याभ्याᳪशूद्रायचार्य्यायचस्वायचारणायच ॥ प्रियोदेवानान्दक्षिणायैदातुरिहभूयासमयम्मेकामः समृद्ध्यतामुपमादोनमतु ॥ $\frac{२}{२६}$ ॥

ब्राह्मणम्—ॐअथाध्वर्यो मतिगरोरात्सुरिमेयजमानाभद्रमेभ्यो यजमानेभ्योभूदितिकल्याणमेवैतन्मानुष्यैवाचोवदति॥ साम—ॐकाँ५ या । नथा ३ इत्रा ३ आभूवात् । उ । ती स दा वृध स्स । खा । ओ३ हो हाइ । कया २३ शचा इ । ष्ठयौ हो ३ । हुम्मा १२ । वाँ२ तों ३५ हाँइ ॥ वेयगानस्य पञ्चमप्रपाठकस्य प्रथमार्द्धे साम २५ ॥ अथर्वणः—ॐविश्वजित्कल्याण्यैमापरिदेहि ॥ कल्याणिद्विपाच्चसर्वंनोरक्षचतुष्पाद्यच्चनःस्वम् ॥ का०६अ०११ सू०१०७ मं०३ ॥ सागरस्य यथा वृद्धिर्महालक्ष्म्यादिभिः कृता । सम्पूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः ॥ भो ब्राह्मणाः मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य सग्रहमखमहारुद्राख्यस्य

कर्मणः ऋद्धिं भवन्तो ब्रुवन्तु ॥ ॐ कर्म ऋद्ध्यताम् ॥ एवं त्रिः ॥ ऋक्—
ॐ ऋद्ध्यामस्तोमं सनुयाम वाजमानो मंत्रैः सरथेहोपयातम् ॥ यशो न पक्वं मधु
गोष्वंतरा भूतांशो अश्विनोः काममप्राः ॥ ८ २/६ ॥ यजुः—ॐ सत्रस्य
ऋद्धिरस्यगन्म ज्योतिरमृता अभूम ॥ दिवं पृथिव्या अध्यारुहामा विदाम देवान्त्स्वर्ज्योतिः ॥ ५२/८ ॥ ब्राह्मणम्—ॐ तऽउत्तरस्य हविर्धानस्य
जघन्यायां कुवर्या ं सामाभिगायन्ति सत्रस्यऽऋद्धिरिति राद्धिमेवैतद्‌-
भ्युत्तिष्ठंत्युत्तरवेदेर्वोत्तरायां श्रोणावित्तरं तु कतुत्तरम् ॥ साम—औ हो वा
औ हो वा औ हो ३ वा। अगन्म ज्योतिः। अगन्म ज्योतिः। अगन्म ज्यो
तिः। अमृता अभूम। अमृता अभूम। अमृता अभूमा। तरिक्षंपृथिव्या अ-
ध्यारु हा मा। तरिक्षंपृथिव्याअध्यारुहा मा। तरिक्षंपृथिव्याअध्यारुहाम।
दिवमन्तरिक्षा दध्या रुहा म। दिवमन्तरिक्षादध्यारुहाम। दिवमन्तरिक्षा
दध्या रुहाम। अविदाम दे वा न्। अविदाम दे वा न्। अविदाम दे
वान्। समुद्दे वै रगन्महि। समु दे वै रगन्महि। समु द् वै रगन्महि।
औहो वा। औ हो वा। औ हो ३ वा। सुवर्ज्यो ती २ ३ ४ ५ः ॥
आरण्यगानस्य चतुर्थप्रपाठकस्य प्रथमार्द्धे साम ४ ॥ अथर्वणः—ॐ ऋ-
धङ्मंत्रो योनिं य आबभूवामृतासुर्वर्द्धमानः सुजन्मा ॥ अदब्धासुर्भ्राजमा
नोहेव त्रितो धर्त्ता दाधार त्रीणि ॥ का० ५ अ० १ सू० १ मं० १ ॥
स्वस्तिरस्तु याऽविनाशाख्या पुण्यकल्याणवृद्धिदा। विनायकप्रिया नित्यं
तां च स्वस्तिं ब्रुवन्तु नः ॥ भो ब्राह्मणाः मह्यं सकुटुम्बिने महाजनान्-

मस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्यैसग्रहमखमहा-
रुद्राख्यस्य कर्मणः स्वस्ति भवन्तो ब्रुवन्तु॥ॐआयुष्मते स्वस्ति॥एवं त्रिः॥
ऋक्—ॐस्वस्तिरिद्धिप्रपथेश्रेष्ठारेक्णस्वत्यभियावामेति॥ सानोऽअ-
मासोऽअरणेनिपातुस्वावेशाभवतुदेवगोपा ॥ ८३ ॥ यजुः—ॐस्वस्ति-
नऽइन्द्रोवृद्धश्रवाःस्वस्तिनः—पूषाविश्ववेदाः॥ स्वस्तिनस्तार्क्ष्योऽअ-
रिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ ११/२५ ॥ ब्राह्मणम्—ॐगातुम्यज्ञा-
यगातुम्यज्ञपतयऽ इतिगातुद्धेपथञ्ञायेच्छतिगातुम्यज्ञपतयेवोयज्ञस्यसऽ-
स्थान्दुवांसवस्तिरस्तुनः स्वस्तिर्मानुष्येभ्यऽ इतिस्वस्तिनोदेवत्रास्तुस्व-
स्तेनमानुष्यत्रेत्येवै तदाहोर्ध्वं जिगातुभेषजमित्यूर्ध्वो नो यज्ञोदेवलो-
कम्पजत्वित्येवै तदाहशन्नोऽ अस्तु द्विपदेशञ्चतुष्पदऽ इत्येतावद्वाऽ
इदं सर्वंयावद्द्विपाच्चैव चतुष्पाच्चतस्माऽ एवैतद्यज्ञस्यसंस्थां-
गत्वा शंकरोति तस्मादाहशन्नोऽ अस्तु द्विपदेशं चतुष्पदे ॥ साम—
ॐत्रातारमिन्द्रमविता । रमि २३ न्द्राम् । ह वे हवे सुवहऽँशू ।
मी २३ न्द्राम् । हुवाइ शुशक्रंपुरुहू । तमी २३ न्द्राम् ।
वऽँइ । वाइः । म घ वा । वा ३४३ इ । तू ३ वा ५
न्द्रा ६५६ः॥ वेयगानस्य नवमप्रपाठकस्य प्रथमार्द्धे साम ३ ॥ अथ-
र्वणः—ॐस्वस्तिमात्रउतपित्रेणोअस्तु स्वस्तिगोभ्योजगतेपुरुषेभ्यः॥
विश्वंसुभूतंसुविदत्रनो अस्तुज्योगेवदृशेमसूर्यम्॥ का०१अ०६सू०३१

---

१ यत्र स्वस्तिशब्दः अव्ययः तत्र क्रियमाणायेति चतुर्थी ॥ यत्र स्वस्तिशब्द
नव्ययः तत्र ॥ क्रियमाणस्येति षष्ठी स्यात् । कौमुदीतत्त्वबोधिनीटीकायां स्वस्तिशब्दो
नव्ययोऽपि ॥ यथा भविष्योत्तरपुराणे—प्रतिगृह्णामि ते धेनु कुटुम्बार्थे विशेषत । स्वस्तिर्भवतु
नित्य सुखं चानुत्तम तथा ॥

मं०४॥ समुद्रमथनाज्जाता जगदानन्दकारिका। हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः ॥ भोब्राह्मणाः मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य सग्रहमखमहारुद्राख्यस्य कर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु ॥ ॐ अस्तु श्रीः ॥ एवं त्रिः ॥ ऋक्—ॐश्रिये जातःश्रियआनिरियायश्रियंवयोजरितृभ्योदधाति ॥ श्रियंवसानाऽ अमृतत्वमायन्भवन्तिसत्यासमिथामितद्रौ ॥ ७-९ ॥ यजुः—ॐमनसःकाममाकूतिंवाचःसत्यमशीय ॥ पशूनाᳬरूपमन्नस्यरसोयशःश्रीःश्रयताम्मयि स्वाहा ॥ ३९ ॥ ब्राह्मणम्—ॐतेनोहंतलऽईजेद्रुसः पार्वतिस्तऽ इमेण्येतर्हि दाक्षायणाराज्यामिवैवप्राप्ताराज्यामिवहवैप्राप्नोतियुऽ एवं विद्वानेतेनयज्ञेनयजतेतस्माद्वाऽ एतेनयजेतस्माऽएकैकऽ एवानूचिनाहं पुरोडाशोभवत्येतेनोह्यस्यासपत्नानुपथाघाश्रीर्भवति॥साम-ॐश्रायन्तइवसूर्य्यरायां। विश्वा ५२ इदिन्द्रा ५१। स्यभा ५१ क्षाता। वा सू नि जा तो ज निमा। नियोजा१ सा ५२। मतिभा गं नदी २ धिमः। मा २३ती। भागोना२ ठा। हुं। धिमा ३ः। ओ २३४वा। हे२ ३ ४ ५॥ वेयगानस्य सप्तमप्रपाठकस्य द्वितीयार्द्धे साम ५ ॥ अथर्वण–ॐएहयातुवरुणः सोमोअग्निर्बृहस्पतिर्वसुभिरेहयातु ॥ अस्यश्रियमुपसंयातसर्वेऽउग्रस्यचेतुः संमनसः सजाताः ॥ काण्ड ६ अनुवाक् ८ सूत्र७२ मत्र १ ॥ कृतेऽस्मिन्पुण्याहवाचने न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनात् श्रीमहागणपतिप्रसादाच्च सर्व. परिपूर्णोऽस्तु ॥ अस्तु परिपूर्णः॥ अथाभिषेक ॥ कर्तुर्वामतः पत्नीम् उपवेश्य पात्रपातितकलशोदकेन

अविधुराश्चत्वारो ब्राह्मणा दूर्वाम्रपल्लवैरुदङ्मुखास्तिष्ठन्तः सपत्नीकं यजमानमभिषिञ्चेयुः। तत्रमंत्राः- ॐपयः-पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीः प्रदिशः-सन्तुमह्यम् ॥ ३६/१८ ॥ ॐपञ्चनद्यः सरस्वतीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशेभवत्सरित् ॥ ११/३४ ॥ ॐवरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ ३६ ॥ ॐपुनन्तुमादेवजनाः पुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदः पुनीहिमा ॥ ३१/११ ॥ ॐदेवस्यत्वासवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्यन्त्रियेदधामिबृहस्पतेष्ट्वासाम्राज्ज्येनाभिषिञ्चाम्यसौ ॥ ३०/१ ॥ ॐदेवस्यत्वासवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्यन्त्रेणाग्नेः साम्राज्ज्येनाभिषिञ्चामि ॥ ३७/१८ ॥ ॐदेवस्यत्वासवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ अश्विनोर्भैषज्ज्येनतेजसेब्रह्मवर्चसायाभिषिञ्चामिसरस्वत्यैभैषज्ज्येनवीर्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्रियैयशसेभिषिञ्चामि ॥ ३/२० ॥ ॐविश्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रन्तन्नऽआसुव ॥ ३/३० ॥ ॐधामच्छदग्निरिन्द्रोब्रह्मादेवोबृहस्पतिः ॥ सचेतसोविश्वेदेवायज्ञम्प्रावन्तुनः शुभे ॥ ७६/१८ ॥ ॐत्वंयविष्ठदाशुषोनॄः पाहिशृणुधीगिरः ॥ रक्षातोकमुतत्मना ॥ ५२/१३ ॥ ॐअन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ॥ प्रप्रदातारन्तारिषऽऊर्ज्जन्नोधेहिद्विपदेचतुष्पदे ॥ ८३/११ ॥ ॐद्यौः शान्तिरन्तरिक्षः शान्तिः-पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः ॥ वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वः शान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि ॥

॥ $\frac{१५}{२६}$ ॥ ॐयतोयतऽसमीहसेततोनोऽअभयङ्कुरु ॥ शन्नः कुरुप्रजा-भ्योभयन्नऽपशुभ्यः ॥ $\frac{३३}{२६}$ ॥ ब्राह्मणम्—ॐपालाशम्भवति ॥ तेनब्राह्मणो-भिषिञ्चतिब्रह्मवैपलाशोब्रह्मणैवैनमेतदभिषिञ्चति ॥ औदुंबरम्भवति ॥ तेनस्वोभिषिञ्चत्यन्नंवाऽऊर्गुदुंबरऽऊर्ग्वैस्वंयावद्वैपुरुषस्यस्वम्भवतिनैवता-वदशनायतितेनोर्क्स्वंतस्मादौदुंबरेणस्वोभिषिञ्चति ॥ नैय्यग्रोधपादम्भव-तितेनामित्रोराजन्योभिषिञ्चतिपद्भिर्वैन्यग्रोधऽ प्रतिष्ठितोमित्रेणवैराजन्यः प्रतिष्ठितस्तस्मान्नैय्यग्रोधपादेनमित्रोराजन्योभिषिञ्चति ॥ आश्वत्थं-भवति ॥ तेनवैश्योभिषिञ्चतिसयदेवादोभस्योतिष्ठतऽइन्द्रोमरुतऽउपामं-त्रयतेतस्मादाश्वत्थेनवैश्योभिषिञ्चति ॥ यद्वेवकुल्पाङ्कुवोतिप्राणावैकु-ल्पाऽअमृतम्वैप्राणाऽअमृतेनैवैनमेतदभिषिञ्चति ॥ सर्वेषांवाऽएषवे-दानाऽरसोयत्सामसर्वेषामेवैनमेतद्वेदानाऽरसेनाभिषिञ्चति ॥ शान्तिः शान्तिः सुशान्तिर्भवतु ॥ स्वस्थाने उपविश्य हस्ते जलं गृहीत्वा—अभिषे-ककर्तृकेभ्यो ब्राह्मणेभ्यो यथोत्साहदक्षिणां दास्ये तेन श्रीकर्माधीशः प्रीयताम् ॥ ततः पुत्रवतीभिर्वृद्धसुवासिनीभिर्नीराजनं कार्यम् ॥ तस्यमंत्रः-ॐअनाधृष्टापुरस्तादग्नेराधिपत्त्यऽआयुर्म्मेदाऽपुत्रवतीदक्षिण-तऽइन्द्रस्याधिपत्त्येप्रजाम्मेदाऽ।सुषदापश्चाद्देवस्यसवितुराधिपत्त्येचक्षु-र्म्मेदाऽआश्रुतिरुत्तरतोधातुराधिपत्त्येरायस्पोषम्मेदाऽ ॥ विधृतिरुप-रिष्टाद्बृहस्पतेराधिपत्त्यऽओजोमेदाविश्वाभ्योमानाष्ट्राभ्यस्पाहिम-नोरश्वासि ॥ $\frac{१२}{३७}$ ॥ अनेन पुण्याहवाचनेन कर्माङ्गदेवता श्रीमहारुद्रः प्रीयताम् ॥ इति हवनात्मकमहारुद्रे पुण्याहवाचनप्रयोगः ॥

## ॥ अथ मातृकापूजनप्रयोगः ॥

पीठोपरि रक्तं वस्त्रं प्रसार्य तदुपरि गोधूमाक्षतपुञ्जेषु पूगीफलेषु वा सगणाधिपगौर्यादिचतुर्दशमातॄणां दक्षिणोपक्रमाणां उदगपवर्गाणां प्रत्यगुपक्रमाणां प्रागपवर्गाणां वा स्थापनम् ॥ ॐगणानान्त्वा गणपतिᳩ हवामहे प्रियाणान्त्वा प्रियपतिᳩ हवामहे निधीनान्त्वा निधिपतिᳩ हवामहे वसो मम॥ आहमजानि गर्ब्भधमात्वमजासि गर्ब्भधम्॥ २३/१९ ॥ॐगणेशाय नमः गणेशमावाहयामि स्थापयामि । भो गणेश इहागच्छ इह तिष्ठ ॥ ॐआयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः॥ पितरञ्च प्रयन्त्स्वः॥ ३/६ ॥ ॐभूर्भुवः स्वः गौर्यै नमः गौरीमावाहयामि स्थापयामि ॥ भो गौरि इहागच्छ इह तिष्ठ ॥ १ ॥ ॐहिरण्यरूपाऽ उषसो विरोकऽ उभाविन्द्राऽ उदिथः सूर्य्यश्च॥ आरोहतं वरुण मित्र गर्त्तन्ततश्चक्षाथामदितिन्दितिञ्च मित्रोसि वरुणोऽसि॥ १०/१६ ॥ ॐभूर्भुवः स्वः पद्मायै नमः पद्मामावाहयामि स्थापयामि ॥ भो पद्मे इहागच्छ इह तिष्ठ ॥ २ ॥ ॐकुदाचनस्तरीरसि नेन्द्र सश्चसि दाशुषे ॥ उपोपेन्नु मघवन्भूयऽइन्नु ते दानन्देवस्य पृच्यतऽआदित्येभ्यस्त्वा ॥ ३/७ ॥ ॐभूर्भुवः स्वः शच्यै नमः शचीमावाहयामि स्थापयामि ॥ भो शचि इहागच्छ इह तिष्ठ ॥ ३ ॥ ॐमेधाम्मे वरुणो ददातु मेधामग्निः प्रजापतिः ॥ मेधामिन्द्रश्च वायुश्च मेधान्धाता ददातु मे स्वाहा ॥ ३२/१५ ॥ ॐभूर्भुवःस्वः मेधायै नमः मेधामावाहयामि स्था०॥ भो मेधे इहागच्छ इह तिष्ठ ॥ ४ ॥ ॐउपयामगृहीतोऽसि सावित्रोऽसि

---

१ गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता । गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दश ॥ अत्र चतुर्दशपदसमाहारान्मातरो लोकमातर इति सर्वासां विशेषणम् ॥ केचन मातॄः लोकमातॄः अपि आवाहयन्ति यदयुक्तम् एव करणे मण्डपे पञ्चविनायकादिघृतमातृकान्तानां चतुःषष्टिमातॄणां स्थाने षट्षष्टिमातरः भवन्ति वस्तुतस्तु चतुःषष्टिरेव ॥

चन्नोधार्थन्नोधाऽअसि चन्नोमयिधेहि॥ जिन्वंयज्ञञ्जिन्वंयज्ञपतिम्भगाय
देवायत्वासवितृञ्॥ ॥ ॐभूर्भुवः स्वः सावित्र्यैनमः सावित्रीम् आवा-
हयामि स्था०॥ भो सावित्रि इहागच्छ इह तिष्ठ॥५॥ ॐविज्यन्धनुः-
कपर्द्दिनोविशल्योबाणवाँ२उत ॥ अनेशन्नस्यायाऽइषवऽआभुरस्यनिष-
ङ्गधिः॥ ॥ॐभूर्भुवःस्वः विजयायैनमः विजयाम् आवाहयामि स्था०॥
भो विजये इहागच्छ इह तिष्ठ ॥ ६ ॥ ॐयातेरुद्रशिवातनूरघोराऽपाप-
काशिनी ॥ तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥ ॥ ॐ
भूर्भुवःस्वः जयायै नमः जयाम् आवाहयामि स्था०॥ भो जये इहागच्छ
इह तिष्ठ ॥ ७ ॥ ॐदेवानाम्भद्रासुमतिर्ऋजूयतान्देवाना७रातिरभि
नोनिवर्त्तताम् ॥ देवाना७सख्यमुपसेदिमावयन्देवानऽआयुः प्रति
रन्तुजीवसे॥ ॥ॐभूर्भुवःस्वः देवसेनायैनमः देवसेनाम् आवाहयामि
स्थापयामि॥ भो देवसेने इहागच्छ इह तिष्ठ ॥८॥ ॐपितृभ्य-स्वधा
यिभ्य-स्वधानमः-पितामहेभ्य-स्वधायिभ्य-स्वधानमः प्रपिता
महेभ्यः स्वधायिभ्य-स्वधानमः- ॥ अक्षन्पितरोमीमदन्तपितरोतीतृ
पन्तपितरः पितरः शुन्धध्वम् ॥ ॥ ॐभूर्भुवः स्वः स्वधायै नमः
स्वधाम् आवाहयामि स्थापयामि॥भो स्वधे इहा० इहतिष्ठ॥९॥ॐस्वाहा
यज्ञंमनसः स्वाहोरोरन्तरिक्षात्स्वाहाद्यावापृथिवीभ्या७स्वाहावा-
तादारभेस्वाहा॥ ॥ॐभूर्भुवःस्वः स्वाहायै नमः स्वाहाम् आवाहयामि
स्थापयामि॥ भो स्वाहे इहागच्छ इह०॥१०॥ॐधृष्टिरस्यपाग्नेऽअग्नि-
मामादञ्जहिनिष्क्रव्यादंसेधादेवयजंवह॥ ध्रुवमसिपृथिवीन्दृ७हब्रह्मव
नित्वाक्षत्रवनिसजातवन्युपदधामिभ्रातृव्यस्यवधाय ॥ ॥ ॐभूर्भुवः
स्वः धृत्यै नमः धृतिमावाहयामि स्थापयामि॥भोधृते इहा० इह०॥११॥
ॐत्वष्टातुरीपोऽअद्भुतऽइन्द्राग्नीपुष्टिवर्द्धना ॥ द्विपदाच्छन्दऽइन्द्रिय-

पुक्षागौर्न्नैवयोंदधुर्ं ॥ ३/२१ ॥ ॐ भूर्भुवःस्वः पुष्ट्यै नमः पुष्टिमावाहयामि स्थापयामि ॥ भो पुष्टे इहागच्छ इह तिष्ठ ॥१२॥ ॐ बृहस्पते ऽअति यदुर्य्यो ऽअर्हाद्युमद्विभाति क्रतुमज्जनेषु ॥ यद्दीदयच्छवस ऽऋतप्रजात तदस्मासु द्रविणन्धेहि चित्रम् ॥ ३/२६ ॥ ॐ भूर्भुवः स्वः तुष्ट्यै नमः तुष्टिमावाहयामि स्थापयामि ॥ भो तुष्टे इहागच्छ इहतिष्ठ ॥ १३ ॥ ॐ अम्बे ऽअम्बिके ऽम्बालिके न मानयति कश्चन ॥ ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥ २३/१८ ॥ ॐ भूर्भुवःस्वः आत्मनः कुलदेवतायै नमः आत्मनः कुलदेवतामावाहयामि स्थापयामि ॥ भो आत्मनः कुलदेवते इहागच्छ इह तिष्ठ ॥ १४ ॥ अथर्श्यादिसप्तवसोर्धारास्थापनम्—पात्रस्थेन विलीनेन सगुडेन घृतेन मातृणां संनिहितकुड्यलग्नाः दक्षिणाद्युदगपवर्गाः पश्चिमादिप्रागपवर्गाः नातिनीचा न चोच्छ्रिताः सप्त वसोर्द्धाराः क

धारम् ॥

नमोऽस्तु वसुमातृभ्यो घृतमातृभ्य एव च । स्वयज्ञकार्यसिद्ध्यर्थं धारां दास्यामि मातरः ॥ इत्यनेन सप्तधाराः कृत्वा ततः शिष्टाचारात् ऊर्ध्वभागे गुडेनैकीकरणम्—ॐ कामधुक्ष८ ॥ ३/ ॥ श्रीपूर्वसप्तमातृश्च

१ अत्र वसोर्द्धारापूजनपूर्वं केचन वैश्वदेवसङ्कल्पं कुर्वन्ति तदनुपपन्नम् । विशेषवचनादर्शनात् कल्पद्रुमादिप्राचीनप्रमाणग्रन्थेष्वनङ्गीकाराच्च ॥ अपिश्च मण्डपश्चैव मातृणां पूजनं सकृत् । वैश्वदेवं वसोर्द्धारा नान्दीश्राद्धमतः परम् ॥ अग्निपूजनात्पूर्वं वैश्वदेवं विधाय च ॥ इत्यत्र मूलं मृग्यम् ॥ अन्यत्र स्वाहाकारमहारुद्रवास्तुशान्त्यादिप्रयोगेषु अग्निपूजनस्याप्यभाव ॥ वैश्वदेवप्रायश्चित्तसङ्कल्प आचार एव प्रमाणम् ॥ कल्पद्रुमादिग्रन्थेषु "निर्णेजनान्तपञ्चमहायज्ञान्तं कृतनित्यक्रियो यजमानः स्वासने उपविश्य" इत्युक्तत्वात् न कर्मणि कर्मान्तरप्रवेश इत्युक्त्वा चास्मिन्नैमित्तिककर्मणि न नित्यकर्मरूपवैश्वदेवसङ्कल्पावसरः अतो नास्माभिरङ्गीकृत इति दिक् ॥

घृतमातृस्तथैव च । गुडेन मेलयिष्यामि ताः सर्वार्थप्रसाधिकाः ॥
इत्यनेनैकीकृत्य कुङ्कुमादिना बिन्दुकरणेनालङ्कृत्य प्रतिधारायामेकैक-
देवतामावाहयेत्—ॐ मनसः काममाकूतिं वाचः सत्यमशीय ॥ पशूनाᳪं
रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा ॥ ३९/४ ॥ ॐ भूर्भुवः स्वः श्रियै
नमः श्रियम् आ० ॥ भो श्रीः इ० इ० ॥ ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे
पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुं म इषाण सर्व-
लोकं म इषाण ॥ ३१/२२ ॥ ॐ भू० लक्ष्म्यै नमः लक्ष्मीम् आ० ॥ भो लक्ष्मीः
इ० इह तिष्ठ ॥ ॐ इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहा ॥ उप-
सृजन्धरुणं मात्रे धरुणो मातरं धयन् ॥ रायस्पोषमस्मासु दीधरत्स्वाहा
॥ ८/५१ ॥ ॐ भू० धृत्यै नमः धृतिम् आ० ॥ भो धृते इ० इ० ॥ ॐ मेधां मे
वरुणो ददातु मेधामग्निः प्रजापतिः ॥ मेधामिन्द्रश्च वायुश्च मेधां धाता
ददातु मे स्वाहा ॥ ३२/१५ ॥ ॐ भू० मेधायै नमः मेधाम् आ० । भो मेधे इ० इ० ॥
ॐ देवी जोष्ट्री सरस्वत्यश्विनेन्द्रमवर्द्धयन् ॥ श्रोत्रं न कर्णयोर्यशो जोष्ट्री-
भ्यां दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥ २१/५३ ॥ ॐ भू० पुष्ट्यै नमः
पुष्टिम् आ० । भो पुष्टे इहागच्छ इ० ॥ ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति
दक्षिणाम् ॥ दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥ १९/३० ॥ ॐ भू०
श्रद्धायै नमः श्रद्धाम् आ० । भो श्रद्धे इ० इ० ॥ ॐ देवीस्तिस्रस्तिस्रो देवीः
पतिमिन्द्रमवर्द्धयन् ॥ अस्पृक्षद्भारती दिवᳪं रुद्रैर्यज्ञᳪं सरस्वतीडा वसुमती
गृहान् वसुवने वसुधेयस्य व्यन्तु यज ॥ २१/१९ ॥ ॐ भू० सरस्वत्यै नमः सरस्वतीम्
आ० । भो सरस्वति इ० ॥ ॐ मनो जूति० ॥ ॐ भूर्भुवः स्वः सगणेशगौर्याद्यावा-
हितमातरः वसोर्द्धारासहिताः सुप्रतिष्ठिताः वरदाः भवत ॥ ॐ भूर्भु० स-
गणेशगौर्याद्यावाहितमातृभ्यः वसोर्द्धारासहिताभ्यो नमः इत्यनेन षोड-
शोपचारैः पूजयेत् ॥ प्रार्थना—गणेशपूर्विका देव्यो गौर्यादिप्रमुखाः स्मृताः ॥

प्रसीदन्तु हि कल्याण्यो निर्विघ्नं कुरुताध्वरम्॥ श्र्यादिदेव्यः सदा पूज्याः सप्त वै घृतमातरः। कल्याणानि प्रयच्छन्तु सकुटुम्बस्य मे सदा॥ यदङ्गत्वेन भो देव्यः पूजिता विधिमार्गतः। कुर्वन्तु कार्यमखिलं निर्विघ्नेन क्रतूद्भवम्॥ इति मातृकापूजनप्रयोगः॥

॥ अथायुष्यमन्त्रजपः॥

आयुष्यं वर्चस्यमिति त्र्यृचस्य दक्ष ऋषिः उष्णिक्शक्करीत्रिष्टुप्छन्दांसि हिरण्यं देवतम् आयुष्याभिवृद्ध्यर्थे जपे विनियोगः—ॐ आयुष्यं वर्चस्यꣳ रायस्पोषमौद्भिदम्॥ इदꣳ हिरण्यं वर्चस्वज्जैत्रायाविशतादु माम्॥५०॥ न तद्रक्षाꣳसि न पिशाचास्तरन्ति देवानामोजः प्रथमजꣳ ह्येतत्॥ यो बिभर्ति दाक्षायणꣳ हिरण्यꣳ स देवेषु कृणुते दीर्घमायुꣳ स मनुष्येषु कृणुते दीर्घमायुः॥५१॥ यदाबध्नन्दाक्षायणा हिरण्यꣳ शतानीकाय सुमनस्यमानाः॥ तन्म आबध्नामि शतशारदायायुष्माञ्जरदष्टिर्यथासम्॥५२॥

## अथ साङ्कल्पिकविधिना नान्दीश्राद्धप्रयोगः॥

अथ यज्ञोपवीती प्राङ्मुखो दक्षिणं जानु पातयित्वा पात्रे उदङ्मुखान्

---

१ हेमाद्रौ षट्त्रिंशन्मते—अनग्निको यदा विप्र उच्छिन्नाग्निरथापि वा। तदा वृद्धिषु सर्वासु साङ्कल्पं श्राद्धमाचरेत्॥ हेमाद्रौ सवर्तः—समग्रं यस्तु शक्नोति कर्तुं नैवेह पार्वणम्। अपि साङ्कल्पविधिना काले तस्य विधीयते॥ स्मृतिरत्नावल्याम्—वृद्ध्यनन्तरभाविनिवृद्धावपि पिण्डदानस्य प्रतिषिद्धत्वात्तादृशस्थले पिण्डनिषेधान्यथानुपपत्त्याभियुक्तैः सङ्कल्पश्राद्धानुष्ठानस्यैवौचित्यस्वीकारः। इत्यादिप्रमाणादग्निकोच्छिन्नाग्निकर्तृकासु सर्वासु वृद्धिषु सङ्कल्पश्राद्धस्यैव विहितत्वात्साङ्कल्पिकाभ्युदयिकश्राद्धप्रयोगोऽत्रास्माभिः प्रयोजितः। साङ्कल्पिकश्राद्धस्वरूपमाह हेमाद्रौ संवर्तः—पानभोज्यस्य चान्नस्य त्यागः सङ्कल्प उच्यते। तत्प्रयुक्तो विधिर्यस्तु यत्नेन व्यपदिश्यते॥ तावन्मात्रेण सम्बद्धं श्राद्धं साङ्कल्पमुच्यते॥ पिण्डहीनश्राद्धशब्दः सङ्कल्पश्राद्धपर्यायः॥ साङ्कल्पिके समन्त्रकावाहनार्घ्याग्नौकरणपिण्ड-

प्राक्संस्थान् स्वयम् उदङ्मुखश्चेत्प्राङ्मुखान् उदक्संस्थान्वैश्वदेवस्थाने द्वौ

---

दानीविकिराक्षय्यस्वधावाचनप्रश्नेष्वेतत्सप्तक वर्ज्यम् ॥ २ गौर्यादिमातृकापूजन नान्दीश्राद्धाङ्ग यत्र नान्दीश्राद्ध न क्रियते तत्रमातृकापूजनमपिनकार्यम् ॥ अस्य आभ्युदयिकश्राद्धमित्यपर पर्याय. ॥ अस्यार्थ –पुत्रजन्मविवाहादिरूपोऽभ्युदयस्तस्मिन्सति क्रियमाण श्राद्धम् आभ्युदयिकशब्देनोच्यते ॥ पूर्वाह्णे आभ्युदयिक विधेयम् ॥ अत्र पूर्वाह्णस्त्रेधा. विभक्तस्याह्न प्रथमोभाग ॥पूर्वाह्णोवैदेवाना माध्यन्दिनोमनुष्याणामपराह्ण पितॄणाम्॥ पुनर्जन्मादौ तु तत्काल एव न तत्र पूर्वाह्णनियम ॥ यथा–नियतेपुनिमित्तपुप्रातर्वृद्धिनिमित्तकम् । सेषाणनियतत्वे तु तदानन्तर्यमिष्यते ॥ नान्दीश्राद्ध निविषम्–विवाहादिनित्यनैमित्तिक पुत्रजन्माद्यनियतनिमित्तम् अग्न्याधानादिनिमित्तम् चेति॥तत्र विवाहादिनिमित्त प्रात कार्यं तदाहशातातप –प्रातर्वृद्धिनिमित्तकम् ॥ अत्रप्रात शब्द सार्द्धप्रहरात्मककालवचन ॥ तदाहगार्ग्य –रश्मिप्रत्यक्षमितेभानौप्रथम प्रहर स्मृत । सएवसार्द्धसंयुक्त प्रातरित्यभिधीयते ॥ अग्न्याधाननिमित्त त्वपराह्णे कार्यंतदाहगालव –पार्वणचापराह्णेतु वृद्धिश्राद्ध तथामिकम्॥ पुनर्जन्मादौ निमित्तानन्तरमेव तत्कार्यम् ॥ ३ अत्रश्राद्धे नापसव्यम्–पितृणा रूपमास्थायदेवा अन्न समश्नुते । तस्मात्सव्येन दातव्य वृद्धिश्राद्धे तु नित्यश ॥ हेमाद्रौ शातातप –सव्येनचोपवीतिनऋजुदर्भैश्चधीमता॥ कर्तव्य चाभ्युदयिक श्राद्धमभ्युदयार्थिना॥ यथैवोपचरेद्देवास्तथावृद्धौपितृनपि ॥ ४ छान्दोगपरिशिष्टे कात्यायनोऽपि–दक्षिणपातयेज्जानुदेवान्परिचरन्सदा ॥ पातयेदितरज्जानुपितृन्परिचरन्नपि॥ निपातोनहिसव्यस्य जानुनो विद्यते क्वचित् । सदापरिचरेद्भक्त्या पितृनप्यत्र देववत् ॥

१ अत्र प्राङ्मुखस्य उदङ्मुखो दद्यादित्युदङ्मुखतानियम ॥उदङ्मुखेभ्यो वा प्राङ्मुख इत्यनेन प्राङ्मुखत्वोदङ्मुखत्वयोर्विकल्पउक्त ॥ अतएव हेमाद्रौ मार्कण्डेयपुराणे–उदङ्मुख प्राङ्मुखो वा यजमान समाहित । वृद्धिश्राद्ध प्रकुर्वीत नान्यवक्त्र कदाचन॥ २ अत्र देवधर्मत्वेन सर्वेऽपिप्राङ्मुखाविप्रा ॥ हेमाद्रौभविष्यपुराण–सर्वानेवतुतान्विप्रान्प्राङ्मुखानुपवेशयेत्॥इतिहेमाद्रौ छागलेयाक्तेर्दैवेपित्र्ये च येविप्रास्तेसर्वेपि प्राङ्मुखा उपवेशनीया ॥ ३ युग्मानाशयेदत्र इतिकात्यायनसूत्राद्वैश्वदेवार्थेपित्रार्थेमातामहार्थे च द्वौ द्वौ विप्रौ इत्युक्त रुद्रकल्पद्रुमे ॥ छान्दोगपरिशिष्टे–प्रातरामन्त्रितान्विप्रान्युग्मानुभयतस्तथा ॥ उभयत. दैवे पित्र्ये च ॥

सपत्नीकपितृपार्वणस्थानेद्वौ सपत्नीकमातामहपार्वणस्थानेद्वौचएवंपट्-कुशवटूंन्दूर्वाकाण्डानिवांसंस्थाप्यक्षणंदानम्।। यवान्गृहीत्वा–ॐसत्य-वसुसंज्ञकानां विश्वेषां देवानां नान्दीमुखानाम् अधकर्तव्यसग्रहमख-महारुद्रयागाङ्गसाङ्कलिपकनान्दीश्राद्धे भवद्भ्यां क्षणः क्रियताम्।। इति यवान्निक्षिप्य।। ॐतथा।। प्राप्नुतां भवन्तौ।।प्राप्नवाव।।यवान्गृहीत्वा–

१ न हि कात्यायनसूत्रादौ कालत्रये मात्रादिश्राद्धत्रयविधिरस्ति ।। तस्मात्ब्राह्मणनेयिभिरेक-स्मिन्पूर्वाह्णे एवैकप्रयोगं पार्वणद्वयात्मकमाभ्युदयिकं श्राद्धमनुष्ठेयम् ।। छान्दोगपरिशिष्टे कात्यायनः–न योपिद्भ्यःपृथग्दद्यादवसानदिनादृते । स्वभर्तृपिण्डदानाच्च तृप्तिरासां यतः स्मृता ।। तत्रैव–आयुष्याणिचशान्त्यर्थंजप्त्वातत्रसमाहितः । पड्भ्यःपितृभ्यस्तदनुभक्त्या श्राद्धमुपक्रमेत्।। तस्मात्पित्रादीनां पण्णामेवेह दैवतात्वम्।।यत् मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम् । ततो मातामहानां च वृद्धौ श्राद्धत्रयंस्मृतम्।। इत्यादीनिवचनानितानिशाखा-न्तरविषयाणि ।। २ कुशवटूनांदूर्वाकाण्डानांवामुख्यकल्पना अभेण कार्या इति श्राद्धखण्डे हेमाद्रौढोंढूमिश्रपद्धतौच ।। दर्भवटुनिर्माणेचनदर्भसंख्यानियमः ।। तदुक्तंछन्दोगपरिशिष्टे कात्यायनेन–यवावास्तुनिमुष्ट्याचस्तम्बेदर्भवटीतथा । दर्भसंख्यानविहिताविष्टरास्तरणेषु च ।। दर्भवटे इत्यपिपाठः ।। परिशिष्टेतुब्रह्मविष्टरादौदर्भसंख्याविहितास्ति ।। पञ्चाशता भवेद्ब्रह्मा तदर्धेन तु विष्टरः ।। अतश्च दर्भसंख्यायाः समवासंभवाभ्यां व्यवस्थितोविकल्प इति नारायणवृत्तौ.।। ३ ब्रह्माण्डपुराणे—कुशस्थाने च दूर्वाः स्युर्मङ्गलस्य च वृद्धये ।। स्मृतिकौस्तुभे—मङ्गलात्मकविवाहाद्यारम्भे क्रियमाणवृद्धिश्राद्धे कुशस्थाने दूर्वाविधिः ।। यज्ञाद्यारम्भे तु क्रियमाणे अमूलकुशदर्भविधिः ।। इतिदूर्वायाःकुशदर्भैर्विकल्पः ।। ४ क्षणो नाम व्यापाररहितास्थितिः ।। क्षणशब्दो निर्व्यापारस्थित्यर्थोऽस्ति ।। क्षण इति प्रथमान्तं कर्म ।। भवद्भ्यामिति तृतीयान्तः कर्ता ।। क्रियतामिति कर्मणिप्रत्ययः ।। ५ हेमाद्रौ–इष्टिश्राद्धेक्रतुदक्षौ नान्दीसत्यवसूतथा।। अत्र सत्यवस्वोःसमुदितयोरेव अग्नीषोमवद्देवतात्वं नदेवयोःसमुच्चयः।। अतो न ब्राह्मणद्वये प्रत्येकमेकैकस्यप्रयोग इतिस्पष्टम् ।। ६ निर्णयसिन्धौ नान्दीश्राद्धप्रकरणे—दैवेक्षणः क्रियताम् इति द्वौ युगपच्चिमन्त्र्य ॐतथेति विप्राभ्यां युगपदुक्ते प्राप्नुतां भवन्तौ प्राप्नवाव इति वैश्वदेववत् पित्र्ये च द्विवचनान्तेन विप्रद्वये प्रयोगं कुर्यात् ।। अत्र श्राद्धे समन्त्रस्य आवाहनस्य निषेधः न तु आवाहनस्वरूपस्य ।।

गोत्राणां नान्दीमुखानां पितृपितामहप्रपितामहानांसपत्नीकानाम् अद्य-कर्तव्यसग्रहमखमहारुद्रयागाङ्गसाङ्कल्पिकनान्दीश्राद्धे भवद्भ्यां क्षणः क्रियताम्॥इति यवान्निक्षिप्य॥ ॐतथा॥ प्राप्नुतां भवन्तौ॥ प्राप्नवाव॥ यवान्गृहीत्वा—द्वितीयगोत्राणां नान्दीमुखानां मातामहप्रमातामहवृद्ध-प्रमातामहानां सपत्नीकानाम् अद्यकर्तव्यसग्रहमखमहारुद्रयागाङ्ग-साङ्कल्पिकनान्दीश्राद्धे भवद्भ्यां क्षणः क्रियताम् । इति यवान्निक्षिप्य॥ ॐतथा॥ प्राप्नुतां भवन्तौ॥ प्राप्नवाव॥ पाद्यदानम्—सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः॥ गोत्राः नान्दीमुखाः पितृपितामहप्रपितामहाः सपत्नीकाः इदं वःपाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः॥ द्वितीयगोत्राः नान्दीमुखाः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः॥ सङ्कल्पः—अद्यपूर्वोच्चरित०शुभपुण्यतिथौ साङ्कल्पिकविधिना नान्दीश्राद्धं करिष्ये॥ आसनदानम्—सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः इदं वः आसनम्॥ गोत्राः नान्दीमुखाः पितृपितामहप्रपितामहाः सपत्नीकाः इदं वः आसनम्॥ द्वितीयगोत्राः नान्दीमुखाः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः इदं वः आसनम्॥ गन्धादिदानम्—सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः इदं वो गन्धाद्यर्चनं यथाविभागं स्वाहा नमः॥ गोत्राः नान्दीमुखाः पितृपितामहप्रपितामहाः सपत्नीकाः इदं वो गन्धाद्यर्चनं यथाविभागं स्वाहा नमः॥द्वितीयगोत्राः नान्दीमुखाः मातामहप्रमातामहवृद्धप्रमाता-महाः सपत्नीकाः इदं वो गन्धाद्यर्चनं यथाविभागं स्वाहा नमः॥ भोजननिष्क्रयद्रव्यदानम्—सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः युग्मब्राह्मणभोजनपर्याप्तामनिष्क्रयीभूतंकिञ्चिद्धिरण्यंदत्तम् अमृतरूपेण वःस्वाहानमः॥ गोत्राः नान्दीमुखाःपितृपितामहप्रपितामहाःसपत्नीकाः

युग्मब्राह्मणभोजनपर्याप्तामनिष्क्रयीभूतं किञ्चिद्धिरण्यं दत्तम् अमृतरूपेण वः स्वाहा नमः । द्वितीयगोत्राः नान्दीमुखाः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः युग्मब्राह्मणभोजनपर्याप्तामनिष्क्रयीभूतं किञ्चिद्धिरण्यं दत्तम् अमृतरूपेण वः स्वाहा नमः ॥ सक्षीरयवमुदकदानम्–सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः प्रीयन्ताम्॥ गोत्राः नान्दीमुखाः पितृपितामहप्रपितामहाः सपत्नीकाः प्रीयन्ताम्॥द्वितीयगोत्राः नान्दीमुखाः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः प्रीयन्ताम् ॥ आशीर्ग्रहणम्—अघोराः पितरः सन्तु ॥ सन्त्वघोराः पितरः ॥ गोत्रं नोऽभिवर्द्धताम् ॥ अभिवर्द्धतां वो गोत्रम् ॥ दातारो नोऽभिवर्द्धन्ताम्॥ अभिवर्द्धन्तां वो दातारः॥वेदाश्च नोऽभिवर्द्धन्ताम्॥ अभिवर्द्धन्तां वो वेदाः ॥ सन्ततिर्नोऽभिवर्द्धताम्॥ अभिवर्द्धतां वः सन्ततिः ॥ श्रद्धा च नो माव्यगमत्॥ माव्यगमद्वः श्रद्धा ॥ बहुदेयं च नोऽस्तु ॥ अस्तु वो बहुदेयम् ॥ अन्नं च नो बहु भवेत् ॥ भवतु वो बह्वन्नम्॥ अतिथींश्च लभेमहि ॥ अतिथींश्च लभध्वम्॥ याचितारश्च नः सन्तु ॥ सन्तु वो याचितारः ॥ एताः आशिषः सत्याः सन्तु ॥ सन्त्वेताः सत्या आशिषः॥ दक्षिणादानम्-सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूता दक्षिणा दातुमहमुत्सृजे ॥ गोत्रेभ्यः नान्दीमुखेभ्यः पितृपितामहप्रपितामहेभ्यः सपत्नीकेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूता दक्षिणा दातुमहमुत्सृजे ॥ द्वितीयगोत्रेभ्यः नान्दीमुखेभ्यः मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे॥ नान्दीश्राद्धं सम्पन्नम् । सुसंपन्नम् ॥ विसर्जनम्–ॐवाजे-

वाजेवतश्चाजिलोनोधनैंपुविप्राऽअमृताऽऋतज्ञाः८॥ अस्यमद्ध्वं-पिवत-मादयंद्ध्वन्तृप्तायातपथिभिंर्देवयानैं८॥ ५९ ॥ अनुव्रजनम्—ॐ आ मा वाजंस्य प्रसवो जंगम्म्यादेमे द्यावांपृथिवीविश्वरूंपे। आमांगन्तांम्पितरां-मातराचामासोमोंऽअमृतत्त्वेन गम्म्यात् ॥ ६० ॥ हस्ते जलमादाय—मयाचरितेऽस्मिन्साङ्कल्पिकनान्दीश्राद्धे न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनाच्छ्रीनान्दीमुखप्रसादाच्च सर्वः परिपूर्णोऽस्तु ॥ अस्तु परिपूर्णः॥ अनेन साङ्कल्पिकविधिना नान्दीश्राद्धेन नान्दीमुख-देवताः प्रीयन्ताम् ॥ इति साङ्कल्पिकविधिना नान्दीश्राद्धप्रयोगः ॥

॥ अथ आचार्यादृत्विग्वरणम् ॥

एकस्मिन्ताम्रपात्रे शरावे वा आपः क्षीरं कुशाग्राणि दधि चन्दनम् अक्षताः दूर्वा सर्षपाश्चेत्यष्टद्रव्याणि निक्षिप्य आचारात्पूगीफलं च निक्षिप्य पात्रान्तरेण पिधाय रक्तसूत्रेण संवेष्ट्य तत् साचार्यविप्राः ॐ पुण्याहमितित्रिर्वदन्तः यजमानहस्ते दद्युः पत्नीहस्ते कलशं च दद्युः॥ सपत्नीको यजमानः स्वासनादुत्थाय ब्राह्मणान्प्रार्थयेत्—पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः । अनुगृह्णन्तु मामद्य महारुद्राख्य-कर्मणि॥ स्वस्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः। श्रोत्रियाः सत्य-वाचश्च रुद्रध्यानरताः सदा ॥ यद्वाक्यामृतसंसिक्ता वृद्धिं यान्ति नर-द्रुमाः। अङ्गीकुर्वन्तु मत्कर्म कल्पद्रुमसमाशिषः॥ यथोक्तनियमैर्युक्ता मन्त्रार्थे स्थिरबुद्धयः । यत्कृपावलोकनात्सर्वा ऋद्धयो वृद्धिमाप्नुयुः ॥

१ केचन ब्रह्मणोवरणपूर्वक आचार्यादीना वरणमाचरन्ति तदयुक्तम्॥ वसिष्ठेन—यजमान. शुचि. स्नात· श्रद्धायुक्तो जितेन्द्रिय ॥ पाद्यार्घ्यवस्त्राद्यैराचार्यादीन्समर्च-येत् ॥ इत्युक्तत्वात् आचार्यपूर्वकमेव ब्रह्माद्यृत्विजा वरणम् ॥ पाद्यार्घ्यवस्त्राद्यैरित्यु-क्तत्वात् पाद्यार्घ्यकरणमप्यावश्यकम् ॥ २ आप क्षीर कुशाग्राणि दधि चन्दनमक्षता. । दूर्वा सिद्धार्थकाश्चेति ह्यष्टाङ्गो ह्यर्घ उच्यते ॥ अथवा—दधि दुग्ध यवा दूर्वा गन्धाः सिद्धार्थसयुता । जलपुष्पसमायुक्ताः पाद्यार्घौ होमिरष्टभि. ॥

आयुरारोग्यपुत्रादि सुखश्रीप्राप्तये मम। आपद्विघ्नविनाशाय शत्रुबुद्धि-क्षयाय च॥ आदित्याद्या ग्रहाः सर्वे राहुकेतुपुरःसराः। ग्रहदेवाधिदेवैश्च नक्षत्राणां च दैवतैः॥ इन्द्रादिभिश्च दिक्पालैर्ब्रह्मविष्णुमहेश्वरैः। वास्तुदुर्गागणेशैश्च क्षेत्रपालेन संयुतैः॥ भौमान्तरिक्षदेवैश्च कुलदेव्या च मातृभिः। चतुर्भिश्चैव वेदैश्च रुद्रेण सहितास्तथा॥ स्वागतं वो द्विजश्रेष्ठा मदनुग्रहकारकाः। अयमर्घ इदं पाद्यं भवद्भिः प्रतिगृह्यताम्॥ चरणक्षालनादेवास्तुष्यन्ति शुद्धमानसाः। तज्जलेन च संसिक्ताः पूर्णाः कामा भवन्तु मे॥ इमं वोऽर्घं प्रयच्छामि गृह्णन्तु प्रीतमानसाः। पावयन्तु च मां नित्यं पूरयन्तु मनोरथान्॥ अन्यः कश्चिद् ब्राह्मणः वदति–अर्घोऽर्घोऽर्घः। यजमानो वदेत्–प्रतिगृह्यताम्। इत्युक्त्वा ब्राह्मणहस्ते तदग्रे वा अर्घं स्थापयेत्॥ ब्राह्मणा वदेयुः–प्रतिगृह्णीमः॥ यजमानः हस्ते पूगीफलं गृहीत्वा विप्रस्य दक्षिणजानु आलभ्य वदेत्–अमुकप्रवरान्वितः अमुकगोत्रः शुक्लयजुर्वेदान्तर्गतवाजिमाध्यन्दिनीयशाखाध्यायी अमुकशर्मा यजमानोऽहम् अमुकप्रवरान्वितम् अमुकगोत्रं शुक्लयजुर्वेदान्तर्गतवाजिमाध्यन्दिनीयशाखाध्यायिनम् अमुकशर्माणं ब्राह्मणम् अस्मिन्सग्रहमखमहारुद्राख्ये कर्मणि आचार्यत्वेन त्वामहं वृणे इत्युक्त्वा पूगीफलं दद्यात्॥ यजमानेन दत्तं पूगीफलं गृहीत्वा विप्रो वदेत्–ॐ वृतोऽस्मि॥ ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्॥ दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥६६॥ वृताय एतत्ते पाद्यं पादावनेजनं पादप्रक्षालनम् एष तेऽर्घः॥ गन्धाक्षतपुष्पादिभिः सम्पूज्य हस्ते रक्त-

त्रम्॥५३४॥ यजमानो वदेत्–आवाहयाम्यहं विप्रमाचार्यं यज्ञकारिणम्। राणन्यायमीमांसाधर्मशास्त्रार्थपारगम्॥ आचार्यस्तु यथा स्वर्गे

शक्रादीनां बृहस्पतिः। महारुद्राख्ययज्ञेऽस्मिन् आचार्यस्त्वं तथा भव॥ यावत्कर्मसमाप्येत तावत्त्वम् आचार्यो भव॥ आचार्यो वदेत्॥ ॐबृहस्पतेऽअतियदर्य्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणन्धेहिचित्रम्॥ ब्रह्मवरणम्—यजमानः पूगीफलं गृहीत्वा विप्रस्य दक्षिणजानुआलभ्य वदेत्—अमुकप्रवरान्वितः अमुकगोत्रः शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायी अमुकशर्मा यजमानोऽहम् अमुकप्रवरान्वितम् अमुकगोत्रं शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायिनम् अमुकशर्माणं ब्राह्मणम् अस्मिन्सग्रहमखमहारुद्राख्ये कर्मणि ब्रह्मत्वेन त्वामहं वृणे इत्युक्त्वा पूगीफलंदद्यात्॥पूगीफलं गृहीत्वा विप्रोवदेत्—ॐवृतोऽस्मि॥ॐव्रतेनं०॥ वृताय एतत्ते पाद्यं पादावनेजनं पादप्रक्षालनम् एष तेऽर्घः॥ गन्धाक्षतपुष्पादिभिः सम्पूज्य हस्ते कङ्कणबन्धनम्—ॐयदाबध्नन्दाक्षायणा०॥ यजमानो वदेत्—यथा चतुर्मुखो ब्रह्मा सर्वलोकपितामहः। महारुद्राख्यज्ञेऽस्मिन्ब्रह्मा भव द्विजोत्तम ॥ यावत्कर्म समाप्येत तावत्त्वं ब्रह्मा भव॥ भवामि॥ ॐब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमत?सुरुचो वेनऽआवः ॥ सबुध्न्या्ऽउपमाऽअस्य विष्ठा?सतश्चयोनिमसतश्चविवः॥ गाणपत्यवरणम्—यजमानः पूगीफलं गृहीत्वा विप्रस्य दक्षिणजानु आलभ्य वदेत्—अमुकप्रवरान्वितः अमुकगोत्रः शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायी अमुकशर्मा यजमानोऽहम् अमुकप्रवरान्वितम् अमुकगोत्रं शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायिनम् अमुकशर्माणं ब्राह्मणम् अस्मिन्सग्रहमखमहारुद्राख्ये कर्मणि गाणपत्यत्वेन त्वामहं वृणे इत्युक्त्वा पूगीफलं दद्यात् ॥ पूगीफलं गृहीत्वा विप्रो वदेत्—ॐवृतोस्मि॥ ॐव्रतेनं०॥ वृताय एतत्ते पाद्यं पादावनेजनं पाद-

प्रक्षालनम् एष तेऽर्घः ॥ गन्धाक्षतपुष्पादिभिः सम्पूज्य हस्ते कङ्कणबन्धनम्—ॐ यदाबध्नन्दाक्षायणा०॥ यजमानो वदेत्-वाञ्छितार्थफलावाप्त्यै पूजितोऽसि सुरासुरैः। निर्विघ्नक्रतुसंसिद्ध्यै त्वामहं गणपं वृणे॥ ॐ गणानान्त्वा०॥ सदस्यवरणम्—यजमानः पूगीफलं गृहीत्वा विप्रस्य दक्षिणजानुआलभ्य वदेत्—अमुकप्रवरान्वितः अमुकगोत्रः शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायी अमुकशर्मा यजमानोऽहम् अमुकप्रवरान्वितम् अमुकगोत्रं शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायिनम् अमुकशर्माणं ब्राह्मणम् अस्मिन्सग्रहमखमहारुद्राख्ये कर्मणि सदस्यत्वेन त्वामहं वृणे इत्युक्त्वा पूगीफलं दद्यात् ॥ पूगीफलं गृहीत्वा विप्रो वदेत्—ॐ वृतोऽस्मि॥ ॐ व्रतेन०॥ वृताय एतत्ते पाद्यं पादावनेजनं पादप्रक्षालनम् एष तेऽर्घः॥ गन्धाक्षतपुष्पादिभिः सम्पूज्य हस्ते कङ्कणबन्धनम्—ॐ यदाबध्नन्दाक्षायणा०॥ यजमानो वदेत्—कर्मणामुपदेष्टारं सर्वकर्मविदुत्तमम्। कर्मिणं वेदतत्त्वज्ञं सदस्यं त्वामहं वृणे॥ त्वन्नो गुरुः पिता माता त्वं प्रभुस्त्वं परायणः। आपद्विमोक्षणार्थाय सदस्यो भव मे मखे ॥ ॐ सदसस्पतिमद्भुतम्प्रियमिन्द्रस्य काम्यम्। सनिम्मेधामयासिषꣳ स्वाहा॥१३॥ उपद्रष्टृवरणम्—यजमानः पूगीफलं गृहीत्वा विप्रस्य दक्षिणजानुआलभ्य वदेत्—अमुकप्रवरान्वितः अमुकगोत्रः शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायी अमुकशर्मा यजमानोऽहम् अमुकप्रवरान्वितम् अमुकगोत्रंशुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायिनम् अमुकशर्माणं ब्राह्मणम् अस्मिन्सग्रहमखमहारुद्राख्ये कर्मणि उपद्रष्टृत्वेन त्वामहं वृणे इत्युक्त्वा पूगीफलं दद्यात् ॥ पूगीफलं गृहीत्वा विप्रो वदेत्—ॐ वृतोऽस्मि ॥ ॐ व्रतेन० ॥ वृताय एतत्ते पाद्यं पादावनेजनं पादप्रक्षालनम् एष तेऽर्घः॥ गन्धाक्षतपुष्पादिभिः सम्पूज्य हस्ते कङ्कणबन्धनम्—ॐ यदाबध्नन्दाक्षायणा० ॥

यजमानो वदेत्—भगवन्सर्वकर्मज्ञ सर्वधर्मभृतां वर । महारुद्राख्य-यज्ञेऽस्मिन्नुपद्रष्टा भव द्विज ॥ ततः अष्टौ द्वारपालान्वृणुयात् ॥ यजमानः पूगीफलं गृहीत्वा ऋग्वेदिविप्रस्य दक्षिणजानुआलभ्य वदेत्—अमुकप्रवरान्वितः अमुकगोत्रः शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीय-शाखाध्यायी अमुकशर्मा यजमानोऽहम् अमुकप्रवरान्वितम् अमुक-गोत्रम् ऋग्वेदान्तर्गतामुकशाखाध्यायिनम् अमुकशर्माणं ब्राह्मणम् अस्मिन्सग्रहमखमहारुद्राख्ये कर्मणि पूर्वद्वारे ऋग्वेदसूक्तजपार्थं त्वामहं वृणे इत्युक्त्वा पूगीफलं दद्यात् ॥ पूगीफलं गृहीत्वा विप्रो वदेत्—ॐवृतोऽस्मि ॥ ॐव्रतेनं० ॥ वृताय एतत्ते पाद्यं० ॥ एष तेऽर्घः ॥ पूजनम्—अग्निमीळे इत्यस्य मधुच्छन्दा ऋषिः गायत्रीछन्दः अग्नि-र्देवता ऋग्वेदिद्वारपालपूजने विनियोगः—ॐअग्निमीळेपुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ इत्यनेन गन्धादिभिः सम्पूज्य कङ्कणबन्धनम्—ॐयदाबध्न०॥यजमानो वदेत्—ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः। अत्रिगोत्रस्तु विप्रेन्द्र द्वारपालो मखे भव॥ एवम् ऋग्वेदिनं द्वितीयं द्वारपालं वृत्वा ततः दक्षिणद्वारे यजुर्वेदसूक्तजपार्थं द्वौ यजुर्वेदिनौ वृणुयात्॥ यजमानः पूगीफलं गृहीत्वा यजुर्वेदिविप्रस्य दक्षिणजानुआलभ्य वदेत्—अमुकप्रवरान्वितः अमुकगोत्रः शुक्लयजु-र्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायी अमुकशर्मा यजमानोऽहम् अमुकप्रवरान्वितम् अमुकगोत्र शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीय-शाखाध्यायिनम् अमुकशर्माणं ब्राह्मणम् अस्मिन्सग्रहमखमहारु-द्राख्ये कर्मणि दक्षिणद्वारे यजुर्वेदसूक्तजपार्थं त्वामहं वृणे इत्युक्त्वा पूगीफलं दद्यात् ॥ पूगीफलं गृहीत्वा विप्रो वदेत्—ॐवृतोऽस्मि ॥ ॐव्रतेनं०॥ वृताय एतत्ते पाद्यं पादावनेजनं पाद० एष तेऽर्घः ॥ पूज-नम्—इषेत्वोर्जे इत्यस्य परमेष्ठीऋषिः स्वराड्बृहतीब्राह्म्युष्णिक्छन्दासि

प्रजापतिर्देवता यजुर्वेदिद्वारपालपूजने विनियोगः—ॐइषेत्त्वोर्ज्जेत्त्वा-
ग्वायवस्त्थदेवोवः सविताप्प्रार्प्पयतुश्श्रेष्ठतमायकर्म्मणऽआप्प्यायद्ध्वम-
घ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽईशतमाघशᳬ-
सोद्धुवाऽअस्मिन्गोपतौस्यातबह्वीर्य्यजमानस्यपशून्पाहि॥१॥इत्यनेन
गन्धादिभिः सम्पूज्य कङ्कणबन्धनम्—ॐयदाबध्न०॥यजमानो वदेत्—
कातराक्षो यजुर्वेदस्त्रैष्टुभो विष्णुदैवतः। काश्यपेयस्तु विप्रेन्द्र द्वारपालो
मखे भव॥ एवं यजुर्वेदिनं द्वितीयं द्वारपालं वृत्वा ततः पश्चिमद्वारे साम-
वेदसूक्तजपार्थं द्वौ सामवेदिनौ वृणुयात्॥ यजमानः पूगीफलं गृहीत्वा
सामवेदिविप्रस्य दक्षिणजानु आलभ्य वदेत्—अमुकप्रवरान्वितः अमुक-
गोत्रः शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायी अमुकशर्मा
यजमानोऽहम् अमुकप्रवरान्वितम् अमुकगोत्रं सामवेदान्तर्गतामुक-
शाखाध्यायिनम् अमुकशर्माणं ब्राह्मणम् अस्मिन्सग्रहमखमहारुद्राख्ये
कर्मणि पश्चिमद्वारे सामवेदसूक्तजपार्थं त्वामहं वृणे इत्युक्त्वा पूगीफलं
दद्यात्। पूगीफलं गृहीत्वा विप्रो वदेत्—ॐवृतोऽस्मि॥ ॐव्रतेन०॥
वृताय एतत्ते० एष तेऽर्घः॥ पूजनम्—अग्न इत्यस्य भारद्वाज ऋषिः
गायत्रीछन्दः अग्निर्देवता सामवेदिद्वारपालपूजने विनियोगः—ॐअग्न
आयाहि वीतये गृणानो हव्यदातये। निहोता सत्सि बर्हिषि॥ इत्यनेन
गन्धादिभिःसम्पूज्य कङ्कणबन्धनम्—ॐयदाबध्न०॥यजमानो वदेत्—
सामवेदस्तु पिङ्गाक्षो जागतः शक्रदैवतः। भारद्वाजस्तु विप्रेन्द्र द्वारपालो
मखे भव॥एवं सामवेदिनं द्वितीयं द्वारपालं वृत्वा ततः उत्तरद्वारे अथर्व-
वेदसूक्तजपार्थे द्वौ अथर्ववेदिनौ वृणुयात्॥ यजमानः पूगीफलं गृहीत्वा
अथर्ववेदिविप्रस्य दक्षिणजानुआलभ्य वदेत्-अमुकप्रवरान्वितः अमुक-
गोत्रः शुक्लयजुर्वेदाम्नाय वाजिमाध्यन्दिनीयशाखाध्यायी अमुकशर्मा
यजमानोऽहम् अमुकप्रवरान्वितम् अमुकगोत्रम् अथर्ववेदान्तर्गतामुक-

शाखाध्यायिनम् अमुकशर्माणं ब्राह्मणम् अस्मिन्सग्रहमखमहारुद्राख्ये कर्मणि उत्तरद्वारे अथर्ववेदसूक्तजपार्थं त्वामहं वृणे इत्युक्त्वा पूगीफलं दद्यात्॥पूगीफलं गृहीत्वा विप्रो वदेत्—ॐवृतोऽस्मि॥ॐव्रतेन०॥वृताय एतत्ते० एषतेऽर्घः ॥ पूजनम्—शन्नोदेवीरित्यस्य दध्यङ्ङाथर्वणऋषिः गायत्रीछन्दः आपोदेवता अथर्ववेदिद्वारपालपूजने विनियोगः—ॐ शन्नोदेवी० ॥ गन्धादिभिः सम्पूज्य कङ्कणबन्धनम्—ॐयदाबध्न० ॥ यजमानो वदेत्—बृहस्नेनोऽथर्ववेदोऽनुष्टुभो रुद्रदैवतः । वैशम्पायन विप्रेन्द्र द्वारपालो मखे भव॥ इति अथर्ववेदिनं द्वितीयं द्वारपालं वृणुयात्॥ततो होमार्थम् ऋत्विग्वरणम्—यजमानः पूगीफलं गृहीत्वा विप्रस्य दक्षिणजानुआलभ्य वदेत्-अमुकप्रवरान्वितः अमुकगोत्रःशुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायी अमुकशर्मायजमानोऽहम् अमुकप्रवरान्वितम् अमुकगोत्रं शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायिनम् अमुकशर्माणं ब्राह्मणम् अस्मिन्सग्रहमखमहारुद्राख्ये कर्मणि ऋत्विक्त्वेन त्वामहं वृणे इत्युक्त्वा पूगीफलं दद्यात्॥ॐव्रतेन०॥वृताय एतत्ते पाद्यं पादावनेजनं पादप्रक्षालनम् एषतेऽर्घः ॥ गन्धाक्षतपुष्पादिभिः सम्पूज्य हस्ते कङ्कणबन्धनम्—ॐयदाबध्नन्दाक्षायणा०॥यजमानो वदेत्—भगवन्सर्वधर्मज्ञ सर्वधर्मभृतां वर । महारुद्राख्ययज्ञेऽस्मिन् ऋत्विक्त्वं भव सुव्रत॥ॐएतावद्रूपं यज्ञस्य यद्देवैर्ब्रह्मणाकृतम् ॥ तदेतत्सर्वमाप्नोति यज्ञे सौत्रामणीसुते॥[१]॥ एवमेव ऋत्विजो वृणुयात् ।

---

१ रुद्रकल्पद्रुम——एकादशानां यजमानसमशाखिनां यजुर्वेदिनामेववरणम् । नारायण भट्टास्तुरूपके एक एव रुद्रीलघुरुद्रमहारुद्रेष्वेक एकादश वा । अतिरुद्रे एकादश एकविंशत्युत्तरशतवति ऋत्विक्सङ्ख्या ॥ यत्तु गणपगायत्रीजपार्थं रुद्रगायत्रीजपार्थं दुर्गागायत्रीजपार्थं जातवेदोमन्त्रजपार्थं त्र्यम्बकमन्त्रजपार्थम् अघोरमन्त्रजपार्थं वास्तुमन्त्रजपार्थं क्षेत्रपालादिमन्त्रजपार्थं च एकैकविप्रवरणमाचरन्ति तन्निर्मूलमिति कल्पद्रुमकाराः ॥

## ॥ अथ वरणश्राद्धप्रयोगः ॥

आचम्य प्राणानायम्य दिग्बन्धः–ॐस्वुस्तिनुऽइन्द्रों०॥२५।२१॥वरण-श्राद्धोपहाराः शुचयो भवन्तु इति वरणश्राद्धोपकरणानां जलेन प्रोक्षणम्॥ हस्ते जलमादाय–आचार्यादिभ्यो दास्यमानान्यासनानि यथादत्तानि गान्धर्वं गन्धं वानस्पत्यानि पुष्पाणि सौर्याणि कांस्यपात्राणि रौद्राणि ताम्रपात्राणि बार्हस्पत्यानि वासांसि प्राजापत्यान्युपवीतानि आग्नेयानि कुण्डलमुद्रिकादीनि तन्निष्क्रयद्रव्यं वा आचार्यादिभ्यः सर्वेभ्य ऋत्विग्भ्यः स्वाहा सम्पद्यन्तां(तां) न मम॥ इदं वो ज्योतिः–सुज्योतिः। यजमानो ब्रूयात्–अर्चनविधेः परिपूर्णताऽस्तु ॥ ब्राह्मणा वदेयुः–अस्तु परिपूर्णता ॥ आचमनम्–हस्ते जलं गृहीत्वा–दास्यमानानि तृप्तिपर्यन्तानि सिद्धान्नानि सोपस्करणान्याचार्यादिभ्यः सर्वेभ्य ऋत्विग्भ्यः स्वाहा सम्पद्यन्तां न मम॥ पुनर्जलमादाय–अस्य ऋत्विग्वरणसाङ्गतासिद्धये गौर्वा तन्निष्क्रयीभूतं हिरण्यं रौप्यं ताम्रं वा द्रव्यं दक्षिणा आचार्यादिभ्यः सर्वेभ्य ऋत्विग्भ्यः स्वाहा सम्पद्यन्तां न मम॥ इति यथाशक्ति सर्वेभ्यो दक्षिणाप्रदानम् ॥ यजमानो ब्रूयात्–यस्य विप्रस्य यो भागः स तेन प्रतिगृह्यताम्॥ यजमानो हस्तौ बद्ध्वा प्रार्थयेत्–अस्य ऋत्विग्वरणविधेर्यन्न्यूनातिरिक्तं तत्सर्वं गणेशाम्बिकयोः प्रसादाद्ब्राह्मणवचनाच्च परिपूर्णमस्तु॥ ब्राह्मणा वदेयुः—अस्तु परिपूर्णम्॥यजमानभाले तिलककरणम्–ॐस्वुस्तिनुऽ इन्द्रों०॥

---

१ अत्र देयमुक्त परशुरामकारिकायाम्–भाजन भाजनाधार छत्रोपानत्कमण्डलु । आसन वासधी मुद्रा कर्णभूषोपवीतकम् ॥ एतद्दशविध देय पद वरणसिद्धये ॥ पदाभावे त्रय देय पात्रवस्त्राङ्गुलीयकम् । तदभावेऽथ ताम्बूल दत्वा किञ्चित्प्रकल्पयेत् ॥ किञ्चिन्मूल्य प्रकल्पयेदित्यर्थः ॥

॥६६॥यजमानस्य दक्षिणहस्ते कङ्कणबन्धनम्-ॐयदाबध्नन्दाक्षा०॥६४॥ यजमानपत्न्या वामहस्ते कङ्कणबन्धनम्-सम्पत्नीभिरनुगच्छेमदेवा५ पुत्रैर्भ्रातृभिरुतवाहिरण्यै५ । नाकंगृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठेऽअधिरोचनेदिवः ॥६६॥ यजमानेन स्वात्मनि दूर्वया मार्जनम्- ॐकाण्डात्काण्डात्प्ररोहन्ती०॥६७॥अर्घ्यचन्दनम्-ॐदधिक्राव्णो०॥६८॥ यजमानाय फलसमर्पणम् ॐयाःफलिनीर्या०॥६९॥इतिवरणश्राद्धम्॥

## ॥ अथ मधुपर्कप्रयोगः ॥

तत्रविष्टरादीनांमधुपर्कद्रव्याणामादानम्॥स्वदक्षिणतस्तेषामुपकल्पनम्-

१ अर्घ्यसङ्ख्याकाः पञ्चविंशतिकुशतरुणमया विष्टराः ॥

२ पद्याः-उक्तलक्षणा अर्घ्यसङ्ख्याका द्वितीयविष्टराः ॥

---

१ वरशाखया (अध्वर्युशाखया) मधुपर्कदानम्-गृह्यपरिशिष्टे-वरस्य या भवच्छाखा तच्छाखागृह्यचोदित । मधुपर्क प्रदातव्यो नान्यशाखाऽपि दातरि ॥ अत्र शाखिगाधुप लक्षणार्थं वरदातृशब्दौ ॥ तदुक्तम्-अध्वर्युशाखया मधुपर्क ॥ जगन्नाथपद्धतिकायाम्- तत्तद्गृह्योक्तविधिना विष्टराद्यर्हण तत ॥ सर्वत्र यजमानशाखयैव मधुपर्क इति जयन्त- स्तत्तु कैरपि नादृतम् ॥ प्रयोगदर्पणादिषु-ततो वरणक्रमेण मधुपर्केण स्वशाखोक्तविधिना तेषामर्हणम्॥ २ विष्टरस्त्रिवृद्दशालिमात्रकौशो रज्जुविशेष इति भर्तृयज्ञ ॥प्रादेशमात्र त्रिवृत्त कौश वा काशनिर्मितमिति रेणुक ॥ पञ्चविंशतिदर्भतरुणमय कूर्चमिति हरिहर ॥ पञ्चाश- द्भिर्भवद्ब्रह्मा तदर्धेन विष्टर । छन्दोगपरिशिष्ट कात्यायन -यज्ञवास्तुनि मुष्ट्या च स्तम्भे दर्भवटौ तथा। दर्भसङ्ख्या न विहिता विष्टरास्तरणेषु च॥ अतश्च दर्भसङ्ख्याया सम्भवा- सम्भवाभ्या व्यवस्थिता विकल्प इति नारायणवृत्तौ ॥ ऊर्ध्वकेशो भवद्ब्रह्मा लम्बकेशस्तु विष्टर. । दक्षिणावर्तको ब्रह्मा वामावर्तस्तु विष्टर ॥ यद्वा पञ्चविंशतिदर्भाणा वेण्यग्र ग्रन्थि- भूषित । विष्टर सर्वयज्ञेषु लक्षण परिकीर्तितम् ॥ विष्टरस्त्रिवृतो दर्भकूर्चंदा ॥ ३ पद्य पद्भ्यामाक्रमणीय उक्तलक्षणो द्वितीयविष्टर. । पादयोरधस्तान्निधानार्थमित्यर्थ ॥

३ पादार्थमुदकानि—अर्घ्यसङ्ख्याकानि ताम्रादियथालाभपात्रस्थानि सुखोष्णोदकानि ( कोष्णोदकानीत्यर्थः ) ॥

४ अर्घाः—गन्धपुष्पयवाक्षतकुशतिलशुभ्रसर्षपदधिदूर्वान्वितान्यर्घ्यसङ्ख्याकानि ताम्रादियथालाभपात्रस्थानि उदकानि ॥

५ आचमनीयानि—आचमनार्थं कमण्डल्वादिपात्रस्थानि जलानि॥

६ मधुपर्काः—कांस्यपात्रस्थानि दधिमधुघृतानि अन्येन कांस्यपात्रेण आच्छादितानि ॥ इत्युपकल्प्य । यजमानो देशकालौ सङ्कीर्त्य अस्मिन्सग्रहमखमहारुद्राख्ये कर्मणि वृतानाम् आचार्यादीनां सर्वेषाम् ऋत्विजां मधुपर्केणार्हणं करिष्ये॥यजमानः स्वयम् उदङ्मुख उपविशेत्॥ सर्वेषाम् अर्घ्यानाम् उपवेशनार्थम् आसनान्यास्तीर्य तदुपरि सर्वान्प्राङ्मुखान्नुपवेश्य यजमानो वदेत्–ॐसाधु भवन्त आसताम्॥अर्घ्या वदेयुः–ॐसाधु वयमास्महे॥यजमानो वदेत्-ॐअर्चयिष्यामो भवतः॥ अर्घ्या वदेयुः–ॐ अर्चय॥ तत आचार्यो वा अन्यः कश्चिद्विप्रो वदेत्–विष्टराः विष्टराः विष्टराः ॥ यजमानो वदेत्–प्रतिगृह्यन्ताम् ॥ अर्घ्या वदेयुः–प्रतिगृह्णीमः ॥ इत्युक्त्वा पाणिभ्याम् उदगग्रान् विष्टरान्सर्वे

१ पादार्थमुदकम्–पादप्रक्षालनार्थं ताम्रादिपात्रस्थ जल सुखोष्ण मन्दोष्णमित्यर्थ ॥ २ अर्घशब्देन उदपात्रमवाच्यते ॥ तद्वैक उदपात्रमुपानिनयन्ति यथा राज्ञ आगतायोदकमाहरेदेव तदिति लिङ्गात्॥ उदकमन्धपुष्पाण्यक्षतबदराणीति भर्तृयज्ञ ॥ गन्धपुष्पाक्षतकुशतिलशुभ्रसर्षपदूर्वादध्यान्वित सुवर्णादिपात्रस्थमुदकमिति हरिहर. ॥ ३ आचमनार्थमुदकमेव॥ कमण्डलुसम्भृत जलमाचमनीयमिति हरिहर. ॥ ४ मधुपर्कः—दधिमधुघृतयुक्तस्मिन्कांस्यपात्रे कृतमपरेण कांस्यपात्रेणापिहित मधुपर्कशब्दनोच्यते ॥ मधुपर्के दध्यलाभे पयो जलं वा प्रतिनिधि. ॥ मध्वलाभे घृत गुडो वेत्याश्वलायन ॥ ५ प्रतियह्णीम इति प्रयोगे यदुक्त तच्छिष्टाचारप्राप्त वस्तुतस्तु सर्वंवक्तना ग्रहण

प्रतिगृह्णीयुः ॥ अर्च्याः स्वस्वहस्ते जलमादाय—वर्ष्मोस्मीत्यस्य अथर्वणऋषिः अनुष्टुप्छन्दः विष्टरो देवता विष्टरोपवेशने विनियोगः॥ ॐवर्ष्मोस्मि समानानामुद्यतामिव सूर्यः । इमं तमभितिष्ठामि यो मा कश्चाभिदासति ॥ इति मन्त्रान्ते उदगग्रं विष्टरमुभाभ्यां पाणिभ्यां स्वे स्वे आसने निधाय तदुपरि उपविशेयुः ॥ ततः अर्चकादपरः कश्चिद्विप्रो वदेत्—पादार्थमुदकानि पादार्थमुदकानि पादार्थमुदकानि॥ यजमानः कोष्णोदकेन पूरितानि ताम्रमयानि पाद्यपात्राणि गृहीत्वा ब्रूयात्–प्रतिगृह्यन्ताम् ॥ अर्च्या वदेयुः–प्रतिगृह्णीमः ॥ इत्युक्त्वा यजमानहस्तात्पाद्यपात्राणि प्रतिगृह्णीयुः ॥ अर्च्याः स्वस्वहस्ते जलमादाय–विराजो दोहोसीत्यस्य प्रजापतिर्ऋषिः आपो देवता यजुश्छन्दः पादप्रक्षालने विनियोगः ॥ ॐविराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोहः ॥ इत्यनेन स्वयमेव स्वं स्वं दक्षिणं पादं प्रक्षाल्य मन्त्रावृत्त्या वामं प्रक्षालयेयुः ॥

१ हरिहरः—प्रत्यङ्मुखेन यजमानेन तिष्ठता दत्तमासनात्पश्चिमे प्राङ्मुखस्तिष्ठन्नर्घ्यः पूर्वोक्तलक्षणं विष्टरं तूष्णीं पाणिभ्यामुदगग्रमादत्ते ॥ जयरामोऽपि–ततोऽर्घ्योऽर्थिनाऽर्पितमुभाभ्यां हस्ताभ्यामर्घ्यो गृह्णाति तूष्णीं ग्रहणमात्रोपदेशात् । वर्ष्मोस्मीति मन्त्रेणैव विष्टरमेवाभ्युपविशति ग्रहणोपवेशनयोर्मध्ये पठितोऽपि मन्त्रो लिङ्गादुपवेशने विनियुज्यते । लिङ्गञ्च–इमन्तमभितिष्ठामीति ॥ गदाधरस्तु–ततोऽर्घ्योऽर्थयितुः सकाशाद्विष्टरं तूष्णीमेव प्रतिगृह्य रा विष्टरमासने निधाय वर्ष्मोस्मीति मन्त्रेणोपविशति ॥ २ मधुपर्कान्तानि सर्वाणि द्रव्याणि अस्मिन्पक्षे बहुवचनान्तान्युच्चारणीयानीति रुद्रकल्पद्रुमे । ३ कर्क—विराजोदोहोसीत्यनेन मन्त्रेण पादार्थमुदकं गृहीत्वा प्रक्षाल्यत्यर्घ्य एव ॥ जयरामश्च—प्रक्षालनं चाञ्जलिना विराजोदोहोसीति मन्त्रेण स्वयमेव ॥ यदि ब्राह्मणोऽर्घ्यस्तदा दक्षिणं प्रथम प्रक्षालयेदन्य. । अनेन मन्त्रावृत्तिरवगम्यते ॥ ४ अर्घ्यते अनेनेति अर्घ आप एव मन्त्रलिङ्गात् ॥ निनयन्नभिमन्त्रयते ॥ न तु मन्त्रान्तेऽभिमन्त्रणमिति जयरामः ॥

अथ द्वितीयपद्यविष्टरप्रदानम्—अर्चकादन्यः कश्चिद्विप्रो वदेत्—विष्टराः विष्टराः विष्टराः॥ यजमानो वदेत्—प्रतिगृह्णन्ताम्—अर्च्या वदेयुः—प्रतिगृह्णीमः॥ इत्युक्त्वा पाणिभ्याम् उदगग्रान्विष्टरान्सर्वे प्रतिगृह्णीयुः॥ अर्च्याः स्वस्वहस्ते जलमादाय—वर्ष्मोस्मीत्यस्य अथर्वण ऋषिः अनुष्टुप्छन्दः विष्टरो देवता विष्टरस्य पादयोरधस्तान्निधाने विनियोगः॥ ॐवर्ष्मोस्मि समानानामुद्यतामिव सूर्यः। इमं तमभितिष्ठामि यो मा कश्चाभिदासति॥ इत्यनेन उदगग्रं विष्टरम् उभाभ्यां पाणिभ्यां स्वस्वपादयोरधस्तान्निधाय तदुपरि पादौ स्थापयेयुः॥

अथार्घः—यजमानादन्यः कश्चिद्विप्रः आवेदयेत्—अर्घाः अर्घाः अर्घाः॥ यजमानो गन्धपुष्पयवाक्षतकुशतिलशुभ्रसर्षपदूर्वान्वितानि जलपूरितानि अर्घपात्राणि गृहीत्वा वदेत्—प्रतिगृह्णन्ताम्॥ अर्च्या विनियोगं कुर्युः—आपस्थेति मन्त्रस्य प्रजापतिर्ऋषिः यजुश्छन्दः आपो देवताः समुद्रं व इत्यस्य अथर्वणऋषिः अनुष्टुप्छन्दः आपो देवताः क्रमेण अर्घग्रहणे अर्घाभिमन्त्रणे च विनियोगः॥ ॐ आपस्थयुष्माभिः सर्वान्कामानवाप्नवानि॥ इति मन्त्रं पठित्वा वदेयुः—प्रतिगृह्णीमः॥ इत्युक्त्वा स्वं स्वमर्घमादाय मस्तकपर्यन्तं नीत्वा शिरसाऽभिवन्द्य निनयन् (नामयन्) अभिमन्त्रयेयुः—ॐ समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत। अरिष्टाऽस्माकं वीरामापरासेचिमत्पयः॥

अथाचमनीयदानम्—अर्चकादन्यः कश्चिद्विप्रो वदेत्—आचमनीयानि आचमनीयानि आचमनीयानि॥ यजमानो वदेत्—प्रतिगृह्णन्ताम्॥ अर्च्या वदेयुः—प्रतिगृह्णीमः॥ इत्युक्त्वा यजमानहस्तात् आचमनीयपा-

१ आचमनीयपात्रे जातीफलकङ्कोललवङ्गादिनिक्षेपण तन्त्रग्रन्थेषूक्तं पारस्करगृह्यस्य पञ्चभिर्भाष्यकारैस्तु आचमनीयमुदकमेवेत्युक्तम्॥

त्राणि दक्षिणहस्तेन प्रतिगृह्य वामहस्ते कृत्वा स्वस्वहस्ते जलमादाय- आमागन्यशसेतिमन्त्रस्य परमेष्ठी ऋषिः बृहती छन्दः आपो देवता आचमने विनियोगः ॥ ॐआमागन्यशसा सᳪसृजवर्चसा॥ तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिन्तनूनाम् ॥ इति मन्त्रान्ते वामहस्तस्थितपात्राज्जलं स्वस्वदक्षिणचुलुके गृहीत्वा सकृदाचम्य तेनैव जलेन द्विस्तूष्णीमाचामेयुः ॥ अथ मधुपर्कः—अर्चकादपरः कश्चिद्विप्रो वदेत्-मधुपर्कोः मधुपर्कोः मधुपर्कोः ॥ यजमानः क्रमेण ¹पंचैकपल-मितानि दधिमधुघृतानि कांस्यपात्रकृतानि अन्येन कांस्यपात्रेण पिहितानि समादाय ब्रूयात्-प्रतिगृह्यन्ताम् ॥ इत्युक्ते अर्च्याः स्वस्वहस्ते जलमादाय-मित्रस्येत्यस्य बृहस्पतिर्ऋषिः यजुश्छन्दः सविता देवता देवस्य त्वेत्यस्य प्रजापतिर्ऋषिः गायत्रीछन्दः सविता देवता क्रमेण मधुपर्कस्यावेक्षणे ग्रहणे च विनियोगः॥ ॐमित्रस्यत्वाचक्षुषा प्रतीक्षे॥ इति मन्त्रान्ते दातृहस्तस्थं मधुपर्कं निरीक्ष्य ॐदेवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्॥ प्रतिगृह्णीमः। इत्युक्त्वा दक्षिणहस्तेनादाय सव्ये पाणौ कृत्वा पिधानम् अपाकृत्य दक्षिणस्यानामिकया प्रयुवन्ति-नमः श्यावेत्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः सविता देवता मधुपर्कालोडने विनियोगः-इति विनियोगं कृत्वा दक्षिणस्यानामिकया प्रयुवन्ति-ॐनमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामि ॥ इति प्रदक्षिणमालोड्य अनामिकाङ्गुष्ठेन मधुपर्कैकदेशं प्रागुदग्वा तूष्णीं बहिर्निक्षिपेयुः ॥ पुनः दक्षिणस्यानामिकया प्रयुवन्ति-ॐनमः श्यावास्यायान्नशने यत्त

१ आज्यमेकपलं ग्राह्यं दध्नस्त्रिपलमेव च। मधुनः पलमेकं तु मधुपर्कः स उच्यते इति गदाधरभाष्ये ॥

आविद्धं तत्ते निष्कृन्तामि ॥ इति प्रदक्षिणमालोड्य अनामिकाङ्गुष्ठेन मधुपर्कैकदेशं प्रागुद्ग्वा तूष्णीं बहिर्निक्षिपेयुः ॥ पुनः दक्षिणस्याना-मिकया प्रयुवन्ति—ॐनमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामि ॥ इति प्रदक्षिणमालोड्य अनामिकाङ्गुष्ठेन मधुपर्कैकदेशं प्रागुद्ग्वा तूष्णीं बहिर्निक्षिपेयुः॥अथ मधुपर्कप्राशनम्—यन्मधुन इत्यस्य कुत्सन्नृषिः जगती छन्दः मधुपर्को देवता मधुपर्कप्राशने विनियोगः—ॐयन्मधुनो मधव्यं परमᳪ रूपमन्नाद्यम् । तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानि ॥ अनेन अनामिका-ङ्गुष्ठाभ्यां प्राशनम् ॥

पुनः प्राशनम्—ॐयन्मधुनो मधव्यं परमᳪ रूपमन्नाद्यम्॥ तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन०॥अनामिकाङ्गुष्ठाभ्यां प्राशनम्॥

पुनः प्राशनम्—ॐयन्मधुनो मधव्यं परमᳪ रूपमन्नाद्यम्० ॥ अनामिकाङ्गुष्ठाभ्यां प्राशनम्॥ततो मधुपर्कशेषं प्राक्असञ्चरे निनयेयुः॥

आचम्य—ॐआमागन्यशसा सᳪसृज वर्चसा॥तं मा कुरु प्रियं प्रजाना-

---

१ विकल्पेनात्र मधुव्वाताऋतायते इत्येताभिर्ऋग्भिः प्रत्यृचं प्राश्नाति । यथा—मधुव्वाता इति प्रथमा मधुनक्तमिति द्वितीया मधुमान्न इति तृतीया॥ २ अत्र उच्छिष्टस्यैव मन्त्रोच्चारणम्–ताम्बूलेक्षुफले चैव भुक्तस्नेहानुलेपने । मधुपर्के च सोमे च नोच्छिष्ट मनुरब्रवीत्॥ ३ अवशिष्टं मधुपर्कस्य उच्छिष्टं पुत्राय, अथवा उत्तरत उपविष्टाय शिष्याय दद्यात्, अथवा सर्वं स्वयमेव प्राश्नीयात्, अथवा प्राच्यां यत्र जना न सञ्चरन्ति तत्र स्थले प्रक्षिपेत्॥ अत्र पूर्वपूर्वासम्भवे उत्तरोत्तरा प्रतिपत्तिं कुर्यादिति हरिहर.॥ जयरामस्तु आचार्यः शिष्याय, ऋत्विक्प्रियौ पुत्राय, यजमानकौ सर्वं प्राश्नीयाताम्, राजा असञ्चरे पूर्वस्यां दिशि निनयेदित्यपरे ॥ सर्वेषां वा सर्वे पक्षा इत्यन्ये॥ ४ आचमन सकृन्मन्त्रेण । ततस्त्रिराचम्य एव सर्वत्र स्मार्ताचमनं कुर्यादिति हरिहरः ॥

मधिपतिं पशूनामरिष्टिं०॥अनेन सकृदाचम्य ततो द्विराचमनं तूष्णीम्॥ ¹प्राणान्संमृशति ( सजलपाणिना इन्द्रियस्थानानि संस्पृशेत् ) ॥ ॐवाङ्म आस्येऽस्तु–कराग्रेण मुखं स्पृशेयुः ॥ ॐनसोर्मे प्राणोऽस्तु–तर्जन्यङ्गुष्ठाभ्यां युगपन्नासारन्ध्रद्वयं स्पृशेयुः॥ ॐअक्ष्णोर्मे चक्षुरस्तु–मध्यमाङ्गुष्ठाभ्यां युगपन्नेत्रद्वयं स्पृशेयुः॥ॐकर्णयोर्मे श्रोत्रमस्तु–अनामिकाङ्गुष्ठेन दक्षिणकर्णं स्पृशेयुः॥पुनः ॐ कर्णयोर्मे श्रोत्रमस्तु–अनामिकाङ्गुष्ठेन वामकर्णं स्पृशेयुः ॥ ॐबाह्वोर्मे बलमस्तु–कराग्रेण दक्षिणबाहुमूलं स्पृशेयुः ॥ पुनः ॐबाह्वोर्मे बलमस्तु–कराग्रेण वामबाहुमूलं स्पृशेयुः॥ॐऊर्वोर्मे ओजोऽस्तु–हस्तद्वयाग्रेण युगपदूरुद्वयं स्पृशेयुः॥ ॐअरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु–उभाभ्यां हस्ताभ्यां शिरःप्रभृतिपादान्तानि सर्वाङ्गानि युगपदालभेयुः ॥

॥ अथ मधुपर्काङ्गीभूतो गोरुत्सर्जनप्रयोगः ॥

यजमानः स्वसन्निधौ भूमावुदगग्रान्कुशानास्तीर्य वदेत–गौर्गौर्गौः॥

---

१ गदाधरः–हरिहरेण प्राणापतनस्पर्शः सजलहस्तेन कर्तव्य इत्युक्त तदतीव मन्दम्॥ न ह्यत्र सूत्रे जलग्रहणमस्ति । सर्वाङ्गालम्भे उभाभ्यां हस्ताभ्यामालम्भ उक्तः सोऽपि न युक्त. । आचम्येति ग्रहणमाचान्तोदकायेति वक्ष्यमाणत्वादनाचान्तस्यैव प्राणापतनसमर्शनं माभूदित्येतदर्थम् ॥

२ गदाधरः–गोरालम्भश्च कलिवर्जिते काले भवति–अग्न्याधानं गवालम्भं सन्यासं पलपैतृकम् । देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेदिति पराशरस्मृते. ॥ अतश्च गवालम्भस्य कलौ निषिद्धत्वादुत्सर्गस्य च यज्ञविवाहयोरप्राप्तत्वाद्गौरित्युच्चारणादि यज्ञविवाहयो: कलौ न प्रवर्तते । यज्ञविवाहयोरन्यत्र तूत्सर्गपक्ष एव कलौ । ॐकारमारभ्य उत्सृजत तृणान्यत्त्विति उच्चैर्ब्रूयाच्छेषमनुपांशु इति कर्कोपाध्यायमतमिति गदाधरः ॥ हरिहरस्तु ममचेत्यारभ्य ॐइत्यन्तमुपांशु अन्यदुच्चै ॥

ब्राह्मणा वदेयुः—ॐमाता रुद्राणां दुहिता वसूनाᳬ स्वसाऽऽदित्या-नाममृतस्य नाभिः। प्रनुवोचं चिकितुषे जनाय मागामनागामदितिं वधिष्ट। उपांशु ब्रूयुः—मम चामुकशर्मणो यजमानस्य च पाप्मा हतः॥ उच्चैर्ब्रूयुः—ॐउत्सृजत तृणान्यत्तु॥ यजमानो गोनिष्क्रयद्रव्यं कुशोपरि उत्सृजेत्॥ इति मधुपर्कः॥

## ॥ अथ वृतानां पूजनम्॥

यजमानो हस्ते जलमादाय—इमानि बृहस्पतिदैवत्यानि वासांसि वृतेभ्यो विप्रेभ्यः सम्प्रददे॥ विप्राः सङ्गृह्य परिधानं कुर्युः॥ परिधास्य इत्यस्यालम्बायनऋषिः पङ्क्तिश्छन्दः वासो देवता वस्त्रपरिधाने विनि-योगः॥ ॐ परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि। शतं च जीवामि शरदः पुरूची रायस्पोषमभि सव्ययिष्ये॥ इत्यनेन परिधाय आचामेयुः॥ततो यज्ञोपवीतदानम्—भूमिदेवा नमस्कुर्वे पान्तु मां भवसा-गरात्। ब्रह्मसूत्रं मन्त्रपूतं गृह्यतां धारणाय वः॥धारणे मन्त्रः—यज्ञोपवी-तमित्यस्य परमेष्ठीऋषिः त्रिष्टुप्छन्दः लिङ्गोक्ता देवता यज्ञोपवीतधारणे विनियोगः॥ ॐयज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्। आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः॥ इत्युपवीतानि धृत्वा आचामेयुः॥ततः उपवस्त्रदानम्—तन्तुसन्तानसम्बद्धं निर्मलं सदृशं वरम्। उत्तरीयं प्रगृह्णन्तु तपोनिष्ठा द्विजातयः॥धारणे मन्त्रः—यशसामे-त्यस्याथर्वणऋषिः पङ्क्तिश्छन्दः लिङ्गोक्ता देवता उपवस्त्रधारणे विनि-योगः॥ॐयशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती। यशो भगश्च मा-विन्दद्यशो मा प्रतिपद्यताम्॥ उपवस्त्राणि[1] धृत्वा आचामेयुः॥ ततश्चन्द-

१ एकञ्च पूर्वस्यात्तरवसाण प्रच्छादयात॥अत्रैनम्—पूर्वं वस्त्रार्धं समन्त्रकं परिधाय द्विराचम्य उत्तरार्धं गृहीत्वा उत्तरीयमन्त्रं पठित्वोत्तरीयं कृत्वा पुनर्द्विराचामदिति जयरामगदाधरौ॥

नदानम्–मलयाचलसम्भूतं कुङ्कुमागरुवासितम् । विलेपनाय भूदेवा गृह्यतां चन्दनं शुभम्॥ सुचक्षा अहमित्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः आशीर्देवता गन्धानुलेपने विनियोगः॥ॐसुचक्षा अहमक्षीभ्यां भूयासꣳसुवर्चामुखेन । सुश्रुत्कर्णाभ्यां भूयासम्॥पुष्पमालादानम्–सुगन्धपुष्परचिता मालां सूत्रविनिर्मिताम् । अलङ्काराय भूदेवाः प्रयच्छाम्यङ्गभूषणम् ॥ पुष्पमालाग्रहणम्–याआहरदिति मन्त्रस्य भरद्वाजऋषिः अनुष्टुप्छन्दः सुमनोदेवता पुष्पमालाग्रहणे विनियोगः॥ॐयाऽआहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय॥ताऽअहं प्रतिगृह्णामि यशसा च भगेन च॥पुष्पमालाधारणम्–यद्यशइत्यस्य विश्वामित्रऋषिःत्रिष्टुप्छन्दः सुमनोदेवता पुष्पमालाधारणे विनियोगः ॥ ॐयद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु। तेन सङ्ग्रथिताः सुमनस आवध्नामि यशो मयि॥ततोऽलङ्कारदानम्॥तत्र कुण्डलदानम्–क्षीरोदमथने पूर्वमुद्धृत कुण्डलद्वयम्। श्रिया सह समुद्भूतं ददे श्रीः प्रीयतामिति ॥ कण्ठभूषणदानम्–सुवर्णघटितं दिव्यं नानारत्नविभूषितम् । ब्राह्मणेभ्यः प्रयच्छामि सुवर्णं कण्ठभूषणम् ॥ केयूरदानम्–हिरण्यनिर्मितं दिव्यं केयूरद्वयभूषितम् । बाह्वौ संधारणार्थाय युष्मभ्य प्रददाम्यहम् ॥ वलयदानम्–काञ्चनं हस्तवलयं रूपकान्तिसुखप्रदम् । विभूषणं प्रदास्यामि भूषयन्तु हि मा सदा ॥ अङ्गुलीयकदानम्– हिरण्यगर्भसम्भूतं सौवर्णं चाङ्गुलीयकम् । रत्नादिरचितं रम्यं विप्रेभ्यः प्रददे वरम्॥ ततः सुवर्णोपवीतदानम्–सुवर्णतन्तुघटितं ब्रह्मग्रन्थिसमन्वितम् । उपवीतं प्रदास्यामि प्रीयन्तां मे द्विजोत्तमाः ॥ ततो यजमानदत्तालङ्कारधारणम्—अलङ्करणमित्यस्य भरद्वाजऋषिः उष्णिक् छन्दः अलङ्करणं दैवत अलङ्कार-

धारणे विनियोगः ॥ ॐअलङ्करणमसि भूयोऽलङ्करणं भूयात् ॥ धूपदानम्—ॐधूरसिधूर्वधूर्वन्तं० ॥६॥ वनस्पतिरसोद्भूतो गन्धाढ्यः सुमनोहरः । धूपोऽयं वह्निसंयुक्तो भवतां घ्राणतर्पणः ॥ दीपदानम्—ॐअग्निर्ज्योतिज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा...तेनं॒युजं गंमेमन्त्र्यंस्वंबृहस्पतें०स्त्रोरुहांणाऽअधिनाकंमुत्तमम्॥२॥चक्षुर्दं सर्वलोकानां तिमिरस्य निवारकम् । दीपं च रचितं भक्त्या प्रयच्छामि सुखाय वः ॥ नैवेद्यदानम्—ॐस्वादिंष्ठयामदिंष्ठयापवस्वसोमधारया । इन्द्रायपातवेसुत? ॥२२॥ पयोदध्यादिसंमिश्रं सिताखण्डैः समन्वितम् । नैवेद्यं तृप्तिहेत्वर्थं गृह्णतां द्विजपुङ्गवाः॥ आचमनदानम्—ॐततोविराड्-जायत०॥२॥मन्दाकिन्यास्तु सम्भूतं सुगन्धि निर्मलं जलम्। गृह्णतां च सुरश्रेष्ठा दिव्यमाचमनीयकम्॥फलदानम्—ॐया?फलिनीर्याऽअफला० ॥६३॥ताम्बूलदानम्—ॐउतस्मांस्यद्रवंतस्तुरण्यत?पर्णन्नवेरनुवाति-प्रगर्द्धिनः॥ श्येनस्येवुद्ध्रजंतोऽअङ्कसम्परिदधिक्राव्णः सहोर्जातरि-त्रतः स्वाहा॥१॥नागवल्लीदलैर्युक्तं पूगीफलसमन्वितम्।ताम्बूलं गृह्णतां विप्रा मुखस्याभरणाय वः॥जलपात्रदानम्—ताम्रं वा राजतं रौप्यं सुगन्धजलपूरितम्। चषपात्रेण संयुक्तं जलपात्रं ददामि वः॥दक्षिणादानम्—ॐयद्दत्तंयत्परादानंयत्पूर्तंयाश्च दक्षिणा?। तद्ग्निर्वैश्वकर्म्मणः?स्वर्दे-वेषुनोदधत् ॥ २२ ॥ सौवर्णीमग्निदैवत्यां राजतीं चन्द्रदैवताम् । ताम्रां मार्तण्डदैवत्यां दक्षिणां प्रददामि वः॥ एवं सम्पूज्य प्रार्थयेत्—ब्राह्मणाः सन्तु मे शस्ताः पापात्पान्तु समाहिताः । देवानां चैव दातारः पातारः सर्वदेहिनाम्॥ जपयज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः। देवानां च ऋषीणां च तृप्त्यर्थं याजकाः कृताः॥येषां देहे स्थिता वेदाः पावयन्ति जगत्रयम्॥

रक्षन्तु सततं ते मां रुद्रयागे व्यवस्थिताः ॥ ब्राह्मणा जङ्गमं तीर्थं त्रिषु लोकेषु विश्रुतम् । येषां वाक्योदकेनैव शुद्ध्यन्ति मलिनो जनाः ॥ पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः । सर्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः ॥ श्रोत्रियाः सत्यवाचश्च रुद्रध्यानरताः सदा । यद्वाक्यामृतसंसिक्ता ऋद्धिं यान्ति नरद्रुमाः॥ अङ्गीकुर्वन्तु कर्मैतत्कल्पद्रुमसमाशिषः । यथोक्तनियमैर्युक्ता मन्त्रार्थे स्थिरबुद्धयः ॥ यत्कृपालोचनात्सर्वा ऋद्धयो वृद्धिमाप्नुयुः । रुद्रयागे मया पूज्याः सन्तु मे नियमान्विताः॥अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः। रुद्रध्यानरता नित्यं प्रसन्नमनसः सदा ॥ अदुष्टभाषणाः सन्तु मा सन्तु परनिन्दकाः । ममापि नियमा ह्येते भवन्तु भवतामपि ॥ ऋत्विजश्च यथा पूर्वं शक्रादीनां मखेऽभवन् । यूयं तथा मे भवत ऋत्विजो द्विजसत्तमाः ॥ रुद्रयागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया । सुप्रसन्नैः प्रकर्तव्यं कर्मेदं विधिपूर्वकम् ॥ यजमानाय तिलकं कुर्यात्—ॐस्वस्ति नऽइन्द्रो०॥ $\frac{२५}{१९}$॥ आशीर्वादः—ॐविश्वानि देव० ॥ $\frac{३}{३}$॥ करोतु स्वस्ति ते ब्रह्मा स्वस्ति चापि द्विजातयः । सरीसृपाश्च ये श्रेष्ठास्तेभ्यस्ते स्वस्ति सर्वदा॥ ययातिर्नहुषश्चैव धुन्धुमारो भगीरथः । तुभ्यं राजर्षयः सर्वे स्वस्ति कुर्वन्तु नित्यशः॥ स्वस्ति तेऽस्तु द्विपादेभ्यश्चतुष्पादेभ्य एव च। स्वस्त्यस्त्वपादकेभ्यश्च नित्यं तव गृहे सदा ॥ इत्याशीर्वादः ॥

## ॥ अथ मण्डपप्रवेशः ॥

तत्रादौ आचारप्राप्तं मण्डपप्रवेशार्थे वर्धिनीकलशपूजनम् ॥ हस्ते जलमादाय अद्यपूर्वोच्चारितशुभपुण्यतिथौ महारुद्रयागाङ्गतया मण्डपप्रवेशं कर्तुं वर्धिन्याः स्थापनं पूजनं च करिष्ये॥ पट्टोपरि अक्षतादिनाष्ट-

दलं निर्माय तत्र भूमिं स्पृष्ट्वा—ॐ मही द्यौ: पृथिवी०॥३२/८॥ तत्र यवप्रक्षेप:—ॐ ओषधय( ०॥९६/१२॥ तदुपरि कलशस्थापनम्—ॐ आजिघ्र कलशं०॥४२/८॥ कलशे जलपूरणम्-ॐ वरुणस्योत्तम्भनं०॥३६/४॥ गन्धप्रक्षेप:-ॐ त्वां गन्धर्वा०॥९८/१२॥ धान्यप्रक्षेप:-ॐ धान्यमसि०॥२०/१॥ सर्वौषधिप्रक्षेप:—ॐ या ओषधी:०॥७५/१२॥ दूर्वाप्रक्षेप:-ॐ काण्डात्काण्डा०॥२०/१३॥ पञ्चपल्लवप्रक्षेप:-ॐ अश्वत्थे वो नि०॥७९/१२॥ सप्तमृत्प्रक्षेप:-ॐ स्योना पृ०॥२१/३५॥ फलप्रक्षेप:—ॐ या: फलिनी०॥८९/१२॥ पञ्चरत्नप्रक्षेप:—ॐ परि वाजपति: क०॥२५/११॥ हिरण्यप्रक्षेप:—ॐ हिरण्यगर्भ: सम०॥४/१३॥ रक्तसूत्रेण वस्त्रेण च वेष्टयेत्-ॐ युवा सुवासा: परि०॥ पूर्णपात्रमुपरि न्यसेत्—ॐ पूर्णा दर्वि परापत०॥४९/३॥ वरुणमावाहयेत्-ॐ तत्त्वा यामीत्यस्य शुन:शेप ऋषि: त्रिष्टुप्छन्द: वरुणो देवता वरुणावाहने विनियोग:॥ ॐ तत्त्वा यामि०॥४९/१८॥ ॐ भूर्भुव: स्व: अस्मिन्कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकम् आ० स्था०॥ तत्रैव—वर्धिन्यै नम: वर्धिनीम् आ० स्था०। ब्रह्मणे० ब्रह्माणम् आ०स्था०। रुद्राय० रुद्रम् आ०स्था०। विष्णवे० विष्णुम् आ०स्था०। मातृभ्यो० मातृ: आ०स्था०। सागरेभ्यो० सागरान् आ०स्था०। मह्यै० महीम् आ०स्था०। नदीभ्यो० नदी: आ०स्था०। तीर्थेभ्यो० तीर्थानि आ०स्था०। गायत्र्यै० गायत्रीम् आ० स्था०। ऋग्वेदाय० ऋग्वेदम् आ०स्था०। यजुर्वेदाय० यजुर्वेदम् आ०स्था०। सामवेदाय० सामवेदम् आ० स्था०। अथर्ववेदाय० अथर्ववेदम् आ० स्था०। अग्नये० अग्निम् आ०स्था०। आदित्येभ्यो० आदित्यान् आ०स्था०। एकादशरुद्रेभ्यो० एकादश रुद्रान् आ०स्था०। मरुद्भ्यो० मरुत: आ० स्था०। गन्धर्वाय०-

गन्धर्वम् आ० स्था०। ऋषये० ऋषिम् आ० स्था०।वरुणाय०वरुणम् आ० स्था०। वायवे० वायुम् आ० स्था०। धनदाय० धनदम् आ० स्था० । यमाय० यमम् आ० स्था० । धर्माय० धर्मम् आ० स्था० । शिवाय०शिवम् आ० स्था०। यज्ञाय० यज्ञम् आ०स्था०। विश्वेभ्यो देवेभ्यो०विश्वान्देवान् आ० स्था० । स्कन्दाय०स्कन्दम् आ०स्था०। गणेशाय०गणेशम् आ०स्था०।यक्षाय०यक्षम् आ०स्था०।अरुन्धत्यै० अरुन्धतीम् आ०स्था०।।प्रतिष्ठापनम्—ॐमनोजूति०।।१३/२।।वरुणवर्धिन्याद्यावाहितदेवताः सुप्रतिष्ठिता वरदा भवत।।ततः ॐ भूर्भुवः स्वः वरुणवर्धिन्याद्यावाहितदेवताभ्यो नमः इत्यनेन षोडशोपचारैः पञ्चोपचारैर्वा सम्पूज्य प्रार्थयेत्—वर्धिनि त्वं महाभागा सर्वतीर्थोदकान्विता।अतस्त्वां प्रार्थये देवि भव त्वं कुलवर्धिनी ॥ हस्ते जलमादाय—अनया पूजया वरुणवर्धिन्याद्यावाहितदेवताः प्रीयन्ताम् ॥ मण्डपसमीपगमनम्—आचार्याद्यृत्विक्सहितः सतूर्यघोषः शङ्खदुन्दुभ्यादिवादित्रसहितो यजमानः पत्नीं वर्धिनीकलशं ग्राहयित्वा सुवासिनीरग्रतः कृत्वा आनो भद्रेत्यादिमन्त्रघोषपूर्वकं मण्डपसमीपं गत्वा तत आशुःशिशान इत्यनुवाकम् ऋचंवाचमित्यध्यायं वा पठन् महामण्डपं प्रदक्षिणीकृत्य पश्चिमद्वारसमीपमागत्योपविशेत् ॥ भूमिध्यानम्—हस्ते फलपुष्पाक्षतान्संगृह्य—चतुर्भुजां शुक्लवर्णां कूर्मपृष्ठोपरिस्थिताम् । शङ्खपद्मधरां चक्रशूलयुक्तां धरां भजे ॥ आगच्छ सर्वकल्याणि वसुधे लोकधारिणि । पृथिवि ब्रह्मदत्तासि काश्यपेनाभिवन्दिता ॥ आवाहनम्—ॐभूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री। पृथिवीं यच्छ पृथिवीन्दृꣳह पृथिवीम्मा हिꣳसीः।।१३/१८।।ॐभूर्भुवःस्वः भूम्यै नमः भूमिम्

आवाहयामि॥ साष्टाङ्गप्रणामः—उद्धृतासि वराहेण कृष्णेन शतबाहुना। दंष्ट्राग्रे लीलया देवि यज्ञार्थं प्रणमाम्यहम् ॥ इति साष्टाङ्गं प्रणमेत् ॥ अर्घ्यदानम्—अर्घपात्रे जलगन्धफलक्षीरकुशाग्रदधिदूर्वाक्षतसर्षपाद्य- न्यद्द्रव्याणि तथाऽऽचारात्फलपुष्पहिरण्यं च निक्षिप्य जानुभ्यामवनिं गत्वा हस्ताभ्यामर्घ्यं गृहीत्वा—ब्रह्मणा निर्मिते देवि विष्णुना शङ्करेण च। पार्वत्या चैव गायत्र्या स्कन्देनाथर्वणेन च॥ यमेन पूजिते देवि धर्मवृद्धिजिगीषया॥ सौभाग्यं देहि पुत्राँश्च धनं रूपं च पूजिता। गृहाणार्घ्यमिमं देवि सौभाग्यं च प्रयच्छ मे॥ भूम्यै नमः अर्घ्यं सम- र्पयामि॥ पूजनम्—ॐस्योनापृथिविनो०॥ इत्यनेन गन्धाद्युपचारैः सम्पूज्य अनया पूजया भूमिः प्रीयताम्॥ पूजानिवेदनम्—उपचारानि- मांस्तुभ्यं ददामि परमेश्वरि। भक्त्या गृहाण देवेशि त्वामहं शरणं गतः॥ बलिप्रदानम्—पत्रपुटे पायसलाजासक्त्वादिकं यथासम्भवं बलिं नि- धाय गन्धपुष्पैः सम्पूज्य ॐभूर्भुवः स्वः सपरिवारायै भूम्यै नमः अमुं बलिं समर्पयामि॥ प्रार्थना—नन्दे नन्दय वासिष्ठे वसुभिः प्रजया सह। जये भार्गवदायादे प्रजानां जयमावह॥ पूर्णे गिरिशदायादे पूर्णं कामं कुरुष्व मे। भद्रे काश्यपदायादे कुरु भद्रां मतिं मम॥सर्वबीजसमायुक्ते सर्वरत्नौषधीवृते। रुचिरे नन्दने नन्दे वासिष्ठे रम्यतामिह॥ प्रजापति- सुते देवि चतुरस्रे महीयसि। सुभगे सुव्रते देवि यज्ञे काश्यपि रम्य- ताम्॥ पूजिते परमाचार्यैर्गन्धमाल्यैरलङ्कृते। भवभूतिकरे देवि यज्ञे भार्गवि रम्यताम्॥ अव्यक्ते चाहते पूर्णे शुभे चाङ्गिरसः सुते। इष्टदे त्वं प्रयच्छेष्टं त्वा प्रतिष्ठापयाम्यहम्॥ देशस्वामिपुरःस्वामिगृहस्वामि- परिग्रहे। मनुष्यधनहस्त्यश्वपशुवृद्धिकरा भव॥ इति प्रार्थयेत्॥

कूर्मानन्तपूजनम्—ॐ सुपर्ण्णः पार्ज्जन्यऽआतिर्व्वाहसोदर्व्विदा ते वायवे बृहस्पतये वाचस्पतये पैङ्गराजोऽलजऽआन्तरिक्षः प्लवो मद्गुर्म्मत्स्यस्ते नदीपतये द्यावापृथिवीयः कूर्म्मः ॥ २४/३४ ॥ ॐ भूर्भुवः स्वः कूर्माय नमः कूर्मम् आवाहयामि ॥ स्योनासि सुषदासि क्षत्रस्य योनिरसि ॥ स्योनामासीद सुषदामासीद क्षत्रस्य योनिमासीद ॥ १०/२६ ॥ ॐ भूर्भुवः स्वः अनन्ताय नमः अनन्तम् आवाहयामि ॥ ॐ भूर्भुवः स्वः कूर्मानन्ताभ्यां नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥ हस्तौ बद्ध्वा—भूकूर्मानन्तपूजने न्यूनातिरिक्तो यो विधिः स परिपूर्णोऽस्तु ॥ अस्तु परिपूर्णः ॥

प्रवेशः—ततस्तेनैव पश्चिमद्वारेण सऋत्विग्यजमानः शनैरङ्गं सङ्कोचयन् स्वदक्षिणांशेन द्वारवामांशं स्पृशन् स्वदक्षिणपादपुरःसरं मण्डपान्तः प्रविशेत् ॥ कलशहस्ता पत्नी दक्षिणद्वारेण प्रविशेत् ॥ पूर्वद्वारेण होमद्रव्यानयनम् ॥ दानार्थद्रव्यस्य दक्षिणद्वारेणानयनम् ॥ पूजार्थसम्भाराणाम् उत्तरद्वारेणानयनम् ॥ पत्नीहस्तधृतकुम्भस्य ऐशान्याम् आग्नेय्यां वा व्रीहिराश्युपरि स्थापनम् ॥ इति मण्डपप्रवेशः ॥

---

१ वैष्णवतन्त्रे विष्ण्वर्चनकल्पलतापठितविष्णुयागप्रयोगे तथा काशिदीक्षितमहारुद्रपद्धतौ खण्डदीक्षितकृतमहारुद्रपद्धतौ च यजमानेन तथा आचार्यादिऋत्विजैश्च पश्चिमद्वारेण प्रवेशनम् ॥ पत्न्या दक्षिणद्वारेण ॥ होमद्रव्यानयनं पूर्वद्वारेण ॥ पूजासम्भारानयनम् उत्तरद्वारेण ॥ दानार्थद्रव्यानयनं दक्षिणद्वारेणोक्तम् ॥

## ।। अथ दिग्रक्षणम् ।।

साचार्यः सपत्नीको यजमानः अग्न्यायतनात्पश्चिमतः स्वासने प्राङ्मुख उपविश्य हस्ते जलमादाय—प्रारब्धस्य महारुद्रकर्मणोऽङ्गत्वेन दिग्रक्षणं पञ्चगव्यकरणं भूमिप्रोक्षणं भूमिप्रार्थनां मण्डपपूजनं च करिष्ये—स्ववामहस्ते गौरसर्षपान्गृहीत्वा दक्षिणहस्तेनाच्छाद्य—ॐ कृणुष्व पाजः प्रसितिन्न पृथ्वीं याहि राजेवामवाँ२ऽइभेन।। तृष्वीमनु प्रसितिन्द्रूणानोस्तासि विध्य रक्षसस्तपिष्ठैः।।१३/९।। तव भ्रमासऽआशुया पतन्त्यनुस्पृश धृषता शोशुचानः।। तपूँष्यग्ने जुह्वा पतङ्गानसंन्दितो विसृज विष्वगुल्काः।।१३/१०।। प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशोऽअस्याऽअदब्धः।। यो नो दूरेऽअघशंसो यो ऽअन्त्यग्ने माकिष्टे व्यथिरादधर्षीत्।।१३/११।। उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ२ऽओषतात्तिग्महेते।। यो नोऽअरातिँ समिधान चक्रे नीचा तन्धक्ष्यतसन्न शुष्कम्।।१३/१२।। ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने।। अवस्थिरा तनुहि यातुजूनाञ्जामिमजामिम्प्रमृणीहि शत्रून्।। अग्नेष्ट्वा तेजसा सादयामि।।१३/१३।। ॐ रक्षोहणं वलगहनं वैष्णवीमिदमहन्तं वलगमुत्किरामि यम्मे निष्ट्यो यममात्यो निचखानेदमहन्तं वलगमुत्किरामि यम्मे समानो यमसमानो निचखानेदमहन्तं वलगमुत्किरामि यम्मे सबन्धुर्यमसबन्धुर्निचखानेदमहन्तं वलगमुत्किरामि यम्मे सजातो यमसजातो निचखानोत्कृत्याङ्किरामि ।।५/२३।। रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान्रक्षोहणो वो वलगहनोऽवनयामि वैष्णवान्रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवान्रक्षोहणौ वां वलगहना उपदधामि वैष्णवी रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी वैष्णवमसि वैष्णवा स्थ।।५/२५।। रक्षसां भागोसि निरस्तँ रक्षऽइदमहँ रक्षोभितिष्ठामीदमहँ रक्षोवबाधऽइदमहँ रक्षोधमन्तमो नयामि ।। घृतेन द्यावापृथिवी प्रोर्णुवाथां वायो वेस्तोकानामग्निराज्यस्य वेतु

स्वाहा स्वाहाकृतेऽ ऊर्ध्वनभसम्मारुतङ्गच्छतम् ॥ २६/१९ ॥ रक्षोहा विश्वचर्षणिरभि योनिमयोहते । द्रोणे सधस्थमासदत् ॥ २६/२६ ॥ ॐ अयम्पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ ॥ पुञ्जिकस्थला च क्रतुस्थला चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिस्तेभ्यो नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥ १५/१५ ॥ अयन्दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानीग्रामण्यौ ॥ मेनका च सहजन्या चाप्सरसौ यातुधाना हेती रक्षांसि प्रहेतिस्तेभ्यो नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥ १५/१६ ॥ अयम्पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्यौ ॥ प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ व्याघ्रा हेतिः सर्पाः प्रहेतिस्तेभ्यो नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥ १५/१७ ॥ अयमुत्तरात्संयद्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्यौ ॥ विश्वाची च घृताची चाप्सरसावापो हेतिर्वातः प्रहेतिस्तेभ्यो नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥ १५/१८ ॥ अयमुपर्य्यर्वाग्वसुस्तस्य

येषां वातऽइषवः ॥ तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदी-

मिर्पवर्द्ध ॥ तेभ्यो दशप्राचीर्दशदक्षिणा दशप्रतीचीर्दशोदीचीर्दशो-र्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मो यश्चनो द्वेष्टितमेषाञ्जम्भेदध्मः ॥ ३३ ॥ अपसर्पन्तुतेभूतायेभूताभूमिसंस्थिताः । येभूताविघ्नकर्तारस्तेनश्यन्तु शिवाज्ञया । अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् । सर्वेषामवरोधेन रुद्रयागं समारभे ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः । स्थानादस्माद् व्रजन्त्वन्य-त्स्वीकरोमि भुवन्त्विमाम् । भूतानि राक्षसावापि येऽत्र तिष्ठन्ति केचन । ते सर्वेप्यपगच्छन्तु रुद्रयागं करोम्यहम् ॥ इत्येतैर्मन्त्रैरीशानादिसर्वदिक्षु विकिरेत् ॥ उदकोपस्पर्शः ॥ इति दिग्रक्षणम् ॥

॥ अथ पञ्चगव्यकरणं भूमिप्रोक्षणञ्च ॥

कांस्यपात्रे गोमूत्रं क्षिपेत्तत्रमन्त्रः—ॐभूर्भुवःस्वः—॥तत्सवितुर्वरे-ण्यम्भर्गोदेवस्य धीमहि॥धियोयोनः—प्रचोदयात्॥ ३६ ॥मन्त्रान्तेगोमूत्रं क्षिप्त्वा ततो गोमयं क्षिपेत्—ॐमा नस्तोके तनये मा नऽआयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः ॥ मा नो वीरान्रुद्र भामिनोवधीर्हविष्मं-न्तः सदमित्त्वा हवामहे॥ ११६ ॥मन्त्रान्ते गोमयं क्षिप्त्वा ततः क्षीरं क्षिपेत्—ॐआप्यायस्वसमेतुतेविश्वतः—सोमवृष्ण्यम्॥भवावाजस्यसङ्गथे॥ ११२ ॥ मन्त्रान्ते दुग्धं क्षिप्त्वा ततो दधि क्षिपेत्—ॐदधिक्राव्णोऽअकारिषञ्जि-ष्णोरश्वस्यवाजिनः—॥सुरभिनोमुखाकरत्प्रणऽआयूंषितारिषत्॥ ३२ ॥ मन्त्रान्ते दधि क्षिप्त्वा ततः आज्यं क्षिपेत्—ॐतेजोऽसिशुक्रमस्यमृतमसि धामनामासिप्रियन्देवानामनाधृष्टन्देवयजनमसि॥ ३१ ॥मन्त्रान्तेआज्यं क्षिप्त्वा ततः कुशोदकं क्षिपेत्—ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्बा-हुभ्यांपूष्णोहस्ताभ्याम्॥ १० ॥मन्त्रान्तेकुशोदकं क्षिप्त्वा ॐइति प्रणवेन

यज्ञकाष्ठेनालोड्य प्रणवेनाभिमन्त्र्य कर्मभूमिं यज्ञसंभारांश्च प्रोक्षयेत् तेर मन्त्राः—ॐ आपो हिष्ठा मयोभुव० ॥ यो वः—शिवतमो० ॥ तस्मा ऽअरंगमा-मवो० ॥ ११-११/२१ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ता-भ्याम् ॥ सरस्वत्यै वाचो यन्तुर्यन्त्रियै दधामि बृहस्पतेष्ट्वा साम्राज्ये-नाभिषिञ्चाम्यसौ ॥ ९/३० ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येना-भिषिञ्चामि ॥ १८/२७ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि ॥ ३/२० ॥ पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ॥ पवित्रेण शतायुषा ॥ पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ॥ पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥ १९/३७ ॥ अग्न ऽआयूंषि पवस ऽआ सुवोर्जमिषं च नः ॥ आरे बाधस्व दुच्छुनाम् ॥ १९/३८ ॥ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ॥ पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥ १९/३९ ॥ पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् ॥ अग्ने क्रत्वा क्रतूँ२ऽरनु ॥ १९/४० ॥ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ॥ ब्रह्म तेन पुनातु मा ॥ १९/४१ ॥ पवमानः सो ऽअद्य नः पवित्रेण विचर्षणिः ॥ यः पोता स पुनातु मा ॥ १९/४२ ॥ उभाभ्यां देव सवितः पवित्रेण सवेन च ॥ मां पुनीहि विश्वतः ॥ १९/४३ ॥

१ अत्र प्रोक्षणे यातुधाना पुनन्तुमेत्यष्टर्चेन पवमानसूक्तेन वा प्रोक्षणं युक्ततरम् ॥ आपोहिष्ठेति त्र्यृचेनैव प्रोक्षयेदिति रुद्रकल्पद्रुमाकारा ॥ आपोहिष्ठेति त्र्यृचेन, अद्भ्यः सम्भृत इत्युत्तरनारायणेन षड्ऋचेन च प्रोक्षणं प्रणवेनाभिमन्त्रणमिति खण्डदीक्षिता ॥ प्रतिष्ठाप्रकाशे तु धारणा पावमानाश्च मन्त्रा ऋक्शाखीया एव विद्यन्ते तदतीव मन्दम्—बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रचोदितम् । तस्य तावति शास्त्रार्थे कृते सर्वं कृतो भवेत् ॥ यः स्वशाखां परित्यज्य कुरुते कामकारतः । न स सिद्धिमवाप्नोति शाखारण्डः स उच्यते ॥ इत्यादि ज्ञेयम् ॥

ऄद्युदेवीपुंनतीद्वयाग्राघस्यांमिपावुडयस्तन्वोवीतपृष्ठा८॥तयामर्दन्त८ सधमादिपुष्ठयछंस्यांमुपतंयोरवीणाम् ॥ ३५ ॥ इत्यैतैर्मन्त्रैर्मण्डपभूमिं यज्ञसम्भारांश्च कुशैः सम्प्रोक्षयेत् ॥

अथ भूमिप्रार्थना—हस्तौ बद्धा भूमिं सम्प्रार्थयेत्–ॐस्योन.- पृथिविनो० ॥ ॐमुहीद्यौ?० ॥ इत्येताभ्याम् ऋग्भ्यां सम्प्रार्थयेत् ॥ ॐस्वस्ति नऽइन्द्रो० ॥ ॐदेवा आयान्तु ॥ यातुधाना अपयान्तु ॥ विष्णो देवयजनं रक्षस्व ॥ इति पठित्वा भूमौ मादेशं कुर्यात् ॥

अथ मण्डपपूजनम्—तत्रादौ आग्नेय्यां गणपतिपीठोपरि गणेशं षोडशोपचारैः पञ्चोपचारैर्वा सम्पूजयेत्॥ विधिमण्डपश्चेत् ईशानमध्य- स्तम्भादारभ्य सार्वभौतिकवलयन्तं विधिमण्डपपूजनं विधिवत् विधे- यम् ॥ छायामण्डपसत्त्वे तु विधिवत्पूजाभावः ॥ इच्छा चेत्स्तम्भद्वार- तोरणादीनां गन्धाक्षतपुष्पादिभिः पूजनं विधेयम् ॥ ततो वास्तुपीठे देवतापूजनं कुर्यात् ॥

---

१ हेमाद्रौ शान्तिसारे च–मण्डपं सम्प्रविश्याथ तोरणादि प्रपूज्य च । वास्तुयागं ततः कुर्यात्प्रासादे मण्डपेऽथवा ॥ २ वैष्णवसिद्धान्ते–गणेशपीठमाग्नेय्यां हस्तमात्रं तु कारयेत्। नैर्ऋत्यां वास्तुपीठञ्च तद्वत्कुर्याद्विचक्षण.॥ ३हयशीर्षपञ्चरात्रे–एकाशीति- पदं वास्तु गृहकर्मणि शस्यते।चतु·षष्टिपदं वास्तु प्रासादे देवभूभुजाम्॥ इति वचना- च्चतु.षष्टिपदवास्तुरचनाप्रकार एवात्र निरूपित ॥ सोमशम्भावपि–कुर्यात्कोष्ठचतुः- षष्टि. प्रासादे वास्तुकर्मणि । गृहेऽपि वर्तयेद्वास्तु किन्त्वेकाशीतिकोष्ठकैः । महाकपि- लपञ्चरात्रे–प्रासादार्थं चतु.षष्टिरेकाशीतिर्गृहे तथा ॥ अन्यत्रापि–एकाशीतिपदं कृत्वा वास्तुश्चैव गृहादिषु । चतु.षष्टिपदो वास्तुः प्रासादे ब्रह्मणा स्मृत. । राज- वल्लभे–ग्रामे भूपतिमन्दिरे च नगरे पूज्यश्चतु षष्टिकैरेकाशीतिपदैः समस्तभवने जीर्णे नवाब्ध्यशकैः ॥ प्रासादे तु शताशकैस्तु सकले पूज्यस्तथा मण्डपे कूपे षण्णवचन्द्रभागसहिते वाप्यां तडागे वने ॥ शान्ति चि०॥ दुर्गप्रतिष्ठाविषये निवेशे तथा महार्चासु च कोटिहोमे। मरौ च राष्ट्रेऽपि सिद्धक्षेत्रे वास्तुः सहस्रेण पदैः प्रपूज्य ॥ कपिलपञ्चरात्रे–सहस्राधिकहोमेषु वास्तुपीठं त्ववश्यकम् । देव्यर्चने हस्त-

अथ वास्तुपीठदेवतापूजनम्–सपत्नीको यजमानो मण्डपस्य नैर्ऋत्यकोणे कृतवास्तुपीठसमीपे पश्चिमाभिमुख उपविश्य आचम्य प्राणानायम्य सङ्कल्पयेत्–अद्यपूर्वोच्चारितवर्तमानशुभपुण्यतिथौ प्रारब्धस्य रुद्रयागाख्यस्य कर्मणः साङ्गतासिद्ध्यर्थं चतुःषष्टिपदे वास्तुपीठे [illegible] कारिष्ये॥वास्तुपीठस्या·

लोकपालाश्च सर्वतः।

नैर्ऋत्यां शङ्कुरोपणम्–

विशन्तु भूतले नागा लोकपालाश्च सर्वतः। मण्डपेऽत्रावतिष्ठन्तु ह्यायुर्बलकराः सदा॥ वायव्यां शङ्कुरोपणम्–विशन्तु भूतले नागा लोकपालाश्च सर्वतः। मण्डपेऽत्रावतिष्ठन्तु ह्यायुर्बलकराः सदा॥ ऐशान्यां शङ्कुरोपणम्–विशन्तु भूतले नागा लोकपालाश्च सर्वतः। मण्डपेऽत्रावतिष्ठन्तु ह्यायुर्बलकराः सदा॥ एवं चतुःकोणेषु शङ्कुरोपणं कृत्वा द्विगुणीकृतसूत्रेण सर्वेषां वेष्टनं कुर्यात्॥ आग्नेय्यादिरोपणक्रमेण शङ्कूनां पार्श्वे माषभक्तदध्योदनबलिदानम्–अग्निकोणशङ्कुसमीपे बलिं संस्थाप्य–ॐ अग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये तान्समाश्रिताः। बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम्॥ नैर्ऋत्यकोणशङ्कुसमीपे बलिं

---

मात्र पीठं योगिनीसम्भवम्॥ गौतमीये–यत्र कुण्डं तत्र वास्तुपीठं कुर्यात्प्रयत्नतः। स्थण्डिले चाल्पहोमे तु वास्तुपीठं कृताकृतम्॥ मण्डपवास्तुपीठं नवरेखात्मकं चतुःषष्टिकोष्ठात्मकम्॥ गृहवास्तुपीठं दशरेखात्मकमेकाशीतिपदम्॥

१ हस्तमात्रं द्विहस्तं वा पीठं कार्यन्तु नैर्ऋते॥ इति वास्तुशास्त्रे॥ द्विवप्रा हस्तविस्तृता द्वादशाङ्गुलोच्चा वेदी॥प्रथमो वप्रो षडङ्गुलोच्चः। द्वितीयस्त्र्यङ्गुलोच्चः। तदुपरि सप्ताङ्गुलोच्चा वास्तुवेदी। इति खण्डदीक्षितरुद्रपद्धतौ॥ वास्तुपीठं त्रयस्त्रिंशदङ्गुलं वा द्विहस्तमात्रं नाम चतुर्विंशदङ्गुलविस्तृतं द्वादशाङ्गुलोच्छ्रायं कुर्यात्॥ इति नारायणशङ्करभोलानाथकृतपौराणिकवास्तुशान्तौ॥

संस्थाप्य—ॐनैर्ऋत्याधिपतिश्चैव नैर्ऋत्यां ये च राक्षसाः। तेभ्यो बलिं प्रयच्छामि पुण्यमोदनमुत्तमम्॥वायव्यकोणशङ्कुसमीपे बलिं संस्थाप्य—ॐनमो वै वायुरक्षोभ्यो ये चान्ये तान्समाश्रिताः। बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ॥ ऐशानकोणशङ्कुसमीपे बलिं संस्थाप्य—ॐरुद्रेभ्यश्चैव सर्वेभ्यो ये चान्ये तान्समाश्रिताः॥बलिं तेभ्यः प्रयच्छामि गृह्णन्तु सततोत्सुकाः॥ शङ्कुदेवताभ्यो नमः बलिं समर्पयामि। शङ्कुदेवताभ्यो नमः इति नाममन्त्रेण पञ्चोपचारैः पूजयेत् ॥

अथ रेखाकरणं पूजनञ्च—वास्तुपीठे वस्त्रं प्रसार्य कनकशलाकया रत्नेन रजतफलपुष्पाणामन्यतमेन वा पश्चिममारभ्य प्रागन्ताः उदक्संस्थाः समा अङ्गुलान्तरा नवरेखाः कुर्यात् ॥ तद्यथा—१ ॐ लक्ष्म्यै नमः ॥ २ ॐयशोवत्यै नमः ॥ ३ ॐकान्तायै नमः ॥ ४ ॐ सुप्रियायै नमः॥ ५ ॐविमलायै नमः॥ ६ ॐशिवायै नमः॥ ७ ॐसुभगायै नमः ॥ ८ ॐसुमत्यै नमः ॥ ९ ॐइडायै नमः ॥ ततो दक्षिणारम्भा उदगन्ताः प्राक्संस्था नवरेखाः कुर्यात्॥ तद्यथा—१ ॐधन्यायै नमः ॥ २ ॐप्राणायै नमः ॥ ३ ॐविशालायै नमः ॥ ४ ॐस्थिरायै नमः ॥ ५ ॐ भद्रायै नमः ॥ ६ ॐ जयायै नमः ॥ ७ ॐनिशायै नमः ॥ ८ ॐविरजायै नमः ॥ ९ ॐविभवायै नमः॥ ॐमनोजूतिः०॥[१/२]॥भो रेखादेवताः सुप्रतिष्ठिता वरदा भवत॥इति प्रतिष्ठाप्य ॐरेखादेवताभ्यो नमः इति नाममन्त्रेण पञ्चोपचारैः पूजयेत्॥

## अथ वास्तुमण्डलदेवतास्थापनप्रतिष्ठापूजनम् ॥

तत्र मध्यगं पदचतुष्टयमेकीकृत्य तत्कोणचतुष्टयाद्बहिः कोणचतुष्टये रेखाभिः पदान्युत्कृत्य शिख्यादिपञ्चचत्वारिंशद्देवताः स्थापयेत्॥१तमीशानमिति गौतमऋषिः जगतीछन्दः शिखी देवता शिख्यावाहने विनि-

१ मात्स्ये—गृहे प्रासादादौ च शिख्यादिक्रम एव विहितः॥ अन्यच्च—प्रासादादौ गृहे चैव शिख्यादिक्रम ईरितः ॥ २अत्रविष्ण्वर्चनकल्पलतोक्तमन्त्रक्रमः सङ्गृहीतः॥

योग॥ ॐतमीशानुजगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहेवयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये॥२६॥ईशान-पददक्षिणार्धे वास्तोः शिरसि–ॐभूर्भुवः स्वः शिखिने नमः शिखिनम्

१ वास्तोश्चतुरस्र शरीर देवा आरम्य स्थिता इति तदेतत्तपदे च तत्तद्देवानामा वाहनम्॥ तदुक्तं वास्तुशास्त्रे–ईशो मूर्ध्नि समाश्रित श्रवणयो पर्जन्यनामादिती आपस्तस्य गळे तदंसयुगले प्रोक्तो जयश्चादिति ॥ उक्तावर्यमभूधरौ स्तनयुगे स्यादापवत्सो हृदि पञ्चेन्द्रादिसुराश्च दक्षिणभुजे वामे च नागादय ॥ सावित्र सविता च दक्षिणकरे वामे द्वय रुद्रतो मृत्युर्मैत्रगणस्तयोरुविषये स्यान्नाभिपृष्ठे विधि॥ मेढ्रे शक्रजयौ च जानुयुगले तौ वह्निरोगौ स्मृतौ पूष्णो नन्दिगणाश्च सप्तविबुधा जङ्घ्यो पदे पैतृके॥ अथ नाममन्त्रेणावाहनम्–१ ऐशानकोणदक्षिणार्धपदे वास्तो शिरसि–ॐशिखिने नम शिखिनम् आवाहयामि स्थापयामि॥ २ तद्दक्षिणे सार्धपदे दक्षिणनेत्रे–ॐपर्जन्याय नम पर्जन्यम् आ० स्था०॥ ३तद्दक्षिणपदद्वये दक्षिणश्रोत्रे–ॐजयन्ताय नम जयन्तम् आ० स्था०॥ ४ तद्दक्षिणपदद्वये दक्षिणांसे–ॐकुलिशायुधाय नम कुलिशायुधम् आ० स्था० ॥ ५ तद्दक्षिणपदद्वये दक्षिणबाहौ–ॐ सूर्याय नम सूर्यम् आ० स्था० ॥ ६ तद्दक्षिणपदद्वये दक्षिणप्रबाहौ–ॐसत्याय नम सत्यम् आ० स्था०॥ ७तद्दक्षिणे सार्धपदे दक्षिणकूर्परे–ॐभृशाय नम भृशम् आ० स्था०॥ ८ तद्दक्षिणाग्नेयपदार्धे दक्षिणप्रबाहौ–ॐआकाशाय नम आकाशम् आ० स्था०॥ ९ तत्पश्चिमार्द्धे दक्षिणप्रबाहौ–ॐवायवेनम वायुम् आ० स्था०॥ १० तत्पश्चिमे सार्द्धपदे दक्षिणमणिबन्धे–ॐ पूष्णे नम पूषणम् आ० स्था०॥ ११ तत्पश्चिमपदद्वये दक्षिणपार्श्वे–ॐवितथाय नम वितथम् आ० स्थापयामि॥ १२ तत्पश्चिमपदद्वये दक्षिणपार्श्वे–ॐ गृहक्षताय नम गृहक्षतम् आ०स्थापयामि॥ १३ तत्पश्चिमपदद्वये दक्षिणोरुभागे–ॐयमाय नम यमम् आ०स्था०॥१४तत्पश्चिमे पदद्वये दक्षिणजानौ–ॐगन्धर्वाय नम गन्धर्वम् आ०स्था०॥१५तत्पश्चिमे सार्द्धपदे दक्षिणजङ्घायाम्–ॐभृङ्गराजाय नम भृङ्गराजम् आ० स्था०॥१६तत्पश्चिमनैऋत्यपदार्द्धे दक्षिणस्फिचि–ॐमृगाय नम मृगम् आ०स्था०॥१७तदुत्तरनैऋत्यार्द्धपदे

आवाहयामि स्थापयामि॥ भो शिखिन् इहा० इह०॥२महाँ२ऽइन्द्र इति भारद्वाजऋषिः त्रिष्टुप्छन्दः पर्जन्यो देवता पर्जन्यावाहने विनियोगः॥ ॐमहाँ२ऽइन्द्रोय ऽओजसापुर्ज्जन्योवृष्टिमाँ२ऽइव। स्तोमैर्वत्सस्यवावृधे॥ उपयामगृहीतोसि महेन्द्राय त्वैष ते योनिर्म्महेन्द्राय त्वा॥५॥तद्दक्षिण-सार्धपदे दक्षिणनेत्रे—ॐभूर्भुवःस्वः पर्जन्याय नमः पर्जन्यम् आवाहयामि स्थापयामि॥ भो पर्जन्य इहागच्छ इह तिष्ठ॥ ३ उदुत्यमितिप्रस्कण्वऋषिः गायत्रीछन्दः जयन्ती देवता जयन्तावाहने विनियोगः॥ ॐउदुत्यञ्जा-

पादतले—ॐपितृभ्यो नमः पितृन् आ०स्था०॥ १८ तदुत्तरे सार्द्धपदे वामस्फिचि—ॐदौवारिकाय नमः दौवारिकम् आ०स्था०॥ १९ तदुत्तरपदद्वये वामजङ्घायाम्—ॐसुग्रीवाय नमः सुग्रीवम् आ०स्था०॥२०तदुत्तरपदद्वये वामजानौ—ॐपुष्पदन्ताय नमः पुष्पदन्तम् आ०स्था०॥ २१ तदुत्तरपदद्वये वामोरौ—ॐ वरुणाय नमः वरुणम् आ०स्था०॥२२तदुत्तरपदद्वये वामपार्श्वे—ॐअसुराय नमः असुरम् आ०स्थापयामि॥ २३ तदुत्तरे सार्द्धपदे वामपार्श्वे—ॐ शोषाय नमः शोषम् आ०स्था०॥ २४ तदुत्तरे वायव्यपदार्द्धे—ॐपापाय नमः पापम् आ० स्था०॥ २५ तत्प्राक्पदार्द्धे वामबाहौ—ॐरोगाय नमः रोगम् आ०स्था०॥ २६तत्प्राक्सार्द्धपदे वामप्रबाहौ—ॐअहये नमः अहिम् आ०स्था०॥२७तत्प्राक्पदद्वयेवामकूर्परे—ॐमुख्यायनमः मुख्यम् आ०स्था०॥ २८तत्प्राक्पदद्वये वामबाहौ—ॐभल्लाटायनम. भल्लाटम् आ०स्था०॥२९तत्प्राक्पद-द्वये वामबाहौ—ॐसोमाय नमः सोमम् आ०स्था०॥ ३०तत्प्राक्पदद्वये वामांसे—ॐ सर्पायनमः सर्पम्आ०स्था०॥३१तत्प्राक्सार्द्धपदेवामश्रोत्रे—ॐअदित्यैनमः अदितिम् आ० स्था० ॥ ३२ तत्प्राक्अर्द्धपदेवामनेत्रे—ॐदित्यै नमः दितिम् आ०स्था०॥३३ मध्यपदेषु ईशानपदोत्तरार्द्धे मुखे—ॐआपाय नमः आपम् आ०स्था०॥ ३४आग्नेय-पदोत्तरार्धे दक्षिणहस्ते—ॐसावित्राय नमः सावित्रम् आ०स्था०॥ ३५नैर्ऋत्यपदो-त्तरार्धे—ॐजयाय नमः जयम् आ० स्थापयामि॥ ३६ वायव्यपदोत्तरार्धे वामहस्ते—ॐरुद्राय नमः रुद्रम् आ०स्था०॥ ३७मध्येप्राक्पदद्वये दक्षिणस्तने—ॐअर्यम्णे नमः

तवेदसंदुवंघंदन्तिरुतवं-।द्धेषि-श्वायुमूर्य्यम्॥३३॥तद्दक्षिणपदद्वये दक्षिणश्रोत्रे-ॐभूर्भुवः स्वः जयन्ताय नमः जयन्तम् आवाहयामि स्थाप०॥ भो जयन्त इहागच्छ इहतिष्ठ ॥ ४ इन्द्र आसान्नेतेति अप्रतिरथ ऋषिः त्रिष्टुप्छन्दः कुलिशायुधो देवता कुलिशायुधावाहने विनियोगः ॥ ॐइन्द्रऽआसान्नेताबृहस्पतिर्दक्षिणायज्ञःपुरऽएतु सोम-॥ देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्रम् ॥४०॥ तद्दक्षिणपदद्वये दक्षिणांसे-ॐभूर्भुवःस्वः कुलिशायुधायनमः कुलिशायुधम् आवाहयामि स्थापयामि ॥ भो कुलिशायुध इहागच्छ इह तिष्ठ॥ ५ सूर्यरश्मिरिति [illegible] ऋषि० त्रिष्टुप्छन्दः सूर्योदेवता सूर्यावाहने विनियोगः ॥ ॐसूर्य्यर[illegible] [illegible] पुरस्तात्सविता ज्योतिरुदयाँ२ऽ अजस्रम् ॥ तस्यपूषाप्रसवेयातिविद्वान्त्सम्पश्यन्विश्वाभुवनानिगोपाः॥४१॥ तद्दक्षिणपदद्वये दक्षिणबाहौ-ॐभूर्भुवः स्वः सूर्याय नमः सूर्यम् आवा० स्थापयामि॥ भो सूर्य इहागच्छ इह तिष्ठ॥ ६ व्रतेनदीक्षामिति भरद्वाजऋषिः अनुष्टुप्छन्दः सत्यो देवता सत्यावाहने विनियोगः ॥ ॐव्रतेन-

---

अर्यमणम् आ०स्था०॥ ३८आग्नेयपदपूर्वार्द्धे दक्षिणहस्ते-ॐसवित्रे नम सवितारम् आ०स्था०॥३९तत्पश्चिमपदद्वयेजठरदक्षिणे-ॐविवस्वतेनम विवस्वन्तम्आ०स्था०॥ ४० नैर्ऋत्यपदपूर्वार्द्धे-ॐविबुधाधिपाय नम विबुधाधिपम् आ०स्था०॥ ४१तदुत्तरपदद्वये जठरवामे-ॐमित्राय नम मित्रम् आ०स्था०॥ ४२ तदुत्तरे वायव्यपदपश्चिमार्द्धे वामहस्ते-ॐराजयक्ष्मणे नम राजयक्ष्माणम् आ०स्था०॥ ४३ तत्प्राक्पदद्वये वामस्तने-ॐपृथ्वीधराय नम पृथ्वीधरम् आ० स्था० ॥ ४४ ईशानपददक्षिणार्द्धे उरसि-ॐआपवत्साय नम आपवत्सम् आ० स्था० ॥ ४५ ततो मध्यपदचतुष्टये हृन्नाभ्यो-ॐब्रह्मणे नम ब्रह्माणम् आ० स्था०॥ ततो मण्डलाद्बहिः ईशान्याम्-

दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् । दक्षिणा श्रद्धामाप्नोति श्र-द्धया सत्यमाप्यते ॥३६॥ तद्दक्षिणपदद्वये दक्षिणमवाहौ–ॐभूर्भुवः स्वः सत्याय नमः सत्यम् आवाहयामि स्थापयामि॥भो सत्य इहागच्छ इह तिष्ठ ॥ ७ भायैदार्वाहारमिति मेधातिथिर्ऋषिः यजुश्छन्दः भृशो देवता भृशावाहने विनियोगः ॥ ॐभायै दार्वाहारम्प्रभाया॑ऽअग्न्येधम्ब्रध्नस्य विष्टपायाभिषेक्तारं वर्षिष्ठायनाकायपरिवेष्टारन्देवलोकायपेशितारम्म-नुष्यलोकाय प्रकरितारꣳसर्वेभ्योलोकेभ्यऽउपसेक्तारमवऽऋत्यैवधा-योपमन्थितारम्मेधायवासꣳपल्पूलीम्प्रकामायरजयित्रीम्॥३७॥तद्दक्षि-णेसार्द्धपदेदक्षिण कूर्परे ॐभूर्भुवः स्वः भृशाय नमः भृशम् आवाहयामि स्थाप०॥भो भृश इहागच्छ इहतिष्ठ॥८हं सः शुचिषदिति वामदेवऋषिः

---

४६ ॐचरक्यै नम चरकीम् आ०स्था०॥आग्नेय्याम्–४७ ॐविदार्यै नम विदारीम् आ०स्था०॥ नैर्ऋत्याम्–४८ ॐपूतनायै नमः पूतनाम् आ० स्था०॥ वायव्याम्–४९ ॐपापराक्षस्यै नमः पापराक्षसीम् आ० स्थापयामि ॥ ततः मण्डलाद्बहिः पूर्वे–५० ॐ स्कन्दाय नम स्कन्दम् आ० स्था० ॥ दक्षिणे–५१ ॐ अर्यम्णे नमः अर्यमणम् आ० स्था०॥ पश्चिमे–५२ ॐ जृम्भकाय नम जृम्भकम् आ० स्था०॥ उत्तरे–५३ ॐपिलिपिच्छाय नमः पिलिपिच्छम् आ० स्थापयामि ॥ तत पूर्वे–५४ ॐइन्द्राय नमः इन्द्रम् आ० स्था०॥ आग्नेय्याम्–५५ ॐ अग्नये नमः अग्निम् आ० स्था०॥ दक्षिणस्याम्–५६ ॐयमाय नम यमम् आ० स्थापयामि॥नैर्ऋत्याम्–५७ ॐनिर्ऋतये नमः निर्ऋतिम् आ०स्था० ॥ पश्चिमे–५८ ॐवरुणाय नम वरुणम् आ० स्था० ॥ वायव्याम्–५९ ॐवायवे नम वायुम् आ० स्था० ॥ उत्तरे–६० ॐकुबेराय नम कुबेरम् आ०स्था० ॥ ईशान्याम्–६१ ॐ ईश्वराय नम ईश्वरम् आ० स्थापयामि॥ पूर्वेशानयोर्मध्ये–६२ ॐब्रह्मणे नमः ब्रह्माणम् आ० स्थापयामि॥ निर्ऋतिपश्चिमयोर्मध्ये–६३ ॐअनन्ताय नमः अनन्तम् आवाहयामि स्थापयामि ॥

जगतीछन्दः आकाशो देवता आकाशावाहने विनियोगः॥ ॐहुꣳस? शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्॥नृषद्वरसदृतसद्व्यो- मसदब्जा गोजा ऽ ऋतजा ऽ अद्रिजा ऽ ऋतम्बृहत्॥ ॥तद्दक्षिणाग्नेय- पदार्धेदक्षिणमबाहौ–ॐभूर्भुवः स्वः आकाशाय नमः आकाशम् आवा० स्थापयामि॥ भो आकाश इहागच्छ इह तिष्ठ॥ ९ अप्स्वग्नइति विरूपाक्ष ऋषिः गायत्रीछन्दः वायुर्देवता वाय्वावाहने विनियोगः ॥ ॐअप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे ॥ गर्भे सञ्जायसे पुनः ॥ ॥ तत्पश्चिमार्द्धे दक्षिणमबाहौ–ॐ भूर्भुवः स्वः वायवे नमः वायुम् आवा० स्थापयामि॥ भो वायो इहागच्छ इह०॥ १० पूषापञ्चाक्षरेणेतिप्रजापति- ऋषिः यजुश्छन्दः पूषादेवता पूषावाहने विनियोगः॥ ॐपूषापञ्चाक्षरेण पञ्चदिशऽउदजयत्ताऽउज्जेषꣳ सवितापडक्षरेणषड्ऋतूनुदजयत्तानुज्जेष- म्मरुतः–सप्ताक्षरेणसप्तग्राम्म्यान्पशूनुदजयँस्तानुज्जेषम्बृहस्पतिरु- ष्टाक्षरेण गायत्रीमुदजयत्तामुज्जेषम्॥ ॥ तत्पश्चिमे सार्धपदे दक्षिणम- णिबन्धे–ॐ भूर्भुवः स्वः पूष्णे नमः पूषणम् आ०स्था०॥ भोपूषन्निहा- गच्छ इह तिष्ठ॥ ११ सवितामथमेहन्निति परमेष्ठी ऋषिः गायत्रीछन्दः वितथो देवता वितथावाहने विनियोगः ॥ ॐ सविता प्रथमेऽहन्न- ग्निर्द्वितीये वायुस्तृतीयऽआदित्यश्चतुर्थे चन्द्रमा? पञ्चमऽ ऋतु? षष्ठे मरुतः– सप्तमे बृहस्पतिरष्टमे ॥ मित्रो नवमे वरुणो दशमऽ इन्द्रऽ एकादशे विश्वेदेवा द्वादशे ॥ ॥ तत्पश्चिमपदद्वये दक्षिणपार्श्वे ॐभूर्भुवःस्वःवितथायनमःवितथम् आवाहयामि स्था०॥भोवितथ इहा० इह तिष्ठ ॥ १२ गृहामेतिबृहस्पतिऋषिः त्रिष्टुप्छन्दः गृहक्षतो देवता

गृहक्षतावाहने विनियोगः॥ॐगृहा मा बिभीत मा वेपध्वमूर्ज्जं बिभ्रत एमसि॥ऊर्ज्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः॥३॥
तत्पश्चिमपदद्वये दक्षिणपार्श्वे—ॐगृहक्षताय नमः गृहक्षतम् आवाहयामि स्थापयामि॥भो गृहक्षत इहागच्छ इह तिष्ठ॥ १३ असियमइति भार्गवो जमदग्निर्दीर्घतमा ऋषयः त्रिष्टुप्छन्दः यमो देवता यमावाहने विनियोगः ॥ ॐअसि यमोऽ अस्यादित्योऽ अर्वन्नसि त्रितो गुह्येन व्रतेन ॥ असि सोमेन समया विपृक्तऽ आहुस्ते त्रीणि दिवि बन्धनानि ॥२२॥
तत्पश्चिमपदद्वये दक्षिणोरुभागे—ॐभू०यमायनमः यमम् आ०स्था०॥ भोयमइ०इ०॥१४ग.धर्वस्त्वेतिप्रजापतिर्ऋषि.गायत्रीछन्द गन्धर्वोदेवता गन्धर्वावाहने विनियोगः॥ॐगन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽ ईडितः॥ इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडितः॥मित्रावरुणौ त्वोत्तरतः परिधत्तान्ध्रुवेण धर्म्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडितः॥३॥ तत्पश्चिमेपदद्वये दक्षिणजानौ—ॐगन्धर्वाय नमः गन्धर्वम् आवा०स्था०॥ भोगन्धर्व इहा०इह०॥ १५कस्त्वा युनक्तीति प्रजापतिर्ऋषिः यजुश्छन्दः भृङ्गराजो देवता भृङ्गराजावाहने विनियोगः॥ ॐ कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति॥कर्म्मणे वां वेषाय वाम्॥६॥तत्पश्चिमेसार्धपदे दक्षिणजङ्घायाम्—ॐ भृङ्गराजाय नमः भृङ्गराजम् आवाहयामि स्थापयामि॥भो भृङ्गराज इहागच्छ इहतिष्ठ॥ १६चन्द्रमामनस इति नारायणऋषिः अनुष्टुप्छन्दः मृगोदेवता मृगावाहने विनियोगः॥ॐचन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽ अजायत। श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥१२॥पश्चिमे नैर्ऋत्य-

पदार्द्धेदक्षिणस्फिचि—ॐभूर्भुवः० मृगायनमः मृगम् आवाहयामि स्था०॥ भो मृग इहागच्छइहतिष्ठ ॥ १७ पितृभ्यः स्वधेतिप्रजापत्यश्विसरस्वती-न्द्राऋषयःसर्वाणियजूंषिछन्दांसि पितरोदेवताःपित्रावाहनेविनियोगः॥ ॐपितृभ्यः- स्वधायिभ्यः- स्वधा नमः—पितामहेभ्यः- स्वधायिभ्यः-स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः—स्वधानमः—॥अक्षन्पितरोऽमी-मदन्तपितरोऽतीतृपन्तपितरः पितरः शुन्धध्वम्॥३६॥तदुत्तरार्द्धपदेपाद-तले—ॐभू० पितृभ्योनमःपितॄन् आवा०स्था०॥ भो पितरःइहागच्छत इहतिष्ठत॥ १८आब्रह्मन्निति प्रजापतिऋषिः यजुश्छन्दः दौवारिकोदेवता दौवारिकावाहनेविनियोगः॥ ॐआब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामा-राष्ट्रेराजन्यः शूरऽइषव्योऽतिव्याधी महारथोजायतान्दोग्ध्रीधेनुर्वोढा-नड्वानाशुः सप्तिः पुरन्धिर्योषाजिष्णूरथेष्ठाः सभेयोयुवास्ययजमानस्य वीरोजायतान्निकामेनिकामेनः पर्जन्योवर्षतुफलवत्यो नऽओषधयः पच्यन्तांयोगक्षेमोनः—कल्पताम् ॥२२॥ तदुत्तरेसार्द्धपदे वामस्फिचि—ॐभूर्भुवःस्वः दौवारिकाय नमः दौवारिकम् आवाहयामि स्थापयामि॥ भो दौवारिक इहागच्छ इह तिष्ठ ॥ १९ सुसमिद्धेति आङ्गिरसऋषिः गायत्रीछन्दः सुग्रीवो देवता सुग्रीवावाहने विनियोगः ॥ ॐसुस-मिद्धायशोचिषे घृतन्तीव्रञ्जुहोतन ॥ अग्नये जातवेदसे॥३॥ तदुत्तर-पदद्वये वामजङ्घायां—ॐभूर्भुवः० सुग्रीवाय नमः सुग्रीवम् आ०स्थाप०॥ भोसुग्रीव इहागच्छ इह तिष्ठ॥२०नक्षत्रेभ्य इति विरूपाक्षऋषिः अनुष्टु-छन्दः पुष्पदन्तो देवता पुष्पदन्तावाहने विनियोगः॥ ॐनक्षत्रेभ्यः नक्षत्रियेभ्यः स्वाहाहोरात्रेभ्यः स्वाहार्द्धमासेभ्यः स्वाहा मासेभ्यः स्वाहाऽऋतुभ्यः स्वाहार्तवेभ्यः स्वाहा संवत्सरायस्वाहा

द्यावापृथिवीभ्याᳬस्वाहा चन्द्राय स्वाहा सूर्याय स्वाहा रश्मिभ्यᳬस्वाहा वसुभ्यᳬस्वाहा रुद्रेभ्यᳬस्वाहादित्येभ्यᳬस्वाहा मरुद्भ्यᳬस्वाहा विश्वेभ्यो देवेभ्यᳬस्वाहा मूलेभ्यᳬस्वाहा शाखाभ्यᳬस्वाहा वनस्पतिभ्यᳬस्वाहा पुष्पेभ्यᳬस्वाहा फलेभ्यᳬस्वाहौषधीभ्यᳬस्वाहा ॥ ३६ ॥ तदुत्तरपदद्वये वायजानौ–ॐ भूर्भुवः स्वः पुष्पदन्ताय नमः पुष्पदन्तम् आ० स्थापयामि ॥ भो पुष्पदन्त इहागच्छ इह तिष्ठ ॥ २१ वरुणस्योत्तम्भनमिति गौतम ऋषिः यजुश्छन्दः वरुणो देवता वरुणावाहने विनियोगः ॥ ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनी स्थो वरुणस्य ऽऋतसदन्यसि वरुणस्य ऽऋतसदनमसि वरुणस्य ऽऋतसदनमासीद ॥ ३६ ॥ तदुत्तरपदद्वये वायोरौ–ॐ भूर्भुवः स्वः वरुणाय नमः वरुणम् आ० स्थापयामि ॥ भो वरुण इहागच्छ इह तिष्ठ ॥ २२ येरुपाणीति प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः असुरो देवता असुरावाहने विनियोगः ॥ ॐ ये रूपाणि प्रतिमुञ्चमाना ऽअसुराᳬसन्तः स्वधया चरन्ति ॥ परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ ३६ ॥ तदुत्तरपदद्वये वामपार्श्वे–ॐ भू० असुराय नमः असुरम् आ० स्था० ॥ भो असुर इहा० इह० ॥ २३ असवे स्वाहेति मिरूपाक्षऋषिः अनुष्टुप्छन्दः शोषो देवता शोषावाहने विनियोगः ॥ ॐ असवे स्वाहा वसवे स्वाहा विभुवे स्वाहा विवस्वते स्वाहा गणश्रिये स्वाहा गणपतये स्वाहाभिभुवे स्वाहाधिपतये स्वाहा शूषाय स्वाहा सᳬसर्प्पाय स्वाहा चन्द्राय स्वाहा ज्योतिषे स्वाहा मलिम्लुचाय स्वाहा दिवापतयते स्वाहा ॥ ३६ ॥ तदुत्तरे सार्धपदे वामपार्श्वे–ॐ भू० शोषाय नमः शोषम् आ० स्था० ॥ भो शोष इहा० इ० ॥ २४ अग्नेयुक्ष्वाहीति भरद्वाज ऋषिः गायत्री छन्दः पापो देवता पापावाहने विनियोगः ॥ ॐ अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः ॥ अरं वहं-

न्ति मुन्यवे॥२३॥ तदुत्तरे वायव्यपदार्द्धे—ॐभूर्भुवः स्वः पापाय नमः पापम् आ० स्था०॥ भो पाप इहागच्छ इह तिष्ठ ॥ २५ शिरोमे इति प्रजापतिर्ऋषिः अनुष्टुप् छन्दः रोगो देवता रोगावाहने विनियोगः॥ ॐशिरो मे श्रीर्य्यशो मुखन्त्विषिः केशाश्च श्मश्रूणि॥राजा मे प्राणोऽअमृतः सम्राट्चक्षुर्विराट्श्रोत्रम्॥ २५॥तत्पाश्वपदार्धे वामबाहौ—ॐभूर्भुवः स्वः रोगाय नमः रोगम् आवाहयामि स्थापयामि॥भो रोग इहागच्छ इह० ॥ २६ नमोस्तुसर्पेभ्य इति प्रजापतिर्ऋषिः अनुष्टुप्छन्दः अहिर्देवता अह्यावाहने विनियोगः॥ ॐनमोस्तु सर्पेभ्यो ये के च पृथिवीमनु॥येऽ अन्तरिक्षे ये दिवि तेभ्यः—सर्पेभ्योनमः—॥ ६॥तत्पार्श्वार्द्धपदे वामप्रवाहौ—ॐ भूर्भुवः स्वः अहये नमः अहिम् आ० स्थापयामि॥ भो अहे इहागच्छ इह तिष्ठ॥ २७ इषेत्वेति प्रजापतिर्ऋषिः यजुश्छन्दः मुख्यो देवता मुख्यावाहने विनियोगः ॥ ॐ इषे त्त्वोर्ज्जे त्त्वा वायव स्स्थ देवो वः— सविता प्रार्प्पयतु श्रेष्ठतमाय कर्म्मणऽ आप्प्यायध्वमघ्न्याऽ इन्द्राय भागम्प्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽईशतमाघशꣳसो ध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्य्यजमानस्यपशून्पाहि॥१॥ तत्पार्श्वपदद्वये वामकूर्परे—ॐभू० मुख्याय नमः मुख्यम् आ०स्थापयामि॥भो मुख्य इहागच्छ इहतिष्ठ॥२८घृताच्यसीति प्रजापतिर्ऋषिः यजुश्छन्दः भल्लाटो देवता भल्लाटावाहने विनियोगः ॥ ॐघृताच्च्यसि जुहूर्न्नाम्नासेदम्प्रियेणधाम्नाप्प्रियꣳसदऽ आसीदघृताच्च्यस्युपभृन्नाम्नासेदम्प्रियेण धाम्नाप्प्रियꣳसदऽआसीदघृताच्च्यसिध्रुवानाम्ना सेदम्प्रियेण धाम्ना प्प्रियꣳसदऽआसीदम्प्रियेण धाम्ना प्प्रियꣳसदऽआसीद॥ध्रुवाऽअसदन्नृतस्ययोनौताविष्णोपाहिपाहियज्ञम्पाहियज्ञपतिम् पाहिमायज्ञन्यम्॥ ६॥

तत्मावपदद्वये वामबाहौ—ॐभूर्भुवः स्वः भल्लाटाय नमः भल्लाटम् आवाहयामि स्थापयामि ॥ भो भल्लाट इहागच्छ इह तिष्ठ ॥

२९ वयᳪसोमेति बन्धुर्ऋषिः गायत्री छन्दः सोमो देवता सोमावाहने विनियोगः ॥ ॐवयᳪ सोम व्रुते तव मनस्तनूषु बिभ्रतः ॥ प्रजावन्तᳪ सचेमहि ॥५६॥ तत्मावपदद्वये वामबाहौ—ॐभूर्भुवः स्वः सोमायनमः सोमम् आवाहया० स्थापयामि॥भोसोम इहागच्छइहतिष्ठ॥

३० विष्णोर्नुकमिति दीर्घतमा ऋषिः त्रिष्टुप्छन्दः सर्पो देवता सर्पावाहने विनियोगः॥ ॐविष्णोर्नुकं वीर्य्याणि प्रवोचं यः पार्थिवानि विममे रजाᳪसि॥ योऽअस्कभायदुत्तरᳪ सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा ॥१८॥ तत्मावपदद्वये वामांसे—ॐभूर्भुवः स्वः सर्पाय नमः सर्पम् आवाहयामि स्थापयामि ॥ भो सर्प इहागच्छ इह तिष्ठ॥

३१ अदितिर्द्यौरिति गौतमऋषिः त्रिष्टुप्छन्दः अदितिर्देवता अदित्यावाहने विनियोगः ॥ ॐअदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः॥ विश्वेदेवाऽ अदितिᳪ पञ्चजनाऽ अदितिर्ज्जातमदितिर्ज्जनित्वम्॥२३॥तत्मावसार्द्धपदे वामश्रोत्रे—ॐभूर्भुवःस्वः अदित्यै नमः अदितिम् आवाहयामि स्थापयामि॥ भो अदिते इहागच्छ इह तिष्ठ॥

३२ ये देवा इति प्रजापतिर्ऋषिः अनुष्टुप्छन्दः दितिर्देवता दित्यावाहने विनियोगः ॥ ॐये देवा देवेष्वधि देवत्वमायन्ये ब्रह्मणः पुरऽ एतारोऽ अस्य॥येभ्यो नऽऋते पवते धाम किञ्चन न ते दिवो न पृथिव्याऽ अधि स्नुषु॥१४॥ तत्माक् अर्द्धपदे वामनेत्रे—ॐभूर्भुवः स्वः दित्यै नमः दितिम् आवाहयामि स्थापयामि ॥ भो दिते इहागच्छ इह तिष्ठ ॥

३३ आपोहिष्ठेति सिन्धुद्वीपऋषिःगायत्रीछन्दः आपोदेवता आपावाहने विनियोगः॥ ॐआपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन॥ महेरणाय चक्षसे ॥३३॥ मध्यपदेषु ईशानपदोत्तरार्द्धे मुखे–ॐ भूर्भुवः स्वः आपाय नमः आपम् आवाहयामि स्थापयामि॥भो आप इहा० इहतिष्ठ॥

३४ वसोः पवित्रमिति परमेष्ठी प्रजापतिर्ऋषिः अनुष्टुप्छन्दः सावित्री देवता सावित्रावाहने विनियोगः॥ ॐवसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् ॥ देवस्त्वासविता पुनातु वसोः पवित्रेण शतधारेण सुप्वाकामधुक्षः॥३४॥ आग्नेयपदोत्तरार्द्धे दक्षिणहस्ते–ॐभूर्भुव स्वः सावित्राय नमः सावित्रम् आवाहयामि स्थापयामि ॥ भो सावि इहागच्छ इह तिष्ठ ॥

३५ यदक्रन्द इति भार्गवो जमदग्निर्दीर्घतमा ऋषयः त्रिष्टुप्छन्द जयो देवता जयावाहने विनियोगः॥ॐयदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्रादुत वा पुरीषात् ॥ श्येनस्य पक्षा हरिणस्य बाहूऽ उपस्तुत्यम्महि जातन्तेऽ अर्वन्॥३५॥नैर्ऋत्यपदोत्तरार्द्धे वृषणयोः–ॐभूर्भुवःस्वः जयायनमः जयम् आवाहयामि स्थापयामि॥भोजय इहागच्छइहतिष्ठ॥

३६ यातेरुद्रेति परमेष्ठी ऋषिः अनुष्टुप्छन्दः रुद्रो देवता रुद्रावाहने विनियोगः॥ॐयातेरुद्रशिवा तनूरघोरापापकाशिनी ॥ तयानस्तन्वाशन्तमया गिरिशन्ताभिचाकशीहि ॥३६॥ वायव्यपदोत्तरार्द्धे वामहस्ते–ॐभूर्भुवः स्वः रुद्राय नमः रुद्रम् आवा० स्थापयामि॥भो रुद्र इ०इ०॥

३७ अर्य्यमणमिति प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः अर्यमा देवता अर्यमावाहने विनियोगः॥ॐअर्य्यमणम्बृहस्पतिमिन्द्रन्दानायचोदय॥ वाचं विष्णुꣳसरस्वतीꣳसवितारञ्च वाजिनꣳ स्वाहा॥३७॥मध्ये प्राक्पदद्वये

दक्षिणस्तने–ॐभूर्भुवः स्वः अर्यम्णे नमः अर्यमणम् आवाहयामि स्थापयामि ॥ भो अर्यमन् इहागच्छ इह तिष्ठ ॥

३८ उदुत्यमिति प्रस्कण्वऋषिः गायत्रीछन्दः सविता देवता सवित्रावाहने विनियोगः॥ ॐउदुत्यञ्जातवेदसन्देवं वहन्ति केतवः॥ दृशे विश्वाय सूर्य्यम् ॥ ३३ ॥ आग्नेयपदपूर्वार्द्धे दक्षिणहस्ते–ॐभूर्भुवः स्वः सवित्रेनमःसवितारम् आवाहयामि स्था०॥भो सवितः इहा० इहतिष्ठ॥

३९ असियम इति भार्गवो जमदग्निर्दीर्घतमाऋषयः त्रिष्टुप्छन्दः विवस्वान्देवता विवस्वदावाहने विनियोगः ॥ ॐअसि यमोऽ अस्यादित्योऽ अर्वन्नसि त्रितो गुह्येन व्रतेन ॥ असि सोमेन समया विपृक्तऽ आहुस्ते त्रीणि दिवि बन्धनानि ॥ ३४ ॥ तत्पश्चिमद्वये जठरदक्षिणे–ॐभूर्भुवः स्वः विवस्वते नमः विवस्वन्तम् आवाहयामि स्थापयामि॥ भो विवस्वन् इहागच्छ इह तिष्ठ ॥

४० सबोधिसूरिरिति सोमाहुतिर्ऋषिः उष्णिक्छन्दः विबुधाधिपतिर्देवता विबुधाधिपत्यावाहने विनियोगः॥ॐ स बोधि सूरिर्म्मघवा वसुपते वसुदावन्॥युयोध्यस्मद्द्वेषाᳬसि विश्वकर्म्मणे स्वाहा ॥ ३५ ॥ नैर्ऋत्यपदपूर्वार्द्धे स्तनयोः–ॐभूर्भुवःस्वः विबुधाधिपाय नमः विबुधाधिपम् आवाहयामि स्थापयामि॥ भो विबुधाधिप इहागच्छ इह तिष्ठ॥

४१ मित्रस्येति दध्यङ्ङाथर्वणऋषिः यजुश्छन्दः मित्रोदेवता मित्रावाहने विनियोगः॥ ॐ मित्रस्य चर्षणीधृतोवो देवस्य सानसि॥ द्युम्नञ्चित्रश्रवस्तमम् ॥ ३६ ॥ तदुत्तरपदद्वये जठरवामभागे–ॐभूर्भुवः स्वः मित्राय नमः मित्रम् आवाहयामि स्था०॥भो मित्र इहागच्छ इह तिष्ठ॥

४२ नाशयित्रीति आथर्वणभिषक्ऋषिः अनुष्टुप्छन्दः राजयक्ष्मा देवता राजयक्ष्मावाहने विनियोगः ॥ ॐनाशयित्री बुलासस्याशसऽ उपचितामसि ॥ अथो शतस्य यक्ष्माणाम्पाकारोरसि नाशनी ॥ ६९ ॥ तदुत्तरे वायव्यपदपश्चिमार्द्धे वामहस्ते–ॐभूर्भुवः स्वः राजयक्ष्मणे नमः राजयक्ष्माणम् आवाहयामि स्था०॥भो राजयक्ष्मन् इहागच्छ इहतिष्ठ॥

४३ यद्ग्राम इति प्रजापतिर्ऋषिः अनुष्टुप्छन्दः पृथ्वीधरो देवता पृथ्वीधरावाहने विनियोगः ॥ यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये ॥ यदेनश्चकृमा वयमिदन्तदवयजामहे स्वाहा ॥ ४५ ॥ तत्प्राक्पदद्वये वामस्तने–ॐभूर्भुवः स्वः पृथ्वीधराय नमः पृथ्वीधरम् आवाहयामि स्थापयामि ॥ भो पृथ्वीधर इहागच्छ इह तिष्ठ ॥

४४ इमम्म इति शुनःशेपऋषिः गायत्रीछन्दः आपवत्सो देवता आपवत्सावाहने विनियोगः ॥ ॐइमम्मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युरा चके ॥१॥तत्प्राक् ईशानपददक्षिणार्द्धे उरसि–ॐभूर्भुवः स्वः आपवत्साय नमः आपवत्सम् आ०स्था०॥भो आपवत्स इ०इ०॥

४५ ब्रह्मजज्ञानमिति प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता ब्रह्मावाहने विनियोगः ॥ ॐब्रह्म जज्ञानम्प्रथमम्पुरस्ताद्वि सीमतः सुरुचो वेनऽ आवः ॥ स बुध्न्याऽ उपमाऽ अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥३॥ मध्यपदचतुष्टये हृन्नाभ्योर्मध्ये–ॐभूर्भुवः स्वः ब्रह्मणे नमः ब्रह्माणम् आवाहयामि स्थापयामि॥ भो ब्रह्मन् इहागच्छ इह तिष्ठ ॥ इति पञ्चचत्वारिंशन्मण्डलदेवतास्थापनम् ॥

## ॥ अथ मण्डलाद्बहिःश्वेतपरिधौ ईशानादिविदिक्षुदेवता-स्थापनम् ॥

४६ इन्धानास्त्वेति अवत्सारऋषिः पङ्क्तिश्छन्दः चरकी देवता चरक्यावाहने विनियोगः ॥ ॐइन्धानास्त्वा शतꣳ हिमा द्युमन्तꣳ समिधीमहि॥वयंस्वन्तो वयस्कृतꣳ सहस्वन्तꣳ सहस्कृतम्॥ अग्ने सपत्नदम्भनमदब्धासोऽ अदाभ्यम् ॥ चित्रावसो स्वस्ति ते पारमशीय॥[३/१८]॥ मण्डलाद्बहिः ईशानकोणे–ॐ भूर्भुवः स्वः चरक्यै नमः चरकीम् आवाहयामि स्थापयामि ॥ भो चरकि इहागच्छ इह तिष्ठ ॥

४७ अहुन्वन्तमिति विवस्वानृषिः त्रिष्टुप्छन्दः विदारी देवता विदार्यावाहने विनियोगः॥ ॐअसुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य ॥ अन्यमस्मदिच्छ सा तऽ इत्या नमो देवि निर्ऋते तुभ्यमस्तु॥[१२/६२]॥मण्डलाद्बहिः आग्नेयकोणे–ॐभूर्भुवःस्वः विदार्यै नमः विदारीम् आवाहयामि स्थापयामि॥ भो विदारि इहागच्छ इह तिष्ठ॥

४८ कयानश्चित्र इति वामदेवऋषिः गायत्री छन्दः पूतना देवता पूतना[illegible]

कया [illegible]

पूतनायै नमः पूतनाम् आ०स्थापयामि॥भो पूतने इहागच्छ इह तिष्ठ॥

४९ इन्द्रऽआसामिति अप्रतिरथऋषिः त्रिष्टुप्छन्दः पापराक्षसी देवता पापराक्षस्यावाहने विनियोगः ॥ ॐइन्द्रऽआसान्नेता बृहस्पतिर्दक्षिणा यज्ञः पुरऽ एतु सोमः॥देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्रम् ॥ [१७/४०] ॥ मण्डलाद्बहिः वायव्यकोणे–ॐभूर्भुवः स्वः पापराक्षस्यै नमः पापराक्षसीम् आ०स्था०॥भोपापराक्षसि इ०ग०इ०॥

अथ मण्डलाद्बहिः श्वेतपरिधौ पूर्वादिदिक्षु देवतास्थापनम् ।

५० त्वन्नोऽअग्न इति वामदेवऋषिः त्रिष्टुप्छन्दः स्कन्दो देवता स्कन्दावाहने विनियोगः ॥ ॐत्वन्नोऽ अग्ने वरुणस्य विद्वान्देवस्य हेडोऽ अवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत् ॥ ३ ॥ मण्डलाद्बहिः पूर्वे–ॐ भूर्भुवः स्वः स्कन्दाय नमः स्कन्दम् आवाहयामि स्था०॥भो स्कन्द इहा०इहतिष्ठ॥

५१ यदद्य सूर इति वसिष्ठऋषिः निचृद्गायत्रीछन्दः अर्यमा देवता अर्यमावाहने विनियोगः॥ॐयदद्य सूरऽउदितेनागा मित्रोऽ अर्य्यमा॥ सुवाति सविता भगः ॥३३॥ मण्डलाद्बहिः दक्षिणे–ॐअर्यम्णे नमः अर्यमणम् आवाहयामि स्थापयामि॥ भो अर्यमन् इहागच्छ इह तिष्ठ॥

५२ सरोभ्यइत्यस्य नारायणऋषिः भुरिगतिधृतिश्छन्दः जृम्भको देवता जृम्भकावाहने विनियोगः–ॐसरोभ्यो धैवरमुपस्थावराभ्यो दाशं वैशन्ताभ्यो बैन्दं नड्वलाभ्यः शौष्कलम्पाराय मार्गारमवाराय केवर्त्तन्तीर्थेभ्यऽ आन्दं विषमेभ्यो मैनालꣳ स्वनेभ्यः पर्णकङ्कु-हाभ्यः किरातꣳ सानुभ्यो जम्भकम्पर्वतेभ्यः किम्पूरुषम् ॥१६॥ मण्डलाद्बहिः पश्चिमे—ॐ भूर्भुवः स्वः जृम्भकाय नमः जृम्भकम् आवाहयामि स्थापयामि ॥ भो जृम्भक इहागच्छ इह तिष्ठ ॥

५३ रक्षोहणमिति वसिष्ठऋषिः यजुश्छन्दः पिलिपिच्छो देवता पिलिपिच्छावाहने विनियोगः॥ॐरक्षोहणं वलगहनं वैष्णवीमिदमहन्तं

१ विश्वकर्मप्रकाशे–पश्चिमे रक्तवर्णस्तु जृम्भकः परिकीर्तितः । सरोभ्यो धैवरं मन्त्रं समुच्चार्य प्रपूजयेत् ॥ काईमरेति मन्त्रेण ह्युत्तरे पिलिपिच्छकः ॥

र्ब्लुगमुत्किरामि यम्मे निष्ट्यो यमुमात्यो निचुखानेदमुहन्तं र्ब्लुगमुत्किरामि यम्मे समानो यमसंमानो निचुखानेदमुहन्तं र्ब्लुगमुत्किरामि यम्मे सबन्धुर्य्यमसंबन्धुर्निचुखानेदमुहन्तं र्ब्लुगमुत्किरामि यम्मे सजातो यमसंजातो निचुखानोत्कृत्याङ्किरामि ॥ ३/५ ॥ मण्डलाद्बहिः उत्तरे–ॐभूर्भुवः स्वः पिलिपिच्छाय नमः पिलिपिच्छम् आवाहयामि स्थापयामि ॥ भो पिलिपिच्छ इहागच्छ इह तिष्ठ ॥

॥ अथ मण्डलाद्बहिः द्वितीयरक्तपरिधौ इन्द्रादिदेवतास्थापनम् ॥

५४ त्रातारमितिगर्गऋषिः त्रिष्टुप्छन्दः इन्द्रो देवता इन्द्रावाहने विनियोगः॥ॐत्रातारुमिन्द्रमवितारुमिन्द्रꣳ हवे हवे सुहवꣳ शूरुमिन्द्रम्॥ ह्वयामि शुक्रम्पुरुहूतमिन्द्रꣳस्वुस्तिनो मुघवाधात्विन्द्रः॥२०/२०॥ मण्डलाद्बहिःपूर्वे–ॐभूर्भुवःस्वःइन्द्रायनमःइन्द्रम्आ०स्था०॥भोइन्द्र इ०इह०॥

५५ त्वन्नोऽग्न इति हिरण्यस्तूप आङ्गिरसऋषिः जगतीछन्दः अग्निर्देवता अग्न्यावाहने विनियोगः॥त्वन्नोऽ अग्ने तव देव पायुभिर्म्मुघोनो रक्ष तुन्वश्च वन्द्य ॥ त्राता तोकस्य तनये गवांमुस्यनिमेषꣳ रक्षमाणस्तव व्रुते॥३/३॥मण्डलाद्बहिः आग्नेय्याम्–ॐभूर्भुवःस्वः अग्नये नमः अग्निम् आवाहयामि स्थापयामि ॥ भो अग्ने इहागच्छ इह तिष्ठ ॥

५६ यमायेत्यस्य दधीचऋषिः आसुर्युष्णिक्छन्दः यमो देवता यमावाहने विनियोगः ॥ ॐयुमाय त्वाङ्गिरस्वते पितृमते स्वाहा ॥

---

१ विश्वकर्मप्रकाशे–या बाह्यदेवताः प्रोक्ताः प्रासादे ताः प्रपूजयेत् । दुर्गे देवालये चैव शल्योद्धारे तथैव च ॥ विशेषेणैव पूज्याश्च चतुःषष्टिपदे तथा ॥

स्वाहा घर्म्माय स्वाहा घर्म्मः पित्रे ॥ ५८ ॥ मण्डलाद्बहिः दक्षिणे—ॐ भूर्भुवःस्वः यमाय नमः यमम् आवा०स्था०॥भो यम इहागच्छइह०॥

५७ असुन्वन्तमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः निर्ऋतिर्देवता निर्ऋत्यावाहने विनियोगः॥ ॐअसुन्वन्तमयजमानमिच्छस्तेनस्येत्या-मन्विहि तस्करस्य॥ अन्यमस्मदिच्छ सा तऽ इत्या नमो देवि निर्ऋते तुब्भ्यमस्तु॥६२॥मण्डलाद्बहिः नैर्ऋत्याम्—ॐभूर्भुवःस्वःनिर्ऋतये नमः निर्ऋतिम् आवाहयामि स्थापयामि ॥ भो निर्ऋते इहागच्छ इह तिष्ठ॥

५८ तत्त्वायामीति शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणो देवता वरुणावाहने विनियोगः॥ॐतत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः॥अहेडमानो वरुणेह बोद्ध्युरुशᳪस मा नऽ आयुᳪ प्रमोषीᳪ ॥६३॥ मण्डलाद्बहिः पश्चिमे—ॐभूर्भुवः स्वः वरुणाय नमः वरुणम् आवाहयामि स्थापयामि ॥ भो वरुण इहागच्छ इह तिष्ठ ॥

५९ आनोनियुद्भिरित्यस्य वसिष्ठऋषिः त्रिष्टुप्छन्दः वायुर्देवता वाय्वावाहने विनियोगः ॥ ॐआ नो नियुद्भिः शतिनीभिरध्वरᳪ सहस्रिणीभिरुपयाहि यज्ञम्॥वायोऽ अस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिᳪ सदा नᳪ ॥६४॥ मण्डलाद्बहिः वायव्याम्—ॐभूर्भुवः स्वः वायवेनमः वायुम् आवाहयामि स्थापयामि॥भोवायोइहागच्छइहतिष्ठ॥

६० वयᳪसोमेत्यस्य बन्धुर्ऋषिः गायत्रीछन्दः सोमो देवता सोमा-वाहने विनियोगः ॥ ॐवयᳪ सोम व्रते तव मनस्तनूषु बिभ्रतᳪ॥ प्रजावन्तᳪ सचेमहि॥६५॥मण्डलाद्बहिः उत्तरे—ॐभूर्भुवः स्वः सोमाय नमः सोमम् आवाहयामि स्थापयामि॥ भो सोम इहागच्छ इह तिष्ठ॥

६१ तमीशानमित्यस्य गौतमऋषिः जगतीछन्दः ईशानो देवता ईशानावाहने विनियोगः ॥ ॐतमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे वयम्॥पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥३६॥ मण्डलाद्बहिः ईशान्याम्—ॐभूर्भुवः स्वः ईशानाय नमः ईशानम् आवाहयामि स्थापयामि॥ भो ईशान इहागच्छ इहतिष्ठ॥

६२ अस्मेरुद्रामेहनेत्यस्य प्रगाथऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता ब्रह्मावाहने विनियोगः ॥ अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः॥यःशंसते स्तुवते धायि पज्रऽइन्द्रज्येष्ठाऽअस्माँ२ऽ अवन्तु देवाः॥३३॥मण्डलाद्बहिः ईशानेन्द्रयोर्मध्ये—ॐभूर्भुवः स्वः ब्रह्मणेनमः ब्रह्माणम् आवाहयामि स्थापयामि॥ भो ब्रह्मन् इहागच्छ इह तिष्ठ ॥

६३ स्योनापृथिवीत्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः अनन्तो देवता अनन्तावाहने विनियोगः ॥ ॐस्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म्म सप्रथाः ॥३६॥ मण्डलाद्बहिः निर्ऋतिवरुणयोर्मध्ये—ॐभूर्भुवः स्वः अनन्ताय नमः अनन्तम् आवाहयामि स्थापयामि ॥ भो अनन्त इहागच्छ इह तिष्ठ ॥

प्रतिष्ठापनम्—ॐमनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञ०॥२॥ शिख्यादिवास्तुमण्डलदेवताः सुप्रतिष्ठिताः वरदाः भवत ॥

वास्तुमण्डलमध्ये ब्रह्मोत्तरे कलशस्थापनम् ॥

भूमिं स्पृष्ट्वा—ॐमहीद्यौः पृथिवीचनऽइमँय्यज्ञम्मिमिक्षताम्॥पिपृतान्नोभरीमभिः॥३२॥यवप्रक्षेपः—ॐओषधयः समवदन्तसोमेन० ॥९६॥

कलशस्थापनम्–ॐ आजिघ्र कलशं०॥४२/८॥कलशे जलपूरणम्–ॐ वरुणस्योत्तम्भनं०॥३६/४॥ गन्धप्रक्षेपः––ॐ त्वां गन्धर्वा०॥९८/१२॥ धान्यप्रक्षेपः–ॐ धान्यमसि धिनुहि०॥२०/१॥सर्वौषधिप्रक्षेपः–ॐ याऽओषधी:०॥७५/१२॥ दूर्वाप्रक्षेपः-ॐ काण्डात्काण्डात्प्र०॥२०/१३॥पञ्चपल्लवप्रक्षेपः–ॐ अश्वत्थे वो०॥४/३५॥सप्तमृत्प्रक्षेपः ॐ स्योना पृथिवि०॥२१/३५॥फलप्रक्षेपः–ॐ याः फलिनीर्या०॥८९/१२॥पञ्चरत्नप्रक्षेपः-ॐ परिवाजपतिः कवि०॥२५/११॥हिरण्यप्रक्षेपः–ॐ हिरण्यगर्भः सम०॥४/१३॥रक्तसूत्रेणवस्त्रेण चवेष्टयेत्-ॐ युवा सुवासाः परि०॥पूर्णपात्रमुपरिन्यसेत्–ॐ पूर्णा दर्वि परापत०॥४९/३॥ वरुणमावाहयेत्–तत्त्वायामीत्यस्य शुनःशेप ऋषिःत्रिष्टुप्छन्दःवरुणोदेवता वरुणावाहने विनियोगः॥ॐ तत्त्वांयामि०॥४९/१८॥ॐ भूर्भुवःस्वः अस्मिन्कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकम् आवाहयामि स्थापयामि॥ प्रतिष्ठापनम्––ॐ मनोजूतिर्जुषतामाज्यस्य०॥१३/२॥ॐ वरुणसुप्रतिष्ठितो वरदो भव॥ॐ भूर्भुवःस्वः वरुणाय नमः इत्यनेन पञ्चोपचारैः सम्पूज्य तत्त्वायामीति पुष्पाञ्जलिं समर्प्य अनेन पूजनेन वरुणः प्रीयताम् ॥ कलशाभिमन्त्रणपूर्वकदेवतावाहनम् ॥ अनामिकयाकलशं स्पृष्ट्वा–सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥ आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः॥कुक्षौ तु०॥अङ्गैश्च०॥अत्र गायत्री०॥ततो गायत्र्यादिभ्योनमः इत्यनेनपञ्चोपचारैरभ्यर्च्य कलशं प्रार्थयेत्–देवदानवसंवादे मथ्यमाने महोदधौ। उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम्॥त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः। त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाः

सर्पेत्तुकाः ॥ त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ॥ त्वत्प्रसादादिदं कर्म कर्तुमीहे जलोद्भव । सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ इति प्रार्थयेत् ॥ ततः स्वर्णमयवास्तोष्पतिमहारुद्रादिमूर्तीनामग्न्युत्तारणं प्राणप्रतिष्ठां च कुर्यात् ॥

अथ अग्न्युत्तारणम् ॥

देशकालौ स्मृत्वा आसां स्वर्णमयवास्तुमहारुद्रादिमूर्तीनां अग्नितपनताडनाघातादिदोषपरिहारार्थम् अग्न्युत्तारणं देवतासान्निध्यार्थं प्राणप्रतिष्ठां च करिष्ये॥मूर्तीर्घृतेनाभ्यज्य पात्रे निधाय तदुपरि दुग्धमिश्रितजलधारां पातयेत् ॥ समुद्रस्यत्वा हिमस्यत्वा इति द्वयोः मेधातिथिर्ऋषिः गायत्री छन्दः अग्निर्देवता ॥ उपज्मन्निति मेधातिथिर्ऋषिः त्रिष्टुप्छन्दः अग्निर्देवता ॥ अपामिदमित्यस्य मेधातिथिर्ऋषिः बृहतीछन्दः अग्निर्देवता॥अग्नेपावकेति वसुयुर्ऋषिः गायत्रीछन्दः अग्निर्देवता॥ सनः पावकेति मेधातिथिर्ऋषि निचृद्गायत्रीछन्दः अग्निर्देवता ॥ पावकयेति भरद्वाजऋषिः जगतीछन्दः अग्निर्देवता ॥ नमस्तइत्यस्य लोपामुद्राऋषिः बृहतीछन्दः अग्निर्देवता ॥ नृषदेवेडिति लोपामुद्राऋषिः दैवीबृहतीछन्द अग्निर्देवता ॥ येदेवेतिद्वयोः लोपामुद्राऋषिः जगती छन्दः अग्निर्देवता ॥ प्राणदाइत्यस्य प्रजापतिर्ऋषिः बृहतीवापङ्क्तिश्छन्दः अग्निर्देवता ॥ सर्वेषामग्न्युत्तारणे विनियोगः ॥

ॐसमुद्रस्य त्वावकयाग्ने परिव्ययामसि । पावको ऽअस्मभ्यꣳ शिवो भव॥१॥ हिमस्य त्वा जरायुणाग्ने परिव्ययामसि॥ पावको ऽअस्मभ्यꣳ शिवो भव॥२॥उप ज्मन्नुप वेतसेवतर नदीष्वा॥ अग्ने पित्तमपामसि

मण्डूकि ताभिरागहि सेमन्नो युज्ञम्पांवुकवर्णःशिवङ्कृधि॥१७॥अपामिदं न्ययनः समुद्रस्य निवेशनम्॥अन्याँस्तेऽ अस्मत्तपन्तु हेतयः पावकोऽ अस्मभ्यं शिवो भव॥१८॥अग्ने पावक रोचिषा मन्द्रया देव जिह्वया॥ आदेवान्वक्षि यक्षि च॥१९॥ स नः पावक दीदिवोऽग्ने देवाँ२ इहावह॥ उप यज्ञः हविश्च नः ॥२०॥ पावकया यश्चितयन्त्या कृपा क्षामन्नुरुचऽ उषसो न भानुना॥ तूर्वन्न यामन्नेतशस्य नू रणऽ आ यो घृणेन ततृषाणोऽ अजरः ॥२१॥ नमस्ते हरसे शोचिषे नमस्तेऽ अस्त्वर्चिषे ॥ अन्याँस्तेऽ अस्मत्तपन्तु हेतयः पावकोऽ अस्मभ्यः शिवो भव॥२२॥ नृषदे वेडप्सुषदे वेड् बर्हिषदे वेड्वनसदे वेड् स्वर्विदे वेट्॥२३॥ ये देवा देवानाँयज्ञिया यज्ञियानाᳬ संवत्सरीणमुप भागमासते ॥ अहुतादो हविषो यज्ञेऽ अस्मिन्त्स्वयं पिबन्तु मधुनो घृतस्य॥२४॥ ये देवा देवेष्वधि देवत्वमायन्ये ब्रह्मणः पुरऽएतारोऽ अस्य॥येभ्यो नऽऋते पवते धाम किञ्चन न ते दिवो न पृथिव्याऽ अधिस्नुषु ॥ २५ ॥ प्राणदाऽ अपानदा व्यानदा वर्चोदा वरिवोदा?॥अन्याँस्तेऽ अस्मत्तपन्तु हेतयः पावकोऽ अस्मभ्यः शिवो भव ॥ २६ ॥ इत्यग्न्युत्तारणम् ॥

## अथ प्राणप्रतिष्ठाप्रयोगः ॥

अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुरुद्राऋषयः । ऋग्यजुःसामानि छन्दांसि । पराप्राणशक्तिर्देवता । आं बीजं । ह्रींशक्तिः । क्रोंकीलकम् । आसु वास्तुमहारुद्रादिस्वर्णप्रतिमासु प्राणप्रतिष्ठापने विनियोगः ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हों ॐ क्षं सं हं सः ह्रीं

ॐ आं ह्रीं क्रों आसां मूर्तीनां प्राणा इह प्राणाः ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हों ॐ क्षं सं हं सः ह्रीं ॐ आं ह्रीं क्रों आसां मूर्तीनां जीवा इह स्थिताः ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हों ॐ क्षं सं हं सः ह्रीं ॐ आं ह्रीं क्रों आसां स्वर्णमयवास्तुमहारुद्रादिमूर्तीनां सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा॥ प्रणवस्य पञ्चदशावृत्तीः कुर्यात्॥

प्रतिष्ठापनम्—ॐमनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्त्वरिष्टं यज्ञᳬ समिमन्दधातु ॥ विश्वे देवासऽ इह मादयन्तामोँ३म्प्रतिष्ठ॥१३॥ ब्राह्मणम्—ॐमनोजूतिर्ज्जुषतामाज्यस्येति मनसावाऽइदᳬ सर्वमाप्तन्तन्मनसैवैतत्सर्वमाप्नोति । बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञᳬ समिमं दधात्विति यद्विच्छिन्नन्तत्सन्दधाति। विश्वेदेवासऽइहमादयन्तामिति सर्वेवैविश्वेदेवाः सर्वेणैवैतत्सन्दधातिसयदिकामयेतब्रूयात्प्रतिष्ठेतियद्युकामयेतापिनाद्रियेत ॥ शतपथब्राह्मणकाण्ड १ अध्याय ७ प्रपाठक ६ ब्राह्मण २ कण्डिका २२ ॥ ॐएषवैप्रतिष्ठानामयज्ञोयत्रैतेनयज्ञेनयजन्ते सर्वमेवप्रतिष्ठितम्भवति ॥ वास्तोष्पतिमहारुद्रादिदेवताः सुप्रतिष्ठिता वरदा भवत ॥

नेत्रोन्मीलनम्—ॐवृत्रस्यासि कनीनकश्चक्षुर्दाऽ असि चक्षुर्म्मे देहि ॥३॥ गन्धादिपञ्चोपचारान्दत्वा षोडशसंस्कारसिद्ध्यर्थं षोडशप्रणवावृत्तीः कृत्वा आसां स्वर्णमयवास्तुमहारुद्रादिमूर्तीनां षोडशसंस्काराः सम्पद्यन्ताम् ॥ इति प्राणप्रतिष्ठाप्रयोगः ॥

## अथ वास्तुदेवतापूजनप्रयोगः ॥

ततोऽन्यताम्रपात्रे वास्तुमूर्तिं संस्थाप्य ध्यानादारभ्य स्नानान्त मुपचारसमर्पणं तत्रैव पात्रे विधेयम् ॥

ध्यानम्—ॐआसीत्पूर्वं महादैत्यो वास्तुर्यज्ञापहारकः॥ स देवैर्नु काले न युद्धे हत्वा महीतले ॥ निपात्य बहुभिर्देवैर्निबद्धश्चतुरस्रकः। ईशाने मस्तकं न्यस्य नैर्ऋत्ये पादसम्पुटम् ॥ जानुनी कूर्परीकृत्य बाहुयुग्मं तथैव च । वायुप्राच्योस्ततो जानुं हृदये चाञ्जलिस्तथा ॥ पदीकृत्य च तस्योर्ध्वं स्वयं मुक्ताः सुराः स्थिताः ॥ ॐ भूर्भुवः स्व शिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः ध्यायामि ॥

आवाहनम्—वास्तोष्पत इति मैत्रावरुणिर्वसिष्ठऋषिः त्रिष्टुप्छन्द वास्तोष्पतिर्देवता वास्तोष्पत्यावाहने विनियोगः॥ ॐवास्तोष्पतेप्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवानः ॥ यत्त्वेमहे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे ॥ ॐनमो भगवते वास्तुपुरुषाय महा बलपराक्रमाय सर्वदेवाधिवासाश्रितशरीराय ब्रह्मपुत्राय सकल ब्रह्माण्डधारिणे भूभारार्पितमस्तकाय पुरपट्टनप्रासादगृहवापीसरः कूपादिसन्निवेशसान्निध्यकराय सर्वसिद्धिप्रदाय प्रसन्नवदनाय विश्व- म्भराय परमपुरुषाय शक्रवरदाय वास्तो नमस्ते नमस्ते ॥ ॐएह्येहि भगवन्वास्तो यज्ञेऽस्मिन्सर्वसिद्धये ॥ जानुनी कूर्परासक्तदिशि वातहुताशयोः ॥ आगच्छ भगवन्वास्तो सर्वदेवैरधिष्ठितः। भगवन्कुरु कल्याणं यज्ञेऽस्मिन्सन्निधो भव ॥ ॐ भूर्भुवः स्वः शिख्यादिमण्डल

देवतासहितवास्तुपुरुषाय नमः शिख्यादिमण्डलदेवतासहितवास्तुपुरुषमावाहयामि ॥

आसनम्—ॐवर्ष्मोऽस्मिसमानानामुद्यतामिवसूर्य्यः। इमन्तमभितिष्ठामियोमाकश्चाभिदासति ॥ नानारत्नसमायुक्तं कार्तस्वरविभूषितम्। आसनं कल्पितं भक्त्या मया दत्तं प्रगृह्यताम् ॥ ॐभूर्भुवः स्वः शिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः आसनं समर्पयामि ॥

पाद्यम्—ॐएतावानस्य महिमातो ज्यायाँश्च पूरुषः ॥ पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतन्दिवि ॥३॥ गङ्गादिसलिलाधारतीर्थमन्त्राभिमन्त्रितम्। दूरयात्राश्रमहरं पाद्यं दत्तं प्रगृह्यताम्॥ॐभूर्भुवः स्वः शिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः पाद्यं समर्पयामि ॥

अर्घ्यम्—ॐधामन्तेविश्वम्भुवनमधिश्रितमन्तः समुद्रेहृद्यन्तरायुषि॥ अपामनीके समिथे यऽ आभृतस्तमश्याम मधुमन्तन्तऽ ऊर्म्मिम्॥३३॥ सुगन्धपुष्पसिद्धार्थफलदूर्वादिभिर्युतम्। इदमर्घ्यं मया दत्तं भक्त्या तत्प्रतिगृह्यताम् ॥ ॐ शिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः अर्घ्यं समर्पयामि ॥

आचमनीयम्—ॐइमम्मे वरुण श्रुधी हवमद्या च मृडय॥ त्वामवस्युरा चके ॥ ३१ ॥ कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् ॥ आचम्यतां हि भो देवाः सौरभेयं मयाऽर्पितम्॥ ॐशिख्यादिमण्डलदेवतासहितवास्तुपुरुषायनमः आचमनीयं समर्पयामि ॥

पञ्चामृतस्नानम्—ॐघृतेन सीता मधुना समज्यतां० ॥ ६६ ॥

पयो दधि घृतं चैव मधु शर्करयान्वितम्। पञ्चामृतंमयादत्तंस्नानार्थंप्रति-गृह्यताम् ॥ ॐ शिख्यादिमण्डलदेवतासहितवास्तुपुरुषायनमः पञ्चामृतस्नानं समर्पयामि॥ पञ्चामृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

गन्धोदकस्नानम्—ॐगन्धर्वस्त्वा०॥१॥मलयाचलसम्भूतंचन्दनागरुवासितम्। गन्धोदकन्तु देवेश स्नानार्थं प्रतिगृह्यताम् ॥ ॐशिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः गन्धोदकस्नानं समर्पयामि। गन्धोदकस्नानान्ते शुद्धोदकस्नानंस०॥ शुद्धोदकस्नानान्ते आ०स०।

उद्वर्तनस्नानम्—ॐअंशुनाते८०॥३॥नानासुगन्धिद्रव्यञ्च चन्दकुङ्कुमान्वितम्। उद्वर्तनं मया दत्तं स्नानार्थं प्रतिगृह्यताम् ॥ ॐशिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः उद्वर्तनस्नानं समर्पयामि। उद्वर्तनस्नानान्ते उष्णोदकस्नानंसमर्पयामि॥ उष्णोदकस्नानान्तेशुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि। सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि॥ निर्माल्यमुत्तरेविसृजेत्।

अभिषेकः—ॐवास्तोष्पते० सुरास्त्वामभिषिञ्चन्तु० ॥ अमृताभिषेकोऽस्तु ॥ ॐशिख्यादिमण्डलदेवतासहितवास्तुपुरुषायनम अभिषेकस्नानं समर्पयामि ॥

स्नानम्—ॐशुद्धवालः८०॥३॥ गङ्गासरस्वतीरेवापयोष्णीनर्मदाजलैः। स्नापयामि महाभक्त्या प्रीयताञ्च सुरेश्वर॥ ॐशिख्यादिमण्डलदेवतासहितवास्तुपुरुषायनमः स्नानंसम०। स्नानान्ते आ०स०॥ ततमूर्तिं वस्त्रेण प्रमृज्य मण्डलस्थितकलशोपरि पूर्णपात्रे गन्धानुलेपनपूर्वंस्थापयेत् ॥

वस्त्रम्—ॐ सुजातोज्ज्योतिषासहशर्म्मवरूथमासदत्स्वः॥वासोऽअग्ने विश्वरूपꣳसंव्ययस्वविभावसो॥ २६॥सर्वभूषाधिके शुद्धे लोकलज्जानिवारणे । मयोपपादिते दिव्ये गृह्येतां वाससी त्वया ॥ॐशिख्यादिमण्डलदेवतासहितवास्तुपुरुषायनमःवस्त्रोपवस्त्रेसमर्पयामि ॥ वस्त्रान्ते आचमनीयंसम०॥

उपवीतम्—ॐयुञ्जते मनऽउत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः॥... आवोर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासदा॥ हिरण्येभ्यस्त्वा ॥ ॥ कार्पासतन्तुभिर्युक्तं ब्रह्ममन्त्राभिमन्त्रितम् । ब्रह्मसूत्रं मया दत्तं प्रीत्यर्थं प्रतिगृह्यताम् ॥ ॐशिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः उपवीतं समर्पयामि ॥ उपवीतान्ते आचमनीयं समर्पयामि ॥

गन्धः—ॐत्वाङ्गन्धर्वाऽ अखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥ ९६॥ श्रीखण्डश्चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं मया दत्तं प्रीत्यर्थं प्रतिगृह्यताम् ॥ ॐशिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः गन्धं समर्पयामि ॥

अक्षताः—ॐअक्षन्नमीमदन्त ह्यव प्रियाऽ अधूषत ॥ अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥ ५१॥ अक्षताश्च शुभाः श्रेष्ठाः कुङ्कुमाक्ताः सुशोभनाः । मया निवेदिता भक्त्या गृह्यन्तां प्रीतिहेतवे ॥ ॐशिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः अक्षतान् समर्पयामि ॥

पुष्पाणि—ॐओषधयः प्रतिगृभ्णीत पुष्पवतीः सुपिप्पलाः॥ अयंवो गर्भऽऋत्वियः प्रत्नꣳसधस्थमासदत् ॥ ७६ ॥ माल्यादीनि सुगन्धीनि नानावर्णयुतानि च । ऋतुद्भवानि पुष्पाणि पूजार्थं त्वं गृहाण वै ॥ ॐशिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः पुष्पाणि समर्पयामि ॥

सौभाग्यद्रव्याणि—ॐ अहिंरिव भोगैः पर्य्येति बाहुञ्ज्याया हेतिम्परि-बाधमानः ॥ हस्तुघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमांसम्परिपातु विश्वतः ॥ ५१ ॥ हरिद्राकुङ्कुमं चैव सिन्दूरादिसमन्वितम् । नानापरिमलद्रव्यं गृहाण पर-मेश्वर ॥ ॐ शिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः सौभाग्यद्र० स० ॥

आभूषणानि—ॐ स्वुर्णं घुर्म्मः स्वाहा स्वुर्णार्कः स्वाहा स्वुर्णं शुक्रः स्वाहा स्वुर्णं ज्योतिः स्वाहा स्वुर्णं सूर्य्यः स्वाहा ॥ ५२ ॥ नानाविधानि दिव्यानि नानारत्नोज्ज्वलानि च देहालङ्करणार्थाय भूषणान्यर्पयाम्यहम् ॥ ॐ शिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः आभूषणानि समर्पयामि ॥

धूपः—ॐ वुसवस्त्वा धूपयन्तु गायुत्रेण च्छन्दसाङ्गिरुस्वद्रुद्रास्त्वा धूप-यन्तु त्रैष्टुभेन च्छन्दसाङ्गिरुस्वदादित्यास्त्वा धूपयन्तु० ॥ ६६ ॥ वनस्पति-रसोद्भूतो गन्धाढ्यः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ ॐ शिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः धूपमाघ्रापयामि ॥

दीपः—ॐ चुन्द्रमाऽ अुप्स्वुन्तरा सुपर्णो धावते दिवि ॥ रयिम्पिशङ्गं-म्बहुलम्पुरुस्पृहुं हरिरेति कनिक्रदत् ॥ ६३ ॥ साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया । भक्त्या दीपं प्रयच्छामि गृहाण परमेश्वर ॥ ॐ शिख्या-दिमण्डलदेवतासहितवास्तुपुरुषाय नमः दीपं दर्शयामि ॥

नैवेद्यम्—ॐ अन्नपुतेन्नस्य नो देह्यनमीवस्य शुष्मिणः—० ॥ ६३ ॥ शर्करा-खण्डखाद्यादि दधिक्षीरघृतादिभिः । आहारैर्भक्ष्यभोज्यैश्च नैवेद्यं प्रतिगृह्य-ताम् ॥ देवताग्रे गोमयेन जलेन वा चतुष्कोणं मण्डलं कृत्वा तदुपरि नैवेद्यपात्रं

नायस्वाहा। कनिष्ठिकानामिकाङ्गुष्ठेन-ॐव्यानायस्वाहा। कनिष्ठातर्जन्यङ्गुष्ठेन ॐउदानायस्वाहा। साङ्गुष्ठाभिः सर्वाङ्गुलिभिः—ॐसमानाय०। ॐशिख्यादि-मण्डलदेवतासहितवास्तुपुरुषाय नमः नैवेद्यंनिवेदयामि। पूर्वापोशनंस०॥

नैवेद्यमध्येपानीयम्—एलोशीरलवङ्गादिकर्पूरपरिवासितम्। प्राश-नार्थं कृतं तोयं गृहाण परमेश्वर॥ ॐशिख्यादिमण्डलदेवतासहितवास्तु-पुरुषाय नमः नैवेद्यमध्ये पानीयं समर्पयामि॥ उत्तरापोशनं समर्पयामि॥ हस्तप्रक्षालनार्थं मुखप्रक्षालनार्थंचजलंसमर्पया०॥ करोद्वर्तनार्थं गन्धंस०॥

फलानि—ॐया? फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः॥ ६६॥ नानाविधानि दिव्यानि सुस्वादून्यार्तवानि च। जम्बीरदाडिमादीनि भक्ष्यार्थं सर्पयाम्यहम्॥ ॐशिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः फलानि समर्पयामि॥

मुखवासार्थेताम्बूलम्—ॐउतस्मास्यद्रवतस्तुरण्यत?पर्णन्नवेरनुवाति-प्रगर्द्धिनः॥ श्येनस्येवधजतोऽअङ्कसम्परिंदधिक्राव्णः सहोर्ज्जातरित्रतः स्वाहा॥ १५॥ नागवल्लीदलंदिव्यंपूगीफलसमन्वितम्। एलालवङ्गादियुतं ताम्बूलंप्रतिगृह्यताम्। ॐशिख्यादिमण्डलदेवतासहितवास्तु०ताम्बूलंस०॥

दक्षिणा—ॐयद्दत्तं यत्पराादानं यत्पूर्त्तं याश्च दक्षिणाः॥ तदग्निर्वै-श्वकर्म्मणः? स्वर्द्देवेषु नो दधत्॥ ६२॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभा-वसोः। अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे॥ ॐशिख्यादिमण्डल-देवतासहितवास्तुपुरुषाय नमः सुवर्णपुष्पदक्षिणां समर्पयामि॥

नीराजनम्—ज्वालामालिन्यै नमः गन्धाक्षतपुष्पाणि समर्पयामि॥ ॐआरात्रिपार्थिवꣳरजः पितुरप्रायिधामभिः॥ दिवः सदाꣳसिबृहती

व्रितिंष्ठसुऽ आच्चेषं व्रंचेतुं तमं–॥ ३३ ॥ कदलीगर्भसम्भूतं कर्पूरञ्च प्रदीपितम् । आरात्रिकमहं कुर्वे पश्य मे वरदो भव ॥ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च । त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यताम् ॥ ॐशिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः नीराजनं समर्पयामि ॥ पुष्पेण देववन्दनम् । आत्मवन्दनम् । हस्तप्रक्षालनम् ॥

मन्त्रपुष्पाञ्जलिः—ॐवास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोऽअनमीवो भवानः । यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशंचतुष्पदे ॥ पा० गृ० ॥ शिख्यादिवास्तुपीठस्थदेवताभिः सहैव ते । पुष्पाञ्जलिं प्रयच्छामि कर्मणः फलसिद्धये । ॐशिख्यादिमण्डलदेवतासहितवास्तुपु०मन्त्रपुष्पाञ्जलिंस० ।

प्रदक्षिणा—ॐसुप्तास्यासन्परिधयस्त्रिः सुप्त सुमिधः–कृताः ॥ देवा यद्युज्ञन्तन्वानाऽ अबध्नन्पुरुषम्पुशुम् ॥ १५ ॥ पदे पदे या परिपूजकेभ्यः सद्योऽश्वमेधादिफलंददाति।।तासर्वपापक्षयहेतुभूताप्रदक्षिणांतेपरितः करोमि ॥ ॐशिख्यादिमण्डलदेवतासहितवास्तुपुरुषायनमः प्रदक्षिणांसमर्प० ॥

विशेषार्घ्यम्—अर्घ्यपात्रे जलं प्रपूर्य तदुपरि गन्धाक्षतपुष्पहिरण्यसहितं नारिकेलं धृत्वा—वास्तोष्पते महादेव रक्ष त्रैलोक्यरक्षक । भक्तानामभयङ्कर्ता त्राता भव भवार्णवात् ॥ वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद । अनेन सफलार्घ्येण फलदोऽस्तु सदा मम ॥ ॐशिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः विशेषार्घ्यं समर्पयामि ॥

प्रार्थनापूर्वकनमस्कार—देवेश वास्तुपुरुष सर्वविघ्नविनाशक । शान्तिं कुरु सुखं देहि सर्वकामान्प्रयच्छ मे ॥ ॐशिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः प्रार्थनापूर्वकं नमस्करोमि ॥

राजोपचाराः—छत्रं च चामरं चैव व्यजनं दर्पणं तथा । पादुकादि

त्र सर्वाणि गृहाण परमेश्वर॥ ॐशिख्यादिमण्डलदेवतासहितवास्तुपुरुषाय नमः राजोपचारान्समर्पयामि ॥ ( अभावे कल्पयामि ॥ )

अर्पणम्—अनेन यथाज्ञानेन यथामीलितोपचारद्रव्यैः ध्यानावाहनासनपाद्यार्घ्याचमनीयस्नानवस्त्रोपवीतगन्धाक्षतपुष्पधूपदीपनैवेद्यताम्बूलदक्षिणाप्रदक्षिणामन्त्रपुष्परूपैः षोडशोपचारैः अन्योपचारैश्च कृतपूजनेन शिख्यादिमण्डलदेवतासहितवास्तुपुरुषः प्रीयतां न मम ॥

॥ मण्डलस्य ईशानदिग्भागे वास्तुदेवताभ्यः पायसबलिदानम् ॥

वास्तोष्पतये बलिदानम्—पत्रावल्यां पायसबलिं संस्थाप्य—ॐएह्येहि भगवन्वास्तो सपरिवार इमं मयोपनीतं बलिं गृहाण मम मण्डपमछिद्रं कुरु कुरु सकलदुष्टेभ्यो मां रक्ष रक्ष स्वाहा ॥ प्रार्थयेत्—यथा मेरुगिरेः शृङ्गे देवताः स्थिरतां गताः। तथा शिख्यादिभिः सार्कं मण्डपे मे स्थिरो भव॥

---

१ उक्ताभावे सर्वेषां पायसेनैव बलिदानम् । तदुक्तं मात्स्ये–पायसेनैव कर्तव्यं यथोक्तवस्त्वसम्भवे ॥ नाममन्त्राश्चतुर्थ्यन्ता नमोन्ताः प्रणवादिकाः । बलिकर्मणि वै शस्ता होमे स्वाहाधिकाः स्मृताः ॥ गारुडे– प्रणवादि नमोन्त च चतुर्थ्यन्त च सत्तम ॥ देवतायाः स्वकं नाम नाममन्त्रः प्रकीर्तितः ॥ तस्मात् चतुर्थ्यन्तैः नमोन्तैः नाममन्त्रैः बलिप्रदानं कार्यम् ॥ होमस्तु चतुर्थ्यन्तैः नमोन्तैः स्वाहान्तैरेव कार्यः तथैव खण्डदीक्षितमहारुद्रपद्धत्यादिषु दर्शनात् ॥ अत्र वास्तुस्थापनमावश्यकम् । वास्तुं प्रति विष्णुवाक्यम्– गृहप्रासादकूपेषु वाटिकामण्डपादिषु । तव पूजामकुर्वाणस्त्वाहारो भविष्यति ॥ मण्डपवास्तौ ताराभक्तितरङ्गिण्यां शरत्पद्धतिषु खण्डदीक्षितमहारुद्रे काशिदीक्षितमहारुद्रे कल्पद्रुमादिषु च ध्रुवस्थापनाभावाद्बलिदानाभावः ॥

तत्रैव मण्डलस्य ऐशान्याम् एकस्यां पत्रावल्यां शिख्यादित्रिषष्टि-वास्तुमण्डलदेवताभ्यो बलिं दद्यात्—

| | |
|---|---|
| १ ॐशिखिने नमः पायसबलिंस० | २० ॐपुष्पदन्तायनमःपा०ब०स० |
| २ ॐपर्जन्यायनमःपायसबलिंस० | २१ ॐवरुणायनमः पायसब०स० |
| ३ ॐजयन्तायनमःपायसबलिंस० | २२ ॐअसुरायनमः पायसब०स० |
| ४ ॐकुलिशायुधायनमःपा.ब.स० | २३ ॐशोषायनमः पायसबलिंस० |
| ५ ॐसूर्यायनमः पायसबलिंस० | २४ ॐपापायनमः पायसबलिंस० |
| ६ ॐसत्यायनमः पायसबलिंस० | २५ ॐरोगायनमः पायसबलिंस० |
| ७ ॐभृशायनमः पायसबलिंस० | २६ ॐअहयेनमः पायसबलिंस० |
| ८ ॐआकाशायनमःपायसब०स० | २७ ॐमुख्यायनमः पायसब०स० |
| ९ ॐवायवे नमः पायसबलिं स० | २८ ॐभल्लाटायनमःपायसब०स० |
| १० ॐपूष्णेनमः पायसबलिं स० | २९ ॐसोमायनमः पायसबलिंस० |
| ११ ॐवितथायनमः पायसब०स० | ३० ॐसर्पायनमः पायसबलिंस० |
| १२ ॐगृहक्षतायनमः पा०ब०स० | ३१ ॐअदित्यैनमःपायसबलिंस० |
| १३ ॐयमायनमः पायसबलिंस० | ३२ ॐदित्यैनमः पायसबलिंस० |
| १४ ॐगंधर्वायनमःपायसब०स० | ३३ ॐआपायनमः पायसबलिंस० |
| १५ ॐभृङ्गराजायनमःपा०ब०स० | ३४ ॐसावित्रायनमः पा०ब०स० |
| १६ ॐमृगायनमःपायसबलिं स० | ३५ ॐजयायनमः पायसबलिंस० |
| १७ ॐपितृभ्योनमः पा० ब० स० | ३६ ॐरुद्रायनमः पायसबलिंस० |
| १८ ॐदौवारिकायनमःपा.ब.स० | ३७ ॐअर्यम्णेनमःपायसबलिंस० |
| १९ ॐसुग्रीवायनमःपायसब०स० | ३८ ॐसवित्रेनमः पायसबलिंस० |

३९ ॐविवस्वतेनमः पायसब०स०
४० ॐविबुधाधिपायनमः पा.ब स.
४१ ॐमित्रायनमः पायसबलिंस०
४२ ॐराजयक्ष्मणेनमःपा०ब०स०
४३ ॐपृथ्वीधरायनमःपा०ब०स०
४४ ॐआपवत्सायनमःपा०ब०स०
४५ ॐब्रह्मणेनमः पायसबलिंस०
४६ ॐचरक्यैनमः पायसबलिंस०
४७ ॐविदार्यैनमः पायसबलिंस०
४८ ॐपूतनायैनमः पायसबलिंस०
४९ ॐपापराक्षस्यैनमःपा०ब०स०
५० ॐस्कन्दायनमःपायसब०स०
५१ ॐअर्यम्णेनमः पायसबलिंस०
५२ ॐजृम्भकायनमः पा०ब०स०
५३ ॐपिलिपिच्छायनमःपा.ब.स.
५४ ॐइन्द्रायनमः पायसबलिंस०
५५ ॐअग्नयेनमः पायसबलिंस०
५६ ॐयमायनमः पायसबलिंस०
५७ ॐनिर्ऋतयेनमः पायसब०स०
५८ ॐवरुणायनमः पायसब०स०
५९ ॐवायवेनमः पायसबलिं स०
६० ॐकुबेरायनमः पायसबलिंस०
६१ ॐईश्वरायनमः पायसबलिंस०
६२ ॐब्रह्मणेनमः पायसबलिंस०
६३ ॐअनन्तायनमः पा० ब० स०

हस्ते जलमादाय—अनेन पायसबलिप्रदानरूपपूजनेन शिख्यादि मण्डलदेवतासहितवास्तुपुरुषः प्रीयतां न मम ॥

---

१ बलिप्रदाने तान्त्रिके बलिद्रव्याणि पृथक् पृथक् तत्तन्मन्त्रैः प्रोक्तानि परं त-द्विधानं वामपथानुयायिनां प्रीतिकरं दक्षिणपथे तु सर्वेषां पायसमेव ॥ अन्यान्तरे वास्तुदेवानां पूजनान्ते होमोऽप्युक्तः परं शान्तिसुधाकरादिग्रन्थेषु होमाशक्तौ बलि-मात्रं दद्यादित्युक्तम् ॥ शारदातिलकेऽपि-पायसाद्यैर्बलिंहरेदित्येवोक्तम् ॥ अतएवात्र होमः कृताकृत एव ॥ अन्यान्यग्रन्थेषु वास्तुमन्त्रा भिन्नाः सन्ति तत्र न शङ्कनीयम् । देवताभेदो मन्त्रभेदश्च यत्र दृश्यते न हि तत्र वास्तवभेदो यतो देवतायाः पर्याय-भेदात् तत्तन्नाममन्त्राः पद्धतिकारैः स्वस्वपद्धतौ समुपन्यस्ता इति विद्वद्भिर्बो-

चिन्तनीयम् ॥ वास्तुयागस्य आवश्यकत्वं महाकपिलपञ्चरात्रे—वास्तुयागं ततः कुर्यात्सर्वविघ्नोपशान्तये । भूमेः परिग्रहे पूर्वं शिलानां स्थापने तथा ॥ जलाधारगृहार्थे च यजेद्वास्तुं विशेषतः । अपरेष्वपि कार्येषु यागहोमादिकेषु च ॥ वास्तुमण्डलकं कुर्यात्पूजयित्वा स्वं गुरुं ॥यमोऽप्याह—गृहादिकरणे यत्र नार्चितो वास्तुदैवतः । तत्र शून्यं भवेत्सर्वं रक्षोनिशादिभिर्हृतम् ॥ तस्माद्वास्त्वर्चनं सम्यक्कार्यं सम्पदभीप्सुभिः ॥ वास्तुयागोत्पत्तिर्महाभैरवतन्त्रे—पातुनामासुराः कश्चिदसुरोऽभून्महाबलः । त्रैलोक्यं निर्जितं तेन निपत्राशाय देवताः ॥ ये रणे सम्मुखे यातास्तेन ते विनिपीडिताः । पुनः पुनर्जित्वा युद्धं स एवासीत्प्रजापतिः ॥ दिव्यवर्षसहस्रान्ते देवाः शरणमागताः । विष्णोर्मम च पार्वत्या दैत्येन्द्रेणापि तच्छ्रुतम् ॥ योद्धुकामः सोऽप्यधावन्नारदेन प्रचोदितः ।

कृतं युद्धं तेन सार्द्धं अस्माभिर्वर्षपञ्चकम् ॥ ततो दैत्यो मदोत्सिक्तो विष्णुमायाविमोहितः । उवाच वचनं तुष्टो म्रियतां नियतामिति ॥ नेन्द्रेण न कुबेरेण मम तोषकरं कृतम् । ससैन्येनापि तद्युद्धं त्वया तु जटिलेन हि ॥ कृतं विष्णुसहायेन पार्वत्यङ्गार्द्धधारिणा । तेनाहं तुष्टिमापन्नस्त्रैलोक्यपरमेश्वर ॥ अदेयं नास्ति मे किञ्चिद्याचयन्तु त्रयोपि च । इत्याकर्ण्य वचस्तस्य शिवाम्या भ्रूप्रचोदितः ॥ हरिः प्राह महाधन्य दैत्येन्द्र त्वत्समोऽस्ति कः ।सत्यं त्रिवारं कुरुषे तदा वाच्यो मया वरः ॥ शिवेनापि न पार्वत्या एकः एवापरो न ह। लिख्वामततदादैत्यस्ततोविष्णुर्न्यनिरूपत्॥ यथा ते स्यात मृत्युः स उपायः प्रदिश्यताम्। ।वष्याद्धलमिति ज्ञात्वा दैत्येन्द्रः समभाषत । अयस्समेव गन्तव्य सर्वे कालमुखे हरे । तथापि स्वप्रतिज्ञार्थं यो गच्छति स जीवति ॥ परत्वकं न मे वधो येस्त्व मत्सेवनं कृतम् । तस्य मार्गं दर्शयित्वा देहोऽस्य विनिपात्यताम् ॥ काले तस्मिंश्च भा देवा वागुवाचाशरीरिणी । दैत्येन्द्र कुरु मा शोकं भूमेर्जन्म तवागमत् ॥ तत्रैव त्वं स्थ याहि त्वत्तोषार्थं वरं शृणु । ये वर्णाः स्वस्य भोगार्थं करिष्यन्ति नवं गृहम् ॥ तत्रोत्सवादिवे ते ॥ नानाटु सैरुपगुताः । कालवर्णादिका दासो विनायकमुखाश्च ते ॥ सेवकाः पीडयिष्यन्ति इत्याज्ञा पारमेश्वरी । इत्याकर्ण्य वचः सोपि गर्तं गत्वा महाबिलम् ॥ प्रविवेश ततो दैवैर्मृत्पाषाणैः प्रपूरितम् । तेन ये निर्जिता देवाः पुनरुद्रमशङ्कया ॥ तदर्थं च त्रिपञ्चाशन्निवासं चक्रुद्यताः । तस्मादवश्यं ते पूज्या गृहवाससुखेच्छया ॥

## ॥ अथरुद्रकल्पद्रुमानुसारिमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकं स्कान्दकाशीखण्डोक्तचतुःषष्टियोगिनीस्थापनमतिष्ठापूजनम् ॥

पीठे[1] रक्तवस्त्रमाच्छाद्य तदुपरि पूर्वभागे महाकालीमहालक्ष्मीमहासरस्वतीफलत्रयस्थापनार्थंत्रीणित्र्यस्राणिदेव्यष्टगन्धेन[2] सुवर्णशलाकया राजिताक्षतैर्वा विलिखेत् ॥ तेषामधोभागेअष्टौत्र्यस्राणिइतिएकापाङ्क्तिः एवमष्टौत्र्यस्रपङ्क्तीः कृत्वातेषुत्र्यस्रेषुवक्ष्यमाणमन्त्रैः देवताआवाह्यपूजयेत् ॥

---

१. योगिनीपीठ द्वादशाङ्गुलोच्च हस्तमात्रविस्तृत कार्यम् ॥ तदुक्तं मन्थानभैरवतन्त्रे—येयवेद्या तत एयात हस्तमेक तु विस्तरे । उच्छ्रायोर्काङ्गुलः प्रोक्तः ज्ञानवेदी द्विहस्तका ॥ विष्ण्वर्चनकल्पलतायां वैष्णवतन्त्रे च–योगिनीपीठक कार्ये वायव्यां हस्तमात्रकम् ॥ कमलाकरादिभिः देव्यग्रे योगिनीपीठमुक्तम् ॥ रुद्रकल्पद्रुमकारैस्तु आग्नेय्यां योगिनीपीठमुक्तम् ॥ गोविन्दराजकृतवरालिग्रन्थे तु देवीपूजनमध्ये देव्यै पुष्पाञ्जलिसमर्पणानन्तर देव्यग्रे कलशदक्षिणे वा रक्तवस्त्रोपरि जयादिविशालभिन्यन्ताना चतुःषष्टीनां पूजनमुक्तम् ॥ ताराभक्तितरङ्गिण्यान्तु देवीपूजनमध्ये पद्मावरणानन्तर पूर्वादि ईशपर्यन्त अष्टौत्र्यस्राणि कोणे चैकम् एवमीशादि उत्तरपर्यन्तम् उत्तरादि वायव्यान्त वायव्यादि पश्चिमान्त पश्चिमादि नैर्ऋत्यन्त नैर्ऋत्यादि दक्षिणान्त दक्षिणादि आग्नेय्यन्त आग्नेय्यादि पूर्वान्तं चतुःषष्टित्र्यस्राणि चतुष्कोणेषु चतुरस्रयस्राणि सबिन्दुकानि भूपुरतृतीयरेखाया कृत्वा तत्र पूर्वादिक्रमेण ईशपर्यन्त वामावर्तेन चतुःषष्टियोगिनीः पूजयेत् इत्युक्तम् ॥ तथैव कुत्रचित् ग्रन्थे दिव्यादिसिद्धिदान्ताना चतुःषष्टीना पूजनम् ॥ कुत्राचित् जयाद्यारभ्य सिद्धिप्रदान्ताश्चतुःषष्टियोगिन्यः सन्ति । एवं योगिनीनां विषये ग्रन्थान्तरेषु बहूनि प्रकारान्तराणि विद्यन्ते ॥

२ देव्यष्टगन्धः शारदातिलके—चन्दनागरुकर्पूरचौर ( कचूर ) कुङ्कुमरोचना. ( गोरोचन ) ॥ जटामांसीकपि ( रक्तचन्दन ) युता. शक्तेर्गन्धाष्टकं विदु. ॥

हस्ते जलमादाय अद्यपूर्वोच्चारितशुभपुण्यतिथौ प्रारब्धमहारुद्रयागाख्ये कर्मणि महाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिमृगलोचनान्त-चतुःषष्टियोगिनीदेवतावाहनप्रतिष्ठापनपूजनं करिष्ये ॥

॥ पीठे पूर्वभागे न्यस्तेषु कलशत्रयस्थापनविधिः ॥

भूमिं स्पृष्ट्वा—ॐमुही द्यौः पृथिवी चं नऽ इमँय्युज्ञम्मिमिक्षताम् ॥ पिपृतान्नो भरीमभिः ॥ ३२/८ ॥

न्यस्तोपरि यवप्रक्षेपः—ॐओषधयः सम्वदन्तु सोमेन सुह राज्ञा ॥ यस्मै कृणोति ब्राह्मणस्तः राजन्पारयामसि ॥ ९६/१२ ॥

न्यस्तोपरिकलशत्रयंस्थापयेत्—ॐआजिग्घ्रकुलशम्मुह्यात्वाविशन्त्विन्दवः । पुनरूर्जानिवर्तस्वसानः—सुहस्रन्धुक्ष्वोरुधाराप्यस्वती० ॥ ३२/८ ॥

कलशेषु जलपूरणम्—ॐवरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्जनीस्थोवरुणस्यऽऋतुसदन्यसिवरुणस्यऽऋतुसदनमासिवरुणस्य० ॥ ३६/४ ॥

गन्धप्रक्षेपः—ॐत्वाङ्गन्धर्वाऽ अखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥ ९६/१२ ॥

धान्यप्रक्षेपः—ॐधान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वाव्याना यत्वा ॥ दीर्घामनुप्रसितिमायुषेधान्देवोवः—सविताहिरण्यपाणिः० ॥ २०/१ ॥

सर्वौषधीप्रक्षेपः—ॐयाऽ ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्पुरा ॥ मनै नु बुभ्रूणामहः शुतन्धामानि सुप्त च ॥ ७५/१२ ॥

दूर्वाप्रक्षेपः—ॐकाण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ॥ एवा नो दूर्वे प्रतनु सुहस्रेण शतेन च ॥ २०/१३ ॥

पञ्चपल्लवप्रक्षेपः—ॐ अश्वत्थे वो निषदनम्पर्णे वो वसतिष्कृता ॥ गोभाजऽ इत्किलासथ यत्सनवथ पूरुषम् ॥ ७९/१२ ॥

सप्तमृदप्रक्षेपः—ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म्म सप्रथाः ॥ ३६/१३ ॥

फलप्रक्षेपः—ॐ याः फलिनीर्य्याऽ अफलाऽ अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वᳪहसः ॥ १२/८९ ॥

पञ्चरत्नप्रक्षेपः—ॐ परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानि दाशुषे ॥ ३५/३३ ॥

हिरण्यप्रक्षेपः—हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽ आसीत् ॥ स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥ ४/१३ ॥

रक्तसूत्रेण वस्त्रेण च कलशद्वयं वेष्टयेत्—ॐ युवासुवासाः परिवीतऽ आगात्सऽ उ श्रेयान्भवति जायमानः ॥ तं धीरासः कवयऽ उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥ पारस्करगृह्यसूत्रे काण्डः २ कण्डिका २ मन्त्रः ९ ॥

पूर्णपात्रमुपरिन्यसेत्—ॐ पूर्णा दर्वि परा पत सुपूर्णा पुनरापत ॥ वस्नेव विक्रीणावहाऽइषमूर्ज्जᳪ शतक्रतो ॥ ४९/३ ॥

वरुणमावाहयेत्—तत्त्वायामीत्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणो देवता वरुणावाहने विनियोगः ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशᳪस मा नऽ आयुः प्रमोषीः ॥ २/२१ ॥ ॐ भूर्भुवः स्वः अस्मिन्कलशे वरुणं साङ्गं सायुधं सपरिवारम् आवाहयामि स्थापयामि ॥

प्रतिष्ठापनम्—ॐमनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञमिमन्त्तनोत्वरिष्टँय्यज्ञꣳ समिमन्दधातु ॥ विश्वे देवासऽ इह मादयन्तामोꣳम्प्रतिष्ठ ॥ $\frac{१३}{२}$ ॥ ॐवरुण सुप्रतिष्ठितो वरदो भव ॥ ॐभूर्भुवः स्वः वरुणाय नमः इत्यनेन सम्पूज्य पुष्पाञ्जलिः—वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम् ॥ सुत्रामा यशसा बलं दधाना यज्ञमाशत ॥ $\frac{५३}{२०}$॥ अनेन पूजनेन वरुणः साङ्गः सायुधः सपरिवारः प्रीयताम् ॥

फलशाभिमन्त्रणपूर्वकदेवतावाहनम् ॥ अनामिकया कलशं स्पृष्ट्वा—कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः । सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥ अत्र गायत्री सावित्री शान्तिःपुष्टिकरी तथा ॥ आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥ वरुणाद्यावाहितकलशाधिष्ठातृदेवताभ्यो नमः इत्यनेन षोडशोपचारैः अभ्यर्चयेत् ॥

फलशं प्रार्थयेत्—देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वञ्च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः । त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ॥ त्वत्प्रसादादिदं कर्म कर्तुमीहे जलोद्भव । सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥

१ अम्बेऽअम्बिकेइतिप्रजापतिर्ऋषिः भुरिगार्चीपङ्क्तिश्छन्दःमहाकाली देवतामहाकाल्यावाहनेविनियोगः । ॐअम्बेऽअम्बिकेम्बालिकेनमानयाति कश्चन॥ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम्॥ २३/१८ ॥प्रथमकलशपूर्ण-पात्रोपरिॐभूर्भुवःस्वःमहाकाल्यै०महा०आ०स्था०भो०महा०इहा०इह०।

२ श्रीश्चतइत्यस्य नारायणऋषिः त्रिष्टुप्छन्दः महालक्ष्मीर्देवता महालक्ष्म्यावाहने विनियोगः ॐश्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्॥ इष्णन्निषाणामुम्मऽ इषाण सर्वलोकम्मऽ इषाण ॥ ३१/२२ ॥ प्रथमकलशादुत्तरतः द्वितीयकलशपूर्णपात्रोपरिॐभूर्भुवः स्वः महालक्ष्म्यै नमः महालक्ष्मीमावाहयामि स्थापयामि ॥ भो महालक्ष्मि इहागच्छ इह तिष्ठ ॥

३ पावकेत्यस्यमधुच्छन्दाऋषिः गायत्रीछन्दः महासरस्वतीदेवतामहासरस्वत्यावाहनेविनियोगः—ॐपावकानः सरस्वतीवाजेभिर्वाजिनीवती ॥ यज्ञंवष्टुधियावसुः॥ २०/८४ ॥द्वितीयकलशादुत्तरतः तृतीयकलशपूर्णपात्रे-ॐभूर्भुवःस्वःमहासरस्वत्यैनमःमहास०आवा०स्था०भो०महास०इहा०इह०॥

---

॥ अथनाममन्त्रैः महाकालीमहालक्ष्मीमहासरस्वतीनामावाहनम् ॥

१ प्रथमकलशपूर्णपात्रोपरि—ॐभूर्भुवः स्वः महाकाल्यै नमः महाकालीमावाहयामि स्थापयामि ॥ भो महाकालि इहागच्छ इह तिष्ठ ॥

२ तदुत्तरतः द्वितीयकलशपूर्णपात्रोपरि—ॐभूर्भुवः स्वः महालक्ष्म्यै नमः महालक्ष्मीमावाहयामि स्थापयामि ॥ भो महालक्ष्मि इहागच्छ इह तिष्ठ ॥

३ तदुत्तरतः तृतीयकलशपूर्णपात्रोपरि—ॐभूर्भुवः स्वः महासरस्वत्यै न महासरस्वतीमावाहयामि स्थापयामि ॥ भो महासरस्वति इहागच्छ इह तिष्ठ ॥

अथप्रथमपङ्क्तौ अष्टत्र्यस्रेषु उदक्संस्थाष्टयोगिनीदेवतास्थापनम् ॥

१ तमीशानमित्यस्यगौतमऋषिःजगतीछन्दःगजाननदेवतागजानना-वाहनेविनियोगः—ॐतमिशानुञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूम-

---

१ ॥ अथनाममन्त्रैः प्रथमपङ्क्तौ अष्टत्र्यस्रेषु उदक्संस्थाष्ट-योगिनीदेवतास्थापनम् ॥

१ॐभूर्भुवःस्व·गजाननायैनम.गजाननामावाहयामिस्था०॥भोगजाननेइ०इ०॥
२ॐभूर्भुवःस्व.सिंहमुख्यैनमः सिंहमुखीमावाहयामिस्था० ॥भोसिंहमुखिइ०इ०॥
३ॐभूर्भुव.स्वःगृध्रास्यायैनम·गृध्रास्यामावाहयामिस्था ०॥ भोगृध्रास्येइहा० इ ०॥
४ॐभूर्भुव स्व काकतुण्डिकायैनम.काकतुण्डिकामावा० स्था०॥ भोका०इ०इ०॥
५ॐभूर्भुवःस्वःउष्ट्रग्रीवायैनमःउष्ट्रग्रीवामावाहयामिस्था०॥भोउष्ट्रग्रीवेइ०इहति०॥
६ॐभूर्भुवःस्व·हयग्रीवायैनमः हयग्रीवामावाहयामिस्थापयामि॥ भोहय० इ०इ०॥
७ॐभूर्भुवःस्व वाराह्यैनम वाराहीमावाहयामिस्थापयामि॥भोवाराहिइहाग० इ० ॥
८ॐभूर्भुवःस्व शरभाननायैनम.शरभाननामावाहयामि स्था०॥भोशर०इ ०इ०॥

॥ अथद्वितीयपङ्क्तौ अष्टत्र्यस्रेषु उदक्संस्थाष्टयोगिनीदेवतास्थापनम् ॥

९ॐभूर्भुव.स्वःउलूकिकायैनमःउलूकिकामावाहयामिस्था०॥भोउलूकिकेइ०इ० ॥
१०ॐभूर्भुवःस्व.शिवारावायैनमःशिवारावामावाहयामिस्था०॥भोशिवारावेइ०इ० ॥
११ॐभूर्भुव.स्वःमयूर्यैनमःमयूरीमावाहयामिस्थापयामि ॥ भोमयूरिइहागच्छइ० ॥
१२ॐभूर्भुवःस्व.विकटाननायैनम.विकटाननामा०स्था०॥ भोविकटाननेइ० इ० ॥
१३ॐभूर्भुवःस्वःअ वक्रायैनमःअष्टवक्रामावाहया०स्था० ॥भोअष्टवक्रे इ० इ० ॥
१४ॐभूर्भुवःस्वःकोटराक्ष्यैनम.कोटराक्षीमावाहयामिस्था० ॥ भोकोटराक्षि इ०इ०॥

देवयम् ॥ पुषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥१६॥ ॐभूर्भुवःस्वःगजाननायैनमःगजाननामा०स्था०भोग०इहा०इ०॥

१५ ॐ भूर्भुवःस्वःकुब्जायैनमःकुब्जामावाहयामिस्थापयामि॥ मोकुब्जेइहा० इ०॥
१६ ॐ भूर्भुवःस्वः विकटलोचनायैनमःविकटलोचनामा०स्था०॥ मोविक०इ०इ०॥

॥ अथतृतीयपङ्क्तौ अष्टव्यस्रेषु उदक्संस्थाष्टयोगिनीदेवतास्थापनम् ॥

१७ ॐ भूर्भुवःस्वःशुष्कोदर्यैनमःशुष्कोदरीमावाहयामिस्था०भोशुष्कोदरिइ०इ० ॥
१८ ॐ भूर्भुवःस्वःललजिह्वायैनमःललजिह्वामावाह०स्था०॥मोललजिह्वेइ ०इ० ॥
१९ ॐ भूर्भुवःस्वः श्वदंष्ट्रायैनमःश्वदंष्ट्रामावाहयामिस्थाप० ॥ मोश्वदंष्ट्रेइहागच्छइ०॥
२० ॐ भूर्भुवःस्वःवानराननायैनमःवानराननामावाह०स्था०॥मोवानराननेइ०इह०
२१ ॐ भूर्भुवःस्वः रुक्षाक्ष्यैनमःरुक्षाक्षीमावाहयामिस्थापयामि ॥ भोरुक्षाक्षि०इ०॥
२२ ॐ भूर्भुवःस्वः केकराक्ष्यैनमःकेकराक्षीमावाहयामिस्था० ॥ भोकेकराक्षिइ०इ०
२३ ॐ भूर्भुवःस्वः बृहत्तुण्डायैनमःबृहत्तुण्डामावाहयामिस्था०॥भोबृहत्तुण्डे०इ०इ०॥
२४ ॐ भूर्भुवःस्वःसुराप्रियायैनमःसुराप्रियामावाहयामिस्थाप०॥मोसुराप्रियेइ०इ०।

॥ अथचतुर्थपङ्क्तौ अष्टव्यस्रेषु उदक्संस्थाष्टयोगिनीदेवतास्थापनम् ॥

२५ ॐ भूर्भुवःस्वःकपालहस्तायैनमःकपालहस्तामावाह०स्था०॥मोकपाल०इ०इ०॥
२६ ॐ भूर्भुवःस्वः रक्ताक्ष्यैनमःरक्ताक्षीमावाहयामिस्थापयामि॥मोरक्ताक्षिइ०इ०॥
२७ ॐ भूर्भुवःस्वःशुक्यैनमःशुकीमावाहयामिस्थापयामि॥मोशुकेइहा०इहतिष्ठ०॥
२८ ॐ भूर्भुवः स्वः श्येन्यैनमःश्येनीमावाहयामिस्थापयामि॥मोश्येनिइहागच्छइ० ॥
२९ ॐ भूर्भुवःस्वः कपोतिकायैनमःकपोतिकामावाहयामिस्था०॥मोकपो०इ०इ०॥
३० ॐ भूर्भुवःस्वः पाशहस्तायैनमःपाशहस्तामावाहयामिस्था०॥मोपाशह०इ०इ०॥

२ आब्रह्मन्नित्यस्यप्रजापतिर्ऋषिः उत्कृतिश्छन्दः सिंहमुखीदेवता सिंहमुख्यावाहने विनियोगः—ॐआब्रह्मंन्ब्राह्मणो ब्रंह्मवर्चसी जांयतामा राष्ट्रे राजन्यः शूरंऽइषव्योतिव्याधी मंहारथो जांयतान्दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरंन्धिर्योषा जिष्णू रंथेष्ठा सुभेयो युवास्य यजंमानस्य वीरो जांयतान्निकामे निकामे नः पर्जन्यो वर्षतु फलंवत्यो नुऽओषधयः पच्यन्तां योगक्षेमो नंः कल्पताम् ॥ २२/२२ ॥ ॐभूर्भुवः स्वः सिंहमुख्यै नमः सिंहमुखीमावाहयामि स्थापयामि ॥ भो सिंहमुखि इहागच्छ इह तिष्ठ ॥

३१ ॐ भूर्भुवःस्वः दण्डहस्तायैनमः दण्डहस्तामावाहयामिस्था० ॥मोदण्डह०इ०इ॥

३२ ॐ भूर्भुवःस्वः प्रचण्डायैनमःप्रचण्डामावाहयामिस्थापयामि॥भोप्रचण्डेइ०इ०॥

॥ अथपञ्चमपङ्क्तौ अष्टव्यस्त्रेषु उदक्संस्थाष्टयोगिनीदेवतास्थापनम् ॥

३३ ॐ भूर्भुवःस्वः चण्डविक्रमायैनमःचण्डविक्रमामावाहया०स्था०॥मोच०इ०इ०॥

३४ ॐ भूर्भुवःस्वःशिशुघ्न्यैनमःशिशुघ्नीमावाहयामिस्था०॥मोशिशुघ्नि इ० इ० ॥

३५ ॐ भूर्भुवःस्वः पापहन्त्र्यैनमःपापहन्त्रीमावाहयामिस्था०॥भोपापहन्त्रिइ० इ० ॥

३६ ॐ भूर्भुवःस्वःकाल्यैनमः कालीमावाहयामिस्थापयामि॥भोकालिइहागच्छ०इ०॥

३७ ॐ भूर्भुवःस्वःरुधिरपायिन्यैनमःरुधिरपायिनीमावा०स्था०॥ भोरुधिर०इ०इ०॥

३८ ॐ भूर्भुवःस्वःवसाधयायैनमःवसाधयामावाहयामिस्थाप०॥मोवसाधये०इ०इ०॥

३९ ॐ भूर्भुवःस्वः गर्भभक्षायैनमःगर्भभक्षामावाहयामिस्था०॥भोगर्भभक्षेइहा०इ०॥

४० ॐ भूर्भुवःस्वः शवहस्तायैनमःशवहस्तामावाहयामिस्थाप०॥भोशवहस्तेइ०इ०॥

॥ अथषष्ठपङ्क्तौ अष्टव्यस्त्रेषु उदक्संस्थाष्टयोगिनीदेवतास्थापनम् ॥

४१ ॐ भूर्भुवःस्वःआन्त्रमालिन्यैनमःआन्त्रमालिनीमा०स्था०॥भोआन्त्र०इ०इ०॥

उँ महानिम्नस्य मत्सऋषिः गायत्रीछन्दः गृध्रास्या देवता गृध्रास्यावाहने विनियोगः ॥ ॐमुहाँ२ऽ इन्द्रो॥ष ऽओजसा पुर्जन्यो वृष्टिमाँ२ऽ इव॥स्तोमैर्व्वत्सस्य वावृधे ॥६०॥ ॐभूर्भुवःस्वः गृध्रास्यायै नमः गृध्रास्यामावाहयामि स्थापयामि ॥ भो गृध्रास्ये इहागच्छ इह तिष्ठ ॥

---

४२ ॐभूर्भुवःस्वःस्थूलकेश्यैनमःस्थूलकेशीमावाह०स्था०॥ भोस्थूलकेशि इ० इ० ॥
४३ ॐभूर्भुवःस्वःबृहत्कुक्ष्यैनमःबृहत्कुक्षीमा०स्था०॥ भोबृहत्कुक्षिइहागच्छ० इ० ॥
४४ ॐभूर्भुवःस्वःसर्पास्यायैनमःसर्पास्यामावा०स्थापयामि ॥ भोसर्पास्ये इ० इ० ॥
४५ ॐभूर्भुवःस्वःप्रेतवाहनायैनम प्रेतवाहनामावा०स्था० ॥ भोप्रेतवाहने इ० इ० ॥
४६ ॐभूर्भुवःस्वःदन्दशूककरायैनमःदन्दशूककरामा०स्था० ॥ भोदन्दशू०इ०इ० ॥
४७ ॐभूर्भुवःस्वःक्रौञ्च्यैनमःक्रौञ्चीमावाहयामिस्थापयामि ॥ भोक्रौञ्चि इ० इ० ॥
४८ ॐभूर्भुवःस्व.मृगशीर्षायैनमःमृगशीर्षामा०स्थाप०॥भोमृगशीर्षे इ० इहतिष्ठ ॥

॥ अथ सप्तमपङ्क्तौ अष्टत्र्यस्रेषु उदक्संस्थाष्टयोगिनिदेवतावाहनम् ॥

४९ ॐभूर्भुवःस्वःवृषाननायैनमःवृषाननामावा०स्थाप०॥ भोवृषानने०इ०इहतिष्ठ ॥
५० ॐभूर्भुवःस्वःव्यात्तास्यायैनम.व्यात्तास्यामावाह० स्था० ॥ भोव्या० इ० इ० ॥
५१ ॐभूर्भुवःस्वःधूमनिश्वासायैनम.धूमनिश्वासामावा०स्था० ॥ भोधू० इ० इ० ॥
५२ ॐभूर्भुवःस्वःव्योमैकचरणोर्ध्वदृशेनमःव्यो०दृशामा० स्था० ॥ भोव्यो०इ०इ०॥
५३ ॐभूर्भुव.स्वःतापिन्यैनम.तापिनीमावाहयामिस्था० ॥ भोतापिनि इ० इहतिष्ठ ॥
५४ ॐभूर्भुवःस्वःशोषणीदृष्ट्यैनमःशोषणीदृष्टिमावा०स्था०॥भोशो० इ० इहतिष्ठ ॥
५५ ॐभूर्भुवःस्व.कोटर्यैनमःकोटरीमावाहयामिस्थापयामि॥भोकोटरि इ० इ० ॥
५६ ॐभूर्भुवःस्वःस्थूलनासिकायैनमःस्थूलनासिकामा०स्था०॥भोस्थूल० इ० इ० ॥

॥ अथ अष्टमपङ्क्तौ अष्टत्र्यस्रेषु उदक्संस्थाष्टयोगिनीदेवतावाहनम् ॥

५७ ॐभूर्भुवःस्वःविद्युत्प्रभायैनमःविद्युत्प्रभामा०स्था०॥भोविद्युत्प्रभे इ० इहतिष्ठ ॥
५८ ॐभूर्भुवःस्वःबलाकास्यायैनमःबलाकास्यामा०स्था०॥भोबलाकास्येइ० इहतिष्ठ ॥

४ सद्योजात इत्यस्य जमदग्निर्ऋषिः त्रिष्टुप्छन्दः काकतुण्डिका देवता काकतुण्डिकावाहने विनियोगः॥ ॐसद्यो जातो व्यमिमीतयज्ञमग्निर्देवानां-मभवत्पुरोगा? ॥ अस्यहोतुः प्रदिश्यृतस्यव्वाचिस्वाहाकृतᳬहविरदन्तुदेवाः॥३॥ ॐभूर्भुवः०काकतुण्डिकायैनमः का०मा०स्था०॥भोका०इ०इ०॥

५ आदित्यङ्गर्भमित्यस्य विरूपऋषिःत्रिष्टुप्छन्दः उग्रग्रीवादेवता उग्रग्रीवावाहनेविनियोगः ॥ ॐआदित्यङ्गर्भम्पयसासमङ्ग्धिसहस्रस्यप्रतिमांव्विश्वरूपम् ॥ परिवृङ्ग्धिहरसामाभिमᳬस्थाःशतायुषङ्कृणुहिचीयमानः॥३॥ॐभूर्भुवःस्वःउग्रग्रीवायैनमःउग्रग्रीवामा०स्था०॥ भोउग्रग्रीवे इ०इ०॥

६ स्वर्णघर्मइत्यस्यशुनःशेपऋषिः यजुश्छन्दः हयग्रीवादेवता हयग्रीवावाहनेविनियोगः॥ॐस्वर्णघर्म्मः? स्वाहा स्वर्णार्कः? स्वाहास्वर्णशुक्रः? स्वाहास्वर्णज्योतिःस्वाहास्वर्णसूर्य्यःस्वाहा ॥३॥ ॐभूर्भुवःस्वः हयग्रीवायै नमःहयग्रीवामावाहयामि स्थापयामि॥ भोहयग्रीवे इहागच्छइहतिष्ठ॥

७ सत्यञ्चमइत्यस्यदेवाऋषयः विराड्शक्करीछन्दःवाराही दे०॥वाराह्यावाहनेविनियोगः॥ ॐसत्यञ्चमेश्रद्धाचमेजगच्चमेधनञ्चमेविश्वञ्चमेमहश्चमे

---

५९ ॐभूर्भुवःस्वःमार्जार्यैनमःमार्जारीमावाहयामिस्थाप०॥ भोमार्जारिइ० इहतिष्ठ ॥
६० ॐभूर्भुवःस्वःकटपूतनायैनमःकटपूतनामावाहयामिस्था०॥भोकटपूतने इ० इ०॥
६१ ॐभूर्भुवःस्वःअट्टाट्टहासायैनमःअट्टाट्टहासामा०स्था०॥भोअट्टाट्टहासे इ० इ० ॥
६२ ॐभूर्भुवःस्वःकामाक्ष्यैनमःकामाक्षीमावा०स्थाप० ॥ भोकामाक्षि इ० इहतिष्ठ॥
६३ ॐभूर्भुवःस्वःमृगाक्ष्यैनमःमृगाक्षीमावाहयामिस्था०॥भोमृगाक्षि०इ०॥इहतिष्ठ॥
६४ ॐभूर्भुवःस्वःमृगलोचनायैनमःमृगलोचनामावाह०स्था०॥भोमृगलोचनेइ०इ०॥

क्रीडाचमेमोदश्चमे जातञ्चमेजनिष्यमाणञ्चमेसूक्तञ्चमेसुकृतञ्चमेयज्ञेनकल्पन्ताम् ॥ ९/८ ॥ ॐभू०स्वःवाराहैनमःवाराहीमा०स्था०। भोवाराहि इ०इ०॥

८ भायैदार्वाहारमित्यस्यनारायणऋषिःविराट्संकृतिश्छन्दःशरभाननादेवता शरभाननावाहने विनियोगः ॥ ॐभायैदार्व्वाहारम्प्रभायाऽअग्न्येधम्ब्रध्नस्यविष्टपायाभिषेक्तारंवर्षिष्ठायनाकायपरिवेष्टारन्देवलोकायपेशितारम्मनुष्यलोकायप्रकरितारꣳसर्वेभ्योलोकेभ्यऽउपसेक्तारमवऽऋत्यैवधायोपमन्थितारम्मेधायवासः पल्पूलीम्प्रकामायरजयित्रीम् ॥ १२/३ ॥ ॐभूर्भुवःस्वःशरभाननायैनमःशरभाननामा०स्था०।भोश०इ०इ०॥

॥ अथ द्वितीयपङ्क्तौ उदक्संस्थाष्टयोगिनीदेवतावाहनम् ॥

९ जिह्वाम इत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः उलूकिका देवता ॥ उलूकिकावाहने विनियोगः ॥ ॐजिह्वामेभद्रंवाङ्महोमनोमन्युःस्वराड्-

---

१ स्कन्दपुराणे काशीखण्डे अध्याय ४९ स्कन्दउवाच–गजानना सिंहमुखी गृध्रास्या काकतुण्डिका । उष्ट्रग्रीवा हयग्रीवा वाराही शरभानना ॥ उलूकिका शिवारावा मयूरी विकटानना । अष्टवक्त्रा कोटराक्षी कुब्जा विकटलोचना ॥ शुष्कोदरी ललज्जिह्वा श्वदंष्ट्रा वानरानना । ऋक्षाक्षी केकराक्षी च बृहत्तुण्डा सुराप्रिया । कपालहस्ता रक्ताक्षी शुकी श्येनी कपोतिका । पाशहस्ता दण्डहस्ता प्रचण्डा चण्डविक्रमा ॥ शिशुघ्नी पापहन्त्री च काली रुधिरपायिनी । वसाधया गर्भभक्षा शवहस्ताऽन्त्रमालिनी ॥ स्थूलकेशी बृहत्कुक्षीः सर्पास्या प्रेतवाहना । दन्दशूककरा क्रौञ्ची मृगशीर्षा वृषानना ॥ व्यात्तास्या धूमनिःश्वासा व्योमैकचरणोर्ध्वदृक् । तापिनी शोषणी दृष्टिः कोटरी स्थूलनासिका ॥ विद्युत्प्रभा बलाकास्या मार्जारी कटपूतना । अट्टाट्टहासा कामाक्षी मृगाक्षी मृगलोचना ॥

भूम्- [illegible] ॐभूर्भुवःस्वः
उलूकि [illegible] इहा० इहतिष्ठ॥

१० हिङ्काराायेतिप्रजापतिर्ऋषिःयजुश्छन्दःशिवारावादेवता ॥ शिवा-
रावावाहने विनियोगः॥ ॐहिङ्कारायस्वाहाहिङ्कृतायस्वाहाक्रन्दतेस्वाहा
वक्रन्दायस्वाहाप्रोथतेस्वाहा प्रप्रोथायस्वाहा गन्धायस्वाहाघ्रातायस्वाहा
निविष्टाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहासीनाय
स्वाहाशयानायस्वाहास्वपतेस्वाहाजाग्रते स्वाहाकूजते स्वाहा प्रबुद्धाय
स्वाहाविजृम्भमाणायस्वाहाविचृत्तायस्वाहास ँ हानायस्वाहोपस्थिताय
स्वाहायनाय स्वाहा प्रायणाय स्वाहा॥ २२/७ ॥ ॐभूर्भुवःस्वः शिवारावायै
नमः शिवारावामावाहयामि स्थापयामि॥ भो शिवारावे इहागच्छ इह तिष्ठ॥

११ अग्निश्चमऽआपश्चेति देवा ऋषयः यजुश्छन्दः मयूरी देवता॥ मयू-
र्यावाहने विनियोगः ॥ ॐअग्निश्च मऽ आपश्च मे वीरुधश्च मऽ ओष-
धयश्च मे कृष्टपच्याश्च मेकृष्टपच्याश्च मे ग्राम्याश्च मे पशवऽ आरण्याश्च
मे वित्तञ्च मे वित्तिश्च मे भूतञ्च मे भूतिश्च मे यज्ञेन कल्पन्ताम्
॥ १४/१८ ॥ ॐभूर्भुवः स्वः मयूर्यै नमः मयूरीमावाहयामि स्थापयामि ॥
भो मयूरि इहागच्छ इह तिष्ठ ॥

१२ पूषन्नित्यस्य याज्ञवल्क्य ऋषिः गायत्री छन्दः विकटा देवता ॥
विकटावाहने विनियोगः ॥ ॐपूषन्तव व्रते वयन्न रिष्येम कदाचन ॥
स्तोतारस्तऽ इह स्मसि ॥ ३४/४१ ॥ ॐभूर्भुवः स्वः विकटायै नमः विक-
टामावाहयामि स्थापयामि ॥ भो विकटे इहागच्छ इह तिष्ठ ॥

१३ वेद्यावेदिरितिमन्त्रस्य ब्रह्मा ऋषिः अनुष्टुपछन्दः अष्टवक्रा देवता अष्टवक्रावाहने विनियोगः॥ ॐवेद्यावेदिऽसमाप्यतेवर्हिषाबर्हिरिन्द्रियम् ॥ यूपेन यूपऽआप्यते प्रणीतोऽअग्निरग्निना॥ ३/८९॥ ॐभूर्भुवःस्वः अष्टवक्रायै नमः अष्टवक्रामावाहयामि स्थापयामि॥ भो अष्टवक्रे इहागच्छ इह तिष्ठ ॥

१४ अयमग्निरित्यस्य परमेष्ठी ऋषिः निचृद्गायत्रीछन्दः कोटराक्षी देवता कोटराक्ष्यावाहने विनियोगः ॥ ॐअयमग्नि॰ सहस्रिणो वाजस्य शतिनस्पतिः॥ मूर्द्धा कवी रयीणाम् ॥ ३/२८॥ ॐभूर्भुवःस्वः कोटराक्ष्यै नमः कोटराक्षीमावाहयामि स्था०॥ भो कोटराक्षि इहागच्छ इह तिष्ठ ॥

१५ इमम्म इत्यस्य शुनःशेप ऋषि. गायत्री छन्दः कुब्जा देवता कुब्जावाहने विनियोगः ॥ ॐइमम्मे वरुण श्रुधी हवमद्या च मृडय ॥ त्वामवस्युराचके ॥ २/१ ॥ ॐभूर्भुवःस्वः कुब्जायै नमः कुब्जामावाहयामि स्थापयामि ॥ भो कुब्जे इहागच्छ इह तिष्ठ ॥

१६ यमायेत्यस्य दधीचऋषिः आसुर्युष्णिक्छन्दः विकटलोचना देवता विकटलोचनावाहने विनियोगः॥ ॐयमायत्वाङ्गिरस्वतेपितृमतेस्वाहा॥ स्वाहा घर्म्माय स्वाहा घर्म्म॰ पित्रे॥ ३/८॥ भूर्भुवःस्वः विकटलोचनायै नमः विकटलोचनाम. ाहयामिस्थापयामि॥भोविकटलोचनेइहागच्छइहतिष्ठ ॥

॥ तृतीयपङ्क्तौ अष्टव्यस्रेषु उदकसंस्थाष्टयोगिनीदेवतावाहनम् ॥

१७ गन्धर्वस्त्वाइत्यस्य प्रजापतिर्ऋषिः यजुश्छन्दःशुष्कोदरी देवता शुष्कोदर्यावाहने विनियोगः॥ ॐगन्धर्वस्त्वाविश्वावसुःपरिदधातुविश्व-स्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडितः॰ ॥ इन्द्रस्य बाहुरसि

दक्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽ ईडित? ॥ मित्रावरुणौत्वोत्तरत? परिधत्तान्ध्रुवेणधर्मणा विश्वस्यारिष्ट्यैयजमानस्य परिधिरस्यग्निरिडऽ ईडित? ॥३॥ ॐभूर्भुवःस्वः शुष्कोदर्यै नमः शुष्कोदरीमावाहयामि स्थापयामि ॥ भो शुष्कोदरि इहागच्छ इह तिष्ठ ॥

१८ मित्रस्येत्यस्यसिन्धुद्वीपऋषिःनिचृद्गायत्रीछन्दःललजिह्वादेवता ललजिह्वावाहनेविनियोगः॥ ॐमित्रस्य चर्षणीधृतोवो देवस्य सानसि द्युम्नश्चित्रश्रवस्तमम् ॥६२॥ ॐभूर्भुवः स्वः ललजिह्वायै नमः ललजिह्वामावाहयामि स्थापयामि ॥ भो ललजिह्वे इहागच्छ इह तिष्ठ ॥

१९ अग्नेब्रह्मेतिमजापतिर्ऋषिः यजुश्छन्दः श्वदंष्ट्रा देवता श्वदंष्ट्रावाहने विनियोगः॥ ॐअग्नेब्रह्मगृभ्णीष्वधरुणमस्यन्तरिक्षन्दृꣳहब्रह्मवनित्वाक्षत्रवनिसजातवन्युपदधामिभ्रातृव्यस्यवधाय। धर्त्रमसिदिवन्दृꣳहब्रह्मवनित्वाक्षत्रवनिसजातवन्युपदधामिभ्रातृव्यस्यवधाय।।विश्वाभ्यस्त्वाशाभ्युऽउपदधामि चितस्थोर्ध्वचितो भृगूणामङ्गिरसान्तपसा तप्यध्वम्।१६। ॐभूर्भुवःस्वःश्वदंष्ट्रायैनमःश्वदंष्ट्रामावाहयामिस्थापयामि॥भोश्वदंष्ट्रेइ०ति०॥

२० भगमणेतारित्यस्य याज्ञवल्क्य ऋषिः त्रिष्टुप्छन्दः वानरानना देवता वानराननावाहने विनियोगः॥ ॐभगप्रणेतर्भगसत्यराधोभगेमान्धियमुदवादन्नः॥भगप्रनोजनयगोभिरश्वैर्भगप्रनृभिर्नृवन्त-स्याम॥३६॥ ॐभूर्भुवःस्वःवानराननायैनमः वानराननामा०स्था०॥भोवान०इ०ति०॥

२१ सुपर्णइत्यस्यविधृतिर्ऋषिःपङ्क्तिश्छन्दःऋक्षाक्षीदेवता ऋक्षाक्ष्यावाहनेविनियोगः॥ ॐसुपर्णोसिगरुत्मान्पृष्ठेपृथिव्याःसीद।भासान्तरिक्ष-

मापृणुज्ज्योतिषा दिवमुत्तमानितेजसा दिशउद्दृंहरू । ३२ । ॐभूर्भुवःस्वः रुक्षाक्ष्यै नमः रुक्षाक्षीमावाहयामि स्थापयामि ॥ भोरुक्षाक्षि इहागच्छ इह तिष्ठ ॥

२२ उदीरतामित्यस्य शङ्खऋषिःत्रिष्टुप्छन्दः केकराक्षीदेवता केकराक्ष्यावाहने विनियोगः॥ ॐउदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः।असुंयऽईयुरवृकाऽऋतज्ञास्तेनोवन्तुपितरोहवेषु॥ ३३ ॥ॐभूर्भुवः स्वःकेकराक्ष्यैनमःकेकराक्षीमावाहयामिस्थ०॥भोकेकराक्षिइहा०इहतिष्ठ॥

२३ वरुणस्येत्यस्यवत्सऋषिः यजुश्छन्दः बृहत्तुण्डादेवता बृहत्तुण्डावाहनेविनियोगः॥ ॐवरुणस्योत्तम्भनमसि वरुणस्यस्कम्भसर्ज्जनीस्थो वरुणस्यऽऋतसदन्यसिवरुणस्य ऽऋतसदनमसिवरुणस्य ऽऋतसदनमासीद॥ ३४॥ॐभूर्भुवःस्वःबृहत्तुण्डायै० बृह० आ० स्था०॥भोबृह०इ०इ०

२४ वरुणइत्यस्य मेधातिथिर्ऋषिः गायत्री छन्दः सुराप्रिया देवता सुराप्रियावाहने विनियोगः॥ ॐवरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः॥ करतान्नः सुराधसः॥ ३५॥ ॐभूर्भुवःस्वः सुराप्रियायै नमः सुराप्रियामावाहयामि स्थापयामि ॥ भो सुराप्रिये इहागच्छ इह तिष्ठ ॥

॥ तुरीयपङ्क्तौ अष्टस्वस्तेषु उदक्संस्थाष्टयोगिनीदेवतावाहनम् ॥

२५ हंसःशुचिषदित्यस्यवामदेवऋषिःअतिजगतीछन्दःकपालहस्तादे०कपालहस्तावा० ॥ ॐहंसःशुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत्॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत्॥ ३६ ॥ ॐभूर्भुवःस्वःकपालहस्तायैनमःकपालहस्तामावा०स्थाप०॥भोक०इ०इ०॥

२६ सुसन्दृशमित्यस्यगौतमऋषिःविराट्पङ्क्तिश्छन्दः रक्ताक्षी देवता रक्ताक्ष्यावाहनेविनियोगः॥ ॐसुसन्दृशन्त्वावयम्मघवन्वन्दिषीमहि॥प्रनून-म्पूर्णवन्धुरस्तुतोयासिवशाँ२ऽअनुयोजान्विन्द्रतेहरी ॥३॥ ॐभूर्भुवःस्वः रक्ताक्ष्यैनमः रक्ताक्षीमावाहयामिस्थापयामि॥भो रक्ताक्षि इह०इहातिष्ठ॥

२७ प्रतिपदसीति परमेष्ठी ऋषिः यजुश्छन्दः शुकी देवता शुक्यावाहने विनियोगः॥ ॐप्रतिपदसि प्रतिपदे त्वानुपदस्यनुपदे त्वा सम्पदसि सम्पदे त्वा तेजोसि तेजसे त्वा ॥८॥ॐभूर्भुवः स्वः शुक्यै नमः शुकीमावाहयामि स्थापयामि ॥ भो शुकि इहागच्छ इह तिष्ठ ॥

२८ देवीरित्यस्यस्वस्त्यात्रेयऋषिः त्रिष्टुप्छन्दः श्येनीदेवता श्येन्यावाहनेविनियोग.॥ॐदेवीर्द्वारोऽअश्विनाभिषजेन्द्रेसरस्वती ॥प्राणन्नवीर्य्यन्नसि द्वारो दधुरिन्द्रियं वसुवने वसुधेयस्यव्यन्तु यज॥२१॥ॐभूर्भुवःस्वः श्येन्यैनमःश्येनीमावाहयामि स्थापयामि॥भो श्येनि इहागच्छ इह तिष्ठ ॥

२९ देवस्येत्यस्यतापसऋषिःआर्षीजगतीछन्दः कपोतिकादेवता कपोतिकावाहनेविनियोगः॥ ॐदेवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ।सरस्वत्यैवाचोयन्तुर्यन्त्रियेदधामिबृहस्पतेष्ट्वासाम्राज्येनाभिषिञ्चाम्यसौ।३१।ॐभूर्भु०कपोतिकायैन०कपो०आ०स्था०भोक०इ०इ

३०देवस्येत्यस्यलुशोधानाकऋषिः आर्षीपङ्क्तिश्छन्दःपाशहस्ता देवता पाशहस्तावाहने विनियोगः॥ॐदेवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ ३/२८ ॥ ॐभूर्भुवः स्वः पाशहस्तायै नमः पाशहस्तामावाहयामि स्थापयामि ॥ भो पाशहस्ते इहागच्छ इह तिष्ठ ॥

३१ मुचोयज्ञस्येतित्रिशिरात्रषि त्रिष्टुप्छन्दःदण्डहस्तादेवता दण्डहस्तावाहने विनियोगः॥ ॐमुचोयज्ञस्यरजसंश्च नेतायत्रानियाद्भिः सचसेशिवाभिः॥दिविमूर्द्धानंदधिषेस्वर्षाञ्जिह्वामग्नेचकृषेहव्यवाहम् ॥३५॥ ॐ भूर्भुवः स्वः दण्डहस्तायैनमःदण्डहस्तामावाहयामिस्थापयामि । भो दण्डहस्ते इ० इ०

३२ कदाचनेत्यस्यमधुच्छन्दाऋषिः पथ्याबृहतीछन्दः प्रचण्डादेवता प्रचण्डावाहने विनियोगः॥ ॐ कदाचनस्तरीरसिनेन्द्रसश्चसिदाशुषे ॥ उपोपेन्नुमघवन्भूयऽ इन्नु ते दानन्देवस्य पृच्यते ॥३६॥ ॐ भूर्भुवःस्वःप्रचण्डायै नमः प्रचण्डामावाहयामि स्थापयामि ॥ भो प्रचण्डे इहागच्छ इह तिष्ठ ॥

॥ पञ्चमपङ्क्तौ अष्टस्वस्रेषु उदक्संस्थाप्ययोगिनीदेवतावाहनम् ॥

३३ भद्रङ्कर्णेभिरित्यस्य गोतमऋषि त्रिष्टुप्छन्दः चण्डविक्रमा देवता चण्डविक्रमावाहने विनियोगः ॥ ॐ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितँय्यदायुः ॥ ३७ ॥ ॐ भूर्भुवः स्वः चण्डविक्रमायै नमः चण्डविक्रमामावाहयामि स्थापयामि ॥ भो चण्डविक्रमे इहागच्छ ॥ इह तिष्ठ ॥

३४ इषेत्वेत्यस्य परमेष्ठीप्रजापतिर्ऋषिः यजुश्छन्दःशिशुघ्नी देवता शिशुघ्न्यावाहने विनियोगः॥ ॐ इषे त्वोर्जे त्वा वायवं स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणऽआप्यायध्वमघ्न्याऽइन्द्राय भागम्प्रजावतीरनमीवाऽ अयक्ष्मा मा वस्तेनऽईशतमाघशꣳसो ध्रुवाऽअस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥१॥ ॐ भूर्भुवः स्वः शिशुघ्न्यै नमः शिशुघ्नीमावाहयामि स्थापयामि ॥ भो शिशुघ्नि इहागच्छ इह तिष्ठ ॥

३५ देवीद्यावाइत्यस्यदधीचऋषिः ब्राह्मीगायत्रीछन्दः पापहन्त्रीदेवता पापहन्त्र्यावाहनेविनियोगः ॥ ॐदेवी द्यावापृथिवी मुखस्य वामद्य शिरो राध्यासन्देवयजने पृथिव्याः ॥ मुखाय त्वा मुखस्य त्वा शीर्ष्णे ॥३७/३॥ ॐभूर्भुवःस्वःपापहन्त्र्यैनमःपापहन्त्रीमावाहयामिस्था०। भोपापहन्त्रिइ०इ०

३६ असुन्वन्तमित्यस्यमधुच्छन्दाऋषिःनिचृत्त्रिष्टुप्छन्दःकालीदेवता काल्यावाहनेविनियोगः॥ॐअसुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य। अन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥१२/६२॥ ॐभूर्भुवःस्वः काल्यैनमःकालीमावाहयामिस्था०॥ भोकालिइ० इहातिष्ठ॥

३७ विश्वानीत्यस्य नारायणऋषिः गायत्रीछन्दः रुधिरपायिनीदेवता रुधिरपायिन्यावाहनेविनियोगः॥ ॐविश्वानिदेवसवितर्दुरितानिपरा सुव॥ यद्भद्रन्तन्नऽआसुव ॥३/३०॥ ॐभूर्भुवःस्वःरुधिरपायिन्यै नमः रुधिरपायिनीमावाहयामि स्थापयामि ॥ भोरुधिरपायिनि इहागच्छ इह तिष्ठ ॥

३८ अग्निश्चमेतिदेवाऋषयःयजुश्छन्दःवसाधयादेवता .वसाधयावाहनेविनियोगः॥ॐअग्निश्चमेघर्मश्चमेऽर्कश्चमेसूर्यश्चमेप्राणश्चमेऽश्वमेधश्चमेपृथिवीचमेऽदितिश्चमेदितिश्चमेद्यौश्चमेऽङ्गुलयःशक्वरयोदिशश्चमे यज्ञेन कल्पन्ताम् ।१८/२२। ॐभूर्भुवःस्वःवसाधयायै०वसाधयामा०स्था०॥भोवसाधयेइ०इ०॥

३९ बह्वीनांपितेत्यस्यपायुऋषिः जगतीछन्दःगर्भभक्षादेवता गर्भभक्षावाहनेविनियोगः॥ॐबह्वीनाम्पिता बहुरस्य पुत्रश्चिश्चाकृणोति समनावगत्य॥ इषुधिःसङ्काः पृतनाश्चसर्वाः पृष्ठेनिनद्धोजयतिप्रसूतः ॥२९/४२॥ ॐभूर्भुवःस्वःगर्भभक्षायैनमःगर्भभक्षामावा०स्था०। भोगर्भभक्षेइहाग०इ०।

४० नमस्तेरुद्रइत्यस्य परमेष्ठी ऋषिः गायत्री छन्दः शवहस्ता देवता शवहस्तावाहने विनियोगः॥ ॐनमस्ते रुद्रमुन्यवऽउतो तुऽ इषवेनमः॥ बाहुभ्यामुत ते नमः॥१॥ ॐभूर्भुवः स्वः शवहस्तायै नमः शवहस्तामावाहयामि स्थापयामि ॥ भो शवहस्ते इहागच्छ इह तिष्ठ ॥

॥ पष्ठपङ्क्तौ अष्टस्वस्तेषु उदक्संस्थाष्टयोगिनीदेवतावाहनम् ॥

४१ ऋतवइत्यस्य विवस्वानृषिः बृहतीछन्दः आन्त्रमालिनीदेवता आन्त्रमालिन्यावाहनेविनियोगः ॥ ॐऋतवस्तेयज्ञंवितन्वन्तुमासारक्षन्तुते। वि+॥संवत्सरस्तेयज्ञन्दधातुनऽप्रजाम्परिपातुनऽ ॥१॥ ॐभूर्भुवः स्व आन्त्रमालिन्यैनमः आन्त्रमालिनीमा० स्था०॥भोआन्त्रमालिनि इ०इ०।

४२ तेआचरन्तीत्यस्यपायुर्ऋषिः त्रिष्टुप्छन्दःस्थूलकेशीदे० स्थूलकेश्यावाहनेवि०॥ ॐतेऽ आचरन्तीसमनेवयोषामातेवपुत्रम्बिभृतामुपस्थे । अपशत्रून्विध्यताᳪसंविदानेऽआर्त्नीऽइमेविष्फुरन्तीऽअमित्रान् ॥१॥ ॐभूर्भुवःस्वःस्थूलकेश्यै न०स्थूलकेशीमा०स्था०॥भोस्थूलकेशिइ०इ० ॥

४३ वेधावेदिरित्यस्य हैमवर्चिर्ऋषिः अनुष्टुप्छन्दः बृहत्कुक्षीदेवता बृहत्कुक्ष्यावाहनेवि०॥ॐवेधा वेदिᳪ समाप्यतेबर्हिषा बर्हिरिन्द्रियम् ॥ यूपेन यूपऽ आप्यते प्रणीतोऽअग्निरग्निना ॥१॥ ॐभूर्भुवःस्वः बृहत्कुक्ष्यै नमः बृहत्कुक्षीमावाहयामि स्थापयामि॥ भो बृहत्कुक्षि इहागच्छ इह तिष्ठ॥

४४ पावकेत्यस्य मधुच्छन्दा ऋषिः गायत्री छन्दः सर्पास्या देवता सर्पास्यावाहने विनियोगः॥ ॐपावका नुऽ सरस्वती वाजेभिर्वाजिनीवती ॥ यज्ञं वष्टु धियावसुः ॥ १ ॥ ॐभूर्भुवः स्वः सर्पास्याय नमः सर्पास्यामावाहयामि स्थापयामि ॥ भो सर्पास्ये इहागच्छ इह तिष्ठ ॥

४५ अस्कन्नमद्येत्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः प्रेतवाहना देवता प्रेतवाहनावाहने विनियोगः॥ ॐअस्कन्नमद्य देवेभ्यऽआज्यꣳ सम्भ्रियासमङ्घ्रिणा विष्णोमात्वावक्रमिषं वसुमतीमग्नेते च्छायामुपस्थेषं विष्णोस्थानमसीतऽइन्द्रो वीर्यमकृणोदूर्ध्वोध्वरऽआस्थात् ॥६॥ ॐभूर्भुवः स्वःप्रेतवाहनायैनमःप्रेतवाहनामावाहयामिस्थापयामि॥भोप्रेतवाहनेइहागच्छइहतिष्ठ।

४६ यमायेत्यस्यदधीचऋषिः आसुर्युष्णिक्छन्दः दन्दशूककरादेवता दन्दशूककरावाहनेविनियोगः॥ ॐयमाय त्वाङ्गिरस्वते पितृमते स्वाहा॥ स्वाहाघर्म्माय स्वाहा घर्म्मः पित्रे॥९॥ ॐभूर्भुवःस्वःदन्दशूककरायैनम दन्दशूककरामावाहयामिस्थापयामि॥ भो दन्दशूककरे इहागच्छइहतिष्ठ॥

४७ महीद्यौरित्यस्य मेधातिथिर्ऋषिः आर्षीगायत्रीछन्दः क्रौञ्चीदेवता॥ क्रौञ्च्यावाहने विनियोगः॥ ॐमही द्यौः पृथिवी च नऽ इमं यज्ञम्मिमिक्षताम्॥ पिपृतान्नो भरीमभिः॥३२॥ ॐभूर्भुवः स्व क्रौञ्च्यै नमः क्रौञ्चीमावाहयामि स्थापयामि॥ भो क्रौञ्चि इहागच्छ इह तिष्ठ॥

४८ उपयामेत्यस्य भरद्वाजऋषिः आर्च्युष्णिक्छन्दः मृगशीर्षादेवता मृगशीर्षावाहनेविनियोगः॥ ॐउपयाम गृहीतोसि हरिरसि हारियोजनो हरिभ्यान्त्वा॥ हर्य्योर्द्धानास्यसहसोमाऽइन्द्राय॥१२॥ ॐभूर्भुवःस्वःमृगशीर्षायैनमःमृगशीर्षामावाहयामिस्थापयामि॥ भोमृगशीर्षेइहागच्छइहतिष्ठ॥

॥ सप्तमपङ्क्तौ अष्टान्यस्तेषु उदकर्कस्थाप्योगिनीदेवतावाहनम्॥

४९ आप्यायस्वेत्यस्य गौतमऋषिः निचृद्गायत्रीछन्दः वृषाननादेवता वृषाननावाहने विनियोगः॥ ॐआप्यायस्व समेतु ते विश्वतः-

सोमुव्यूष्ण्यम् ॥ भत्रा वाजस्य सङ्गथे ॥ ११३ ॥ ॐ भूर्भुवःस्वः वृपान्नायै नमः वृपान्नामावाहयामि स्थापयामि ॥ भो वृपानने इहागच्छ इह तिष्ठ ॥

५० कार्षिरसीतिमेधातिथिर्ऋषिः दैवीबृहतीछन्दः व्यात्तास्यादेवता व्यात्तास्यावाहने विनियोगः॥ ॐकार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामि॥ समापोऽअद्भिरग्मतसमोषधीभिरोषधीः॥ ११॥ ॐभूर्भुव स्वः व्यात्तास्यायै नमः व्यात्तास्यामावाहयामि स्था० ॥ भो व्यात्त स्ये इहागच्छ इहतिष्ठ ॥

५१ त्र्यम्बकमित्यस्य वसिष्ठऋषिः निष्टुपछन्दः धूमनिःश्वासादेवता धूमनिश्वासावाहने विनियोगः॥ ॐत्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम्॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात्॥ ६०॥ ॐभूर्भुव स्व धूमनिःश्वासायै नम धूमनिःश्वासामावाहयामिस्थापयामि॥ भो धूमनिःश्वासे इहा० इह०

५२ श्रीश्चतइत्यस्य नारायणऋषि त्रिष्टुप्छन्दः व्योमैकचरणोर्ध्वदृग् देवता व्योमैकचरणोर्ध्वदृगावाहने विनियोगः॥ ॐश्रीश्चते लक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणि रूपमश्विनौव्यात्तम्॥ इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण॥ २२॥ ॐभूर्भुवःस्वःव्योमैकचरणोर्ध्वदृशेनम.व्योमैकचरणोर्ध्वदृशमावाहयामिस्था० ॥ भोव्योमैकचरणो र्ध्वदृक्इहागच्छइहतिष्ठ॥

५३ विष्णोरराटमित्यस्यऔतथ्योदीर्घतमाऋषिःयाजुषीउष्णिग्छंदः तापिनीदेवता तापिन्यावाहने विनियोगः ॥ ॐविष्णोरराटमसिविष्णोः श्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥ २१ ॥ ॐभूर्भुवःस्वः तापिन्यै नम तापिनीमावा० स्था० ॥ भो तापिनि इ० इ० ॥

५४ ब्राह्मणमित्यस्य आङ्गिरसऋषिः आर्चीबृहती छन्दः शोपणी-दृष्टिर्देवता शोपणीदृष्टयावाहने विनियोगः ॥ ॐब्राह्मणमद्य विदेय-

म्पितृमन्तंम्पैतृमृत्यमृषिमार्षेयꣳ सुधातुंदक्षिणम् ॥ अस्मद्राता देवत्रा गच्छत प्रदातारमाविशत ॥ ५६ ॥ ॐभूर्भुवः स्वः शोपणीदृष्टयै नमः शोपणीदृष्टिमावाहयामि स्थापयामि ॥ भोशोपणीदृष्टे इहागच्छ इह तिष्ठ ॥

५५ याव्याघ्रमित्यस्य हैमवर्चिर्ऋषिः अनुष्टुप्छन्दः कोटरी देवता कोटर्यावाहने विनियोगः ॥ ॐया व्याघ्रं विषूचिकोभौ वृकञ्च रक्षति ॥ श्येनम्पतत्रिणꣳसिꣳहꣳसेमम्पात्वꣳहसः ॥ ३१ ॥ ॐभूर्भुवः स्वः कोटर्यै नमः कोटरीमावाहयामि स्थापयामि ॥ भो कोटरि इहागच्छ इह तिष्ठ ॥

५६ एकाचमइत्यस्य देवाऋषयः यजुश्छन्दः स्थूलनासिका देवता ॥ स्थूलनासिकावाहने विनियोगः ॥ ॐएका च मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे नव च मऽ एकादश च मऽ एकादश च मे त्रयोदश च मे त्रयोदश च मे पञ्चदश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे नवदश च मे नवदश च मऽ एकविꣳशतिश्च मऽ एकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे त्रयोविꣳशतिश्च मे पञ्चविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च मे नवविꣳशतिश्च मऽ एकत्रिꣳशच्च मऽ एकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे यज्ञेन कल्पन्ताम् ॥ २४ ॥ ॐभूर्भुवःस्वः स्थूलनासिकायैनमः स्थूलनासिकामावाहयामिस्था० ॥ भो स्थूलनासिके इ०इ० ॥

॥ अष्टमपङ्क्तौ अष्टत्र्यस्रेषु उदक्संस्थाष्टयोगिनीदेवतावाहनम् ॥

५७ ब्रह्माणीत्यस्य अगस्त्यऋषिः त्रिष्टुप्छन्दः विद्युत्प्रभा देवता विद्युत्प्रभावाहने विनियोगः ॥ ॐब्रह्माणिमेमुतयुꣳशꣳसुतासुꣳशुष्मऽइय-

र्त्रिभर्तोमेऽअद्रिः॥ आर्यासतेपतिहर्य्यन्त्युक्थेमाहरीव्वहतुस्तानोऽअच्छ ॥ ३५ ॥ ॐभूर्भुवःस्वःविद्युत्प्रभायै०विद्युत्प्रभामा०स्था०। भोविद्युत्प्रभेइ०इ०

५८ अग्नेयुक्ष्वाहीत्यस्यभरद्वाजऋषिः निचृद्गायत्रीछन्दः बलाकास्या देवता बलाकास्यावाहने विनियोगः॥ॐअग्नेयुक्ष्वाहियेतवाश्वासोदेवसाधवः॥अरं वहन्ति मन्यवे ॥३६॥ ॐभूर्भुवः स्वः बलाकास्यायै नमः बलाकास्यामावाहयामि स्थापयामि॥ भोबलाकास्ये इहागच्छ इह तिष्ठ ॥

५९ सुपर्णइत्यस्यविधृतिऋषिःपङ्क्तिश्छन्दःमार्जारीदेवता मार्जार्या वाहनेविनियोगः॥ ॐसुपर्णोसिगरुत्मान्पृष्ठेपृथिव्याः सीद॥भासान्तरिक्षमापृणज्योतिषादिवमुत्तभानतेजसादिशऽउद्दृᳬह ॥ ३७ ॥ ॐभूर्भुवः स्वः मार्जार्यै नमः मार्जारीमावाहयामि स्थापयामि ॥ भोमार्जारि इहा० इ०॥

६० यातेरुद्रइत्यस्य परमेष्ठीऋषिः अनुष्टुप्छन्दः कटपूतनादेवता कटपूतनावाहनेविनियोगः॥ॐयातेरुद्रशिवातनूरघोरापापकाशिनी॥तयान-स्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥ ३८ ॥ ॐभूर्भुवःस्वःकटपूतनायै नमः कटपूतनामावाहयामि स्थापयामि ॥ भोकटपूतने इहागच्छ इह तिष्ठ॥

६१ देवीत्यस्यदधीचऋषिः गायत्रीछन्दः अट्टाट्टहासादे०अट्टाट्टहासावाहनेविनि० ॥ ॐदेवीद्यावापृथिवीमखस्यवामद्यशिरोराध्यासन्देवयजने पृथिव्याः॥मखायत्वामखस्यत्वाशीर्ष्णे॥ ३९ ॥ॐभूर्भुवः स्वः अट्टाट्टहासायै नमःअट्टाट्टहासामावाहयामि स्थापयामि॥भोअट्टाट्टहासेइहागच्छ इहतिष्ठ॥

६२ इदंविष्णुरित्यस्य मेधातिथिऋषिः गायत्रीछन्दः कामाक्षी देवता कामाक्ष्यावाहने विनियोगः ॥ ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे

पुदम् ॥ समृद्दमस्य पा०सुरे स्वाहा ॥ २६ ॥ ॐ भूर्भुवः स्व. कामाक्ष्यै नमः कामाक्षीमावाहयामि स्थापयामि ॥ भो कामाक्षि इहागच्छ इह तिष्ठ ॥

६३ वृष्णऊर्मिरित्यस्य वरुणऋषिः यजुश्छन्दः मृगाक्षीदेवता मृगाक्ष्यावाहने विनियोगः ॥ ॐ वृष्णऽऊर्मिरसिराष्ट्रदाराष्ट्रम्मे देहिस्वाहा व्वृष्णऽऊर्मिरसिराष्ट्रदाराष्ट्रममुष्मै देहिव्वृषसेनोसि राष्ट्रदाराष्ट्रम्मे देहि स्वाहा व्वृषसेनोसिराष्ट्रदाराष्ट्रममुष्मैदेहि ॥ २७ ॥ ॐ भूर्भुवः स्वः मृगाक्ष्यै नमः मृगाक्षीमावाहयामि स्थापयामि ॥ भो मृगाक्षि इहागच्छ इह तिष्ठ ॥

६४ भायैदार्वाहारमित्यस्य विराट्पङ्क्तिश्छन्दः मृगलोचनादेवता मृगलोचनावाहनेविनियोगः ॥ ॐ भायैदार्वाहारम्प्रभायाऽअग्न्येधन्नन्स्य विष्टपायाभिषेक्तारंवर्षिष्ठायनाकायपरिवेष्टारन्देवलोकायपेशितारम्मनुष्यलोकायप्रकरितारꣳसर्वेभ्यो लोकेभ्यऽ उपसेक्तारमवऽऋत्यैवधायोपमन्थितारम्मेधायवासꣳपल्पूलीम्प्रकामायरजयित्रीम् ॥ २८ ॥ ॐ भूर्भुव स्वःमृगलोचनायैनमःमृगलोचनामा० स्था० ॥ भोमृगलोचने इ० इहतिष्ठ ॥

प्रतिष्ठापनम्—ॐ मनोजूति० ॥ ब्राह्मणम्—ॐ मनो जूतिर्जुषतामाज्यस्येति मनसा वाऽइदꣳ सर्वमाप्तन्तन्मनसैवेतत्सर्वमाप्नोति बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधात्विति यद्विच्छिन्नं तत्सन्दधाति विश्वे देवास इह मादयन्तामिति सर्वं वै विश्वेदेवाः सर्वेणैतत्सन्दधातिसयदि कामयेत ब्रूयात्प्रतिष्ठेति ॥ एष वै प्रतिष्ठानामयज्ञो यत्तेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितम्भवति ॥ आवाहितदेवताः सुप्रतिष्ठिता वरदाः भवत ॥

ध्यानम्—ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनी-भ्योनमःध्यायामि।आसनम्-ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकच-तुःषष्टियोगिनीभ्योनमःआसनंसमर्पयामि।।पाद्यम्-ॐमहाकालीमहालक्ष्मी महासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्यो नमः पाद्यं समर्पयामि।।अर्घ्यम्-ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्योनमः अर्घ्यं समर्पयामि।।आचमनीयम्-ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुः षष्टियोगिनीभ्यो नमः आचमनीयं समर्पयामि।।पञ्चामृतस्नानम्-ॐमहा-कालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्योनमःपंञ्चामृतस्ना नं समर्पयामि।।पञ्चामृतस्नानान्तेशुद्धोदकस्नानंसमर्पयामि।। शुद्धोदकस्ना-नान्ते आचमनीयं समर्पयामि।।गन्धोदकस्नानम्-ॐमहाकालीमहालक्ष्मी महासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्योनमः गन्धोदकस्नानं समर्पयामि।। गन्धोदकस्नानान्ते शुद्धोदकस्नानं समर्पयामि।। शुद्धोदकस्नानान्ते आच मनीयं समर्पयामि।।उद्वर्तनस्नानम्-ॐमहाकालीमहालक्ष्मीमहासरस्वती-पूर्वकचतुःषष्टियोगिनीभ्योनमःउद्वर्तनस्नानंसमर्पयामि।। उद्वर्तनस्नानान्ते उष्णोदकस्नानंसमर्पयामि ।।उष्णोदकस्नानान्तेशुद्धोदकस्नानंसमर्पयामि। शुद्धोदकस्नानान्तेआचमनीयंसमर्पयामि ।। अभिषेकः-ॐमहाकालीमहाल-क्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्योनमःअभिषेकस्नानंसमर्पयामि। स्नानम्—ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्यो नमःस्नानंसमर्पयामि।स्नानान्तेआचमनीयंसमर्पयामि।। वस्त्रम्—ॐमहाका-लीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्योनमःवस्त्रोपवस्त्रेसमर्प यामि।।वस्त्रान्तेआचमनीयंसमर्पयामि।।उपवीतम्—ॐमहाकालीमहालक्ष्मी-महासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्योनमःउपवीतं समर्पयामि।।उपवी-

तान्ते आचमनीयं समर्पयामि॥गन्धः–ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्यो नमः गन्धं समर्पयामि॥ अक्षताः ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्योनमःअक्षतान्समर्पयामि॥पुष्पाणि–ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्योनमःपुष्पाणिसमर्पयामि॥ बिल्वपत्राणितुलसीपत्राणिदूर्वाङ्कुरान्समर्पयामि॥ सौभाग्यद्रव्याणि-ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्योनमःसौभाग्यद्रव्याणिसमर्पयामि ॥ आभूषणानि-ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्योनमः आभूषणानि समर्पयामि॥ धूपः-ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुषष्टियोगिनीभ्योनमःधूपमाघ्रापयामि ॥ दीपः-ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्योनमःदीपदर्शयामि ॥ नैवेद्यम्-ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्योनमःनैवेद्यंनिवेदयामि॥देवताग्रेगोमयेनजलेनवाचतुष्कोणंमण्डलंकृत्वातदुपरिनैवेद्यपात्रंनिधायतत्रतुलसीपत्रंनिक्षिप्यगायत्रीमन्त्रेणसम्प्रोक्ष्यधेनुमुद्रांप्रदर्श्यग्रासमुद्रयातर्जनीमध्यमाङ्गुष्ठेनॐप्राणायस्वाहा॥ मध्यमानामिकाङ्गुष्ठेनॐअपानायस्वाहा॥ कनिष्ठिकानामिकाङ्गुष्ठेनॐव्यानायस्वाहा॥कनिष्ठातर्जन्यङ्गुष्ठेन ॐउदानायस्वाहा॥ साङ्गुष्ठाभिःसर्वाङ्गुलिभिः ॐसमानायस्वाहा॥ पूर्वापोशनंसमर्पयामि॥नैवेद्यमध्ये पानीयं समर्पयामि॥उत्तरापोशनं समर्पयामि॥हस्तप्रक्षालनं समर्पयामि ॥ मुखप्रक्षालनं समर्पयामि॥आचमनीयं समर्पयामि॥ करोद्वर्तनार्थे चन्दनं समर्पयामि ॥ फलानि-ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्योनमःफलानिस० । मुखवासार्थेताम्बूलम्-ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्यो नमः मुख-

वासार्थंताम्बूलंसमर्पयामि ॥ दक्षिणा-ॐमहाकालीमहालक्ष्मीमहासरस्वती-पूर्वकचतुःषष्टियोगिनीभ्यो नमः सुवर्णपुष्पदक्षिणां समर्पयामि॥ कर्पूरार्तिक्यम् - ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्योनमः कर्पूरार्तिक्यंसमर्पयामि॥जलेनप्रदक्षिणम् । पुष्पेणदेवनन्दनम् । आत्मवन्दनम् । हस्तप्रक्षालनम् ॥ मन्त्रपुष्पाञ्जलिः-ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्योनमःमन्त्रपुष्पाञ्जलिंसमर्पयामि ॥ प्रद-

पूर्वकचतुःषष्टियोगिनीभ्योनमः नमस्करोमि ॥ विशेषार्घ्यम्—अर्घ्यपात्रेजलं सम्पूर्य चन्दनपुष्पाक्षतसहितं नारिकेलं च धृत्वा-ॐमहाकालीमहालक्ष्मी-महासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्योनमःविशेषार्घ्यंसमर्पयामि ॥ प्रार्थना—ॐयदङ्गत्वेन भो देव्यःपूजिता विधिमार्गतः । कुर्वन्तु कार्यमखिलं निर्विघ्नेन क्रतूद्भवम् ॥ ॐमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिनीभ्यो नमः प्रार्थयामि ॥ समर्पणम्—अनया पूजया महाकाली-महालक्ष्मीमहासरस्वतीपूर्वकचतुःषष्टियोगिन्यः प्रीयन्ताम् ॥ इति चतुःषष्टियोगिनीपूजाविधिः ॥

|| अथ एकपञ्चाशत्क्षेत्रपालावाहनस्थापनप्रतिष्ठापूजनानि ||

वायव्यकोणे हस्तमात्रविस्तृते द्वादशाङ्गुलोच्छ्राये क्षेत्रपालपीठे श्वेतवस्त्रं

---

१ क्षेत्रपालपीठ हस्तमात्रविस्तृत द्वादशाङ्गुलोच्च कार्यम् ॥ कुण्डरत्नावल्याम्—एवं वेद्यश्चापीतिस्रः प्रकुर्याच्छौचिण्केशकव्यभुग्वायुदिक्षु । स्थाप्यानलेटान्मातृकाश्चापि वास्तून्क्षेत्रेशं च स्थापयेत्तासु यागे ॥ मन्थानभैरवतन्त्रे—शेषवेद्याः ततः ख्यातं हस्तमेकं तु विस्तरे । उच्छ्रायोर्काङ्गुलः प्रोक्तः स्नानवेदी द्विहस्तका ॥ आग्नेय्यां

प्रसार्य चतुरस्रं विलिख्य तिर्यङ् प्राच्यां च सूत्रद्वन्द्वं समान्तरालं दद्यात् एवं समा नवकोष्ठा भवन्ति । मध्यकोष्ठे अष्टदलं पद्मं कुर्यात्॥ पूर्वदिक्कोष्ठे आग्नेयदिक्कोष्ठे दक्षिणदिक्कोष्ठे नैर्ऋत्यादिक्कोष्ठे पश्चिमदिक्कोष्ठे वायव्य दिक्कोष्ठे उत्तरदिक्कोष्ठे ईशानदिक्कोष्ठे च षड्दलानि कुर्यात् ॥ एवं क्षेत्रपालपीठं निर्माय मध्यकोष्ठे पद्मकर्णिकायां विधिना कलशस्थापनम् ॥

भूमिं स्पृष्ट्वा—ॐमुही द्यौः? पृथिवी च नऽ इमं यज्ञम्मिमिक्षताम् ॥ पिपृताम्नो भरीमभिः ॥ ३ ॥

---

मातृकावेदीवास्तुवेदीचनैर्ऋते । क्षेत्रपालस्य वायव्यामीशान्या च नवग्रह. ॥ वैश्वानरतन्त्रे तु—पूर्वेतुक्षेत्रपालस्य पीठहस्तामितभवेत् ॥ काशीखण्डे—अयात:क्षेत्रपालाना वक्ष्येपूजनमुत्तमम्' शृणुष्वावहितो भूत्वा न श्रुत यत्त्वयाकचित्॥सर्वक्षेत्रेषु पूज्यन्ते सर्वतीर्थेषुयत्पुनः । ग्रामेषुनगरेचैव पूज्यन्ते ये हितार्थिभिः । अपूजितास्तु कुर्वन्ति विघ्नाञ्छतसहस्रश.॥ अजरो व्यापकश्चैव इन्द्रचौरस्तृतीयक· । इन्द्रमूर्तिश्चतुर्थस्तु उक्षःपञ्चमउच्यते॥षष्ठ कूष्माण्डनामा च वरुणः सप्तमः स्मृतः । अष्टमो बटुकश्चैव विमुक्तो नवमस्तथा॥लिप्तकायस्तुदशमो लीलाको रुद्रसख्यकः । एकदंष्ट्रोद्वादशस्तथाचैरावत.स्मृतः ॥ ओषधिघ्नस्तत.प्रोक्तो बन्धनो दिव्यकस्तथा।कम्बलोभीषणश्चैव गवयो घण्टएवच॥व्यालश्चैव तथाणुश्च चन्द्रवारुण एवच । पटाटोपश्चतुर्विंशो जटाल. पञ्चविंशकः॥ क्रतुनामाचषड्विंशस्तथा घण्टेश्वर स्मृत । विटङ्कोमणिमानश्चगणबन्धुश्चडामरः॥ढुण्ढिकर्णोऽपरः प्रोक्तः स्थविरस्तुतत पर । दन्तुरोधनदश्चैव नागकर्णो महाबल ॥ फेत्कारश्चीकरः सिंहो मृगो यक्षस्तथापरः । मेघवाहननामा चतीक्ष्णोष्ठोह्यनलस्तथा ॥ शुक्रतुण्ड. सुधालापस्तथाबर्बरकःस्मृतः । पवन.पावनश्चैव ह्येव क्षेत्राधिपाः स्मृताः ॥ पञ्चाशदजराद्यास्ते पावनान्ताः प्रकीर्तिताः । प्रतिष्ठादिषु वै स्थाप्याः क्षेत्राधिपयुताश्च ते ॥ विष्ण्वर्चनकल्पलताया वैश्वानरतन्त्रे चतुःषष्टिक्षेत्रपालस्थापनमुक्त तेषा नामानि तथा आवाहनमन्त्राश्च भिन्नाः सन्ति ॥

पद्मोपरि यवप्रक्षेपः—ॐओषधयः समवदन्त सोमेन सह राज्ञा ॥ यस्मै कृणोति ब्राह्मणस्तꣳ राजन्पारयामसि ॥ ९६ ॥

पद्मोपरि कलशं स्थापयेत्—ॐआजिघ्र कलशम्मह्या त्वा विशन्त्विन्दवः ॥ पुनरूर्जा निवर्त्तस्व सा नः सहस्रन्धुक्ष्वोरुधारा पयस्वती पुनर्म्माविशताद्रयिः ॥ ३२ ॥

कलशेजलपूरणम्—ॐवरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्य ० ॥ ३६ ॥

गन्धप्रक्षेपः—ॐत्वाङ्गन्धर्वाऽ अखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥ ९६ ॥

धान्यप्रक्षेपः—ॐधान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वाव्यानायत्वा ॥ दीर्घामनुप्रसितिमायुषेधान्देवोवः सविताहिरण्य ० ॥ २० ॥

सर्वौषधिप्रक्षेपः—ॐयाऽ ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्पुरा ॥ मनै नु बभ्रूणामहꣳ शतन्धामानि सप्त च ॥ ९२ ॥

दूर्वाप्रक्षेपः—ॐकाण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ॥ एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ २० ॥

पञ्चपल्लवप्रक्षेपः—ॐअश्वत्थे वो निषदनम्पर्णे वो वसतिष्कृता ॥ गोभाजऽ इत्किलासथ यत्सनवथ पूरुषम् ॥ ९२ ॥

सप्तमृत्प्रक्षेपः—ॐस्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म्म सप्रथाः ॥ ३६ ॥

फलप्रक्षेपः—ॐयाः फलिनीर्य्याऽ अफलाऽ अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ ९२ ॥

पञ्चरत्नप्रक्षेपः—ॐपरि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ ११ ॥

हिरण्यमक्षेपः—ॐहिरण्यगुर्भः सर्मवर्त्तताग्रे भूतस्य जातः पतिरेकऽ आसीत्॥ स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥॥

रक्तसूत्रेण वस्त्रेण च कलशं वेष्टयेत्—ॐयुवासुवासाः परिवीतः आगात्सऽ उश्रेयान्भवति जायमानः ॥ तं धीरासः कवयऽ उन्नयन्ति स्वाध्यो मनसा देवयन्तः॥ पारस्करगृह्यसूत्रकाण्डः२ कण्डिका२ मन्त्रः९॥

पूर्णपात्रमुपरिन्यसेत्—ॐपूर्णा दर्वि परा पत सुपूर्णा पुनरापत ॥ वुस्नेव विक्रीणावहाऽ इषमूर्जं शतक्रतो ॥॥

वरुणमावाहयेत्—तत्त्वायामीत्यस्य शुनःशेपऋषिस्त्रिष्टुप्छन्दः वरुणो देवता वरुणावा०विनि० । ॐतत्त्वांयामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशꣳस मानऽआयुःप्रमोषीः ॥॥ ॐभूर्भुवःस्वःअस्मिन्कलशेवरुणंसाङ्गंसायुधं स० आ० स्था० ॥

प्रतिष्ठापनम्—ॐमनो जूतिर्ज्जुषतामाज्ज्यस्य० ॥॥ ॐवरुण सुप्रतिष्ठितो वरदो भव॥ ॐभूर्भुवः स्वः वरुणाय नमः इत्यनेन सम्पूजयेत्॥

पुष्पाञ्जलिः—वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम् ॥ सुत्रामा यशसा बलं दधाना यज्ञमाशत ॥॥ अनेन पूजनेन वरुणः प्रीयताम्॥

कलशाभिमन्त्रणपूर्वकदेवतावाहनम् ॥ अनामिकया कलशं स्पृष्ट्वा—

सर्वे समुद्राः०। आयान्तु मम०॥ कलशस्य मुखे०। मूले तत्र०॥ कुक्षौ तु०। ऋग्वेदोऽथ०॥ अङ्गैश्च सहिताः०। अत्र गायत्री०। आयान्तु मम०॥ वरुणाद्यावाहितकलशाधिष्ठातृदेवताभ्यो नमः इत्यनेन अभ्यर्चयेत् ॥

कलशं प्रार्थयेत्—देवदानवसंवादे०। उत्पन्नोऽसि तदाकुम्भ०॥त्वत्तोये सर्वतीर्थानि० । त्वयि तिष्ठन्ति भूतानि० । शिवः स्वयं त्वमेवासि० ।

आदित्या वसवो० । त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ।
त्वत्प्रसादादिदंकर्मकर्तुमीहेजलोद्भव।सान्निध्यंकुरुमेदेवप्रसन्नोभवसर्वदा॥
स्थापितकलशोपरिपूर्णपात्रेअग्न्युत्तारणप्राणप्रतिष्ठादिकृतांक्षेत्र-
पालमूर्तितथापूर्वाद्यष्टकोष्ठेषु पञ्चाशत्क्षेत्रपालान् आवाहयेत्

१ नमोस्त्वित्यस्यदेवश्रवाऋषिःत्रिष्टुप्छन्दःक्षेत्रपालोदेवताक्षेत्रपाला-
वाहनेविनियोगः॥ ॐनमोस्तुसर्पेभ्योयेकेचपृथिवीमनु॥ येऽअन्तरिक्षे ये
दिवि तेभ्य– सर्पेभ्यो नम– ॥ ६/३॥ ॐभूर्भुवः स्वः क्षेत्रपालाय नमः
क्षेत्रपालमावाहयामि स्थापयामि ॥ भो क्षेत्रपाल इहागच्छ इह तिष्ठ ॥
॥ पूर्वदिक्कोष्ठे पद्दले अक्षतपुञ्जोपरि पूगीफलेप्रागादिप्रदक्षिणक्रमेण
पट्क्षेत्रपालदेवतावाहनम् ॥

२ पावकयेत्यस्य भरद्वाजऋषिः गायत्रीछन्दः अजरो देवता अजरा-
वाहने विनियोगः ॥ ॐपावकया यश्चितयन्त्या कृपा क्षामन्रुरुचऽउपसो
नभानुना॥तूर्वन्नयामन्नेतशस्यनूरणऽआयोघृणेनततृषाणोऽअजरः॥ १७/१०॥
ॐभूर्भुवःस्वः अजराय नमः अजरमावाहयामिस्था०॥ भोअजरइहा०इ०॥

---

१ अथनाममन्त्रैःस्थापितकलशोपरिपूर्णपात्रेअग्न्युत्तारणप्राणप्रतिष्ठादि-
कृता क्षेत्रपालमूर्ति तथा पूर्वाद्यष्टकोष्ठेषु पञ्चाशत्क्षेत्रपालानावाहयेत ॥

१ ॐभूर्भुव स्वः क्षेत्रपालाय नमः क्षेत्रपालमावाहयामि स्थापयामि ॥ भो
क्षेत्रपाल इहागच्छ ॥ इह तिष्ठ ॥
अथ पूर्वदिक्कोष्ठे पद्दले अक्षतपुञ्जोपरि पूगीफले प्रागादिप्रदक्षिणक्रमेण
नाममन्त्रैः पट्क्षेत्रपालदेवतावाहनम् ॥

२ ॐभूर्भुवःस्व.अजरायनमःअजरमावाहयामिस्था०॥ भोअजरइहागच्छइ० ॥
३ ॐभूर्भुवःस्वःव्यापकायनमःव्यापकमावाहयामिस्था० ॥ भोव्यापकइ०इ० ॥

३ प्रथमावामित्यस्यबृहदुक्थऋषिःत्रिष्टुप्छन्दःव्यापकोदेवताव्यापका-वाहनेविनियोगः ॥ ॐप्रथमा वां०सरथिनांसुवर्णादिवापश्यन्तौ भुवनानि विश्वा ॥ अपिप्रयञ्चोदना वाम्मिमानाहोताराज्योतिः प्रदिशादिशन्ता ॥२८॥ ॐभूर्भुवःस्वःव्यापकायनमःव्यापकमा०स्था०॥भोव्यापकइ०इ०॥

४ ॐभूर्भुवःस्व.इन्द्रचौराय० इन्द्रचौरमावाहयामिस्था०॥भोइन्द्रचौरइ०इ०॥
५ ॐभूर्भुवःस्वःइन्द्रमूर्तयेनमः इन्द्रमूर्तिमावाहयामिस्था०॥भोइन्द्रमूर्तेइ०इ०॥
६ ॐभूर्भुवःस्व.उक्षायनमःउक्षमावाहयामिस्था०॥भोउक्षइहागच्छइहतिष्ठ ॥
७ ॐभूर्भुव स्वःकूष्माण्डायनम.कूष्माण्डमा०स्था० ॥भोकूष्माण्डइ०इ०॥

॥ अथ आग्नेयदिक्कोष्ठे पद्दले अक्षतपुञ्जोपरि पूगीफले प्रागादिप्रद-क्षिणक्रमेण नाममन्त्रैः पदक्षेत्रपालदेवतावाहनम् ॥

८ ॐभूर्भुवःस्वःवरुणायनम.वरुणमावाहयामिस्था०॥ भो वरुण इ०इह तिष्ठ ॥
९ ॐभूर्भुवःस्वःबटुकायनमःबटुकमावाहयामिस्था० ॥भोबटुकइहागच्छइ०॥
१० ॐभूर्भुवःस्वःविमुक्तायनम.विमुक्तमावाहयामिस्था० ॥ भोविमुक्तइ०इ०॥
११ ॐभूर्भुवःस्वःलिप्तकायनमःलिप्तकायमा०स्था० ॥ भोलिप्तकायइ०इ० ॥
१२ ॐभूर्भुवःस्व लीलाकायनमःलीलाकमा०स्थापयामि ॥ भोलीलाकइ०इ० ॥
१३ ॐभूर्भुव.स्व.एकदंष्ट्रायनम.एकदंष्ट्रमावाहयामिस्था० ॥ भोएकदंष्ट्रइ०इ० ॥

॥ अथ दक्षिणदिक्कोष्ठे पद्दले अक्षतपुञ्जोपरि पूगीफले प्रागादिप्रदक्षि-णक्रमेण नाममन्त्रैः पदक्षेत्रपालदेवतावाहनम् ॥

१४ ॐभूर्भुवःस्व ऐरावतायनम.ऐरावतमावाहयामिस्था०॥ भो ऐरावत इ०इ०॥
१५ ॐभूर्भुवःस्व.ओषधिघ्नायनमःओषधिघ्नमा०स्था०॥ भो ओषधिघ्न इ०इ०॥
१६ ॐभूर्भुव स्वःबन्धनायनम.बन्धनमावाहयामिस्था०॥ भो बन्धन इ०इ०॥
१७ ॐभूर्भुव स्व.दिव्यकायनम.दिव्यकमावाहयामिस्था०॥भोदिव्यक इ०इ०॥
१८ ॐभूर्भुवःस्वःकम्बलायनमःकम्बलमावाहयामिस्था०॥ भो कम्बल इ०इ०॥
१९ ॐभूर्भुवःस्वःभीषणायनम.भीषणमावाहयामिस्था०॥भोभीषण इ०इह तिष्ठ॥

४ इन्द्रस्येत्यस्यपायुऋषिःत्रिष्टुप्छन्दः इन्द्रचौरोदेवताइन्द्रचौरावाहने विनियोगः । ॐइन्द्रस्य वज्रोमरुतामनीकंमित्रस्यगर्भोवरुणस्यनाभिः॥ सेमान्नोहव्यदातिञ्जुषाणोदेवरथप्रतिहव्यागृभाय॥२२॥ॐभूर्भुवःस्वः० इन्द्रचौरायनमःइन्द्रचौरमावाहयामि स्थापयामि॥भोइन्द्रचौरइहाग०इ०॥

अथ नैर्ऋत्यदिक्कोष्ठे षड्दले अक्षतपुञ्जोपरि पूगीफले प्रागादिप्रदक्षिण-क्रमेण नाममन्त्रैः षट्क्षेत्रपालदेवतावाहनम् ॥

२० ॐभूर्भुवःस्वः गयायनमः गयमावाहयामिस्थाप० भोगयइहागच्छइह० ॥

२१ ॐभूर्भुवःस्वः घण्टायनमः घण्टमावाहयामिस्थाप० भोघण्टइहागच्छइह० ॥

२२ ॐभूर्भुवःस्वः व्यालायनमः व्यालमावाहयामिस्था० भोव्यालइहागच्छइह० ॥

२३ ॐभूर्भुवःस्वः अणवेनमः अणुमावाहयामिस्थाप० भोअणोइहागच्छइहतिष्ठ० ॥

२४ ॐभूर्भुवःस्वः चन्द्रवारुणाय० चन्द्रव रुणमा० स्था०॥ भो चन्द्रवा० इ० इ०

२५ ॐभूर्भुवःस्वः पटाटोपाय० पटाटोपमावाहयामिस्था० भो पटाटोप इ०इ० ॥

अथ पश्चिमदिक्कोष्ठे षड्दले अक्षतपुञ्जोपरि पूगीफले प्रागादिप्रदक्षिण-क्रमेण नाममन्त्रैः षट्क्षेत्रपालदेवतावाहनम् ॥

२६ ॐभूर्भुवःस्वः जटालायनमः जटालमावाहयामिस्था० भोजटालइहा०इह० ॥

२७ ॐभूर्भुवःस्वः क्रतवेनमः क्रतुमावाहयामिस्थाप० भो क्रतो इहागच्छइह० ॥

२८ ॐभूर्भुवःस्वः घण्टेश्वराय० घण्टेश्वरमावा०स्था०भोघण्टेश्वरइहा ०इहति० ॥

२९ ॐभूर्भुवःस्वः विटङ्कायनमः विटङ्कमावाहयामिस्थाप० भोविटङ्कइहा०इ० ॥

३० ॐभूर्भुवःस्वः मणिमानायनमः मणिमानमावा० स्थाप० भोमणि० इ०इह० ॥

३१ ॐभूर्भुवःस्वः गणबन्धवेनमः गणबन्धुमावाहयामिस्था० भोगणबन्धोइ०इ० ॥

अथ वायव्यदिक्कोष्ठे षड्दले अक्षतपुञ्जोपरि पूगीफले प्रागादिप्रदक्षिण-क्रमेण नाममन्त्रैः षट्क्षेत्रपालदेवतावाहनम् ॥

३२ ॐभूर्भुवःस्वः डामरायनमः डामरमावाहयामिस्थाप० भोडामरइहागच्छइ० ॥

३३ ॐभूर्भुवःस्वः ढुण्ढिकर्णायनमः ढुण्ढिकर्णमावाह० स्था० भोढुण्ढिकर्णइ०इ०

५ एवेदिन्द्रमित्यस्यवसिष्ठऋषिःत्रिष्टुप्छन्दःइन्द्रमूर्तिर्देवताइन्द्रमूर्त्यावाहने विनियोगः॥ ॐ एवेदिन्द्रंवृषणंवज्रबाहुंवसिष्ठासोऽअभ्यर्चन्त्यर्कैः।सनस्तुतोवीरवद्धातुगोमद्यूयम्पातस्वस्तिभिःसदानः॥ ॐ भूर्भुवः स्वः इन्द्रमूर्तयेनमः इन्द्रमूर्तिमावाहयामिस्था० भो इन्द्रमूर्ते इहाग० इहतिष्ठ ॥

६ उक्षासमुद्रइत्यस्य अमनिरथऋषिःत्रिष्टुप्छन्दःउक्षोदेवता उक्षावाहने विनियोगः॥ॐ उक्षासमुद्रोऽअरुणः सुपर्णः पूर्वस्य योनिम्पितुराविवेश ॥ मध्ये दिवो निहितः पृश्निरश्मा विचक्रमे रजसस्पात्यन्तौ॥ ॐ भूर्भुवः स्वःउक्षायनमःउक्षमावाहयामि स्थापयामि॥भो उक्ष इहागच्छ इहतिष्ठ॥

३४ ॐ भूर्भुवःस्वः स्थविरायनमः स्थविरमावाहयामिस्थाप० भोस्थविर इहा० इह०॥
३५ ॐ भूर्भुवःस्वः दन्तुरायनमः दन्तुरमावाहयामिस्थाप० भोदन्तुर इहा० इह०॥
३६ ॐ भूर्भुवःस्वः धनदायनमः धनदमावाहयामिस्था० भोधनद इहागच्छइह०॥
३७ ॐ भूर्भुवःस्वः नागकर्णायनमः नागकर्णमावाहयामिस्था० भोनागकर्णइ०इ०॥

अथ उत्तरदिक्कोष्ठे षड्दले अक्षतपुञ्जोपरि पूगीफले प्रागादिप्रदक्षिणक्रमेण नाममन्त्रैः सप्तक्षेत्रपालदेवतावाहनम् ॥

३८ ॐ भूर्भुवःस्वः महाबलायनमः महाबलमावाहयामिस्था० भोमहाबलइ० इ० ॥
३९ ॐ भूर्भुवःस्वः फेत्कारायनमः फेत्कारमावाहयामिस्थाप० भोफेत्कारइ०इ० ॥
४० ॐ भूर्भुवःस्वः चीकरायनमः चीकरमावाहयामिस्थापया० भोचीकरइ०इ० ॥
४१ ॐ भूर्भुवःस्वःसिंहायनमःसिंहमावाहयामिस्थापयामि॥भोसिंहइहा० इह० ॥
४२ ॐ भूर्भुवःस्वः मृगायनमः मृगमावाहयामिस्थापयामि।भोमृगइहागच्छइहतिष्ठ ॥

उत्तरदिक्कोष्ठषड्दलस्यान्तिमदलार्धे—

४३ ॐ भूर्भुवःस्वः यक्षायनमः यक्षमावाहयामिस्थापयामि।भोयक्षइहागच्छइ० ॥

उत्तरादिक्कोष्ठषड्दलस्यान्तिमदलार्धेयक्षादुत्तरतः—

४४ ॐ भूर्भुवःस्वः मेघवाहनायनमः मेघवाहनमावाह०स्था० भोमेघवाहनइ०इ० ॥

७ यद्देवाइत्यस्यप्रजापतिर्ऋषिः अनुष्टुप्छन्दः कूष्माण्डोदेवता कूष्माण्डावाहने विनियोगः॥ॐयद्देवादेवहेडनन्देवासश्चकृमावयम्॥ अग्निर्म्मातस्मादेनसोविश्वान्मुञ्चत्वहसट ॥१६॥ ॐभूर्भुवः स्वः कूष्माण्डाय नमः कूष्माण्डमावाहयामि स्थापयामि ॥ भो कूष्माण्ड इहागच्छ इह तिष्ठ ॥

॥अथ आग्नेयदिक्कोष्ठे पद्दले अक्षतपुञ्जोपरि पूगीफले प्रागादिप्रदक्षिणक्रमेण षट्क्षेत्रपालदेवतावाहनम् ॥

८ इमम्मइत्यस्य शुनःशेपऋषिः गायत्रीछन्दः वरुणो देवता वरुणावाहने विनियोगः ॥ ॐइमम्मे वरुण श्रुधी हवमद्या च मृडय ॥ त्वामवस्युराचके ॥ १६ ॥ ॐभूर्भुवः स्वः वरुणाय नमः वरुणमावाहयामि स्थापयामि ॥ भो वरुण इहागच्छ इह तिष्ठ ॥

---

अथ ईशानदिक्कोष्ठे पद्दले अक्षतपुञ्जोपरि पूगीफले प्रागादिप्रदक्षिणक्रमेण नाममन्त्रैः सप्तक्षेत्रपालदेवतावाहनम् ॥

४५ ॐभूर्भुव.स्व तीक्ष्णोष्ठायनमःतीक्ष्णोष्ठमावाहयामिस्था०भोतीक्ष्णोष्ठइ०इ०॥

४६ ॐभूर्भुवःस्वःअनलायनमःअनलमावाहयामिस्था०भोअनलइहागच्छइइ०॥

४७ ॐभूर्भुवःस्व.शुक्रतुण्डायनमःशुक्रतुण्डमावाह०स्था०भोशुक्रतुण्डइ०इ० ॥

४८ ॐभूर्भुवःस्व सुधालापायनमःसुधालापमावा०स्था०भो सुधालाप इ०इ०॥

४९ ॐभूर्भुवःस्वःबर्बरकायनमःबर्बरकमावाहयामिस्था०भोबर्बरकइहा० इइ०॥

ईशानदिक्कोष्ठपद्दलस्यान्तिमदलार्धे—

५० ॐभूर्भुवःस्वःपवनायनमःपवनमावाहयामिस्था०भोपवनइहागच्छइहतिष्ठ॥

ईशानदिक्कोष्ठपद्दलस्यान्तिमदलार्धे पवनादुत्तरतः—

५१ ॐभूर्भुवःस्व.पावनायनमःपावनमावाहयामिस्था ० भोपावनइहागच्छइइ ०॥

९ नहिस्पशमित्यस्यात्रेश्वामित्रऋषिः त्रिष्टुप्छन्दः बटुकोदेवता बटुकावाहने विनियोगः ॥ ॐनहिस्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारंमग्नेः एमेनमवृधन्नमृताऽअमर्त्यंवैश्वानरक्षैत्रजित्यायदेवाः ॥ ९ ॥ ॐभूर्भुवः स्वः बटुकायनमः बटुकमावाहयामि स्थापयामि॥भोबटुकऽइहा० इह तिष्ठ॥

१० मुञ्चन्तुमेत्यस्य बन्धुर्ऋषिः उष्णिग्छन्दः विमुक्तो देवता ॥ विमुक्तावाहने विनियोगः ॥ॐमुञ्चन्तु मा शपथ्यादथो वरुण्यादुत ॥ अथो यमस्य पड्वीशात्सर्वस्मादेवकिल्बिषात् ॥ १० ॥ ॐभूर्भुवः स्वः विमुक्तायनमः विमुक्तमावाहयामि स्थापयामि ॥भो विमुक्त इहागच्छ इह तिष्ठ॥

११ कुर्वन्नेवेहेत्यस्यदधीचऋषिःअनुष्टुप्छन्दः लिप्तकायोदेवता लिप्तकायावाहने विनियोगः॥ॐकुर्वन्नेवेहकर्म्माणि जिजीविषेच्छतꣳसमाः ॥ एवन्त्वयिनान्यथेतोस्तिनकर्म्मलिप्यतेनरे॥ ११॥ ॐभूर्भुवःस्वःलिप्तकायायनमः लिप्तकायमावाहयामिस्थापयामि॥भोलिप्तकाय इहागच्छ इहतिष्ठ॥

१२ अग्नेभ्यइ०नारायणऋ०उष्णिक्छ०लीलाकोदे०लीलाकावा०वि०। ॐअग्नेभ्योहस्तिपक्षयायाश्वपम्पुरुषंगोपालंवीर्यायाविपालन्तेजसेजपालमिरायैकीनाशङ्कीलालायसुराकारम्भद्रायगृहप ७ श्रेयसेवित्तधमाध्यक्ष्यायानुक्षत्तारम्।१२। ॐभूर्भु०लीं०ली०मा०स्था। भो०ली०इ०इ० ॥

१३ सुपर्णमित्यस्यपायुर्ऋषिःत्रिष्टुप्छन्दःएकदंष्ट्रोदे ॰ एकदंष्ट्रावाहने विनियोगः। ॐसुपर्णंवस्तेमृगोऽअस्यादन्तोगोभिःसन्नद्धापततिप्रसूता ॥ यत्रानरः ८ सञ्चविचद्रवन्तितत्रास्मभ्यमिषवꣳशर्म्मयꣳसन्॥१३॥ॐभूर्भुवः स्वःएकदंष्ट्रायनमः एकदंष्ट्रमावाह०स्थापयामि।भोएकदंष्ट्र इहागच्छइह०॥

१ लीलालोक इति पाठान्तरम् ॥

॥ अथ दक्षिणदिक्कोष्ठे षड्दले अक्षतपुञ्जोपरि पूगीफले
भागादिप्रदक्षिणक्रमेण षट्क्षेत्रपालदेवतावाहनम् ॥

१४ प्रजापतयइत्यस्य प्रजापतिर्ऋषिः धृतिश्छन्दः ऐरावतो देवता ऐरावतावाहने विनियोगः ॥ ॐप्रजापतये च वायवे च गोमृगो वरुणा-यारण्यो मेषो यमाय कृष्णो मनुष्यराजाय मर्कटः शार्दूलाय रोहित्-वृषभाय गवयी क्षिप्रश्येनाय वर्त्तिका नीलङ्गोः क्रिमिः समुद्राय शिशुमारो हिमवते हस्ती॥[illegible]॥ॐभूर्भुवः स्वः ऐरावताय नमः ऐरावत-मावाहयामि स्थापयामि ॥ भो ऐरावत इहागच्छ इह तिष्ठ ॥

१५ ओषधयइत्यस्य वन्धुर्ऋषिः अनुष्टुप्छन्दः ओषधिघ्नो देवता ओषधिघ्नावाहनेविनियोगः।ॐओषधयः समवदन्तसोमेनसहराज्ञा।यस्मैकृणोतिब्राह्मणस्तꣳराजन्पारयामसि॥[illegible]॥ॐभूर्भुवः स्वः ओषधिघ्नायनमः ओषधिघ्नमावाहयामि स्थापयामि ॥ भो ओषधिघ्न इहागच्छ इह तिष्ठ ॥

१६ त्र्यम्बकमितिमन्त्रस्य वसिष्ठऋषिः त्रिष्टुप्छन्दः यन्धनो देवता यन्धनावाहने विनियोगः॥ॐत्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम्॥ उर्वा-रुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥[illegible]॥ ॐभूर्भुवः स्वः बन्धनाय नमः बन्धनमावाहयामि स्थापयामि ॥ भो बन्धन इहागच्छ इह तिष्ठ॥

१७ देवसवितरित्यस्यप्रजापतिर्ऋषिःत्रिष्टुप्छन्दःदिव्यकोदेवता।दि-व्यकावाहनेविनियोगः॥ ॐदेवसवितःप्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय ॥ दिव्योगन्धर्वःकेतपूःकेतन्नःपुनातु वाचस्पतिर्वाचन्नः स्वदतु ॥[illegible]॥ ॐभूर्भुवःस्वःदिव्यकायनमःदिव्यकमावाहयामिस्था०।भोदिव्यक०इ०॥

१ ग्रन्थान्तरे—दिव्यकस्थाने अधिकः गवयस्थाने गणकः । इति पाठान्तरम् ॥

१८ सीसेनेत्यस्य प्रजापतिर्ऋषिः जगतीछन्दः कम्बलोदेवता कम्बलावाहने विनियोगः ॥ ॐसीसेन तन्त्रम्मनसा मनीषिणऽ ऊर्णासूत्रेण कवयो व्वयन्ति ॥ अश्विना यज्ञꣳसविता सरस्वतीन्द्रस्य रूपं वरुणो भिषज्यन् ॥८१॥ ॐभूर्भुवःस्व कम्बलाय नमः कम्बलमावाहयामि स्थापयामि ॥ भोकम्बल इहागच्छ इह तिष्ठ ।

१९ आशुः शिशानइत्यस्य अप्रतिरथऋषिः त्रिष्टुप्छन्दः भीषणोदेवता भीषणावाहने विनियोगः ॥ ॐआशुः शिशानोव्वृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनाम् । सङ्क्रन्दनोनिमिषऽएकवीरः शतꣳसेनाऽअजयत्साकमिन्द्रः ॥३३॥ ॐभूर्भुवःस्वःभीषणा०भीषणमा०स्था०।भोभी०इ०इ०॥

॥ अथ नैर्ऋत्यदिक्कोष्ठे षड्दले अक्षतपुञ्जोपरि पूगीफले भागादिप्रदक्षिणक्रमेण षट्क्षेत्रपालदेवतावाहनम् ॥

२० इमꣳसाहस्रमित्यस्य विरूपऋषिः कृतिश्छन्दः गवयो देवता गवयावाहने विनियोगः ॥ ॐइमꣳ साहस्रꣳ शतधारमुत्सं व्यच्यमानꣳ सरिरस्य मध्ये ॥ घृतन्दुहानामदितिञ्जनायाग्ने मा हिꣳसीः परमे व्योमन् ॥गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ॥ गवयन्ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु॥४९॥ॐभूर्भुवः स्वः गवयाय नमः गवयमावाहयामि स्थापयामि ॥ भो गवय इहागच्छ इह तिष्ठ ॥

२१ कुम्भोवनिष्ठुरित्यस्य प्रजापतिर्ऋषिः जगती छन्दः घण्टो देवता घण्टावाहनेविनियोगः॥ॐकुम्भोवनिष्ठुर्जनिताशचीभिर्यस्मिन्नग्रेयोन्याङ्गर्भोऽअन्तः। प्लाशिर्व्यक्तः शतधारऽउत्सोदुहेनकुम्भीस्वधाम्पितृभ्यः॥८७॥ ॐभूर्भुवःस्वःघण्टायनमःघण्टमावाहयामि स्थापयामि॥भोघण्ट०इ०इ०॥

२२ आक्रन्दयेत्यस्य पायुर्ऋषिःत्रिष्टुप्छन्दःव्यालोदेवता व्यालावाहने विनियोगः ॥ ॐआक्रन्दय बलमोजो नऽ आधा निष्टनिहि दुरिता बाधमानः ॥ अपप्रोथ दुन्दुभे दुच्छुनाऽइतऽ इन्द्रस्य मुष्टिरसि वीडयस्व ॥ ५६ ॥ ॐभूर्भुवःस्वः व्यालायनमः व्यालमावाहयामि स्थापयामि ॥ भो व्याल इहागच्छ इह तिष्ठ ॥

२३ इन्द्रायाहीत्यस्य मधुच्छन्दाऋषिः गायत्रीछन्दः अणुर्देवता अण्वावाहने विनियोगः ॐइन्द्रायाहि चित्रभानो सुताऽ इमे त्वायवः ॥ अण्वीभिस्तना पूतासः ॥ ८७ ॥ ॐभूर्भुवःस्वः अणवे नमः अणुमावाहयामि स्थापयामि ॥ भो अणो इहागच्छ इह तिष्ठ ॥

२४ चन्द्रमा इत्यस्य त्रितऋषिः बृहतीछन्दः चन्द्रवारुणो देवता चन्द्रवारुणावाहने विनियोगः ॥ ॐचन्द्रमाऽ अप्स्वन्तरा सुपर्णो धावते दिवि ॥ रयिम्पिशङ्गम्बहुलम्पुरुस्पृहꣳ हरिरेति कनिक्रदत् ॥ ९० ॥ ॐभूर्भुवः स्वः चन्द्रवारुणाय नमः चन्द्रवारुणमावाहयामि स्थापयामि ॥ भो चन्द्रवारुण इ०इह तिष्ठ ॥

२५ स्वाङ्कृतोसीत्यस्य गोतमऋषिः यजुश्छन्दः पटाटोपो देवता पटाटोपावाहने विनियोगः ॥ ॐस्वाङ्कृतोसि विश्वेभ्यऽ इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यो देवाꣳशो यस्मै त्वेडे तत्सत्यमुपरिप्रुता भङ्गेन हतोसौ फट् प्राणाय त्वा व्यानाय त्वा ॥ ३ ॥ ॐभूर्भुवःस्वः पटाटोपाय नमः पटाटोपमावाहयामि स्थापयामि ॥ भो पटाटोप इहागच्छ इह तिष्ठ ॥

---

१ कल्पद्रुमे अणुस्थाने अंशः । २ पटाटोपस्थाने फटाटोपः । इति पाठभेदः ॥

॥ अथ पश्चिमदिक्कोष्ठे षड्दले अक्षतपुञ्जोपरि पूगीफले नागादिमदक्षिणक्रमेण षट्क्षेत्रपालदेवतावाहनम् ॥

२६ उग्रमित्यस्यप्रजापतिर्ऋ० त्रिष्टुप्छ० जटाल्लो० दे० जटालावाहनेवि० ॐ उग्रश्चभीमश्चध्वान्तश्चधुनिश्च ॥ सासह्वांश्चाभियुग्वा च विक्षिपः स्वाहा ॥ ... सुम्भ्याम्मुपुद्रा ॥ भुवस्य कण्ठ्यं हृदस्यान्तः पुण्ड्यम्महस्य रस्यय कण्ठ्य वस्यं त्रिष्टुप्पंशुपतेः पुरीतत् ॥ २ ॥ ॐ भू० ज० ज० मा० स्था० । भो० इ० इ० ॥

२७ पवित्रेणेत्यस्य प्रजापतिर्ऋषिः गायत्रीछन्दः क्रतुर्देवता क्रत्वावाहने विनियोगः ॥ ॐ पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् ॥ अग्ने क्रत्वा क्रतूँ१ ऽरनु ॥ ३ ॥ ॐ भूर्भुवः स्वः क्रतवे नमः क्रतुमावाहयामि स्थापयामि ॥ भो क्रतो इहागच्छ ॥ इह तिष्ठ ॥

२८ आजिघ्रेत्यस्य कुसुरुबिन्दुर्ऋषिः उष्णिक्छन्दः घण्टेश्वरो देवता घण्टेश्वरावाहने विनियोगः ॥ ॐ आजिघ्रकलशम्मह्यात्वाविशन्त्विन्दवः ॥ पुनरूर्ज्जानिवर्त्तस्वसानः सहस्रन्धुक्ष्वोरुधारापयस्वतीपुनम्माविशता-द्रयिः ॥ ४ ॥ ॐ भू० घण्टेश्वरायनमः घण्टेश्वरमा० स्था० । भोघण्टेश्वर० इ० इ० ॥

२९ यायोशुक्रइत्यस्यपुरुमीढाजमीढादृषीअनुष्टुप्छन्दः विटङ्कोदेवता विटङ्कावाहने विनियोगः ॥ ॐ यायोशुक्रोऽअयामितेमध्वोऽअग्रन्दिविष्टिषु ॥ आयाहिसोमपीतयेस्पार्होदेवनियुत्वता ॥ ५ ॥ ॐ भूर्भुवः स्वः विटङ्काय नमः विटङ्कमावाहयामि स्थापयामि ॥ भो विटङ्क इहागच्छ इह तिष्ठ ॥

३० दैव्याहोताराइत्यस्यस्वस्त्यात्रेयऋषिः अनुष्टुप्छन्दः मणिमानोदेवतामणिमानावाहनेविनियोगः ॥ ॐ दैव्याहोताराभिषजेन्द्रेणसयुजायुजा ॥

---

१ क्रतुस्थाने ऋतुः । २ विटङ्कस्थाने विकट इति पाठान्तराणि ॥

जगंतीच्छन्दंऽइन्द्रियमंनद्वान्गौर्व्वयोंदधुः॥ ३१॥ ॐभूर्भुवः स्वः मणिमाना-
यनमः मणिमानमावाहयामि स्थापयामि॥ भो मणिमानइहागच्छ इह तिष्ठ॥

०यून्त?समुद्रे ॥इतेवमेवरुणऽउन्त्स्यबँन्यत्रातऽआहु?परंमखानिंत्रम् ॥ ३५॥
ॐभूर्भुवःस्वः गणबन्धवे नमः गणबन्धुमा०स्था०भोगणबन्धो०इ०इ०॥

॥ अथ वायव्यादिकोष्ठे पद्दले अक्षतपुञ्जोपरि पूगीफले
प्रागादिप्रदक्षिणक्रमेण पद्क्षेत्रपालदेवतावाहनम् ॥

३२ प्रतिश्रुत्काया इत्यस्य नारायणऋषिः भुरिगतिश्छन्दः डामरो देवता डामरावाहने विनियोगः॥ ॐप्रतिश्रुत्कायाऽ अर्त्तनं घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकꣳ शब्दायाडम्बराघातम्महसे वीणावादङ्क्रोशाय तूणवध्ममवरस्पराय शङ्खध्मं वनाय वनपमन्यतोरण्याय दावपम् ॥ ३६॥ ॐभूर्भुवः स्वः डामराय नमः डामरमावाहयामि स्थापयामि ॥ भो डामर इहागच्छ इह तिष्ठ ॥

३३ शुद्धवालइत्यस्य प्रजापतिर्ऋषिः जगतीछन्दः दुण्ढिकर्णो देवता दुण्ढिकर्णावाहने विनियोगः ॥ ॐशुद्धवालः सर्वशुद्धवालोमणिवालस्तऽआश्विनाः श्येतः श्येताक्षोरुणस्ते रुद्राय पशुपतये कर्णा यामाऽअवलिप्ता रौद्रा नभोरूपाः

नमः दुण्ढिकर्णमावाहयामि

---

अत्र 'ष' कारोत्तरवर्ति 'अ' कारस्यदीर्घत्वविषये-शुक्लयजुः-प्रातिशाख्ये तृतीयाध्याये १२२ सूत्र-' नरस्थत्रऽऋषीनरतऽआहुर्नियुद्भिप्युयत्र ॥ ' नरः सप्तऋषीन् नः तऽआहुः नियुद्भिः एतेषु यत्रेत्ययं ह्रस्वो दीर्घत्वमापद्यते ॥ यत्रानरऽ ॥ $\frac{३८}{२२}$॥ यत्रांसप्त ॥ $\frac{३६}{१७}$ ॥यत्रानमुक्ता ॥ $\frac{३३}{२५}$ ॥ यत्रानियुद्भिः ॥ $\frac{३५}{१३}$ ॥ इत्यादिषु ॥

३४ बलविज्ञाय इत्यस्य अप्रतिरथऋषिः त्रिष्टुप्छन्दः स्थविरो देवता स्थविरावाहने विनियोगः॥ ॐबलविज्ञाय स्थविरःप्रवीरःसहस्वान्वाजी सहमानऽउग्र? ॥ अभिवीरोऽ अभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित्॥ ॥ ॐभूर्भुवः स्वः स्थविराय नमः स्थविरमावाहयामि स्थापयामि ॥ भो स्थविर इहागच्छ इह तिष्ठ ॥

३५ सुपर्णमित्यस्य पायुर्ऋषिः त्रिष्टुप्छन्दः दन्तुरो देवता दन्तुरावाहने विनियोगः ॥ ॐसुपर्ण्णं वस्ते मृगोऽ अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता ॥ यत्रा नरः सञ्च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म्म यंसन् ॥ ॥ ॐभूर्भुवः स्वः दन्तुराय नमः दन्तुरमावाहयामि स्थापयामि ॥ भो दन्तुर इहागच्छ इह तिष्ठ ॥

३६ अग्ने अच्छेत्यस्य तापसऋषिः अनुष्टुप्छन्दः धनदो देवता धनदावाहने विनियोग. ॥ ॐअग्नेऽअच्छावदेहनःप्रति नः सुमनाभव ॥ प्रनो यच्छ सहस्रजित्वः हि धनदाऽ असि स्वाहा ॥ ॥ ॐभूर्भुवः स्वः धनदाय नमः धनदमावाहयामि स्थापयामि ॥ भो धनद इहागच्छ इहतिष्ठ॥

३७ भद्रङ्कर्णेभिरित्यस्य गोतमऋषि त्रिष्टुप्छन्दः नागकर्णो देवता नागकर्णावाहने विनियोगः॥ ॐभद्रङ्कर्णेभिः शृणुयाम देवाभद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितंयदायुः ॥ ॥ ॐभूर्भुवः स्वः नागकर्णाय नमः नागकर्णमावाहयामि स्थापयामि भो नागकर्ण इहागच्छ इह तिष्ठ ॥

---

१ याज्ञवल्क्यशिक्षायाम्—चकारस्त्रिविध प्रोक्तो गुरुर्लघुर्लघुत्तर आदौगुरुर्लघुर्मध्ये पदान्ते तु लघुत्तर. ॥

॥ उत्तरदिक्कोष्ठे पद्मदले अक्षतपुञ्जोपरि पूगीफले मागादिप्रदक्षिण क्रमेण अन्तिमदले चैकाधिकः इतिसप्तक्षेत्रपालदेवतावाहनम् ॥

३८ वाहुमेवलमित्यस्य प्रजापतिर्ऋषिः गायत्रीछन्दः महाबलो देवता महाबलावाहने विनियोगः॥ ॐबाहूमे वलमिन्द्रियꣳहस्तौ मे कर्म्मवीर्यम्॥ आत्मा क्षत्रमुरो मम ॥ ३८ ॥ ॐभूर्भुवः स्वः महाबलाय नमः महाबलमावाहयामि स्थापयामि ॥ भो महाबल इहागच्छ इह तिष्ठ ॥

३९ अपाम्फेनेनेत्यस्य शङ्खऋषिः गायत्रीछन्दः फेत्कारो देवता फेत्कारावाहने विनियोगः ॥ ॐअपाम्फेनेन नमुचेःशिरइन्द्रोदवर्त्तयः॥ विश्वा यदजयस्पृधः॥३९॥ ॐभूर्भुवः स्वः फेत्काराय नमः फेत्कारमावाहयामि स्थापयामि ॥ भो फेत्कार इहागच्छ इह तिष्ठ ॥

४० इदꣳहविरित्यस्य प्रजापतिर्ऋषिः अष्टिश्छन्दः चीकरो देवता चीकरावाहने विनियोगः ॥ ॐइदꣳ हविः प्रजननम्मेऽअस्तु दशवीरꣳ सर्व्वगणꣳस्वस्तये ॥ आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि ॥ अग्निः प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतोऽअस्मासु धत्त ॥४०॥ ॐभूर्भुवः स्वः चीकराय नमः चीकरमावाहयामि स्थापयामि ॥ भो चीकर इहागच्छ इह तिष्ठ ॥

४१ व्याघ्रमित्यस्य हैमवर्चिर्ऋषिः अनुष्टुप्छन्दः सिंहो देवता सिंहावाहने विनियोगः ॥ ॐव्याघ्रं ह्यग्रं विपूचिकोभौ वृकञ्च रक्षति ॥ श्येनम्पतत्रिणꣳ सिꣳहꣳ सेमम्पात्वꣳहसः ॥४१॥ ॐभूर्भुवः स्वः सिंहाय नमः सिंहमावाहयामि स्थापयामि ॥ भो सिंह इहागच्छ इह तिष्ठ ॥

---

१ प्रतिज्ञासूत्रे—अथान्तस्थानामाद्यस्य पदादिस्थस्यान्यहलसंयुक्तस्य संयुक्तस्यापि रेफोष्मान्त्याभ्यामृकारेण चाविशेषेणादिमध्यान्तस्थानेषूच्चारणे जकारोच्चारणं द्विर्भावेऽप्येवम् ॥

४२ मृगोनभीमइत्यस्यजयऋषिः त्रिष्टुप्छन्दः मृगोदेवता मृगावाहने विनियोगः॥ ॐमृगोनभीम२ कुचरोगिरिष्ठा२ परावतऽआजगन्थापरस्याः॥ सृकछं संशायपविमिन्द्रतिग्मंविशत्रून्ताढिविमृधोनुदस्व॥ ॐभुर्भुवः स्वः मृगाय नमः मृगमावाहयामि स्थापयामि॥ भो मृग इहागच्छ इह तिष्ठ॥

४३ देवहूरित्यस्याविधृतिर्ऋषिः अनुष्टुप्छन्दः यक्षोदेवता यक्षावाहनेविनियोगः॥ ॐदेवहूर्यज्ञऽआचवक्षत्सुम्नहूर्यज्ञऽआचवक्षत्।यक्षदग्निर्देवोदेवाँ२ऽआचवक्षत्॥ उत्तरदिक्कोष्ठपङ्क्तिदलस्यान्तिमदलार्धे-ॐभुर्भुवः स्वः यक्षाय नमः यक्षमावाहयामि स्थापयामि। भो यक्ष इहागच्छ इह तिष्ठ॥

४४ जीमूतस्येत्यस्य भरद्वाजसुतपायुर्ऋषिः त्रिष्टुप्छन्दः मेघवाहनो देवता मेघवाहनावाहने विनियोगः॥ ॐजीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे॥ अनाविद्धया तन्वा जय त्वछं स त्वा वर्मणो महिमा पिपर्तु॥ उत्तरदिक्कोष्ठपङ्क्तिदलस्यान्तिमदलार्धे यक्षादुत्तरतः- ॐभुर्भुवः स्वः मेघवाहनाय नमः मेघवाहनमावाहयामि स्थापयामि॥ भो मेघवाहन इहागच्छ इह तिष्ठ॥

॥ अथईशानदिक्कोष्ठे पङ्क्तिदले अक्षतपुञ्जोपरिपूगीफले मागाऽप्रद-क्षिणक्रमेण अन्तिमदले चैकाधिकः इति सहस्रेत्रपालदेवतावाहनम्॥

४५ तीव्रान्घोषानित्यस्य पायुर्ऋषिः जगतीछन्दः तीक्ष्णोष्ठो देवता तीक्ष्णोष्ठावाहने विनियोगः॥ ॐतीव्रान्घोषान्कृण्वते वृषपाणयोश्वा रथेभिः सह वाजयन्तः॥ अवक्रामन्तः प्रपदैरमित्रान्क्षिणन्ति शत्रूँ२ऽरनपव्ययन्तः॥ ॐभूर्भुवः स्वः तीक्ष्णोष्ठाय नमः तीक्ष्णोष्ठमावाहयामि स्थापयामि॥ भो तीक्ष्णोष्ठ इहागच्छ इह तिष्ठ॥

४६ वायुष्ट्वेत्यस्य प्रजापतिर्ऋषिः बृहतीछन्दः अनलो देवताऽनला-वाहने विनियोगः ॥ ॐ वायुष्ट्वा पचतैरवत्वसितग्रीवश्छागैर्न्यग्रोधश्चमसैः शल्मलिर्वृद्ध्या ॥ एष स्य राथ्यो वृषा पड्भिश्चतुर्भिरेदगन्ब्रह्मा कृष्णश्च नोऽवतु नमोऽग्नये ॥ ॐ भूर्भुवः स्वः अनलाय नमः अनलमावाहयामि स्थापयामि ॥ भो अनल इहागच्छ इह तिष्ठ ॥

४७ अदित्यास्त्वापृष्ठेत्यस्य उशनाऋषिः शक्करीछन्दः शुक्रतुण्डो देवता शुक्रतुण्डावाहने विनियोगः ॥ ॐ अदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धर्त्रीं विष्टम्भनीन्दिशामधिपत्नीम्भुवनानाम् ॥ ऊर्म्मिर्द्रप्सोऽअपामसि विश्वकर्मा तऽऋषिरश्विनाऽध्वर्यू सादयतामिह त्वा ॥ ॐ भूर्भुवः स्वः शुक्रतुण्डाय नमः शुक्रतुण्डमावाहयामि स्थापयामि ॥ भो शुक्रतुण्ड इहागच्छ इह तिष्ठ ॥

४८ द्यौस्ते पृथिवीत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः सुधालापो देवता सुधालापावाहने विनियोगः ॥ ॐ द्यौस्ते पृथिव्यन्तरिक्षं वायुश्छिद्रम्पृणातु ते ॥ सूर्य्यस्ते नक्षत्रैः सह लोकङ्कृणोतु साधुया ॥ ॐ भूर्भुवः स्वः सुधालापाय नमः सुधालापमावाहयामि स्थापयामि ॥ भो सुधालाप इहागच्छ इह तिष्ठ ॥

४९ सम्बर्हिरित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः बर्बरको देवता बर्बरकावाहने विनियोगः ॥ ॐ सम्बर्हिरङ्क्ताᳬ हविषा घृतेन सम्मादित्यैर्वसुभिः सम्मरुद्भिः ॥ समिन्द्रो विश्वदेवेभिरङ्क्तान्दिव्यन्नभो गच्छतु यत्स्वाहा ॥ ॐ भूर्भुवः स्वः बर्बरकाय नमः बर्बरकमावाहयामि स्थापयामि ॥ भो बर्बरक इहागच्छ इह तिष्ठ ॥

५० पवमानः स इत्यस्य प्रजापतिर्ऋषिः गायत्रीछन्दः पवनो देवता पवनावाहने विनियोगः ॥ ॐपवमानः सोऽ अद्यनः पवित्रेण विचर्षणिः ॥ यः पोता स पुनातु मा ॥ २९ ॥ ईशानदिक्कोष्ठपद्दलस्यान्तिमदलार्धे—ॐभूर्भुवः स्वः पवनाय नमः पवनमावाहयामि स्थापयामि ॥ भो पवन इहागच्छ इह तिष्ठ ॥

५१ अभ्यर्षतेत्यस्य वामदेवऋषिः त्रिष्टुपछन्दः पावनो देवता पावनावाहने विनियोगः ॐअभ्यर्षत सुष्टुतिङ्गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ॥ इमं यज्ञन्नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥६॥ ईशानदिक्कोष्ठपद्दलस्यान्तिमदलार्धे पवनादुत्तरतः—ॐभूर्भुवःस्वः पावनायनमःपावनमावाहयामि स्थापयामि॥भो पावन इहागच्छ इह तिष्ठ॥

प्रतिष्ठापनम्-ॐमनोजूति० ॥ व्राह्मणम् ॐमनोजूतिर्ज्जुषतामाज्यस्येतिमनसावाऽइद ꣳ सर्वमाप्तन्तन्मनसैवैतत्सर्व्वमाप्नोतिबृहस्पतिर्य्यज्ञमिमन्तनो [illegible] तिष्ठेत्वासऽइह मादय- यास्मुतिष्ठेति।

एपब्रैमति० ॥ अजरादिमण्डलदेवतासहित श्रीक्षेत्रपाल सुप्रतिष्ठितो वरदो भव ॥ ध्यानम्—ॐअजरादिमण्डलदेवतासहितश्रीक्षेत्रपालाय नमः ध्यायामि ॥ आसनम् ॐअजरादिमण्डलदेवतासहितश्रीक्षेत्रपालायनमः आसनंसमर्पयामि ॥ पाद्यम्—ॐअजरादिमण्डलदेवतासहितश्रीक्षेत्रपालायनमः पाद्यं समर्पयामि ॥ अर्घ्यम्—ॐअजरादिमण्डलदेवतासहितश्रीक्षेत्रपालायनमःअर्घ्यं समर्पयामि॥आचमनीयम्—ॐअजरादिमण्डलदेवतासहित श्रीक्षेत्रपालायनमः॥आचमनीयं समर्पयामि॥पञ्चामृतस्नानम्—ॐअजरादिमण्डलदेवतासहितश्रीक्षेत्रपालायनमः पञ्चामृतस्नानसमर्पयामि॥

पञ्चामृतस्नानान्तेशुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आच मनीयं समर्पयामि ॥ गन्धोदकस्नानम्—ॐअजरादिमण्डलदेवतासहित श्रीक्षेत्रपालाय नमः गन्धोदकस्नानं समर्पयामि ॥ गन्धोदकस्नानान्तं शुद्धोदकस्नानं समर्पयामि॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि उद्वर्तनस्नानम्—ॐअजरादिमण्डलदेवतासहितश्रीक्षेत्रपालाय नमः उद्वर्तनस्नानं समर्पयामि ॥ उद्वर्तनस्नानान्ते उष्णोदकस्नानंसमर्पयामि॥ उष्णोदकस्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि॥ अभिषेकः-ॐअजरादिमण्डलदेवतासहितश्रीक्षेत्रपालायनमः अभिषेकस्नानं समर्पयामि ॥ स्नानम्—ॐअजरादिमण्डलदेवतासहितश्री क्षेत्रपालायनमः स्नानं समर्पयामि ॥ स्नानान्ते आचमनीयं समर्पयामि ॥ वस्त्रम्—ॐअजरादिमण्डलदेवतासहितश्रीक्षेत्रपालायनमः वस्त्रं समर्पयामि॥ वस्त्रान्ते आचमनीयं समर्पयामि ॥ उपवीतम्—ॐअजरादिमंडलदेवता- सहितश्रीक्षेत्रपालाय नमः उपवीतंसमर्पयामि। उपवीतान्तेआचमनीयंस०। गन्धम्—ॐअजरादिमण्डलदेवतासहितश्रीक्षेत्रपालाय नमः गन्धं समर्प०॥ अक्षताः—ॐअजरादिमण्डलदेवतासहितश्रीक्षेत्रपालाय नमः अक्षतान्स०॥

मण्डलदेवतासहितश्रीक्षेत्रपालाय नमः दीपं दर्शयामि ॥ नैवेद्यम्— ॐअजरादिमण्डलदेवतासहितश्रीक्षेत्रपालाय नमः नैवेद्यं निवेदयामि ॥

देवताग्रेगोमयेनजलेनवाचतुष्कोणं मण्डलंकृत्वातदुपरिनैवेद्यपात्रं।निधाय तत्रतुलसीपत्रं निक्षिप्यगायत्रीमन्त्रेणसम्प्रोक्ष्यधेनुमुद्रां प्रदर्श्यग्रासमुद्रया तर्जनीमध्यमाङ्गुष्ठेन-ॐप्राणायस्वाहा। मध्यमानामिकाङ्गुष्ठेन-ॐअपानाय स्वाहा। कनिष्ठिकानामिकाङ्गुष्ठेन-ॐव्यानाय स्वाहा। कनिष्ठातर्जन्यङ्गुष्ठेन-ॐउदानाय स्वाहा। साङ्गुष्ठाभिः सर्वाङ्गुलिभिः-ॐसमानाय स्वाहा॥ पूर्वापोशनंसमर्पयामि॥नैवेद्यमध्ये पानीयंसमर्पयामि॥ उत्तरापोशनंसम० हस्तप्रक्षालनार्थंजलंसमर्पयामि॥ मुखप्रक्षालनार्थंजलंसमर्पयामि॥आचम नीयंसमर्पयामि॥ करोद्वर्तनार्थंचन्दनंसमर्पयामि ॥फलानि-ॐअजरादि मण्डलदेवतासहितश्रीक्षेत्रपालायनमः ऋतुसम्भवानिनानाविधफलानिसम० मुखवासार्थंताम्बूलम्-ॐअजरादिमण्डलदेवतासहितश्रीक्षेत्रपालाय नम मुखवासार्थंसपूगीफलताम्बूलंसमर्पयामि॥दक्षिणा-ॐअजरादिमण्डलदे वतासहितश्रीक्षेत्रपालायनमः सुवर्णपुष्पदक्षिणां सम०॥ कर्पूरार्तिक्यम्-ॐअजरादिमण्डलदेवतासहितश्रीक्षेत्रपालायनमः कर्पूरार्तिक्यंस०॥जले-नप्रदक्षिणावर्त्तनम्। पुष्पैर्देववन्दनम्। आत्मवन्दनम्॥ हस्तप्रक्षालनम्॥ मन्त्रपुष्पाञ्जलिः-ॐअजरादिम० देवतासहितश्रीक्षेत्रपालायनमःमन्त्रपु० स०॥ प्रदक्षिणा-ॐअजरादिमण्डलदे० स० श्रीक्षेत्रपा० नमःप्रदक्षिणां स०॥नमस्कारः-ॐअजरादिम०दे०स०श्रीक्षेत्रपालायनमःनमस्करोमि॥ विशेषार्घ्यः- अर्घ्यपात्रेजलंसम्पूर्यचन्दनपुष्पाक्षतसहितंनारिकेलञ्चधृत्वा ॐअजरादिम०दे०स० श्रीक्षेत्रपा० विशेषार्घ्यंस०॥ प्रार्थना-ॐनमामि क्षे-

[illegible]

[illegible]

जरादिम०दे०स०श्रीक्षेत्रपालःप्रीयताम्॥इतिक्षेत्रपालपीठदेवतापूजनम्॥

## ॥ अथ विष्ण्वर्चनकल्पलताकल्पद्रुमानुसा-रिवर्द्धिनीपूजार्थं जलयात्राप्रयोगः ॥

जलाशयगमनम्—सपत्नीको यजमानः आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य आरब्धमहारुद्राख्ये कर्मणि वर्द्धिनीपूजार्थं जलयात्रां करिष्ये इति सङ्कल्प्य वाद्यघोषपुरःसरं शृङ्गारितान्ताम्रमयान्नवकलशान् सुवासिनीमस्तकोपरि स्थापयित्वा मङ्गलगीतं गायन्तीश्च ताः अग्रतः कृत्वा आनोभद्रानुवाकं शान्त्यध्यायं च पठद्भिः आचार्यऋत्विग्भिः सह जलयात्रोपयुक्तपूजासम्भारान् गृहीत्वा नद्यादिजलाशयं गच्छेत्॥

---

१ कल्पद्रुम जलयात्राप्रयोग मधुपर्कानन्तर इत्यत पर चैव काले यज्ञारम्भाग्नि कर्मनाहुत्या मण्डपप्रवेशाग्निस्थापन दिकर्मस्वतीव विलम्बो भवेज्जलयात्राया नात्यावश्यकत्व चाद्वितीयेह्नि कर्तव्य इति सौगम्यार्थमत्र प्रयोजित ॥ महारुद्रे जलयात्राविधिर्न केषुचित्प्राचीनग्रन्थेषूपलभ्यते परन्तु शिष्टाचारप्राबल्यादस्माभि सङ्गृहीत अत युक्तायुक्त इति दिक् ॥ २ जलयात्रासाहित्यम्—ताम्रमया नवकलशा, गोमूत्र, गोमय, गोदधि गोदुग्ध, गोघृत, शर्करा १ शेर, केशरिचन्दनम्, तण्डुला, पुष्पाणि, पूगीफलानि, धूपशलाका, दीपपात्रम्, दीपार्थं तूलम्, होमार्थं घृतम्, सौभाग्यद्रव्याणि, नारङ्गादिफलानि, नागवल्लीपत्राणि २५, दक्षिणार्थं द्रव्यम्, दूर्वा, अश्वत्थपत्राणि, औदुम्बरपत्राणि, प्लक्षपत्राणि, आम्रपत्राणि, वटपत्राणि, एला, लवङ्गानि, सप्तमृत्तिका, सर्वौषधीचूर्ण, लघपात्र, सर्षपा, पञ्चरत्न पुटीका नव, रक्तसूत्रम्, यवा, बल्यर्थं पायस माषाश्च, गुड, यज्ञोपवीतानि, मधु, आचमनपात्रम्, पञ्चपात्रम् जलप्रक्षेपपात्रम्, अर्घपात्रम्, कुङ्कुम, सिन्दूरम्, श्वेतचूर्णम्, रक्तचूर्णम्, हरिद्राचूर्णम्, कर्पूरम्, जलमातृकादिस्थापनार्थं हस्तमात्र रक्त श्वेत वा वस्त्रखण्डम् ॥ आचमनीयपात्रे निक्षेपणार्थं कक्कोलजातीफलचूर्णम् ॥

जलाशयंप्राप्यजलाशयतीरेशुचिदेशेपञ्चगव्येनभूमिंसम्प्रोक्ष्यगोमयेन चतुरस्रमण्डलं कृत्वा स्वस्तिकंविरच्यतदुपरिसपत्नीकंयजमानमुदङ्मुख-मुपवेशयेत् यजमानपुरतो यवैस्तण्डुलैःसौभाग्यद्रव्यादिना वा अष्टदलं पद्मं कुर्यात् आनीतान्नवकलशान् पूजासम्भारांश्च समीपे संस्थापयेत् ॥

सङ्कल्पः—आचम्यप्राणानायम्य देशकालौ सङ्कीर्त्यजलयात्राङ्गभूतं श्रीवरुणदेवताप्रीत्यर्थंगणेशजलमातृजीवमातृस्थलमातृसप्तसागरयोगिनी-क्षेत्रपालजलवरुणभूमिपूजनपूर्वकंनवयार्द्धनीकलशेषु वरुणपूजनं करिष्ये।

सर्वदिक्षुसर्षपविकिरणम्—इन्द्रघोषस्त्वेत्यस्यगोतमऋषिः यजुश्छन्दः उत्तरवेदिर्देवतासर्षपविकिरणेविनियोगः॥ॐइन्द्रघोषस्त्वावसुभिःपुरस्तात्पातुप्रचेतास्त्वारुद्रैः पश्चात्पातुमनोजवास्त्वापितृभिर्दक्षिणतः पातुविश्वकर्म्मात्वादित्यैरुत्तरतः पात्विदमहन्तप्तंवार्ब्बहिर्द्धायज्ञान्निःसृजामि॥ ५/११ ॥

गणपतिपूजनम्—ताम्रपात्रेगणेशंसंस्थाप्य—महागणपतिं ध्यायामि॥ महागणपतिमावाहयामि ॥ प्रतिष्ठापनम्—गणेश सुप्रतिष्ठितो वरदो भव ॥ महागणपतये नमः आसनं समर्पयामि॥ महागणपतये नमः पाद्यं समर्पयामि॥महागणपतयेनमः अर्घ्यं समर्पयामि॥महागणपतयेनमः आचमनार्थे जलं समर्पयामि॥ महागणपतयेनमः पञ्चामृतस्नानं समर्पयामि॥महागणपतये नमः पञ्चामृतस्नानान्ते आचमनीयं समर्पयामि॥महागणपतयेनमः शुद्धोदकस्नानं समर्पयामि॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ ततस्तं गन्धानुलेपनपूर्वकं पत्रपुटेअक्षतपुञ्जे संस्थाप्य महागणपतये नमः वस्त्रोपवस्त्रे समर्पयामि॥ वस्त्रान्ते आचमनीयं समर्पयामि ॥ महागणपतये नमः यज्ञोपवीतं समर्पयामि ॥ यज्ञोपवीतान्ते आचमनीयं समर्पयामि ॥

महागणपतये नमः गन्धं समर्पयामि ॥ महागणपतये नमः अक्षतान्समर्प-
यामि ॥ महागणपतये नमः पुष्पाणि समर्पयामि ॥ महागणपतये नमः
दुर्वाङ्कुरान्समर्पयामि ॥ महागणपतये नमः सौभाग्यद्रव्याणि समर्पयामि॥
महागणपतये नमः धूपमाघ्रापयामि ॥ महागणपतये नमः दीपं दर्शयामि ॥
महागणपतये नमः नैवेद्यं निवेदयामि ॥ महागणपतये नमः नैवेद्यमध्ये
पानीयं समर्पयामि ॥ उत्तरापोशनं समर्पयामि ॥ हस्तप्रक्षालनार्थे जलं
समर्पयामि ॥ मुखप्रक्षालनार्थे जलं समर्पयामि ॥ आचमनीयं समर्प-
यामि ॥करोद्वर्तनार्थे गन्धं समर्पयामि ॥ मुखवासार्थे ताम्बूलं समर्पयामि ॥
महागणपतये नमः सुवर्णपुष्पदक्षिणां समर्पयामि ॥ महागणपतये नमः
कर्पूरार्तिक्यं दर्शयामि ॥ महागणपतये नमः मन्त्रपुष्पाञ्जलिं समर्पयामि॥
महागणपतये नमः प्रदक्षिणां समर्पयामि ॥ महागणपतये नमः विशे-
षार्घ्यं समर्पयामि ॥ महागणपतये नमः प्रार्थनापूर्वकं नमस्करोमि ॥
श्रीमहागणपतये नमः सदीपमाषभक्तबलिं समर्पयामि ॥ हस्ते जल-
मादाय अनया पूजया श्रीमहागणपतिः प्रीयताम् ॥

जलमातृकापूजनम्—मातृकास्थापनार्थे वस्त्रमास्तीर्य तत्र उदक्संस्थान्
सप्ताक्षतपुञ्जान्कृत्वा तदुपरि जलमातृका आवाह्य पूजयेत ॥

१ ॐभूर्भुवःस्वःमत्स्यैनमः मत्सीमावा० स्था० भोमत्स्ये इहागच्छइहतिष्ठ।
२ ॐभूर्भुवःस्वःकूर्म्यैनमःकूर्मीमावा० स्था० भो कूर्मि इहागच्छइहतिष्ठ ॥
३ ॐभूर्भुव स्वःवाराहीनमःवाराहीमावा० स्था० भोवाराहिइहागच्छइह ०।

१ मत्सीकूर्मीचवाराहीमण्डूकीमकरीतथा । ग्राहकीकौञ्चिकीचैवख्याताजलमातर ॥

४ ॐभूर्भुवःस्वःमाण्डव्यै०माण्डकीमा०स्था०भोमाण्डकिइहागच्छइह०॥
५ ॐभूर्भुवःस्वःमकर्यैनमः मकरीमावा०स्था०भोमकरिइहागच्छइहतिष्ठ॥
६ ॐभूर्भुवःस्वःग्राहक्यैनमःग्राहकीमावा०स्था० भोग्राहकिइहाग० इह०॥
७ ॐभूर्भुवः स्वः क्रौञ्चिक्यै नमः क्रौञ्चिकीमावाहयामि स्थापयामि ॥
भो क्रौञ्चिकि इहागच्छ इह तिष्ठ ॥ प्रतिष्ठापनम्—ॐमनोजूति० ॥ ३३/२ ॥
ॐभूर्भुवः स्वः मत्स्याद्यावाहितमातरः सुप्रतिष्ठिताः वरदाःभवत॥ ॐभूर्भुवः
स्वःमत्स्याद्यावाहितजलमातृभ्योनमः इतिमन्त्रेणगन्धाद्युपचारैः पूजयेत्॥

॥ तत्पुरतः सप्ताक्षतपुञ्जेषु सप्तजीवमातृका आवाह्य पूजयेत् ॥

१ ॐभूर्भुवःस्वःकुमार्यैनमःकुमारीमा०स्था०भोकुमारिइहागच्छइहतिष्ठ॥
२ ॐभूर्भुवःस्वःधनदायैनमःधनदामावाह०स्था०भोधनदेइहागच्छइ०॥
३ ॐभूर्भुवःस्वःनन्दायैनमःनन्दामावा० स्था० भोनन्देइहाग० इहतिष्ठ॥
४ ॐभूर्भुवःस्वःविमलायैनमःविमलामावा०स्था०भोविमले इहा०इह०॥
५ ॐभूर्भुवःस्वःमङ्गलायैनमः मङ्गलामावा०स्था०भोमङ्गलेइहा०इह०॥
६ ॐभूर्भुवःस्वःअचलायैनमः अचलामावा०स्था०भोअचलेइहा०इह०॥
७ [illegible]

ॐभूर्भुवः स्वः कुमार्याद्यावाहितजीवमातृकाः सुप्रतिष्ठिताः वरदाः भवत ॥
पूजनम्—ॐभूर्भुवः स्वः कुमार्याद्यावाहितजीवमातृकाभ्यो नमः ॥
इति मन्त्रेण गन्धाद्युपचारैः पूजयेत् ॥

---

१ कुमारीधनदानन्दाविमलामङ्गलाचला। पद्माचेतिसुविख्याताः सप्तैताजीवमातृकाः॥

॥ तत्पुरतः सप्ताक्षतपुञ्जेषु सप्तस्थलमातृका आवाह्य पूजयेत् ॥

१ ॐभूर्भुवःस्वःऊर्म्यैनमःऊर्मीमावाहयामिस्था०भोऊर्मिइहागच्छइहतिष्ठ॥
२ ॐभूर्भुवःस्वःलक्ष्म्यैनमःलक्ष्मीमावा०स्था०भोलक्ष्मीःइहागच्छइह०॥
३ ॐभूर्भुवःस्वःमहामायायै०महामायामा०स्था०भोमहामायेइहा०इ० ॥
४ ॐभूर्भुवःस्वः पानदेव्यैनमः पानदेवीमा०स्थ०भो पानदेवि इ०इह०॥
५ ॐभूर्भुवःस्वःवारुण्यैनमः० वारुणीमावा०स्था० भोवारुणि इ०इह०॥
६ ॐभूर्भुवःस्वःनिर्मलायैनमःनिर्मलामावा०स्था० भो निर्मले इ०इह० ॥
७ ॐभूर्भुवःस्वःगोधायैनमःगोधामावाहयामिस्था०भोगोधेइहा०इहतिष्ठ ॥

प्रतिष्ठापनम्—ॐमनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञ० ॥ $\frac{१३}{२}$ ॥
ॐभूर्भुवःस्वः ऊर्म्याद्यावाहितस्थलमातृकाः सुप्रतिष्ठिताः वरदाः भवत ॥

पूजनम्—ॐभूर्भुवः स्वः ऊर्म्याद्यावाहितस्थलमातृकाभ्यो नमः इति मन्त्रेण गन्धाद्युपचारैः पूजयेत् ॥

॥ तत्पुरतः अक्षतपुञ्जोपरि सप्तसागरानावाह्य पूजयेत् ॥

समुद्रादूर्मिरित्यस्यवामदेवऋषिः त्रिष्टुप्छन्दः सप्तसागरादेवताः सप्तसागरावाहनेविनियोगः॥ॐसमुद्रादूर्मिर्मधुमाँ२ऽउदारदुपा७ शुनासममृतत्वमानट्॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्य नाभिः ॥ $\frac{८९}{१७}$ ॥

---

१ ऊर्मीलक्ष्मीर्महामाया पानदेवी तथैव च । वारुणी निर्मला गोधा सप्तैताः स्थलमातरः ॥ २ लवणेक्षुसुरासर्पिर्दधिक्षीरजला इति ॥

ॐभूर्भुवः स्वः सप्तसागरेभ्यो नमः सप्तसागरानावाहयामि स्थापयामि ॥ भोसप्तसागराःइहागच्छत इह तिष्ठत ॥ प्रतिष्ठापनम्—ॐमनोजूतिर्जुषता-माज्यस्य० ॥ ॐभूर्भुवःस्वः सप्तसागराः सुप्रतिष्ठिता वरदा भवत ॥

पूजनम्—ॐभूर्भुवः स्वः सप्तसागरेभ्यो नमः इति मन्त्रेण गन्धाद्युपचारैः पूजयेत् ॥ अनया पूजया भगवन्तः सप्तसागराः प्रीयन्ताम् ॥

जले—चतुः षष्टीयोगिनीभ्योनमः इतिमन्त्रेणगन्धाद्युपचारैः पूजयेत् ॥

॥ वायव्यां क्षेत्रपालं सिन्दूरादिना लिखित्वा आवाह्य पूजयेत् ॥

क्षत्रस्ययोनिरित्यस्य प्रजापतिर्ऋषिः द्विपदाविराड्गायत्रीछन्दः क्षेत्रपालो देवता क्षेत्रपालावाहने विनियोगः ॥ ॐक्षत्रस्य योनिरसिक्षत्रस्य नाभिरसि ॥ मा त्वा हिᳬसीन्मा मा हिᳬसीः ॥ ॐभूर्भुवःस्वःक्षेत्रपालाय नमः क्षेत्रपालमावाहयामि स्थापयामि ॥ भो क्षेत्रपाल इहागच्छ इह तिष्ठ॥ॐभूर्भुवःस्वःक्षेत्रपालायनमः इतिमन्त्रेणगन्धाद्युपचारैःपूजयेत् ॥

बलिदानम्—क्षेत्रपालाग्रे सदीपदधिमाषभक्तबलिं संस्थाप्य—ॐक्षेत्रपाल महाबाहो महाबलपराक्रम । बलिं गृहाण देवेश क्षेत्ररक्षणहेतवे ॥ ॐभूर्भुवः स्वः क्षेत्रपालाय नमः सदीपदधिमाषभक्तबलिं समर्पयामि ॥

जलाशयस्थितजले जलपूजनम्—ॐभूर्भुवःस्वःअद्भ्योनमः गन्धाक्षतपुष्पाणिसमर्पयामि॥ॐभूर्भुवःस्वःमानसादिसरोभ्यो नमः गन्धाक्षतपुष्पाणिसमर्पयामि॥ ॐभूर्भुवःस्वः पुष्करादितीर्थेभ्यो नमः गन्धाक्षतपुष्पाणि सम० ॥ ॐभूर्भुवःस्वःगङ्गादिमहानदीभ्योनमःगन्धाक्षतपुष्पाणिसमर्प० ॥

जलाशयस्थितजलेवरुणमात्राद्यपूजनम्—तत्त्वायामीतिशुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणो देवता वरुणावाहने विनियोगः॥ ॐतत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः॥ अहेडमानो वरुणेहबोध्युरुशंसमा नऽ आयुः प्रमोषीः॥ १८ ॥

जले—ॐभूर्भुवः स्वः वरुणाय नमः वरुणमावाहयामि स्थापयामि ॥ भो वरुण इहागच्छ इह तिष्ठ ॥

प्रतिष्ठापनम्—ॐमनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञᳪसमिमन्दधातु ॥ विश्वेदेवासऽइह मादयन्तामो३म्प्रतिष्ठ ॥ १३ ॥ ॐभूर्भुवः स्वः वरुण सुप्रतिष्ठितो वरदो भव ॥ पूजनम्—ॐभूर्भुवः स्वः वरुणाय नमः इति मन्त्रेण गन्धाद्युपचारैः पूजयेत् ॥

बलिदानम्—माषभक्तबलिं संस्थाप्य—ॐभूर्भुवः स्वः वरुणाय नमः माषभक्तबलिं समर्पयामि ॥

॥ जले पञ्चामृतप्रक्षेपः ॥

पयःप्रक्षेपः—पयःपृथिव्यामित्यस्य कुशोधानाऋषिः विराट्छन्दः अग्निर्देवता जले पयःप्रक्षेपे विनियोगः॥ ॐपयः पृथिव्याम्पयऽओषधी-पुपयोदिव्यन्तरिक्षे पयो धाः॥ पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ ३६ ॥ दधिप्रक्षेपः—दधिक्राव्णइत्यस्यवामदेव्योदधिक्रावाऋषिः अनुष्टुप्छन्दः अश्वोदेवता जलेदधिप्रक्षेपेविनियोगः॥ॐदधिक्राव्णोऽअकारिषञ्जिष्णो-रश्वस्यवाजिनः ॥ सुरभि नो मुखाकरत्प्रणऽ आयूᳪषितारिषत् ॥ ३२ ॥

घृतप्रक्षेपः—घृतम्मिमिक्षइत्यस्य गृत्समदऋषिः त्रिष्टुप्छन्दः अग्निर्देवता घृतप्रक्षेपे विनियोगः॥ ॐघृतम्मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम ॥ अनुष्वधमावह मादयस्व स्वाहा कृतं वृषभ वक्षि हव्यम् ॥ ६६॥ मधुप्रक्षेपः—मधुवाता इतित्र्यृचस्य गोतमऋषिः गायत्रीछन्दः विश्वेदेवा देवताः जले मधुप्रक्षेपे विनियोगः॥ ॐमधु वाताऽ ऋतायते मधु क्षरन्ति सिन्धवः॥ माध्वीर्नः सन्त्वोषधीः ॥ मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः॥ मधु द्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमाँ२ऽ अस्तु सूर्यः॥ माध्वीर्गावो भवन्तु नः ॥ २७-२९ ॥

शर्कराप्रक्षेपः—अपामित्यस्य बृहस्पतीन्द्रावृषी यजुरन्त्यानुष्टुप्छन्दः रसो देवता जले शर्कराप्रक्षेपे विनियोगः—ॐअपाꣳ रसमुद्वयसꣳ सूर्ये सन्तꣳ समाहितम् ॥ अपाꣳ रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ ३ ॥

जले स्रुवेण द्वादशघृताहुतीर्जुहुयात् १ ॐअद्भ्यःस्वाहा—इदमद्भ्यो न मम ॥ २ ॐवार्भ्यः स्वाहा—इदं वार्भ्यो न मम॥ ३ ॐउदकाय स्वाहा इदमुदकाय न मम ॥४ॐतिष्ठन्तीभ्यः स्वाहा—इदंतिष्ठन्तीभ्यो न मम ॥ ५ॐस्रवन्तीभ्यः स्वाहा इदं स्रवन्तीभ्योनमम॥६ ॐस्यन्दमानाभ्यः स्वाहा इदंस्यन्दमानाभ्यो न मम ॥७ॐकूप्याभ्यःस्वाहा—इदंकूप्याभ्यो न मम॥ ८ॐसूद्याभ्यःस्वाहा—इदंसूद्याभ्योनमम॥९ॐधार्याभ्यःस्वाहा—इदंधार्याभ्यो न मम॥ १०ॐअर्णवायस्वाहा—इदमर्णवायनमम॥११ॐसमुद्राय स्वाहा—इदंसमुद्राय नमम॥१२ॐसरिरायस्वाहा—इदं सरिराय न मम ॥

ॐब्राह्मणमद्य विदेयम्पितृमन्तम्पैतृमत्यमृषिमार्षेयꣳ सुधातुदक्षिणम् ॥ अस्मद्राता देवत्रा गच्छत प्रदातारमाविशत ॥ ३६ ॥ हस्ते जलमादाय—इदं सर्वं जलाधिपतये सपरिवाराय वरुणाय न मम ॥

वरुणायार्घ्यप्रदानम्—वरुणस्योत्तम्भनमसीत्यस्य वत्सऋषिः बृहतीछन्दः वरुणो देवता वरुणायार्घ्यप्रदाने विनियोगः ॥ ॐवरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनीस्थो वरुणस्यऽ ऋतसदन्न्यसि वरुणस्यऽऋतसदनमसि वरुणस्यऽ ऋतसदनमासीद ॥ ३६ ॥ ॐवरुणाय नमः इदमर्घ्यं दत्तं न मम ॥ एवं पुनः वरुणाय द्विवारमर्घ्यं दद्यात् ॥

जले फलप्रक्षेपः—याः फलिनीरित्यस्य भिषगृषिः विराडनुष्टुप्छन्दः ओषधयो देवताः जलेफलप्रक्षेपे विनियोगः॥ ॐया॒ फलिनीर्याऽअफलाऽ अपुष्पायाश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ ३२ ॥

भूमिपूजनम् ॥ भूमिं स्पृष्ट्वा—भूरसीत्यस्य त्रिशिराऋषिः प्रस्तारपङ्क्तिश्छन्दः स्वयमातृण्णा देवता भूमिस्पर्शने विनियोगः ॥ ॐभूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ॥ पृथिवीं यच्छ पृथिवीन्दृꣳह पृथिवीम्मा हिꣳसीः ॥ १८/१३ ॥

आसनम्—महीद्यौरित्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः द्यावापृथिवीदेवते आसनदाने विनियोगः ॥ ॐमही द्यौः पृथिवी च नऽ इमं

१ यामले—हस्ताब्जयोस्ततोदद्यादर्घ्यतोयैः सुवासितैः ॥ ज्ञानमालायाम्- अर्घ्यं दिशेत्तोयमूर्ध्नि शिरोमन्त्रेण देशिकः ॥ ( शिरोमन्त्रस्तु स्वाहा ) महाकाले--अर्घ्यं मूर्ध्नि प्रदातव्यं स्वाहामन्त्रेण साधकैः ॥ विश्वामित्रसंहितायाम्--उशीररोचनाचैवयवव्रीहितिलानपि । आज्यसिद्धार्थपुष्पाणि क्षिपेदर्घ्यस्य पात्रके ॥ वशिष्ठसंहितायाम्-अर्घ्यं पुष्पाक्षतयवकुशाग्रतिलसर्षपैः । गन्धदूर्वाजलैः प्रोक्त मुनिभिस्तत्त्वदर्शिभिः ॥

सुशर्म्मिमिक्षताम् ॥ पिपृताञ्नो भरीमभिः ॥[३२ / ६]॥ ॐभूर्भुवः स्वः भूम्यै नमः आसनं समर्पयामि ॥

पाद्यम्—पाद्यपात्रं सम्पाद्य—पृथिवीचमइत्यस्यदेवाऋषयः भुरिक्छक्करीछन्दः अग्निर्देवता पाद्यसमर्पणे विनियोगः ॥ ॐपृथिवी च मुऽ इन्द्रश्च मेन्तरिक्षञ्च मुऽ इन्द्रश्च मे द्यौश्च मुऽ इन्द्रश्च मे समाश्च मुऽ इन्द्रश्च मे नक्षत्राणि च मुऽ इन्द्रश्च मे दिशश्च मुऽ इन्द्रश्च मे मुखेन कल्पन्ताम् ॥[१८ / १८]॥ ॐभूर्भुवः स्वः भूम्यै नमः पाद्यं समर्पयामि ॥

अर्घ्यम्—अर्घ्यं सम्पाद्य—स्योनापृथिवीत्यस्य मेधातिथिर्ऋषिः गायत्री छन्दः पृथिवी देवता अर्घ्यसमर्पणे विनियोगः ॥ ॐस्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नुःशर्म्म सुप्रथाः ॥[३६ / १३]॥ ॐभूर्भुवः स्वः भूम्यै नमः अर्घ्यं समर्पयामि ॥

आचमनीयम् ॥ आचमनीयपात्रे जलजातिफललवङ्गकङ्कोलादीनि निक्षिप्य—शन्नोदेवीरित्यस्यदध्यङ्ङाथर्वणऋषिःगायत्रीछन्दःआपोदेवताः आचमनीयसमर्पणेविनियोगः। ॐशन्नोदेवीरभिष्टयुऽआपोभवन्तुपीतये। शंय्योरभिस्रवन्तु नः ॥[३६ / १२]॥ ॐभूर्भुवःस्वःभूम्यैनमः आचमनीयंसमर्प०॥

पयःस्नानम्—पयः पृथिव्यामित्यस्य लुशोधानाकऋषिः निराद्छन्दः अग्निर्देवता पयःस्नाने विनियोगः ॥ ॐपयः पृथिव्याम्पयुऽ ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः ॥ पयस्वतीः मुदिशः सन्तु मह्यम् ॥[१८ / ३६]॥ ॐभूर्भुवः स्वः भूम्यै नमः पयःस्नानं समर्पयामि ॥

---

१ दूर्वा च विष्णुक्रान्ता च श्यामाकः पद्ममेव च। पाद्याङ्गानि च चत्वारि कथितानि समासतः ॥ २ तथाचमनपात्रे तु दद्याज्जातिफलं मुने। लवङ्गमपि कङ्कोलं शस्तमाचमनीयके ॥

शुद्धोदकस्नानम्-इरावतीत्यस्य वसिष्ठऋषिः स्वराडार्षी त्रिष्टुप्छन्दः विष्णुर्देवता शुद्धोदकस्नाने विनियोगः॥ ॐइरावतीधेनुमतीहिभूतꣳसूयवसिनी मनवे दशस्या ॥ व्यस्कभ्नारोदसीविष्णवेतेदाधर्थपृथिवीमभितो मयूखैः स्वाहा॥१६॥ ॐभूर्भुवः स्वः भूम्यै नमः शुद्धोदकस्नानं समर्पयामि॥

वस्त्रप्रदानम्—यऽइमेद्यावाइत्यस्य जमदग्निऋषिः त्रिष्टुप्छन्दः होता देवता वस्त्रसमर्पणे विनियोगः ॥ ॐयऽ इमे द्यावापृथिवी जनित्री रूपैरपिꣳशद्भुवनानि विश्वा ॥ तमद्य होतरिषितो यजीयान्देवन्त्वष्टारमिह यक्षि विद्वान् ॥२९॥ ॐभूर्भुवः स्वः भूम्यै नमः वस्त्रं समर्पयामि॥

गन्धदानम्—यद्वद्धयामित्यस्य दीर्घतमाऋषिः त्रिष्टुप्छन्दः अश्वो देवता गन्धसमर्पणे विनियोगः ॥ ॐयद्वद्धयमुदरस्यापवाति यऽ आमस्य क्रविषो गन्धोऽ अस्ति ॥ सुकृता तच्छमितारः कृण्वन्तुत मेधꣳ शृतपाकम्पचन्तु ॥२९॥ ॐभूर्भुवःस्वः भूम्यै नमः गन्धं समर्पयामि॥

अक्षताः—अक्षन्नमीत्यस्य गोतमऋषिः विराट्पंक्तिश्छन्दः इन्द्रो देवता अक्षतसमर्पणे विनियोगः ॥ ॐअक्षन्नमीमदन्त ह्यव प्रियाऽ अधूषत ॥ अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥५१॥ ॐभूर्भुवः स्वः भूम्यै नमः अक्षतान्समर्पयामि ॥

पुष्पाणि—श्रीश्चतइत्यस्यनारायणऋषिःनिचृदार्षीत्रिष्टुप्छन्दःआदित्यो देवता पुष्पसमर्पणे विनियोगः ॥ ॐश्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्मऽ इषाण सर्वलोकम्मऽ इषाण ॥२२॥ ॐभूर्भुवःस्वःभूम्यै नमःपुष्पाणि समर्पयामि॥

---

१ इदं पृथिवीपूजनं कल्पद्रुमानुसारित्वादत्र दध्यादिस्नानं न ॥

धूपः—धूरसीत्यस्य विवस्वानृषिः जगतीछन्दः धूर्देवता धूपाघ्रापने विनियोगः ॥ ॐधूरसि धूर्व धूर्वन्तन्धूर्व तं योऽस्मान्धूर्वति तन्धूर्व यं वयन्धूर्वामः ॥ देवानामसि वह्नितमꣳ सस्नितमम्पप्रितमञ्जुष्टतमन्देवहूतमम् ॥ ८ ॥ ॐभूर्भुवः स्वः भूम्यै नमः धूपमाघ्रापयामि ॥

दीपः—अग्निर्ज्योतिरित्यस्य तक्षजीवलचैलकयः ऋषयः एकपदागायत्रीछन्दः लिङ्गोक्ता देवताः दीपदर्शने विनियोगः ॥ ॐअग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ॥ अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा ॥ ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥ ९ ॥ ॐभूर्भुवः स्वः भूम्यै नमः दीपं दर्शयामि ॥

नैवेद्यम्—अन्नपतऽइत्यस्य नाभानेदिष्टऋषिः उपरिष्टाद्बृहतीछन्दः अग्निर्देवता नैवेद्यसमर्पणे विनियोगः ॥ ॐअन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्रप्रदातारन्तारिषऽ ऊर्जन्नो धेहि द्विपदे चतुष्पदे ॥ ११ ॥ ॐभूर्भुवः स्वः भूम्यै नमः नैवेद्यं निवेदयामि ॥

आचमनीयम्—शिवोनामासीत्यस्य नारायणऋषिः भुरिक्जगतीछन्दः क्षुरो देवता आचमनसमर्पणे विनियोगः ॥ ॐशिवो नामासि स्वधितिस्ते पिता नमस्तेऽ अस्तु मा मा हिꣳसीः ॥ निवर्त्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥ ६३ ॥ ॐभूर्भुवः स्वः भूम्यै नमः आचमनीयं समर्पयामि ॥

फलानि—याः फलिनीरित्यस्य भिषगृषिः विराडनुष्टुप्छन्दः ओषधयो देवताः फलसमर्पणे विनियोगः ॥ ॐयाः फलिनीर्याऽ अफलाऽ अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ ८९ ॥ ॐभूर्भुवः स्वः भूम्यै नमः फलानि समर्पयामि ॥

ताम्बूलम्—उतस्मास्येत्यस्य दधिक्रावाऋषिः आर्षीजगतीछन्दः अश्वो देवता ताम्बूलसमर्पणे विनियोगः॥ ॐउत स्मास्य द्रवतस्तुरण्यत२ पुर्णन्न वेरनुवाति प्रगर्द्धिनः॥ श्येनस्येव ध्रजतोऽ अङ्कसम्परि दधिक्राव्णः सहोर्जा तरित्रतः स्वाहा॥ १॥ ॐभूर्भुवः स्वः भूम्यै नमः ताम्बूलं स०॥

दक्षिणा—यद्दत्तमित्यस्य विश्वकर्माऋषिः निचृदनुष्टुप्छन्दः अग्निर्देवता दक्षिणासमर्पणे विनियोगः॥ ॐयद्दत्तं यत्परादानं यत्पूर्त्तं याश्च दक्षिणाः॥ तदग्निर्वैश्वकर्म्मण२ स्वर्द्देवेषु नो दधत्॥ २॥ ॐभूर्भुवः स्वः भूम्यै नमः सुवर्णपुष्पदक्षिणां समर्पयामि॥

पुष्पाञ्जलिः—धामच्छदित्यस्य उत्कीलऋषिः अनुष्टुप्छन्दः विश्वेदेवा देवताः पुष्पाञ्जलिसमर्पणे विनियोगः॥ ॐधामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः॥ सचेतसो विश्वेदेवा यज्ञम्प्रावन्तु नः शुभे॥ ३॥ ॐभूर्भुवः स्वः भूम्यै नमः पुष्पाञ्जलिं समर्पयामि॥

नमस्कारः—पृथिव्याइत्यस्य विधृतिर्ऋषिः पिपीलिकमध्याबृहतीछन्दः अग्निर्देवता नमस्कारसमर्पणे विनियोगः॥ ॐपृथिव्याऽ अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम्॥ दिवो नाकस्य पृष्ठात्स्वर्ज्योतिरगामहम्॥ ४॥ ॐभूर्भुवः स्वः भूम्यै नमः नमस्कारं समर्पयामि॥

समर्पणम्—हस्ते जलमादाय—अनया पूजया भगवती भूमिः प्रीयताम्॥

---

१ सुपूगं च सुपत्रं च चूर्णेन च समन्वितम्। दद्यात्तु द्विजदेवेभ्यस्ताम्बूलं प्रीतिपूर्वकम्॥ २ भविष्ये—जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः। कृत्वा प्रणामं देवे वै सर्वान्कामानवाप्नुयात्॥

॥ अष्टदलोपरि नववर्द्धिनीकलशस्थापनप्रयोगः ॥

महीद्यौरित्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः द्यावापृथिवीदेवते भूमिस्पर्शने विनियोगः ॥ अष्टदलाग्रे भूमिं स्पृष्ट्वा—ॐमुही द्यौः पृथिवी च नऽ इमं युज्ञम्मिमिक्षताम् ॥ पिपृतान्नो भरीमभिः ॥ ३२ ॥

अष्टदलोपरि मध्ये च यवप्रक्षेपः—ओषधयइत्यस्य वन्धुर्ऋषिः निचृदनुष्टुप्छन्दः ओषधयो देवताः यवप्रक्षेपे विनियोगः ॥ ॐओषधयुः समवदन्त सोमेन सुह राज्ञा ॥ यस्मै कृणोति ब्राह्मणस्तᳬ राजन्पारयामसि ॥ ९६ ॥

॥ अष्टदलेषु अष्टदिक्षु अष्टाना मध्ये चैकस्येति नवकलशानां स्थापनम् ॥

आजिघ्रेत्यस्य कुसुरुबिन्दुर्ऋषिः स्वराड्ब्राह्म्युष्णिक्छन्दः गौर्देवता नवकलशस्थापने विनियोगः ॥ ॐआजिघ्र कुलशम्मुह्या त्वा विशुन्त्विन्दवः ॥ पुनरूर्जा निवर्तस्वुसा नः सुहस्रन्धुक्ष्वोरुधारा पयस्वती पुनुर्म्माविशताद्रयिः ॥ ४२ ॥

ससदर्भपवित्रैः कलशपवित्रीकरणम्—चित्पतिर्मेत्यस्य प्रजापतिर्ऋषिः निचृदार्षीपङ्क्तिश्छन्दः प्रजापतिसवितारौदेवते कलशपवित्रीकरणे विनियोगः ॥ ॐचित्पतिर्म्मा पुनातु वाक्पतिर्म्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण पुवित्रेण सूर्य्यस्य रुश्मिभिः ॥ तस्य ते पवित्रपते पुवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥ ४ ॥

स्थिरीकरणम्—स्थिरोभवेत्यस्य नितऋषिः विराडनुष्टुप्छन्दः रासभो देवता कलशस्थिरीकरणे विनियोगः ॥ ॐस्थिरो भव वीड्वङ्गऽ आशुर्भव वाज्यर्वन् ॥ पृथुर्भव सुषदुस्त्वमुग्नेः पुरीषवाहणः ॥ ४४ ॥

नवकुम्भेषुजलपूरणम्—समुद्रं ज्येष्ठा इतिचतसृणां मैत्रावरुणिर्वसिष्ठ ऋषिः त्रिष्टुप्छन्दः आपोदेवताः ॥ समुद्रमित्यस्य दीर्घतमाऋषिः यजुश्छन्दः लिङ्गोक्ता देवताः । समुद्रायेतिदधीचऋषिः आसुरी त्रिष्टुप्छन्दः वातोदेवता ॥ समुद्रोसीत्यस्य लुशोधानाकऋषिः निचृद्गायत्रीछन्दः वायुर्देवता । इमम्मइत्यस्य शुनःशेपऋषिः गायत्रीछन्दः वरुणो देवता ॥ वरुणस्येत्यस्य वत्सऋषिः विराड्ब्राह्मी बृहतीछन्दः वरुणो देवता नवकलशेषूदकपूरणे विनियोगः ॥

१ ———— ना-
ग्रुंत्यर्नि ॥

२ पूर्वकलशेजलपूरणम्—ॐया आपोदिव्या उतवास्रवंतिखनित्रिमाउतवायाःस्वयंजाः । समुद्रार्थायाःशुचंयःपावकास्ताआपोदेवीरिहमामवन्तु ।

३ आग्नेयकलशेजलपूरणम्—ॐयासाराजावरुणोयातिमध्येसत्यानृतेअवपश्यञ्जनानां । मधुश्चुतःशुचयोयाःपावकास्ताआपोदेवीरिहमामवन्तु ।

४ दक्षिणकलशेजलपूरणम्—ॐयासुराजावरुणोयासुसोमोविश्वेदेवायासूर्जंमदन्ति । वैश्वानरोयास्वग्निःप्रविष्टस्ताआपोदेवीरिहमामवन्तु ॥

५ नैर्ऋत्यकलशे जलपूरणम्—ॐसमुद्रङ्गच्छ स्वाहान्तरिक्षङ्गच्छ स्वाहा देवꣳ सवितारङ्गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहाहोरात्रे गच्छ स्वाहा च्छन्दाꣳसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा यज्ञङ्गच्छ स्वाहा सोमङ्गच्छ स्वाहा दिव्यन्नभो गच्छ स्वाहाग्निं वैश्वानरङ्गच्छ स्वाहा मनो मे हार्दि यच्छ दिवन्ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीम्भस्मनापृण स्वाहा ॥ $\frac{२१}{६}$ ॥

१ समुद्रज्येष्ठा इति चत्वारो बह्वृचोक्ताः ॥

६ पश्चिमकलशे जलपूरणम्—ॐ समुद्राय त्वा वाताय स्वाहा सरिराय त्वा वाताय स्वाहा ॥ अनाधृष्याय त्वा वाताय स्वाहाप्रतिधृष्याय त्वा वाताय स्वाहा ॥ अवस्यवे त्वा वाताय स्वाहाशिमिदाय त्वा वाताय स्वाहा ॥ $\frac{२२}{७}$ ॥

७ वायव्यकलशे जलपूरणम्—ॐ समुद्रोसि नभस्वानार्द्रदानुः शम्भूर्म्मयोभूरभि मा वाहि स्वाहा मारुतोसि मरुतां गणः शम्भूर्म्मयोभूरभि मा वाहि स्वाहावस्यूरसि दुवस्वाञ्छम्भूर्म्मयोभूरभि मा वाहि स्वाहा ॥ $\frac{२४}{२२}$ ॥

८ उत्तरकलशे जलपूरणम्—ॐ इमम्मे वरुण श्रुधी हवमद्या च मृडय ॥ त्वामवस्युराचके ॥ $\frac{२१}{१}$ ॥

९ ऐशानकलशे जलपूरणम्—ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनी स्थो वरुणस्यऽ ऋतसदन्यसि वरुणस्यऽ ऋतसदनमसि वरुणस्यऽ ऋतसदनमासीद ॥ $\frac{३६}{४}$ ॥

धान्यनिक्षेपः—धान्यमसीत्यस्य प्रजापतिर्ऋषिः याजुषीबृहतीछन्दः हविर्देवता धान्यनिक्षेपे विनियोगः ॥ ॐ धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा ॥ दीर्घामनु प्रसितिमायुषे धान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनाम्पयोसि ॥ $\frac{२०}{१}$ ॥

---

पठेयुर्मोक्षणाः सर्वे आचार्येण समन्विताः । समुद्रज्येष्ठेति वै सूक्तं समुद्रं गच्छ एव च ॥ समुद्रायत्वा व्वाताय समुद्रोसि तथैव च । इमम्मे वरुणस्येति क्रमेण पूरयेज्जलम् ॥

गन्धप्रक्षेपः—त्वाङ्गन्धर्वाइत्यस्य बन्धुर्ऋषिः निचृदनुष्टुप्छन्दः ओषधयो देवताः गन्धप्रक्षेपे विनियोगः ॥ ॐत्वाङ्गन्धर्वाऽ अखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥ ५६/१२ ॥

सर्वौषधिप्रक्षेपः—याऽओषधीरित्यस्य अथर्वपुत्रभिषगृषिः अनुष्टुप्छन्दः औषधिर्देवता औषधिप्रक्षेपे विनियोगः ॥ ॐयाऽ ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्पुरा ॥ मनै नु बभ्रूणामहꣳशतन्धामानि सप्त च ॥ ७५/१२ ॥

दूर्वाप्रक्षेपः—काण्डात्काण्डादित्यस्य अग्निर्ऋषिः अनुष्टुप्छन्दः दूर्वेष्टका देवताः दूर्वाप्रक्षेपे विनियोगः ॥ ॐकाण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ॥ एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ २०/१३ ॥

पञ्चपल्लवप्रक्षेपः—अश्वत्थेव

देवताः पञ्चपल्लवप्रक्षेपे विनियं

ष्वसतिष्कृता ॥ गोभाजऽ इत्किलासथ यत्सनवथ पूरुषम् ॥ ७९/१२ ॥

सप्तमृद्प्रक्षेपः—स्योनापृथिवीत्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः पृथिवी देवता सप्तमृद्प्रक्षेपे विनियोगः ॥ ॐस्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म्म सप्रथाः ॥ ३/१२ ॥

फलप्रक्षेपः—याः फलिनीरित्यस्य भिषगृषिः विराडनुष्टुप्छन्दः ओषधयो देवताः फलप्रक्षेपे विनियोगः ॥ ॐयाः फलिनीर्याऽ अफलाऽ अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ ८९/१२ ॥

हिरण्यप्रक्षेपः—हिरण्यगर्भइत्यस्य हिरण्यगर्भऋषिः त्रिष्टुप्छन्दः प्रजापतिर्देवता हिरण्यप्रक्षेपे विनियोगः॥ ॐहिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽ आसीत् ॥ स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥ ४/१३ ॥

पञ्चरत्नप्रक्षेपः—परिवाजपतिरित्यस्य सोमकऋषिः निचृद्गायत्रीछन्दः अग्निर्देवता पञ्चरत्नप्रक्षेपे विनियोगः ॥ ॐपरि वाजपतिः कविरग्नि-र्हव्यान्यक्रमीत् ॥ दधद्रत्नानि दाशुषे ॥ ३५/११ ॥

रक्तसूत्रेण वस्त्रेण वा कलशवेष्टनम्—युवासुवासा इत्यस्य अङ्गिरा ऋषिः बृहतीछन्दः बृहस्पतिर्देवता वस्त्रवेष्टने विनियोगः ॥ ॐयुवासुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः ॥ तन्धीरासः कवयउन्न-यन्ति स्वाध्यो मनसा देवयन्तः ॥ पा०गृ०का०२कं०२मं०९॥

नवकलशोपरि पूर्णपात्रनिधानम्—पूर्णादर्वीत्यस्य और्णवाभऋषिः अनुष्टुप्छन्दः इन्द्रो देवता पूर्णपात्रनिधाने विनियोगः ॥ ॐपूर्णा दर्वि परापत सुपूर्णा पुनरापत ॥ वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो ॥ ४९/३ ॥

कलशेषु गङ्गाद्यावाहनम्—इमम्मेवरुण इत्यस्य शुनःशेपऋषिः गायत्री छन्दः वरुणोदेवता पावकानः सरस्वतीत्यस्य मधुच्छन्दाऋषिः गायत्री छन्दः सरस्वती देवता अश्वावतीरित्यस्य याज्ञवल्क्यऋषिः त्रिष्टुप्छन्दः उषा देवता पञ्चनद्य इत्यस्य याज्ञवल्क्यऋषिः अनुष्टुप्छन्दः सरस्वती देवता कलशेषु गङ्गाद्यावाहने विनियोगः ॥ ॐइमम्मे वरुण श्रुधी हवमद्या च मृडय ॥ त्वामवस्युराचके ॥ १/२१ ॥ ॐपावका नः सरस्वती वाजेभिर्वाजिनी-वती ॥ यज्ञं वष्टु धियावसुः ॥ ८४/२० ॥ ॐअश्वावतीर्गोमतीर्न उषासो वीरवतीः सदमुच्छन्तु भद्राः ॥ घृतन्दुहाना विश्वतः प्रपीता यूयम्पात स्वस्तिभिः सदा नः ॥ ४०/३४ ॥ ॐपञ्च नद्यः सरस्वतीमपि यन्ति सस्रोतसः ॥ सरस्वती तु पञ्चधा सो देशेभवत्सरित् ॥ ११/३४ ॥

मपद्ये वरुणं देवं यादसाम्पतिमीश्वरम् । याचितं देहि मे तीर्थं सर्वपापापनुत्तये ॥ गङ्गे त्वं सर्वतीर्थानां परमासि यतस्ततः । यजमानाभिषेकार्थमेहि पापं विनाशय ॥ तपनस्य सुते देवि यमुने लोकविश्रुते । यजमानाभिषेकार्थमेहि पापं विनाशय ॥ सरस्वति नमस्तुभ्यं माहेश्वरि हरिप्रिये । यजमानाभिषेकार्थमेहि पापं विनाशय ॥

प्रतिष्ठापनम्–ॐमनो जूतिर्ज्जुषतामाज्यस्य बृहस्पतिर्य्यज्ञमिमन्त नोत्वरिष्टं य्यज्ञᳬ समिमन्दधातु ॥ विश्वे देवासऽ इह मादयन्तामो३म्प्रतिष्ठ ॥ [१][३] ॥ ॐभूर्भुवः स्वः वर्धिनीकलशाः सुप्रतिष्ठिता वरदाः भवत ॥

वरुणावाहनम्–तत्त्वायामीत्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणो देवता वरुणावाहने विनियोगः ॥ ॐतत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोध्युरुशᳬस मा नऽ आयुः प्रमोषीः॥[२]॥ ॐभूर्भुव. स्वः वरुणाय नमः वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकम् आवाहयामि स्थापयामि ॥ इति नवकलशस्थितेषु पूर्णपात्रेषु पूगीफलेषु वरुणमावाहयेत् ॥

प्रतिष्ठापनम्–ॐमनो जूतिर्ज्जुषतामाज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टं य्यज्ञᳬ समिमन्दधातु ॥ विश्वेदेवासऽइह मादयन्तामो३म्प्रतिष्ठ ॥ [१][३] ॥ ॐभूर्भुवः स्वः वरुणाय नम. वरुण सुप्रतिष्ठितो वरदो भव॥ वरुणं गन्धादिभिः पूजयेत् ॥

---

१ कल्पद्रुमे तु–मण्डपप्रवेशानन्तर ऐशान्या विरचिताष्टदले एकादशवर्द्धिनीकलशस्थापन कलशोपरि एकादशरुद्रमूर्तिना स्थापनं पूजनं चोक्तमस्ति ॥

गन्धः-यद्वद्धयमित्यस्य दीर्घतमाऋषिः त्रिष्टुप्छन्दः अश्वो देवता गन्धसमर्पणे विनियोगः॥ ॐयद्वंद्धयमुदरंस्यापुवाति यऽआमस्यं ऋविषो गुन्धोऽ अस्ति॥ सुकृता तच्छंमितारं÷ कृण्वन्तूत मेधंठ० शृतुपाकम्पचन्तु ॥ ३३ ॥ ॐभूर्भुवः स्वः वरुणाय नमः गन्धं समर्पयामि ॥

अक्षताः—अक्षन्नमीत्यस्य गोतमऋषिः विराट्पङ्क्तिश्छन्दः इन्द्रो देवता अक्षतसमर्पणे विनियोगः ॥ ॐअक्षन्नमींमदन्त ह्यवं प्रियाऽ अंधूषत ॥ अस्तोंषत स्वभांनवो विप्रा नविंष्ठया मती योजान्विन्द्र ते हरीं ॥ ५१ ॥ ॐभूर्भुवः स्वः वरुणाय नमः अक्षतान्समर्पयामि ॥

पुष्पाणि—ओषधीः प्रतिमोदध्वमित्यस्य भिषगृषिः अनुष्टुप्छन्दःओषधयो देवताः पुष्पसमर्पणे विनियोगः ॥ ॐओषधीः प्रतिमोदध्वम्पुष्पंवतीः प्रसूवंरीः ॥ अश्वाऽ इव सुजित्वंरीर्वीरुधः÷पारयिष्ण्वः÷ ॥ ७७ ॥ ॐभूर्भुवः स्वः वरुणाय नमः पुष्पाणि समर्पयामि ॥

धूपः—धूरसीत्यस्य विवस्वानृषिः जगतीछन्दः धूर्देवता धूपाघ्रापने विनियोगः॥ ॐधूरंसि धूर्व धूर्वन्तन्धूर्वं तं योस्मान्धूर्वंति तन्धूर्वयं व्वयन्धूर्वामः॥ देवानांमसि वह्नितमुछं सस्नितमम्पप्रितमञ्जुष्टतमन्देवहूतमम् ॥८॥ ॐभूर्भुवः स्वः वरुणाय नमः धूपमाघ्रापयामि ॥

दीपः—अग्निर्ज्योतिरित्यस्य तक्षजीवलचैलकयः ऋषयः एकपदा गायत्रीछन्दः अग्निर्देवतादीपदर्शने विनियोगः॥ ॐअग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्य्यो ज्योतिर्ज्योतिः सूर्य्यः स्वाहा ॥ अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्य्यो वर्चो ज्योतिर्वर्चः स्वाहा॥ ज्योतिः सूर्य्यः सूर्य्यो ज्योतिः स्वाहा ॥ ९ ॥ ॐभूर्भुवः स्वः वरुणाय नमः दीपं दर्शयामि ॥

नैवेद्यम्—अन्नात्परिस्रुत इत्यस्य अश्विसरस्वतीन्द्राऋषयः अतिजगतीछन्दः ग्रहा देवताः नैवेद्यसमर्पणे विनियोगः ॥ ॐअन्नात्परिस्रुतो रसम्ब्रह्मणा व्यपिबत्क्षत्रम्पय॒ सोमम्प्रजापतिः॥ ऋतेन सत्यमिन्द्रियं विपानᳪ शुक्रमन्धस ऽ इन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ १९।७५ ॥ ॐभूर्भुवः स्वः वरुणाय नमः नैवेद्यं निवेदयामि ॥ नैवेद्यान्ते आचमनीयं समर्पयामि॥

फलम्—याः फलिनीरित्यस्य भिषमृषिः विराडनुष्टुप्छन्दः ओषधयो देवताः फलसमर्पणे विनियोगः ॥ ॐया? फलिनीर्व्या ऽ अफला ऽ अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वᳪहसः ॥ १२।८९ ॥ ॐभूर्भुवः स्वः वरुणाय नमः फलं समर्पयामि ॥

ताम्बूलम्—उतस्मास्य इत्यस्य दधिक्रावाऋषिः आर्षी जगतीछन्दअश्वो देवता ताम्बूलसमर्पणे विनियोगः ॥ ॐउत स्मास्य द्रवतस्तुरण्यत? पर्णन्न वेरनुवाति प्रगर्द्धिनः॥ श्येनस्येव ध्रजतो ऽअङ्कसम्परिं दधिक्राव्णः सहोर्ज्जातरित्रतः स्वाहा ॥ ९।१५ ॥ ॐभूर्भुवः स्वः वरुणाय नमः ताम्बूलं समर्पयामि ॥

दक्षिणा—हिरण्यगर्भइत्यस्य हिरण्यगर्भऋषिः त्रिष्टुप्छन्दः प्रजापतिर्देवता दक्षिणासमर्पणे विनियोगः ॥ ॐहिरण्यगर्भ? समवर्त्तताग्रे भूतस्य

१ अनामाग्रे स्पृशेद्देवि ज्येष्ठाग्रेण तु देशिक. । नैवेद्यमुद्रा कथिता देवतातृप्तिकारिणी ॥ अन्यत्र—उत्तोलन त्रिधा कृत्वा गायत्र्या मूलयोगतः । तत्त्वाख्यमुद्रया चैव नैवेद्य तु निवेदयेत् ॥ तन्त्रान्तरे—स्पृशेत्कनिष्ठोपकनिष्ठिके द्वे स्वाङ्गुष्ठमूर्ध्ना प्रथमेह मुद्रा । तथा परा तर्जनिमध्यमे स्यादनामिकामध्यमिके च मध्या ॥ अनामिकातर्जनिमध्यमाश्च तद्वच्चतुर्थी सकनिष्ठकास्ताः । स्यात्पञ्चमी मध्यमतः प्रदिष्टा प्राणादिमुद्रा निजमन्त्रयुक्ताः ॥

जात? पतिरेकऽ आसीत् ॥ स दांधार पृथिवीन्द्यामुतेमाङ्कस्मैं देवाय हविषा विधेम ।।१३।। ॐभूर्भुवः स्वः वरुणायनमः दक्षिणां समर्पयामि ॥

पुष्पाञ्जलिः—धामन्छदित्यस्य उत्कीलऋषिः अनुष्टुप्छन्दः विश्वदेवा देवताः पुष्पाञ्जलिसमर्पणे विनियोगः ॥ ॐधामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः॥ सचेतसो विश्वेदेवा यज्ञम्प्रावन्तु नः शुभे ॥५६॥ ॐभूर्भुवः स्वः वरुणाय नमः पुष्पाञ्जलिं समर्पयामि ॥

प्रार्थनापूर्वकनमस्कारः—कुम्भोवनिष्ठुरित्यस्य प्रजापतिर्ऋषिः जगती छन्दः अश्विसरस्वतीन्द्र [illegible]
ॐकुम्भो वनिष्ठुर्ज्जनि [illegible]
प्राशिष्यैक्तः शतधारऽ उत्सो दुहे न कुम्भी स्वधाम्पितृभ्यः ॥ ८६ ॥
ॐशङ्खस्फटिकवर्णाभ श्वेतहाराम्बरावृत ॥ पाशहस्त महाबाहो दयाङ्कुरु दयानिधे ।। ॐभूर्भुवः स्वः वरुणाय नमः प्रार्थनापूर्वकं नमस्करोमि ॥ ततः सुवासिनीनां ब्राह्मणानां च गन्धादिपूजनपूर्वकं द्रव्यसत्कारः कार्यः ॥

नवकलशोत्थापनम्—उत्तिष्ठेत्यस्य कण्वऋषिः बृहतीछन्दः ब्रह्मणस्पतिर्देवता नवकलशोत्थापने विनियोगः ॥ ॐउत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ॥ उप प्रयन्तु मरुतः सुदानवऽ इन्द्र प्राशूर्भवा सचा ॥५६॥ इत्यनेन नवकलशान् उत्थापयेत् ॥

सुवासिनीनां मस्तकोपरिनवकलशस्थापनम्—आप्यायस्वेत्यस्य गोतमऋषिः निचृद्गायत्रीछन्दः सोमो देवता सुवासिनीनां मस्तकोपरि नवकलशस्थापने विनियोगः॥ ॐआप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम् ॥ भवावाजस्य सङ्गथे ॥११२॥इत्यनेननवकलशान्सुवासिनीमस्तकोपरिनिधाप्य यथेमांवाचमित्यादि शाकुनं सूक्तम् आनोभद्रेति भद्रसूक्तं च पठन् गीतवाद्यादियुक्तः सुवासिनीपुरःसरः पत्न्या सह यज्ञमण्डपं गच्छेत् ॥

अर्धमार्गे क्षेत्रपालपूजनम्—अर्धमार्गे स्वल्पां भूमिं गोमयेनोपलिप्य तत्रोपविश्य स्वाग्रे अक्षतपुञ्जोपरि पूगीफले क्षेत्रपालमावाहयेत ॥ नहिं-स्पशमित्यस्य विश्वामित्रऋषिः त्रिष्टुप्छन्दः क्षेत्रपालो देवता क्षेत्रपाला-वाहने विनियोगः ॥ ॐनुहि स्पशमविदन्नुन्यमुस्माद्वैश्वानुरात्पुरऽएतारं मुग्नेः॥ एमेनमवृधन्नुमृताऽअमर्त्यं वैश्वानुरङ्क्षेत्रजित्याय देवाः ॥ ६०/३३ ॥ ॐभूर्भुवः स्वः क्षेत्रपालाय नमः क्षेत्रपालमावाहयामि स्थापयामि ॥

पूजनम्—ॐक्षेत्रपालाय नमः इदमनुलेपनम् ॥ इमे अक्षताः ॥ इमानि पुष्पाणि॥इमानि सौभाग्यद्रव्याणि ॥ अयं धूपः॥अयं दीपः॥इदं नैवेद्यम्॥ इदं फलम् ॥ इदं ताम्बूलम् ॥ इयं दक्षिणा ॥ इत्याद्युपचारैः पूजयेत् ॥

बलिदानम्—क्षेत्रपालाग्रे सदीपमाषभक्तबलिं संस्थाप्य-क्षत्रस्येत्यस्य वरुणऋषिः याजुषी गायत्री छन्दः तार्क्ष्यं दैवतं बलिदाने विनियोगः॥ ॐक्षत्रस्योल्बमसि क्षत्रस्य जुराय्वसि क्षत्रस्य योनिरसि क्षत्रस्य नाभि-रसीन्द्रस्य वार्त्रघ्नमसि मित्रस्यासि वरुणस्यासि त्वयायं वृत्रं वधेत्॥ दृवासि रुजासि क्षुमासि ॥ पातैनम्प्राञ्चम्पातैनम्प्रत्यञ्चम्पातैनन्तिर्यञ्चं-न्दिग्भ्यः पात॥१०॥भगवन् क्षेत्रपाल भासुर त्रिनेत्र ज्वालामुख अवतर अवतर कपिल पिङ्गल ऊर्ध्वकेश जिह्वाललन छिन्धि छिन्धि भिन्धि भिन्धि कुरु कुरु मुरु मुरु चल चल लं लः हां हीं हूं ह्रैं ॐभगवन् क्षेत्रपाल-मम यज्ञं रक्ष रक्ष बलिं गृह्ण गृह्ण स्वाहा॥ ॐक्षेत्रपालाय नमः सदीपमाष-भक्तबलिं समर्पयामि ॥ अप उपस्पृशेत् ॥

हेमाद्रौ—रौद्रपित्र्यासुरान्मन्त्रांस्तथा चैवाभिचारकान् । व्याहृत्यालभ्य चात्मा-नमपः स्पृष्ट्वान्यमाचरेत् ॥ अपः स्पृशेदित्यनेनापां स्पर्शनमेव विवक्षितम् ॥

चतुर्भिर्मन्त्रैर्नमस्कुर्यात्-ध्रुवक्षितिरिति चतसृणामुशनाऋषिः आद्यायः विराट् तिसृणां त्रिष्टुप्छन्दः अश्विनौ देवते नमस्कारे विनियोगः॥ ॐध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवं योनिमासीद साधुया॥उख्यस्य केतुम्प्रथमञ्जुषाणाश्विनाध्वर्यू सादयतामिह त्वा ॥ २४ ॥ कुलायिनी घृतवती पुरन्धिः स्योने सीद सदने पृथिव्याः॥ अभि त्वा रुद्रा वसवो गृणन्त्विमा ब्रह्म पीपिहि सौभगायाश्विनाध्वर्यू सादयतामिह त्वा ॥ ॥ २४ ॥ स्वैर्दक्षैर्दक्षपितेह सीद देवानां सुम्ने बृहते रणाय ॥ पितेवैधि सूनवऽ आ सुशेवा स्वावेशा तन्वा संविशस्वाश्विनाध्वर्यू सादयतामिह त्वा ॥ २४ ॥ पृथिव्याः पुरीषमस्यप्सो नाम तान्त्वा विश्वेऽ अभिगृणन्तु देवाः ॥ स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्वाश्विनाध्वर्यू सादयतामिह त्वा ॥ २४॥ ॐभूर्भुवः स्वः क्षेत्रपालाय नमः नमस्करोमि ॥ अनया पूजया क्षेत्रपालः प्रीयताम् ॥ यजमानः पाणी पादौ च प्रक्षाल्याचम्य बन्धुज्ञातिसमान्वितो मण्डपस्य पश्चिमद्वारसमीपमागत्य तिष्ठेत् ॥

पुत्रवतीभिर्वृद्धसुवासिनीभिर्नीराजनं कार्यम्—ॐअनाधृष्टा पुरस्तादग्नेराधिपत्यऽ आयुर्म्मे दाः पुत्रवती दक्षिणतऽ इन्द्रस्याधिपत्ये प्रजाम्मे दाः॥सुषदा पश्चाद्देवस्य सवितुराधिपत्ये चक्षुर्म्मे दाऽ आश्रुतिरुत्तरतो धातुराधिपत्ये रायस्पोषम्मे दाः ॥ विधृतिरुपरिष्टाद्बृहस्पतेराधिपत्यऽ ओजो मे दा विश्वाभ्यो मा नाष्ट्राभ्यस्पाहि मनोरश्वासि ॥ १२/३७ ॥ ततस्तेनैव द्वारेण प्रविश्य आनीतान्तान् वारुणमण्डलोपरिस्थापनीयनवकलशान्मध्यवेद्याः पश्चिमदिग्भागे कृतवारुणमण्डलस्याधोभागे भूमौ स्थापयेत् ॥ इति जलयात्राप्रयोगः ॥

## ॥ जलयात्रातः आनीतानां वर्द्धिनीसंज्ञकनवकलशानां स्थापनप्रतिष्ठापूजनप्रयोगः ॥

सपत्नीको यजमानः मध्यवेद्याः पश्चिमदिग्भागे कृतवारुणमण्डलस्य समीपे प्रत्यङ्मुख उपविश्य आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य हस्ते जलमादाय आरब्धहवनात्मकमहारुद्राङ्गतया वर्द्धिनीकलशस्थापनप्रतिष्ठापूजनानि करिष्ये ॥

---

१ वैष्णवसिद्धान्ते विष्णवर्चनकल्पलतायां च मध्यवेद्याः पश्चिमदिग्भागे अष्टदले वारुणमण्डले वा वर्द्धिनीकलशस्थापनमुक्तं रुद्रकल्पद्रुमे तु मध्यवेद्याः ऐशान्यामष्टदलोपरि वर्द्धिनीकलशस्थापनमुक्तमिति विकल्पानुगमः ॥

१ वारुणमण्डलोद्धारः— त्रिहस्तायामकं कार्यं चतुरस्रं समन्ततः । चतुःषष्टिः सुकोष्ठानि तस्मिन्सम्पादयेद्बुधः ॥ बाह्यपङ्क्तौ चतुर्दिक्षु मध्ये कोष्ठचतुष्टयम् । तदधःपङ्क्तिमध्यस्थ कोष्ठद्वितयमेव च ॥ एकीकृत्य च चत्वारि द्वाराणि सम्प्रकल्पयेत् ॥ कोणेष्वेकैककोष्ठं तु हित्वा पञ्चभिरेव च ॥ कोष्ठैः पादाः प्रकर्तव्याः सर्वैर्मण्डलस्य । मध्ये षोडशकोष्ठानि मार्जयित्वा लिखेत्क्रमात् ॥ चतुरङ्गुलकं वृत्तं प्रथमं द्विगुणं परम् । चतुर्विंशाङ्गुलं तत्र तृतीयं परिकल्पयेत् ॥ षड्विंशत्यङ्गुलं तद्वच्चतुर्थमुपकल्पयेत् । कर्णिकाकेसरस्थानं पद्मस्थानमभूदिति ॥ नामानि कथितान्येवं कुर्याद्वारुणमण्डलम् । कर्णिका पीतरजसा पूरयेच्छुभ्रवर्णकैः ॥ केसरस्थानकं तत्र लिखेत्षोडश तानि तु । पीतरक्तासितैर्वर्णैर्मूलमध्याग्रकेषु च ॥ पद्मस्थानं सितेनैवापूर्य पद्माष्टकं लिखेत् । रक्ताग्रकं पत्रसन्धिं पूरयेत्कृष्णवर्णकैः ॥ पद्माद्बहिः सितेनैव रजसाङ्गुलमानतः । परिध्या वेष्टितं कार्यं पद्माष्टकमथोदितम् ॥ तद्बहिः शिष्टभागे तु षोडशाराः प्रकल्पयेत् । श्यामपीतारुणश्वेतरजोभिर्बुद्धिमत्तमः ॥ अन्तराले यथाशोभं तद्बहिः पञ्चरेखकम् । श्वेतपीतारुणश्यामहरिद्भिर्वर्णकैः क्रमात् ॥ पीठक्षेत्रं

यथाशोभं रजोभिः पूरयेद्बुधः । द्वाराणि पूर्वतः पीतश्यामश्वेतहरिद्भवैः ॥ आग्नेयादि-दिशाद्कोणान् रक्तनीलसितोज्ज्वलैः । पीठपादचतुष्कं च श्वेतरक्तसुपीतकैः ॥ कृष्णेन रजसा चैव पूरयेत्सत्क्रमाद्भवेत् । आग्नेयादिहरिद्भिश्च पीठपादक्रमः स्मृतः ॥ ततः सितेनैव समस्तपीठाद्बहिर्बहिरेखां रचयेत्समासौ ॥ दिवाकरेणाशु विनिर्दिशनाय प्रकार उक्तो विदुषां मुदे च॥वज्रं प्रागुत्तरे भागे आग्नेय्यां शक्तिमुज्ज्वलाम् । आलिखेद्दक्षिणे दण्डं नैर्ऋत्यां खड्गमालिखेत्॥ पाशं तु वारुणे चैव ध्वजं वायव्यगोचरे । कौबेर्यां गदा लेख्या ऐशान्यां शूलमालिखेत् ॥ शूलस्य वामदेशे तु चक्रं पद्मं तु दक्षिणे ॥

दानचन्द्रिकायाम्—तत्राचार्यो वेद्यां मध्ये त्रिहस्तव्यासं चतुरस्रं सम्पाद्य प्रागपरदक्षिणोत्तरनवनवरेखाभिश्चतुःषष्टिकोष्ठं कुर्यात्॥तत्र कोष्ठानि प्रत्येकं त्र्यनपाद्ङ्गुलानि सम्पद्यन्ते ॥ ततो बहिरन्त्यपङ्क्तिषु चतुर्दिक्षु मध्यकोष्ठानि चत्वारि चत्वारि मार्जयित्वा तदुपर्युपान्त्यपङ्क्तिषु पार्श्वयोस्तत्रयत्रयस्त्वा प्रतिदिशं मध्ये कोष्ठद्वयमार्जनेन चतुर्दिक्षु षट्षट्कोष्ठानि चत्वारि द्वाराणि सिद्ध्यन्ति ॥ ततो मध्यस्थितषोडशकोष्ठानि मार्जयेत् ॥ तथा च मध्यचतुरस्रपीठपादाः सिद्ध्यन्ति ॥ ततो मध्ये चत्वारि वृत्तानि कुर्यात् ॥ तत्राद्ये चतुरङ्गुलो व्यासः । द्वितीयेऽष्टौ । तृतीये चतुर्विंशतिः । चतुर्थे षड्विंशतिः ॥ तच्चतुरङ्गुलं वृत्तं कर्णिकारूपं पीतेन रजसा पूरयित्वा कर्णिकावधिरेखां सितेन रजसा निर्माय तद्बहिरष्टाङ्गुलात्मके वृत्ते पीतरक्तसितरजोभिः सम्पादितमूलमध्याग्राणि षोडशकेसराणि सम्पाद्य तत्केसरावधि रेखां सितेन रजसा अङ्गुलोन्नतां सम्पाद्य चतुर्विंशत्यङ्गुलात्मके तद्बहिर्वृत्ते सितेन रजसा अष्टदिक्षु अष्टौ पत्राणि रक्ताग्राणि कुर्यात् ॥ ततो दलान्तररेखां कृष्णेन रजसा विधाय दलान्तराणि कृष्णेन रजसा पूरयित्वा तद्बहिरेकाङ्गुलान्तरा बहिर्वृत्तरेखा सितेन रजसा सम्पाद्य वृत्तद्वयान्तरं परितः अष्टदलाग्रं तन्मध्यचिह्नैः षोडशधा विभज्य प्रतिभागं यवाकाराः षोडशाराः श्यामपीतारुणश्वेतरजोभिः कल्पयित्वा तदन्तरा यथायोग्य रजोभिः पूरयित्वा तद्बहिः सितपीतारुणश्यामहरिताः पञ्चरेखा लिखेत् ॥ तद्बहिः पीठक्षेत्रं चतुरस्रं यथाशोभं रजोभिः अलङ्कृत्य पीठावधिरेखां सितेन रजसा चतुरस्रां रचयेत्॥ द्वारक्षेत्राणि पूर्वादितः पीतश्यामासितहरितरजोभिः पूरयेत्॥आग्नेयादिको-

अङ्गसङ्कल्पः–तदङ्गतया वारुणमण्डलदेवतानां स्थापनप्रतिष्ठापूजनानि करिष्ये ॥ दिक्षु विदिक्षुपूर्वादिक्रमेणाष्टसु आरासु नवग्रहानावाहयेत् ॥

ष्ठचतुष्टयं लोहितहरितश्यामधवलरजोभिः पूरयेत् ॥ आग्नेयादिपीठपादचतुष्टयं पञ्चकोष्ठात्मकं तु क्रमात् सितपीतरक्तकृष्णहरितरजोभिः पूरयेत् ॥ ततः सितेन रजसा अङ्गुलोन्नतेन बहिश्चतुरस्ररेखां कुर्यात् ॥ इति मदनरत्नादयः ॥ ठक्कुरमते तु चतुरस्रं चतुर्हस्तं तत्र प्रत्येकं द्वादशाङ्गुलानि नवकोष्ठानि । वृत्तानि तु पञ्च। तत्राद्यवृत्ते चतुरङ्गुलव्यासः । द्वितीयेऽष्टौ । तृतीये विंशतिः । चतुर्थे चतुर्विंशतिः । पञ्चमेऽन्तः चतुरस्रं बहिस्तेन अष्टत्रिंशत् । इति पञ्चकोष्ठात्मकं पीठपादचतुष्टयम् ॥ आग्नेयादिक्रमेण रक्तहरितश्यामसितपीतरजोभिः पूरणीयम् ॥ कोणकोष्ठचतुष्टयं प्रत्येकं त्रिभिस्त्रिभिर्वर्णैः इति विशेषः ॥

॥ दिक्षु विदिक्षु पूर्वादिक्रमेणाष्टसु आरासु नवग्रहानावाहयेत् ॥

१ पूर्वेआरायाम् ॐभूर्भुव.स्व.सूर्यायनम.सूर्यमावाह०स्था० भोसूर्यइहागच्छइह०॥

२ आग्नेयेआरायाम्–ॐभूर्भुवःस्वःसोमायनमःसोममावाह०स्था०भोसोमइ०इ० ॥

३ दक्षिणेआरायाम्–ॐभूर्भुव.स्वःभौमायनम.भौममावाह०स्था०भोभौमइ०इ०॥

४ नैर्ऋत्येआरायाम्- ॐभूर्भुवःस्व.बुधायनमःबुधमावा०स्था०भोबुधइहा०इइ०॥

५ पश्चिमेआरायाम्--ॐभू०बृहस्पतयेनम बृहस्पतिमावा०स्था० भोबृइ०इ० इ०॥

६ वायव्येआरायाम्–ॐभू० शुक्रायनमः शुक्रमावाहयामिस्था० भोशुक्रइ०इ० ॥

७ उत्तरेआरायाम्–ॐभू०शनैश्चरायनमःशनैश्चरमावाह०स्या०भोशनै०इ०इ० ॥

८ ऐशानेआरायाम्--ॐभू० राहवेनमःराहुमावाहयामिस्थाप०भोराहोइहा०इइ०॥

९ तत्रैवऐशानेआरायाम् ॐभू–केतवेनम.केतुमावाहयामिस्था०भोकेतोइ०इ० ॥

॥ पुनस्तासु एव आरासु पूर्वादिक्रमेण अष्टौ लोकपालानावाहयेत् ॥

१० पूर्वेआरायांसूर्याग्रे- ॐभूर्भुवःस्वःइन्द्रायनमःइन्द्रमावाह०स्था०भोइन्द्रइ०इ०॥

११ आग्नेयेआरायांसोमाग्रे ॐभू०अग्नयेनमःअग्निमावाहयामिस्था०भोअग्नेइ०इ० ॥

१२ दक्षिणेआरायांभौमाग्रे ॐभू०यमायनमःयममावाहयामि०स्था० भोयमइ०इ०॥

१ आकृष्णेनेत्यस्य हिरण्यस्तूपआङ्गिरसऋषिः त्रिष्टुप्छन्दः सविता-देवता सूर्यावाहने विनियोगः ॥ ॐआकृष्णेनरजसावर्त्तमानोनिवेशयन्न-

१३ नैर्ऋत्येआ०वुधाग्रे—ॐभू०निर्ऋतयेनमः निर्ऋतिमा०स्था०भोनिर्ऋतेइ०इ० ॥
१४ पश्चिमेआरायागुर्वग्रे—ॐभू०वरुणायनमः वरुणमावा० स्था० भोवरुणइ० इ० ॥
१५ वायव्येआ०शुक्राग्रे—ॐभू०स्व.वायवेनमःवायुमावाह०स्था०भोवायोइ०इ० ॥
१६ उत्तरे आरायाशन्यग्रे—ॐभू०सोमायनमःसोममावाह०स्थाप०भोसोमइ०इ० ॥
१७ ऐशानेआरायाराहुकेत्वग्रे—ॐभू०ईशानाय०ईशानमावा०स्था०भोई०इ०इ०॥

॥ वायुसोमान्तरालमारभ्यअन्तरालारायुयथाक्रमेणयदेवतावाहनम् ॥

१८ वायुसोममध्येआराया—ॐभू०वसुभ्योनम.वसूनावाह०स्था०भोवसव० इ०इ०॥
१९ सोमेशान्तराले आराया—ॐभू० रुद्रेभ्योनम.रुद्रानावाह०स्था०भोरुद्राइ० इ० ॥
२० ईशानेन्द्रान्तरालेआ०ॐभू०आदित्येभ्योनम.आदित्याना०स्था० भोआ०इ०इ
२१ इन्द्राग्न्यन्तरालेआ०—ॐभू० अश्विभ्यानमःअ०आ०स्था०भोअ०इ०इह० ॥
२२ अग्नियमान्तरालेआरायाम्—ॐभूर्भुव. स्वःविश्वेभ्योदेवेभ्यो नमः विश्वान्देवा-नावाहयामि स्थापयामि भो विश्वेदेवा. इहागच्छत इह तिष्ठत ॥
२३ तत्रैव—ॐभूर्भुवःस्वःपितृभ्योनम.पितृनावाहयामिस्थापयामिभोपितरइहा०इ० ॥
२४ यमनिर्ऋत्यन्तराले आ०—ॐभू०यक्षेभ्योनमःयक्षानावा०स्था०भोयक्षाइ०इ० ॥
२५ निर्ऋतिवरुणान्तरालेआ०—ॐभू०भूतनागेभ्यो०भू०स्था०भोभूत०इहा०इह० ॥
२६ वरुणवाय्यन्तरालेआ०ॐभू०गन्धर्वेभ्योनमःगं०आ०स्था०भोगन्धर्वाइ०इ० ॥

॥ अथ सौम्याद्यष्टाब्जपत्रेषु स्कन्दादिनवदेवतावाहनम् ॥

२७ उत्तरदले—ॐभू०स्कन्दायनमःस्कन्दमावाहयामिस्थापयामिभोस्कन्दइ० इ० ॥
२८ ईशानदले—ॐभू०दक्षायनम.दक्षमावाहयामिस्थापयामि भो दक्षइ० इहतिष्ठ ॥
२९ पूर्वदले—ॐभूर्भुवःस्वःदुर्गायैनम.दुर्गामावाहयामिस्थापयामिभोदुर्गेइहा०इ० ॥
३० तत्रैवपूर्वदलेदुर्गोत्तरत.—ॐभूविष्णवेनमःविष्णुमावा०स्था०भोविष्णोइ० इ० ॥

मृतुम्मर्त्यञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ ३३/३॥
पूर्वस्यारायाम्—ॐभूर्भुवःस्वः सूर्यायनमःसूर्यमावा०स्था०भोसूर्यइ०८०॥

३१ आग्नेयदले—ॐभू० स्वधायैनमः स्वधामावाहयामि स्थापयामि भो स्वधेइ०इ०॥
३२ दक्षिणदले—ॐभू० मृत्यवेनमः मृत्युमावाहयामि स्थापयामि भोमृत्योइ०इ० ॥
३३ नैर्ऋत्यदले—ॐभू० गणपतयेनमः गणपतिमावाहयामिस्था०भोगणपतेइ० इ० ॥
३४ पश्चिमदले—ॐभू० अद्भ्योनमः अपः आ०स्था०भोआपइहागच्छतइहतिष्ठत ॥
३५ वायव्यदले—ॐभू० मरुद्भ्योनमःमरुत आ०स्था०भोमरुत इहागच्छतइहतिष्ठत॥
३६ कर्णिकामध्ये—ॐभू०वरुणायनमः वरुणमावाहयामिस्थाप० भोवरुणइ० इ० ॥

॥ उत्तरादितः क्रमेण केसरमूलेषु ब्रह्माद्यष्टदेवतावाहनम् ॥

३७ उत्तरेकेसरमूले—ॐभू०ब्रह्मणेनमः ब्रह्माणमावाहयामिस्थाप० भोब्रह्मन्इ०इ०॥
३८ ऐशानेकेसरमूले—ॐभू० विष्णवेनमः विष्णुमावाहयामिस्था०भोविष्णोइ० इ० ॥
३९ पूर्वेकेसरमूले—ॐभूर्भुवःस्वःरुद्रायनम रुद्रमा० स्थाप० भोरुद्रइहागच्छइहतिष्ठ ॥
४० आग्नेयेकेसरमूलेॐभू०लक्ष्म्यैनम.लक्ष्मीमावाहयामिस्थापयामिभोलक्ष्मिइ०इ० ॥
४१ दक्षिणेकेसरमूले ॐभू०अम्बिकायैनमः अम्बिकामा०स्था०भोअम्बिकेइ० इ०॥
४२ नैर्ऋत्येकेसरमूलेॐभू०सावित्र्यैनमः सावित्रीमावाह०स्था०भोसावित्रिइ०इ०॥
४३ पश्चिमेकेसरमूले—ॐभू०गङ्गादिनदीभ्योनमः गङ्गा०आ०स्था०भोग०इ०इ०॥
४४ वायव्येकेसरमूले—ॐभू०सप्तसागरेभ्यो० सप्तसागराना०स्था०भोसप्त०इ०इ०॥
४५ ब्रह्मपादमूलेकर्णिकाधः ॐभू०भूतग्रामाय०भूतग्राममा०स्था०भोभूत०इ०इ०॥
४६ ब्रह्मणःपादमूलेकर्णिकोपरिॐभू०मेरवेनमःमेरुमावाहयामिस्था०भोमेरोइ०इ० ॥

॥ तद्वाह्ये श्वेतपरिधौ उत्तरादितः सोमादिसमीपे गदाद्यष्टदेवतावाहनम् ॥

४७ सोमसमीपे—ॐभू० गदायैनमःगदामावाहयामिस्थापयामिभोगदेइहागच्छइह०॥
४८ ईशानसमीपे-ॐभू० त्रिशूलायनमःत्रिशूलमावाहयामिस्था० भोत्रिशूलइ०इ० ॥
४९ इन्द्रसमीपे—ॐभूर्भुवःस्वःवज्रायनमःवज्रमावाहयामिस्था०भोवज्रइहा० इइ० ॥

२ इमन्देवाऽत्यस्य वरुणऋषिःअत्यष्टिश्छन्दः यजमानो देवता सोमावाहने विनियोगः॥ ॐइमन्देवा ऽ असपत्नᳯ सुवद्ध्वम्महते क्षत्राय

५० अग्निसमीपे—ॐभूर्भुवःस्वःशक्तयेनमः शक्तिमा०स्था०भोशक्तेइहागच्छइह० ॥
५१ यमसमीपे—ॐभूर्भुवःस्वःदण्डायनमः दण्डमावा०स्था०भोदण्डइहागच्छइह० ॥
५२ निर्ऋतिसमीपे-ॐभूर्भुव.स्वःखड्गायनमःखड्गमावाहयामिस्था०भोखड्ग इ०इ० ॥
५३ वरुणसमीपे—ॐभूर्भुवःस्वःपाशायनमःपाशमावाह० स्था० भोपाशइ०इहतिष्ठ ॥
५४ वायुसमीपे-ॐभूर्भुवःस्वःअङ्कुशायनमःअङ्कुशमावा०स्था०भोअङ्कुशइ०इ०

॥ तद्वाह्ये रक्तपरिधौ उत्तरादिक्रमेण गौतमाद्यष्टदेवतावाहनम् ॥

५५ उत्तरे—ॐभू०गौतमायनमःगौतममावाहयामिस्थापयामिभोगौतमइहा० इ० ॥
५६ ऐशान्या—ॐभू०भरद्वाजायनम.भरद्वाजमावाहयामिस्था०भोभरद्वाजइ०इ० ॥
५७ पूर्वे—ॐभू० विश्वामित्रायनमःविश्वामित्रमावाहयामिस्था०भोविश्वामित्रइ०इ० ॥
५८ आग्नेय्याम्—ॐभू०कश्यपायनमःकश्यपमावाहयामिस्था० भोकश्यपइ० इ० ॥
५९ दक्षिणायाम् ॐभू०जमदग्नयेनमः जमदग्निमावाह०स्था०भोजमदग्नेइहा०इ० ॥
६० नैर्ऋत्याम्—ॐभू०वशिष्ठायनम.वशिष्ठमावाहयामिस्थाप०भोवशिष्ठइहा० इ० ॥
६१ पश्चिमायाम्—ॐभू०अत्रयेनमः अत्रिमावाहयामिस्थापयामिभोअत्रेइहा०इ० ॥
६२ वायव्याम्—ॐभू०अरुन्धत्यैनमःअरुन्धतीमावाह०स्था० भोअरुन्धतिइ०इ० ॥

॥ तद्वाह्ये कृष्णपरिधौ पूर्वादिक्रमेण ऐन्द्र्याद्यष्टदेवतावाहनम् ॥

६३ प्राच्याम्—ॐभू०ऐन्द्र्यैनम.ऐन्द्रीमावाह०स्थापयामिभोऐन्द्रिइहागच्छइहतिष्ठ ॥
६४ आग्नेय्याम्—ॐभू०कौमार्यैनम. कौमारीमावाहयामिस्था०भोकौमारिइ०इ० ॥
६५ दक्षिणायाम्—ॐभू०ब्राह्म्यैनमःब्राह्मीमावाहयामि०स्था०भोब्राह्मिइहा०इह०॥
६६ नैर्ऋत्याम्—ॐभू०वाराह्यैनमःवाराहीमावाहयामि०स्थाप०भोवाराहिइ०इह० ॥
६७ पश्चिमायाम्—ॐभू०चामुण्डायैनमःचामुण्डामावा०स्था०भोचामुण्डेइ० इ० ॥
६८ वायव्याम्—ॐभूर्भुवःस्व. वैष्णव्यैनमः वैष्णवीमावाह०स्था०भोवैष्णविइ०इ० ॥
६९ उदीच्याम्—ॐभू०कौबेर्य्यैनमःकौबेरीमावाहयामिस्थाप० भोकौबेरिइ० इ० ॥
७० ऐशान्याम्-ॐभूर्भुवःस्वःवैनायक्यैनम.वैनायकीमा०स्था०भोवैनायकिइ०इ० ॥

महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय ॥ इममुमुष्य पुत्रमुष्यै पुत्रमस्यै विशऽएष वोमी राजा सोमोऽस्माकं ब्राह्मणानाᳯराजा ॥४०॥ आग्नेयेआरायाम्—ॐभूर्भुवः स्वः सोमाय नमः सोममावाहयामि स्थापयामि भो सोम इहागच्छ इह तिष्ठ ॥

३ अग्निर्मूर्द्धाइत्यस्य विरूपऋषिः गायत्री छन्दः अग्निर्देवता भौमावाहने विनियोगः ॥ ॐअग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् ॥ अपाᳯरेताᳯसि जिन्वति ॥४१॥ दक्षिणे आरायाम्-ॐभूर्भुवः स्वः भौमाय नमः भौममावाहयामि स्थापयामि भो भौम इहागच्छ इह तिष्ठ ॥

४ उद्बुध्यस्वेत्यस्य परमेष्ठीऋषिः त्रिष्टुप्छन्दः अग्निर्देवता बुधावाहने विनियोगः॥ ॐउद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्त्तेसᳯसृजेथामयञ्च। अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ।४२।नैर्ऋत्ये आरायाम्ॐभूर्भुवःस्वःबुधायनमःबुधमा०स्था०भोबुधइहागच्छइहतिष्ठ ॥

५ बृहस्पतेऽअतीत्यस्य गृत्समदऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता बृहस्पत्यावाहने विनियोगः ॥ ॐबृहस्पतेऽ अतियदर्य्योऽ अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽ ऋतप्रजात तदस्मासु द्रविणन्धेहि चित्रम्॥४३॥ पश्चिमे आरायाम्—ॐभूर्भुवः स्वः बृहस्पतये नमः बृहस्पतिमावाहयामि स्थापयामि भो बृहस्पते इहागच्छ इह तिष्ठ॥

६ अन्नात्परिस्रुत इत्यस्य अश्विसरस्वतीन्द्राऋषयः अतिजगतीछन्दः ब्रह्मा देवताः शुक्रावाहने विनियोगः ॥ ॐअन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रम्पयः सोमम्प्रजापतिः ॥ ऋतेन सत्यमिन्द्रियं विपानᳯशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ४४ ॥ वायव्येआरायाम् – ॐभूर्भुवःस्वःशुक्रायनमःशुक्रमावाहयामिस्थापयामिभोशुक्रइहागच्छइ०॥

७ शन्नोदेवीरित्यस्यदध्यङ्ङाथर्वणऋषिः गायत्रीछन्दः आपो देवताः शनैश्चरावाहने विनियोगः ॥ ॐशन्नोदेवी रभिष्टयऽआपोभवन्तुपीतये ॥ शं य्योरभि स्रवन्तु नः॥ १२ ॥ उत्तरे आरायाम्–ॐभूर्भुवः स्वः शनैश्चराय नमःशनैश्चरमावाहयामि स्थापयामि भो शनैश्चर इहागच्छ इहतिष्ठ॥

८ कयानश्चित्र इत्यस्य वामदेवऋषिः गायत्रीछन्दः इन्द्रो देवता राह्वावाहने विनियोगः ॥ ॐकया नश्चित्रऽ आ भुवदूती सदावृधः सखा ॥ कया शचिष्ठया वृता ॥ ३९ ॥ ऐशाने आरायाम्–भूर्भुवः स्वः राहवे नमः राहुमावाहयामि स्थापयामि भो राहो इहागच्छ इह तिष्ठ ॥

९ केतुङ्कृण्वन्नित्यस्य मधुच्छन्दाऋषिः गायत्रीछन्दः अग्निर्देवता केत्वावाहने विनियोगः ॥ ॐकेतुङ्कृण्वन्नकेतवे पेशो मर्य्याऽ अपेशसे ॥ समुषद्भिरजायथाः॥ ३७ ॥ ऐशाने आरायामेव राह्वग्रे–ॐभूर्भुवः स्वः केतवे नमः केतुमावाहयामि स्थापयामि भो केतो इहागच्छ इह तिष्ठ॥

१० त्रातारमित्यस्य गर्गऋषिः त्रिष्टुप्छन्दः इन्द्रो देवता इन्द्रावाहने विनियोगः॥ॐत्रातारमिन्द्रमवितारमिन्द्रᳬं हवे हवे सुहवᳬं शूरमिन्द्रम् ॥ ह्वयामि शक्रम्पुरुहूतमिन्द्रᳬं स्वस्ति नो मघवा धात्विन्द्रः ॥ २० ॥ पूर्वे आरायाम्–सूर्याग्रे–ॐभूर्भुवः स्वः इन्द्राय नमः इन्द्रमावाहयामि स्थापयामि भो इन्द्र इहागच्छ इह तिष्ठ ॥

११ त्वन्नोऽ अग्ने इत्यस्य हिरण्यस्तूप आङ्गिरसऋषिः जगतीछन्दः अग्निर्देवता अग्न्यावाहनेविनियोगः॥ ॐत्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः॥ यजिष्ठोवह्नितमः शोशुचानोविश्वाद्वेषाᳬंसि प्रमुमुग्ध्यस्मत् ॥ ३ ॥ आग्नेये आरायां सोमाग्रे–ॐभूर्भुवः स्वः अग्नये नमः अग्निमावाहयामि स्थापयामि भो अग्ने इहागच्छ इह तिष्ठ ॥

१२ यमायेत्यस्यदध्यङ्ङाथर्वणऋषिः त्रीणियजूंषिछन्दांसि यमनामा वातोदेवता यमावाहने विनियोगः ॥ ॐयमाय त्वाङ्गिरस्वते पितृमते स्वाहा।।स्वाहा घर्म्माय स्वाहा घर्म्मःपित्रे ॥ ६२॥ दक्षिणेआरायांभौमाग्रे-ॐभूर्भुवःस्वःयमायनमःयममावाहयामिस्थापयामिभोयमइहागच्छइहतिष्ठ।

१३ असुन्वन्तमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः निर्ऋतिर्देवता निर्ऋत्यावाहने विनियोगः॥ ॐअसुन्वन्तमयजमानमिच्छ स्तेनस्येत्त्या-मन्विहि तस्करस्य ॥ अन्यमस्मदिच्छ सा तऽ इत्त्या नमो देवि निर्ऋते तुभ्यमस्तु ॥ ६३॥ नैर्ऋत्ये आरायां बुधाग्रे—ॐभूर्भुवःस्वः निर्ऋतये नमः निर्ऋतिमावाहयामि स्थापयामि भो निर्ऋते इहागच्छ इह तिष्ठ ॥

१४ तत्त्वायामीत्यस्य शुनःशेप ऋषिः त्रिष्टुप्छन्दः वरुणो देवता वरुणावाहने विनियोगः॥ ॐतत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोद्ध्युरुशꣳसमानऽ आयुः प्रमोषीः ॥ ६४ ॥ पश्चिमे आरायां बृहस्पत्यग्रे—ॐभूर्भुवः स्वः वरुणाय नमः वरुणमावाहयामि स्थापयामि भो वरुण इहागच्छ इह तिष्ठ ॥

१५ आनोनियुद्भिरित्यस्य वसिष्ठऋषिः त्रिष्टुप्छन्दः वायुर्देवता वाय्वावाहने विनियोगः। ॐआ नो नियुद्भिः शतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहि यज्ञम्।वायोऽ अस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः सदा नः ॥ ६५ ॥ वायव्ये आरायां शुक्राग्रे—ॐभूर्भुवः स्वः वायवे नमः वायुमावाहयामि स्थापयामि भो वायो इहागच्छ इह तिष्ठ ॥

१६ वयꣳसोमेत्यस्य बन्धुर्ऋषिः गायत्रीछन्दः सोमो देवता सोमावाहने विनियोगः ॥ ॐवुयꣳसोम व्व्रुते तव मनस्तुनूषु बिभ्र्रतꣳ ॥ प्रुजावन्तꣳ सचेमहि ॥ $\frac{५६}{३}$ ॥ उत्तरे आरायां शन्यग्रे—ॐभूर्भुवः स्वः सोमाय नमः सोममावाहयामि स्थापयामि भो सोम इहागच्छ इह तिष्ठ ॥

१७ तमीशानमित्यस्य गोतमऋषिः जगतीछन्दः विश्वेदेवा देवताः ईशानावाहने विनियोगः ॥ ॐतमीशानुञ्जगतस्तुस्थुषुस्पतिन्धियञ्जिन्वमवसे हूमहे वुयम् ॥ पूषा नो यथा व्वेदसामसद्वृधे रक्षिता पायुरदब्धꣳ स्वुस्तये ॥ $\frac{२८}{२५}$ ॥ ऐशाने आरायां राहुकेत्वग्रे—ॐभूर्भुवः स्वः ईशानाय नमः ईशानमावाहयामि स्थापयामि भो ईशान इहागच्छ इह तिष्ठ ॥

॥ अथ वायुसोमान्तरालमारभ्य अन्तरालारासु
क्रमेण वस्वादिनवदेवतावाहनम् ॥

१८ सुगा वो देवा इत्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः देवा देवताः वस्वावाहने विनियोगः ॥ ॐसुगा वो देवाꣳ सदनाऽ अकर्म्म यऽ आजग्मेदꣳ सवनञ्जुषाणाः । भरमाणा व्वहमाना हुवीꣳष्यस्मे धत्तवसवो व्वसूनि स्वाहा ॥ $\frac{२}{१८}$ ॥ वायुसोममध्ये आरायाम्—ॐभूर्भुवः स्वः वसुभ्यो नमः वसूनावाहयामि स्थापयामि भो वसव इहागच्छत इह तिष्ठत ॥

१९ रुद्राःसꣳसृज्येत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः रुद्रा देवताः रुद्रावाहने विनियोगः॥ रुद्राःसꣳसृज्ज्यपृथिवीम्बृहज्ज्योतिꣳसमीधिरे॥ तेषाम्भानुरजस्रऽइच्छुक्रोदेवेषुरोचते॥$\frac{११}{५४}$॥ सोमेशानान्तरालेआरायाम्॥ ॐभूर्भुवःस्वःरुद्रेभ्योनमःरुद्रानावाह०स्था०भोरुद्राःइहागच्छतइहतिष्ठत॥

२० यज्ञोदेवानामित्यस्य कुत्सऋषिः यजुरन्तं त्रिष्टुप्छन्दः आदित्या देवताः आदित्यावाहने विनियोगः ॥ ॐयुज्ञो देवानुाम्प्रत्त्येति सुम्न-

मादिर्यासो भवता मृडयन्तः ॥ आ वोर्वाची सुमतिर्ववृत्याद्‌ꣳहोश्चिद्या वरिवोवित्तरासदादित्येभ्यस्त्वा ॥ ६ ॥ ईशानेन्द्रान्तराले आरायाम्—ॐभूर्भुवः स्वः आदित्येभ्यो नमः आदित्यानावाहयामि स्थापयामि भो आदित्याः इहागच्छत इह तिष्ठत ॥

२१ यावाङ्कशेत्यस्य मेधातिथिर्ऋषिः यजुरन्तंगायत्रीछन्दः अश्विनौ देवते अश्विनावाहने विनियोगः ॥ ॐया वाङ्कशा मधुमत्याश्विना सूनृतावती ॥ तया यज्ञम्मिमिक्षतम् ॥ ७ ॥ इन्द्राग्न्यन्तराले आरायाम्—ॐभूर्भुवः स्वः अश्विभ्यांनमः अश्विनावावाहयामि स्थापयामि भो-अश्विनौ इहागच्छतम् इह तिष्ठतम् ॥

२२ ओमासश्चर्षणीधृत इत्यस्य मधुच्छन्दा ऋषिः गायत्रीछन्दः विश्वेदेवा देवताः विश्वेदेवावाहने विनियोगः ॥ ॐओमासश्चर्षणीधृतो विश्वे देवासऽ आगत ॥ दाश्वाꣳसो दाशुषः सुतम् ॥ ८ ॥ अग्नियमान्तराले आरायाम्—ॐभूर्भुवः स्वः विश्वेभ्यो देवेभ्यो नमः विश्वान्देवानावाहयामि स्थापयामि भो विश्वेदेवाः इहागच्छत इह तिष्ठत ॥

२३ उदीरतामित्यस्य शङ्खऋषिः त्रिष्टुप्छन्दः पितरो देवताः पित्रावाहने विनियोगः ॥ ॐउदीरतामवरऽ उत्परासऽ उन्मध्यमाः पितरः सोम्यासः ॥ असुं यऽ ईयुरवृकाऽ ऋतज्ञास्ते नोवन्तु पितरो हवेषु ॥ ९ ॥ अग्नियमान्तराले विश्वेदेवाग्रे आरायाम्—ॐभूर्भुवःस्वः पितृभ्यो नमः पितॄनावाहयामि स्थापयामि भो पितरः इहागच्छत इह तिष्ठत ॥

२४ अभित्यन्देवमित्यस्य प्रजापतिर्ऋषिः आर्षीछन्दः सविता देवता यक्षावाहने विनियोगः ॥ ॐअभित्यन्देवꣳसवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳरत्नधामभिप्रियम्मतिङ्कविम् । ऊर्द्ध्वायस्यामतिर्भाऽअदि-

द्युतत्सर्वमिमन्नि हिरण्यपाणिरमिमीत सुक्रतुः—कृपात्स्वः ॥ प्रजाभ्यस्त्वा प्रजास्त्वानुप्राणन्तु प्रजास्त्वमनुप्राणिहि ॥ ५/२ ॥ यमनैर्ऋत्यान्तराले आरायाम्—ॐभूर्भुवः स्वः यक्षेभ्यो नमः यक्षानावाहयामि स्थापयामि भो यक्षाः इहागच्छत इह तिष्ठत ॥

२५ आयङ्गौरितिमन्त्रद्वयस्य प्रजापतिर्ऋषिः गायत्रीछन्दः अग्निर्देवता भूतनागावाहने विनियोगः ॥ ॐआयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः ॥ पितरञ्च प्रयन्त्स्वः ॥ ६/३ ॥ अन्तश्चरति रोचनास्य प्राणादपानती ॥ व्यख्यन्महिषो दिवम् ॥ ७/३ ॥ निर्ऋतिवरुणान्तराले आरायाम्—ॐभूर्भुवः स्वः भूतनागेभ्यो नमः भूतनागानावाहयामि स्थापयामि भो भूतनागाः इहागच्छत इह तिष्ठत ॥

२६ ऋताषाडित्यस्य देवा ऋषयः यजूंषि छन्दांसि गन्धर्वाप्सरसो देवताः गन्धर्वाप्सरसावाहने विनियोगः ॥ ॐऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसो मुदो नाम ॥ स नऽ इदम्ब्रह्म क्षत्रम्पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ ३८/१८ ॥ वरुणवाय्वन्तराले आरायाम्—ॐभूर्भुवः स्वः गन्धर्वाप्सरोभ्यो नमः गन्धर्वाप्सरसः आवाहयामि स्थापयामि भो गन्धर्वाप्सरसः इहागच्छत इह तिष्ठत ॥

॥ अथ सौम्याद्यष्टाब्जपत्रेषु क्रमेण स्कन्दादिनवदेवतावाहनम् ॥

२७ यदक्रन्देत्यस्य जमदग्निर्दीर्घतमसावृषी त्रिष्टुप्छन्दः अश्वो देवता स्कन्दावाहने विनियोगः ॥ ॐयदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्रादुत वा पुरीषात् ॥ श्येनस्य पक्षा हरिणस्य बाहूऽ उपस्तुत्यम्महि जातन्तेऽ अर्वन् ॥ १२/२९ ॥ उत्तरदले—ॐभूर्भुवः स्वः स्कन्दाय नमः स्कन्दमावाहयामि स्थापयामि भो स्कन्द इहागच्छ इह तिष्ठ ॥

[1] २८ अदितिर्द्यौरित्यस्य गोतमऋषिः त्रिष्टुप्छन्दः विश्वेदेवा देवताः दक्षावाहने विनियोगः ॥ ॐअदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ॥ विश्वे देवाऽ अदितिः पञ्चजनाऽ अदितिर्जातमदितिर्जनित्वम् ॥ ३३/२३ ॥ ईशानदले—ॐभूर्भुवः स्वः दक्षाय नमः दक्षमावाहयामि स्थापयामि भो दक्ष इहागच्छ इह तिष्ठ ॥

२९ अम्बेअम्बिकइत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः अम्बा देवता दुर्गावाहने विनियोगः॥ ॐअम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन ॥ ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥ २३/१८॥ पूर्वदले—ॐभूर्भुवः स्वः दुर्गायै नमः दुर्गामावाहयामि स्थापयामि भो दुर्गे इहागच्छ इहतिष्ठ॥

३० इदंविष्णुरित्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः विष्णुर्देवता विष्ण्वावाहने विनियोगः॥ ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्॥ समूढमस्य पांसुरे स्वाहा ॥ ५/१५॥ पूर्वदले दुर्गाग्रे—ॐभूर्भुवः स्वःविष्णवे नमः विष्णुमावाहयामि स्थापयामि भो विष्णो इहागच्छ इह तिष्ठ ॥

३१ पितृभ्यइत्यस्य प्रजापत्यश्विसरस्वत्यऋषयः सप्तयजूंषिछन्दांसि पितरो देवताः स्वधावाहने विनियोगः ॥ ॐपितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधा यिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः॥अक्षन्पितरोमीमदन्त पितरोतीतृपन्त पितरः पितरः शुन्धध्वम् ॥ ३६/१९ ॥ आग्नेयदले—ॐभूर्भुवः स्वः स्वधायै नमः स्वधामावाहयामि स्थापयामि भो स्वधे इहागच्छ इह तिष्ठ ॥

३२ परंमृत्योइत्यस्यसङ्कसुकऋषिःत्रिष्टुप्छन्दःमृत्युर्देवतामृत्य्वावाहनेविनियोगः॥ॐपरम्मृत्योऽ अनु परेहि पन्थांयस्तेऽअन्यऽइतरोदेवया

[1] स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र ॥ प्रातिशाख्ये अध्याय ४ सूत्र १००

नात्।। चक्षुम्मतेशृण्वतेतेंब्रवीमिमानं प्रजाॐरीरिषोमोतवीरान् ।।३६।। दक्षिणदले—ॐभूर्भुवः स्वः मृत्यवेनमः मृत्युमावा० स्था० भोमृत्योइ०३।।

३३ गणानान्त्वेत्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः लिङ्गोक्ता देवता गणपत्यावाहने विनियोगः।।ॐगणानान्त्वा गणपतिꣳहवामहे प्रिया-णांन्त्वा प्रियपतिꣳहवामहे निधीनान्त्वां निधिपतिꣳहवामहे वसो मम।। आहमजानि गर्भधया त्वमजासि गर्भधम् ।।३६।। नैर्ऋत्यदले—ॐभूर्भुवः स्वः गणपतये नमः गणपतिमावाहयामि स्थापयामि भो गणपते इहागच्छ इह तिष्ठ ।।

३४ शन्नोदेवीरित्यस्य दध्यङ्ङाथर्वणऋषिः गायत्रीछन्दः आपो देवताः अपावाहने विनियोगः ।। ॐशन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ।। शंय्योरभिस्रवन्तुनः।।३६।।पश्चिमदले—ॐभूर्भुवः स्वः अद्भ्यो नमः अप आवाहयामि स्थापयामि भो आपः इहागच्छत इह तिष्ठत ।।

३५ मरुतोयस्येत्यस्य गोतमऋषिः गायत्रीछन्दः मरुतो देवताः मरुतावाहने विनियोगः।।ॐमरुतोयस्य हि क्षये पाथा दिवो विमहसः।। स सुगोपातमो जनः।।३।।वायव्यदले—ॐभूर्भुवः स्वः मरुद्भ्यो नमः मरुतः आवाहयामि स्थापयामि भो मरुतः इहागच्छत इह तिष्ठत ।।

३६ तत्त्वायामीत्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणो देवता वरुणावाहने विनियोगः—ॐतत्त्वायामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः।। अहेडमानो वरुणेह बोद्ध्युरुशꣳस मा नऽआयुः प्रमोषीः ।।३।। कर्णिकामध्ये—ॐभूर्भुवः स्वः वरुणाय नमः वरुणमा-वाहयामि स्थापयामि भो वरुण इहागच्छ इह तिष्ठ ।।

---

१ ऊष्मान्तस्थान्त्यश्च स्पर्शः ।। प्रातिशाख्ये अध्याय ४ सूत्र १०२

॥ उत्तरादितः केसरमूलेषु क्रमेण ब्रह्माद्यष्टदेवतावाहनम् ॥

३७ ब्रह्मजज्ञानमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः आदित्यो देवता ब्रह्मावाहने विनियोगः ॥ ॐब्रह्मं जज्ञानम्प्रथमम्पुरस्ताद्वि सीमत? सुरुचोवेनऽ आवः॥ स बुध्न्याऽ उपमाऽ अस्य विष्ठा? सतश्च योनि मसतश्च विवः ॥ ३३ ॥ उत्तरे केसरमूले—ॐभूर्भुवः स्वः ब्रह्मणे नमः ब्रह्माणमावाहयामि स्थापयामि भो ब्रह्मन्निहागच्छ इह तिष्ठ ॥

३८ विष्णोरराटमित्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः विष्णुर्देवता विष्णवावाहने विनियोगः॥ ॐविष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि ॥ वैष्णवमसि विष्णवे त्वा॥२१॥ ऐशाने केसरमूले—ॐभूर्भुवः स्वः विष्णवे नमः विष्णुमावाहयामि स्थापयामि भो विष्णो इहागच्छ इह तिष्ठ ॥

३९ मानस्तोकइत्यस्य कुत्सऋषिः जगतीच्छन्दःएकरुद्रोदेवतारुद्रावाहनेविनियोगः॥ॐमानस्तोकेतनयेमानुऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः।मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तः सदमित्त्वाहवामहे ।१६। पूर्वेकेसरमूले—ॐभू०स्वः रुद्रायनमः रुद्रमावाहयामिस्था०भोरुद्रइ०इ०॥

४० श्रीश्चतइत्यस्य उत्तरनारायणऋषिः त्रिष्टुप्छन्दः आदित्यो देवता लक्ष्म्यावाहने विनियोगः॥ॐश्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्मऽ इषाण सर्वलोकम्मऽ इषाण ॥ २२ ॥ आग्नेये केसरमूले—ॐभूर्भुवः स्वः लक्ष्म्यै नमः लक्ष्मीमावाहयामि स्थापयामि भो लक्ष्मि इहागच्छ इह तिष्ठ ॥

४१ अम्बे अम्बिकइत्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः अम्बो देवता अम्बिकावाहनेविनियोगः॥ ॐअम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चन॥

ससंस्त्यश्शुक? सुभद्रिकाङ्काम्पीलवासिनीम् ॥ ३८/२३ ॥ दक्षिणे केसरमूले ॐभूर्भुवःस्वःअम्बिकायैनमःअम्बिकामावाह० स्था= भोअम्बिकेइ०इ० ॥

४२ तत्सवितुरित्यस्य विश्वामित्रऋषिः गायत्रीछन्दः सविता देवता सावित्र्यावाहने विनियोगः ॥ ॐतत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ ३/३५ ॥ नैर्ऋत्येकेसरमूले-ॐभूर्भुवः स्वः सावित्र्यैनमः सावित्रीमावाहयामि स्थापयामि भो सावित्रि इहागच्छ इह तिष्ठ ॥

४३ पञ्चनद्य इत्यस्य आदित्ययाज्ञवल्क्यावृषी अनुष्टुप्छन्दः सरस्वतीनदी देवता गङ्गादिनद्यावाहने विनियोगः॥ ॐपञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः ॥ सरस्वती तु पञ्चधा सो देशेभवत्सरित् ॥ ३४/११ ॥ पश्चिमे केसरमूले-ॐभूर्भुवः स्वः गङ्गादिनदीभ्यो नमः गङ्गादिनदीः आवाहयामि स्थापयामि भो गङ्गादिनद्यः इहागच्छत इह तिष्ठत ॥

४४ इमम्मइत्यस्य शुनःशेपऋषिः गायत्रीछन्दः वरुणोदेवता सप्तसागरावाहने विनियोगः ॥ ॐइमम्मे वरुण श्रुधी हवमद्या च मृडय॥ त्वामवस्युराचके॥२१/१॥ ॐभूर्भुवः स्वः सप्तसागरेभ्यो नमः सप्तसागरान् आवाहयामि स्थापयामि भो सप्तसागराः इहागच्छत इह तिष्ठत ॥

४५ ब्रह्मपादमूले ॐभू० भूतग्रामाय० भूतग्राममा० स्था० भोभूत०इ०इ०॥

४६ कर्णिकोपरिॐभू०मेरवेनमःमेरुमा०स्था०भोमेरो इहागच्छइहतिष्ठ॥

॥ वाह्येश्वेतपरिधौ सोमादिसमीपे क्रमेणगदाद्यष्टायुधदेवतावाहनम् ॥

४७ सोमसमीपेॐभूर्भुवः स्वः गदायैनमः गदामा० स्था०भोगदेइ०इ०॥

४८ ईशानसमीपेॐभू० त्रिशूलायनमः त्रिशूलमा०स्था०भोत्रि०इ०इ०॥

४९ इन्द्रसमीपेॐभूर्भुवः स्वः वज्रायनमः वज्रमा०स्था०भोवज्र इ०इ०॥

५० अग्निसमीपेॐभू०शक्त्येनमः शक्तिमावाह० स्था० भोशक्ते इ०इ०॥

५१ यमसमीपेॐभू०दण्डायनमः दण्डमावाहयामिस्था०भोदण्डइ०इ०॥
५२ निर्ऋतिसमीपेॐभू०खड्गायनमः खड्गमा० स्था० भोखड्गइ० इ० ॥
५३ वरुणसमीपेॐभू०पाशायनमःपाशमावाहयामिस्था०भोपाशइ०इ०
५४ वायुसमीपेॐभू०अङ्कुशाय नमःअङ्कुशमा०स्था०भो अङ्कुशइ०इ०

॥ तद्बाह्ये रक्तपरिधौ उत्तरादिक्रमेण गौतमाद्यष्टदेवतावाहनम् ॥

५५ उत्तरेॐभू०गौतमायनमः गौतममावाहयामिस्था०भोगौतमइ०इ०
५६ ऐशान्यामॐभू०भरद्वाजायनमः भरद्वाजमा०स्था०भोभरद्वाजइ०इ०
५७ पूर्वेॐभू० विश्वामित्रायनमः विश्वामित्रमावा०स्था०भोवि०इ०इ०॥
५८ आग्नेय्यामॐभू०कश्यपाय नमः कश्यपमावा०स्था०भोक०इ०इ०॥
५९ दक्षिणेॐभू०जमदग्नयेनमःजमदग्निमावा०स्था०भोजमदग्नेइ०इ०॥
६० नैर्ऋत्यामॐभू०वसिष्ठायनमःवसिष्ठमावा०स्था०भोवसिष्ठइ०इ०॥
६१ पश्चिमेॐभूर्भुवःस्वः अत्रयेनमःअत्रिमावाहया०स्था०भोअत्रेइ०इह०
६२ वायव्यामॐभू०अरुन्धत्यै नमःअरुन्धतीमा०स्था०भोअ०इ०इ०॥

॥ तद्बाह्ये कृष्णपरिधौ पूर्वादिक्रमेण ऐन्द्र्याद्यष्टदेवतावाहनम् ॥

६३ पूर्वेॐभूर्भुवःस्वःऐन्द्र्यैनमः ऐन्द्रीमावा०स्थाप०भोऐन्द्रिइहा०इह०॥
६४ आग्नेय्यामॐभू०कौमार्यै नमःकौमारीमा०स्था०भो कौमारिइ०इ०॥
६५ दक्षिणेॐभू०ब्राह्म्यैनमःब्राह्मीमावाहयामिस्था०भोब्राह्मि०इ०इ०॥
६६ नैर्ऋत्यामॐभू०वाराह्यैनमः वाराहीमा०स्था० भोवाराहिइ० इ०॥
६७ पश्चिमेॐभू०चामुण्डायैनमःचामुण्डामावा०स्था०भोचामुण्डे०इ०इ०
६८ वायव्यामॐभू०वैष्णव्य नमः वैष्णवीमा०स्था०भोवैष्णविइ० इ०॥

६९ उत्तरे ॐ भूर्भुवः स्वः कौबेर्यै नमः कौबेरीमा०स्था०भो कौबेरि इ०इ०॥
७० ऐशान्याम् ॐ भू०वैनायक्यै नमः वैनायकीमा०स्था०भो वैनायकि इ०इ
प्रतिष्ठापनम्—ॐ मनोजूति०॥ १३/२ ॥ ॐ भूर्भुवः स्वः सूर्याद्यावाहितवारुणमण्डलदेवताः सुप्रतिष्ठिताः वरदाः भवत ॥ ॐ भूर्भुवः स्वः सूर्याद्यावाहितवारुणमण्डलदेवताभ्यो नमः इति नाममन्त्रेण षोडशोपचारैर्यथासम्भवोपचारैर्वा पूजयेत् ॥ अनया पूजया सूर्याद्यावाहितवारुणमण्डलदेवताः प्रीयन्ताम् ॥
॥ जलयात्रातः आनीतान्वर्द्धिनीसंज्ञकनवकलशान्वारुणमण्डलोपरि-
पूर्वाद्यष्टदिक्ष्वष्टौ मध्ये चैकमेवं क्रमेण स्थापयेत् ॥

कलशस्थापनम् — आजिघ्रेत्यस्य कुसुरुबिन्दुर्ऋषिः स्वराड्ब्राह्युष्णिक्छन्दः गौर्देवता कलशस्थापने विनियोगः॥ ॐ आजिघ्र कलशम्मह्या त्वा विशन्त्विन्दवः। पुनरूर्जा निवर्त्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्म्मा विशताद्रयिः ॥ ८/४२ ॥ ॐ भूर्भुवः स्वः वर्धिनीकलशेभ्यो नमः वर्द्धिनीकलशानावाहयामि स्थापयामि ॥

प्रतिष्ठापनम्— ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं०॥ १३/२ ॥ ॐ भूर्भुवः स्वः वर्द्धिनीकलशाः सुप्रतिष्ठिताः वरदाः भवत ॥

पूजनम्—ॐ भूर्भुवः स्वः वर्द्धिनीकलशेभ्यो नमः इति नाममन्त्रेण षोडशोपचारैः पञ्चोपचारैर्यथासम्भवोपचारैर्वा कलशान् पूजयेत् ॥

कलशस्थवर्द्धिनीप्रार्थना—ॐ वर्द्धिनि त्वं महाभागे सर्वतीर्थोदकान्विते ॥ त्वत्तोयेन प्रपूर्येऽहं भव त्वं कुलवर्द्धिनी ॥ ॐ भूर्भुवः स्वः कलशस्थवर्द्धिन्यै नमः प्रार्थनां समर्पयामि ॥ अनया पूजया वर्द्धिनीकलशाः साङ्गाः सपरिवाराः प्रीयन्ताम् ॥

॥ वर्द्धिनीकलशेषु मत्स्यादिजलमातृकाणाम् अणिमाद्यष्ट-
सिद्धीनाञ्चावाहनम् ॥

१ ॐभू० मत्स्यै नमः मत्सीमावाहयामि स्था० भोमत्सि इहागच्छ इह तिष्ठ॥
२ ॐभू० कूर्म्यैनमः कूर्मीमावाहयामि स्था० भो कूर्मि इहागच्छ इह तिष्ठ ॥
३ ॐभू० कच्छप्यैनमः कच्छपीमावाहयामिस्था० भो कच्छपि इ०इ० ॥
४ ॐभू० वाराह्यैनमः वाराहीमावाहयामि स्थापयामि भो वाराहि इ०इ०॥
५ ॐभू० दर्दुर्यैनमः दर्दुरीमावाहयामि० स्था० भोदर्दुरि इहा० इह तिष्ठ ॥
६ ॐभूर्भुवःस्वःशिशुमार्यैनमःशिशुमारीमा० स्था० भोशिशुमारि०इ०इ०॥
७ ॐभू० ईश्वर्यैनमःईश्वरीमावाहयामिस्थापयामिभोईश्वरिइहागच्छइहतिष्ठ॥
८ ॐभू० अणिमायैनमःअणिमामावाहयामिस्था० भोअणिमेइहा० इहतिष्ठ ॥
९ ॐभू० महिमायैनमःमहिमामावाहयामि स्थापयामि भो महिमे इहा०इ०॥
१० ॐभू० गरिमायैनमःगरिमामावाहयामिस्थापयामिभोगरिमे इहा० इह० ।
११ ॐभूर्भुवःस्वःलघिमायैनमःलघिमामावाहयामिस्था० भोलघिमेइ०इ०।
१२ ॐभूर्भुवःस्वःप्राप्त्यैनम प्राप्तिमावाहयामिस्था० भोप्राप्तेइहा०इह० ॥
१३ ॐ भूर्भुवः स्वः प्राकाम्यसिद्ध्यै नमः प्राकाम्यसिद्धिमावाहयामि स्थापयामि भो प्राकाम्यसिद्धे इहागच्छ इह तिष्ठ ॥
१४ ॐभूर्भुवः स्वः ईशित्वसिद्ध्यै नमः ईशित्वसिद्धिमावाहयामि स्थापयामि भोईशित्वसिद्धे इहागच्छ इह तिष्ठ ॥
१५ ॐभूर्भुवः स्वः वशित्वसिद्ध्यै नमः वशित्वसिद्धिमावाहयामि स्थापयामि भो वशित्वसिद्धे इहागच्छ इह तिष्ठ ॥

प्रतिष्ठापनम्—ॐमनोजूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञ० ॥[१][२]॥ ॐभूर्भुवः स्वः मत्स्याद्यावाहितदेवताः सुप्रतिष्ठिताः वरदाः भवत ॥

पूजनम्—ॐभूर्भुवः स्वः मत्स्याद्यावाहितदेवताभ्यो नमः इति नाममन्त्रेण षोडशोपचारैः पंचोपचारैर्वा पूजयेत् ॥

प्रार्थना—विश्वकर्मनिर्मितश्च कलशः कामरूपधृक् । कलाधरो हि देवानां दानवानां तथैव च ॥ सङ्गृह्य निर्मितो येन कलशस्तेन चोच्यते । कलशस्यमुखे ब्रह्मा ग्रीवायां वृषभध्वजः ॥ कुक्षौ तु सागराः सप्त सप्तनद्यश्च याःस्मृताः ॥ अर्जुनी गोमती चैव चन्द्रभागा सरस्वती ॥ तापी गोदावरी चैव नर्मदा च महानदी । विष्णुपादाद्रजःशैलाः शैलेभ्योयाश्च निःसृताः ॥ प्रभासं पुष्करञ्चैव नैमिषञ्च हिमालयम् । विश्वेश्वरं त्रिमूर्तञ्च गङ्गासागरसङ्गमम् ॥ पृथिव्यां यानितीर्थानि तडागादीनि यानि वै । अत्र गायत्री सावित्री शान्तिः पुष्टिस्तथैव च ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदस्तथैव च । अथर्वसंहिता वेदाः कलशे हि समाश्रिताः । वर्द्धिनि त्वं जगन्मातर्महातीर्थोदकान्विते । पूजिता गन्धपुष्पाद्यैर्भव त्वं कुलवर्द्धिनी ॥ तव तोयेन कलशाः

---

१ ब्राह्मे—ॐकारादिसुयुक्तः नमस्कारान्तकीर्तितम् । स्वनाम सर्वदेवानां मन्त्र इत्यभिधीयते ॥ २ ज्ञानमालायाम्—आसनं स्वागतं चार्घ्यं पाद्यमाचमनीयकम् । मधुपर्काचमं स्नानं वसनाभरणानि च ॥ सुगन्धः सुमनो धूपो दीपो नैवेद्यमेव च । माल्यानुलेपने चैव नमस्कारो विसर्जनम् ॥ नागदेवः—आवाहनासने पाद्यमर्घ्य-माचमनीयकम् । स्नानं वस्त्रोपवीते च गन्धमाल्यादिभिः क्रमात् ॥ धूपं दीपं च नैवेद्यं नमस्कारं प्रदक्षिणाम् । उद्वासनं षोडशकमेव देवार्चने विधिः ॥ ३ गन्धपुष्पे धूपदीपौ नैवेद्यश्च ततः क्रमात् ॥ अन्यच्च जाबालिः—ध्यानमावाहनञ्चैव भक्त्या यच्च निवेदनम् । नीराजनं प्रणामश्च पञ्च पूजोपचारकाः ॥

यज्ञेऽस्मिन्पूरिताः शुभाः । पूर्णे यज्ञेऽभिषेकार्थमृद्धिदा सिद्धिदा भव ॥
ॐभूर्भुवः स्वः कलशाधिष्ठातृवर्द्धिन्यै नमः प्रार्थनापूर्वकं नमस्करोमि ॥

समर्पणम्—हस्तेजलमादाय—अनेन वर्द्धिनीकलशस्थापनपूजनाख्येन-कर्मणा श्रीमहालक्ष्मीः प्रीयताम् ॥ इति वर्द्धिनीकलशस्थापनविधिः ॥

॥ अथ कुण्डपूजनपञ्चभूसंस्कारपूर्वकाग्निप्रतिष्ठापनप्रयोगः ॥

आचार्यः कुण्डपश्चिमतः उपविशेत् ॥ यजमानं स्वदक्षिणे ब्रह्मणः पश्चिमतः उपवेश्य ॥ सङ्कल्पः—आचार्यः आचम्य प्राणानायम्य हस्ते जलमादाय देशकालौ सङ्कीर्त्य अस्मिन्सग्रहमखहवनात्मकमहारुद्राख्ये कर्मणि यजमानेन वृतोऽहं आचार्यकर्म करिष्ये ॥

पुनः सङ्कल्पः—हस्ते जलमादाय अद्यपूर्वोच्चरितशुभपुण्यतिथौ अस्मिन्सग्रहमखहवनात्मकमहारुद्राख्ये कर्मणि कुण्डसम्मार्गसंस्कार कुण्डावाहनकुण्डपूजनविश्वकर्मपूजनपञ्चभूसंस्कारमेखलादिदेवतापूजन-पूर्वकाग्निप्रतिष्ठापनं करिष्ये ॥

सम्मार्गसंस्कारः—दर्भैरग्न्यायतनं सम्मृज्य कुशोदकेनकुण्डंसम्प्रोक्षेत्।

कुण्डावाहनम्—अञ्जलौ पुष्पाण्यादाय कुण्डं स्पृष्ट्वा—ॐआवाहयामि तत्कुण्डं विश्वकर्मविनिर्मितम् । शरीरं यच्च ते दिव्यमग्न्याधिष्ठानमद्भुतम् ॥ ॐभूर्भुवःस्वःकुण्डाय नमःकुण्डमावाहयामि स्थापयामीति पुष्पाणि कुण्डोपरि निक्षिपेत् ॥ ॐभूर्भुवःस्वः कुण्डायनमः इति पञ्चोपचारैः पूजयेत् ॥

कुण्डप्रार्थना—हस्तौ बद्ध्वा—ये च कुण्डे स्थिता देवाः कुण्डाङ्गे याश्च देवताः । ऋद्धिं यच्छन्तु ते सर्वे यज्ञसिद्धिं मुदान्विताः॥ हे कुण्ड तव रूपं तु रचितं विश्वकर्मणा । अस्माकं वाञ्छितां सिद्धिं यज्ञसिद्धिं ददस्व च ॥

कुण्डमध्येविश्वकर्मपूजनम्—विश्वकर्मन्हविषेत्यस्य विश्वकर्माभौवनऋषिः त्रिष्टुप्छन्दः विश्वकर्मा देवता विश्वकर्मावाहनेविनियोगः॥ ॐविश्वकर्म्मन्हविषावर्द्धनेनत्रातारमिन्द्रमकृणोरवद्ध्यम् ॥ तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् ॥ उपयामगृहीतोसीन्द्राय त्वा विश्वकर्म्मणऽएष ते योनिरिन्द्राय त्वा विश्वकर्म्मणे ॥ ४६/८ ॥ ॐभूर्भुवः स्वः विश्वकर्मणे नमः विश्वकर्माणमावाहयामि स्थापयामि ॐभूर्भुवः स्वः विश्वकर्मणे नमः इति पञ्चोपचारैः पूजयेत् ॥

विश्वकर्मप्रार्थना—ॐब्रह्मवक्त्रं भुजौ क्षत्रं उरू वैश्यः प्रकीर्तितः। पादौ यस्य हि शूद्रस्तद्विश्वकर्मात्मने नमः॥ अज्ञानाज्ज्ञानतो वापि दोषा ये खननोद्भवाः॥ नाशयत्वखिलॉस्तॉस्तु विश्वकर्मन्नमोऽस्तु ते ॥

॥ अथ कुण्डे पञ्चभूसंस्काराः ॥

१ परिसमूहनम्—यद्देवाइतित्र्यृचस्य प्रजापतिर्ऋषिः उष्णिक्छन्दः क्रमेण अग्निवायुसूर्यादेवताः परिसमूहने विनियोगः॥ॐयद्देवा देवहेड-

---

१ यद्देवा इति ऋक्त्रयेण परिसमूहनमश्वत्थामकारिकायामुक्तम्। २ कुशकण्डिकाकारिकायाम्–कृमिकीटपतङ्गाद्या विचरन्ति महीतले ॥ तेषां संरक्षणार्थाय परिसमूहनमुच्यते ॥ गृहीतव्यास्त्रयोदर्भाः कनिष्ठाङ्गुष्ठमध्यत । दक्षिणे चोत्तरे कुर्यात्त्रिर्निरेखासमूहनम् ॥ अथ पूर्वस्यामपसारणमिति केचित् ॥ स्वपक्षे पश्चिममारभ्य प्राक्संस्थं वा परिसमूहनम्। कारिकायाम्–धृत्वाऽङ्गुष्ठकनिष्ठाभ्यां मूले साग्रैः कुशत्रयम्। तदग्रैस्तस्य रजसा पूर्वस्यामपसर्पणम्। गदाधरभाष्ये–दर्भैः परिसमुह्य गोमयेनोपलिप्य स्रुवेणोल्लिख्य अनामिकाङ्गुष्ठेनोद्धृत्य उदकेनाभ्युक्ष्य तस्मिन्नग्निं स्थापयेत्। निरसनोल्लेखननिरुद्धरणमिति हरिहर। परिसमूहनादिपञ्चापि त्रिस्त्रिरित्य-न्ये

नुन्देवासश्चकृमा व्वयम् ॥ अग्निर्म्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥ १४/२० ॥ यदि दिवा यदि नक्तमेनाꣳसि चकृमा व्वयम् ॥ व्वायुर्म्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥ १५/२० ॥ यदि जाग्रद्यदि स्वप्नऽ एनाꣳसि चकृमा व्वयम् ॥ सूर्य्यो मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः ॥ १६/२० ॥ कनिष्ठाङ्गुष्ठमध्यतः मूलधृतैस्त्रिभिर्दर्भाग्रैः दक्षिणत उदक्संस्थं त्रिः परिसमूहनम् ॥ एवं त्रिः परिसमुह्य तान्कुशानैशान्यां पूर्वतो वा परित्यजेत् ॥

---

कर्कोपाध्यायैरपि ' विपर्ययस्य पित्र्येषु सकृद्दक्षिणाच ' इत्येतत्सूत्रव्याख्यानावसरे यदभ्यस्तं रूप दैवे स्मर्यते तत्पित्र्ये सकृत्कर्तव्यम् । यथापरिसमुह्योपलिप्योल्लेखनमिति लेखनेनैव तावद्दर्शितम् । दैवे परिसमूहनादि त्रिस्त्रिः पित्र्ये सकृत्सकृत् इति ॥ कर्कः—परिसमूहनादयः पञ्च पदार्था भूमिशुद्ध्यर्था इति केचित् । तदयुक्तम् नह्यशुद्धेदेशेऽग्नेः स्थापनप्रवृत्तिर्युक्तातस्मादन्यर्था एव तेन यत्रयत्राग्नेः स्थापनं तत्र तत्रैते कर्तव्या. अत. श्रौताग्निस्थापनेऽपि कर्तव्याः । न चैतेषां स्थालीपाकविधावन्तर्भावः ॥ येनैष एव विधिर्यत्रक्वचिद्धोम इत्यभिहितेऽपि पुनरभिधीयते उपलिप्तउद्धतावोक्षितेऽग्निमुपसमाधायेति । नूनमनेनाप्रवृत्तिस्तत्रेति ॥ तस्मादन्यर्था एवैते समूहनादौ देवता. अश्वत्थामकारिकायाम्—समूहने कश्यपश्च लेपने त्वश्विनौ तथा । मित्रावरुणावुल्लेखे ह्युध्दृत्ये चाग्निदेवता ॥ अभ्युक्षणे च गन्धर्वा वह्निस्थापनदेवताः ॥ अश्वत्थामकारिकायाम्—शान्तिके सप्तदर्भाश्च कुर्यात्परिसमूहने । वैश्वदेवे सकृद्दर्भाश्चान्यत्र तु त्रयो मताः ॥ ग्रहशान्तौ विवाहे च वृषोत्सर्गे च कर्मणि । कुर्याद्द्विदलदर्भैस्तु समूहनविधिः स्मृतः ॥

२ गोमयोदकेन उपलेपनम्—मानस्तोक इत्यस्य कुत्सऋषिः जगतीछन्दः एको रुद्रो देवता गोमयोदकेनोपलेपने विनियोगः ॥ ॐमानस्तोके तनये मा नऽ आयुषि मा नो गोषु मा नोऽ अश्वेषु रीरिषः ॥ मा नो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ १६/१६ ॥ इत्यनेन दक्षिणत उदक्संस्थ गोमयोदकेन त्रिरुपलेपयेत् ॥

३ उल्लेखनम्—इदंविष्णुरित्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः

---

१ 'मानस्तोके' इतिमन्त्रेणोपलेपनमश्वत्थामकारिकायामुक्तम् ॥ आचारप्रदीपे-रुग्णा वृद्धा प्रसूता च वन्ध्या सन्धिन्यमेध्यभुक् । मृतवत्सा च नैतासां ग्राह्य मूत्र शकृत्पय ॥ स्वच्छ तु गोमय ग्राह्य स्थाने च पतिते शुचौ । उपर्य्यध परित्यज्य आर्द्रं जन्तुविवर्जितम् ॥ स्मृतिरत्नाकरे—सर्वत्र वसुधा मेध्या सशैलवन कानना । तथा विष्णुपदाक्रान्तोपलेपनमिद कुत ॥ पुरा वृत्रेण वज्रेण हतो वृत्रो महासुर । व्यापिता मेदसा पृथ्वी तदर्थमुपलेपनम् ॥ 'गोमयोदकेन निरुपलेपनम्' इतिहरिहर । अश्वत्थामकारिकायाम्—गोमये वसते लक्ष्मी पवित्रा सर्वमङ्गला । पवित्र सर्वकार्येषु तस्मात्तेनोपलेपनम् ॥ २ गृह्यपरिशिष्टे—रेखात्रयमुदक्संस्थ प्रागग्र स्थण्डिलावधि । अथवैतत्प्रकुर्वीत द्वादशाङ्गुलमायतम् ॥ उल्लेखन तत कुर्यादस्थि कण्टकमेव च । तेषामुद्धरणार्थाय उल्लेख कथितो बुधै ॥ अन्यत्र—प्रतीचीमारभ्य प्रागन्त वा उल्लेखनम् ॥ परशुराममहारुद्रपद्धतौ—प्रागग्रस्रुवमूलेन रेखास्तिस्र समुल्लिखेत् ॥ गदाधरभाष्ये-स्फ्येनोल्लेखनमिति गर्गहरिहरौ । काष्ठेन कुशमूलेन वेति केचित् ॥ बौधायनगृह्ये—सुवर्णरजतताम्रशकलेन व्रीहिभिर्यवैर्वा दर्भैरङ्गुष्ठेन च महानाम्न्या चोपसगृह्य तस्य मध्यम प्राचीनः सन्ततमृजु उल्लिखेत ॥ ( महानाम्नी अनामिका ) गोभिलपरिशिष्टे—न नखेन न काष्ठेन नाश्मना मृण्मयेन वा । प्रोल्लिखेत्स्थण्डिल विप्र सिद्धिकामस्तु यो भवेत् ॥ भवेन्नखेन कुनखी काष्ठेन व्याधिमृच्छति । अश्मना धननाश स्यान्मृण्मयेन कलिर्ध्रुवम् ॥ फलेन सुसमृद्ध स्यात्पुष्पेण श्रियमृच्छति । पर्णेन धनलाभ स्याद्दीर्घमायु कुशेन तु ॥ तस्मात्फलेन पुष्पेण पर्णेनाथ

विष्णुर्देवता उल्लेखने विनियोगः—ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे स्वाहा ॥ ५ ॥ इत्यनेन खादिरेण हस्तमात्रेण खड्गाकृतिना स्फ्येन स्रुवमूलेन यज्ञकाष्ठेन कुशैर्वा प्रागग्रा दक्षिणत उदक्संस्थाः स्थण्डिलपरिमाणा द्वादशाङ्गुला वा तिस्रो रेखाः कुर्यात् ॥

४ उद्धरणम्——स्योनापृथिवीत्यस्य मेधातिथिर्ऋषिः गायत्री छन्दः पृथ्वी देवता उद्धरणे विनियोगः—ॐस्योना पृथिवि नो भवानृक्षरा निवेशनी॥यच्छा नः शर्म्म सप्रथाः॥ ६ ॥ इति मन्त्रेण प्रतिरेखातः अङ्गुष्ठानामिकाभ्याम् अङ्गुष्ठात् अनामिकापर्यन्तं त्रिवारं पांसूनुद्धृत्य प्राञ्चमुद्धरेत्

५ अभ्युक्षणम्——देवस्यत्वेत्यस्य प्रजापत्यश्विसरस्वतीन्द्रा ऋषयः

---

कुशेन वा। ताम्रपात्रस्रुतेनादौ लिखेत्स्थण्डिलमुत्तमम् ॥ प्रयोगचिन्तामणौ-प्रथमा सात्त्विकी ज्ञेया द्वितीया राजसी मता। तृतीया तामसी तासां देवा ब्रह्माच्युतेश्वराः॥

१ ये भ्रमन्ति पिशाचाद्या ह्यन्तरिक्षनिवासिनः। तेषां प्रहरणार्थाय समुद्धः कथितो बुधैः ॥ हरिहरः——अनामिकाङ्गुष्ठाभ्यां यथोल्लिखिताभ्यो रेखाभ्यः पांसूनुद्धृत्य। कर्मप्रदीपे—अङ्गुष्ठोपकनिष्ठाभ्यामभिकार्ये तयोत्करम्। रेखाभ्यः समुपादायारत्निमात्रे निधापयेत् ॥

२ कारिकायाम्——आपो देवगणाः सर्वे आपः पितृगणाः स्मृताः। तेनैवाभ्युक्षणं प्रोक्तमृषिभिर्वेदपारगैः ॥ स्मार्तोल्लासे—उत्तानेन हस्तेन प्रोक्षणं समुदाहृतम्। तिरश्चावोक्षणं प्रोक्तं नीचेनाभ्युक्षणं स्मृतम् ॥ उत्तानेन करेणापि सपवित्रेण वारिणा। विदुषा प्रोक्षणं कार्यं नीचेनाभ्युक्षणं तथा ॥ प्राजापत्येन तीर्थेन न्युब्जमुष्टिकृतेन च। कार्यमभ्युक्षणं चैव प्रतिरेखं विजानता ॥ अथोद्धननानन्तरं यदि कश्चित्पशुः विकिरेत् मूत्रादिभिर्विकीर्णं कुर्यात् ( अत्र पशुः इत्युपलक्षणम् ) सुसंस्कृते कुण्डे वा स्थण्डिले केनापि दोषेणाशुचितामापन्ने प्राय-

धृतिश्छन्दः अश्विसरस्वतीन्द्रा देवताः अभ्युक्षणे विनियोगः॥ ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि ॥ ३॥ इति मन्त्रेण प्रतिरेखं न्युब्जमुष्टिना प्राजापत्यतीर्थेन उदकेन त्रिरभ्युक्षेत् ॥ इति पञ्चभूसंस्काराः ॥

॥ अथ सदैवतमेखलापूजनप्रयोगः ॥

इदंविष्णुरित्यस्यमेधातिथिर्ऋषिः गायत्रीछन्दः विष्णुर्देवता उपरिमेखलायां श्वेतवर्णालङ्कृतायां विष्णवावाहने विनियोगः—ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्य पा᳚ᳪसुरे स्वाहा॥ १५॥ विष्णो यज्ञपते देव दुष्टदैत्यनिषूदन । विभो यज्ञस्य रक्षार्थं कुण्डे सन्निहितो भव ॥ उपरिमेखलायां श्वेतवर्णालङ्कृतायाम्—ॐभूर्भुवः स्वः विष्णवे नमः विष्णुमावाहयामि स्थापयामि ॥ ॐविष्णवे नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

मेखलापूजनम्—प्रथमायै विष्णुदैवत्यै सात्त्विकायै श्वेतवर्णालङ्कृतायै उपरिमेखलायै नमः सकलोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

ब्रह्मजज्ञानमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता मध्यमेखलायां रक्तरागरञ्जितायां ब्रह्मावाहने विनियोगः—ॐब्रह्म जज्ञा-

श्विचविशेष उक्तो बोधायनेन 'स्थण्डिलमुद्धतं गौरश्वो वा यदि विकिरेदन्यद्वा श्वापदमधितिष्ठेत्तस्य पदमभ्युक्ष्य जपति'—१ ॐतृषितिरिदेवयज्ञ्योषध्यास्ते मूलम्मा हिᳪसिषम्—इति कृतान्तात्कर्म प्रतिपद्यते इति ।

नम्मंयुमम्पुरस्ताद्दि सीमुत? सुरुचो वेनऽ आवट॥ स बुध्न्याऽ उपमाऽ अस्य विष्ठा?सतश्श्च योनिमसतश्श्च विवः ॥ १३ ॥ हंसपृष्ठसमारूढ देव देवगणावृत । रक्षार्थं मम यज्ञस्य कुण्डेऽस्मिन्सन्निधो भव ॥ मध्यमेखलायां रक्तरागरञ्जितायाम्—ॐभूर्भुवः स्वः ब्रह्मणे नमः ब्रह्माणमावाहयामि स्थापयामि ॥ ब्रह्मणे नमः सकलोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

मेखलापूजनम्—द्वितीयायै ब्रह्मदैवत्यै राजस्यै रक्तरागरञ्जितायै मध्यमेखलायै नमः सकलोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

रुद्राः सꣳसृज्येत्यस्यसिन्धुद्वीपऋषिः अनुष्टुप्छन्दः रुद्रोदेवताअधोमेखलायां कृष्णरागरञ्जितायां रुद्रावाहने विनियोगः—ॐरुद्राः सꣳसृज्य पृथिवीम्बृहज्ज्योतिः समीधिरे ॥ तेषाम्भानुरजस्रऽइच्छुक्रोदेवेषुरोचते॥ ॥१६॥गङ्गाधरमहादेव वृषारूढमहेश्वर । आगच्छ भगवन् रुद्र कुण्डेऽस्मिन् सन्निधो भव॥अधोमेखलायां कृष्णरागरञ्जितायाम्—ॐभूर्भुवः स्वः रुद्रायनमःरुद्रमा०स्था०॥रुद्रायनमः सकलोपचारार्थे गन्धाक्षतपुष्पाणि स०।

मेखलापूजनम्—तृतीयायै रुद्रदैवत्यै तामस्यै कृष्णरागरञ्जिताय अधोमेखलायै नमः सकलोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

॥ अथ सदैवतयोनिपूजनप्रयोगः ॥

पृथुकराङ्गुलं लिङ्गं योनिमध्ये संस्थाप्य तस्य पार्श्वयोः कुम्भिकुम्भवन्मृत्पिण्डद्वयं निधाय रक्तवस्त्रेण संवेष्ट्य तत्र गौरीम्पूजयेत् ॥

---

१ क्रियासारे—योनिमध्ये गतं लिङ्गं तुङ्गं पृथुकराङ्गुलम् । मृत्पिण्डद्वितयं तस्याः पार्श्वयोः कुम्भिकुम्भवत् ॥ योन्याः पश्चिमतो नालमायामे चतुरङ्गुलम् । त्रिद्व्येकाङ्गुलविस्तारं क्रमान्न्यूनाग्रमिष्यति ॥

योन्यां गौरीपूजनम्—अम्बइत्यस्यभूरिगार्ची ऋषिः पङ्क्तिश्छन्दः गौरी-देवता योन्यां गौर्यावाहने विनियोगः—ॐअम्बेऽ अम्बिकेम्बालिके न मा नयति कश्चन ॥ ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥२३/१८॥ हिमाद्रितनये देवि शङ्करप्राणवल्लभे ॥ लम्बोदरस्य जननि योन्यामत्र स्थिरा भव ॥ ॐभूर्भुवः स्वः गौर्यै नमः गौरीमावाहयामि स्थापयामि ॥ गौर्यै नमः सकलोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

योनिपूजनम्—क्षत्रस्ययोनिरिति विवस्वानृषिः द्विपदागायत्री छन्दः योनिर्देवता योनिपूजने विनियोगः॥ॐक्षत्रस्य योनिरसि क्षत्रस्य नाभि-रसि ॥ मा त्वा हिᳪंसीन्मा मां हिᳪंसीः॥२०/१॥ आगच्छ देवि कल्याणि जगदुत्पत्तिहेतुके ॥ मनोभवयुते रम्ये योन्यां सन्निहिता भव ॥ जगदुत्प-त्तिहेतुकायै मनोभवयुतायै योन्यै नमः योनिमावाहयामि स्थापयामि ॥ ॐयोन्यै नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

योनिप्रार्थना—सेवन्ते महतीं योनिं देवर्षिसिद्धमानवाः ॥ चतुर-शीतिलक्षाणि पन्नगाद्याः सरिसृपाः ॥ पशवः पक्षिणः सर्वे संसरन्ति यतो भुवि । योनिरित्येव विख्याता जगदुत्पत्तिहेतुका ॥ मनोभवयुता

१ विष्ण्वर्चनकल्पलतायां योन्यां गौरीस्थाने लक्ष्मीपूजनमुक्तम् तथा दक्षिणो-त्तरगोलार्धयोः सूर्यचन्द्रयोः पूजनमुक्तं तद्यथा—योन्यां लक्ष्मीपूजनम्—श्रीश्चेति नारायणऋषिः त्रिष्टुप्छन्दः आदित्यो देवता लक्ष्म्यावाहने विनियोगः—ॐश्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणा-मुम्मऽइषाण सर्वलोकम्मऽइषाण ॥३१/२२॥ समुद्रमथनाज्जाते जगदानन्दकारिके । हरिप्रियेचमाङ्गल्येयोन्यासन्निहिताभव ॥ ॐरक्तवर्णालङ्कृतायायोन्यांलक्ष्म्यैनमः

देवी रतिसौख्यप्रदायिनी । मोहायित्र्यै सुराणां च जगद्धात्र्यै नमो नमः॥ योने त्वं विश्वरूपाऽसि प्रकृतिर्विश्वधारिणी । कामस्था कामरूपा च विश्वयोन्यै नमो नमः ॥

॥ अथ सदैवतकण्ठपूजनप्रयोगः ॥

कण्ठेरुद्रपूजनम्—नीलग्रीवाइतिपरमेष्ठिप्रजापतिर्ऋषिःअनुष्टुप्छन्दः रुद्रो देवता कण्ठे रुद्रावाहने विनियोगः ॥ ॐनीलग्रीवाःशितिकण्ठा दिवंरुद्राउपश्रिताः।तेषांसहस्रयोजनेवधन्वानि तन्मसि॥६।६२॥कुण्डस्य कण्ठदेशेयंनीलजीमूतसन्निभः। अस्मिन्नावाहयेरुद्रंशितिकण्ठंकपालिनम् । एह्येहिभगवन्रुद्रशितिकण्ठ कपालभृत्।ॐभूर्भुवःस्वःकण्ठेरुद्रायनमःरुद्रमावाहयामिस्थापयामिरुद्रायनमःसर्वोपचारार्थेगन्धाक्षतपुष्पाणिसमर्पयामि।

लक्ष्मीमा०स्था०॥ॐलक्ष्म्यैनमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणिस०॥ लक्ष्मीप्रार्थना-ॐहस्तद्वयेन मुकुले धारयन्तीं सुलीलया । हारनूपुरसंयुक्तां लक्ष्मीं देवीं विचिन्तये ॥ योन्यांसूर्यपूजनम्—आकृष्णेनेतिहिरण्यस्तूपऋषि. त्रिष्टुप्छन्दः सूर्योदेवतासूर्यावाहनेविनियोगः॥ॐआकृष्णेन०॥३३।४३॥ दिवाकरसहस्रांशो सुरासुरनमस्कृत । लोकनाथ विश्वनेत्रयोन्यासन्निहितोभव ॥ रक्तवर्णालङ्कृतायायोन्यादक्षिणेभागे—ॐसूर्याय नम. सूर्यमावा०स्था०॥ॐसूर्यायनमः सर्वोपचा०गन्धाक्षतपुष्पाणिस० । सूर्यप्रार्थना-ॐपद्महस्तरथारूढपद्मासनसुमङ्गल । क्षमाकुरुदयालोऽग्रहराजनमोऽस्तुते ॥ योन्यांसोमपू०-इमन्देवाइतिवरुणऋषि. यजुश्छन्दः सोमोदेवता सोमा०वि०॥ ॐइमन्देवा० ॥९।४०॥ हिमरश्मे निशानाथ तारकाभि. समन्वित । आह्लादप्रद देवेश योन्या सन्निहितो भव ॥ रक्तवर्णालङ्कृतायायोन्या वामभागे—ॐसोमाय नमः सोममावाहयामि स्था०॥ॐसोमाय नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणिसमर्पयामि ॥ सोमप्रार्थना-ॐअत्रिपुत्रनिशानाथ द्विजराजसुधाकर । सोमत्वंसौम्यभावेन ग्रहपीडा निराकुरु ॥

कण्ठपूजनम्—जीवनंसर्वजन्तूनांसुगादिस्थानमुत्तमम् । उत्तमाङ्गस्यचा धारंकण्ठमावाहयाम्यहम् ॥ ॐभूर्भुवःस्वः कण्ठायनमःकण्ठमावा०स्था०॥ कण्ठायनमः सर्वोपचारार्थेगन्धाक्षतपुष्पाणिसमर्प०॥ कण्ठप्रार्थना-कण्ठम-ङ्गलरूपेण सर्वकुण्डेप्रतिष्ठितःपरितोमेखलास्त्वचो रचिताविश्वकर्मणा ॥

नाभिपूजनम्—नाभिर्म्मेतिप्रजापतिर्ऋषिः महापंक्तिश्छन्दः नाभिर्दे वता नाभिपूजने विनियोगः ॥ ॐनाभिर्म्मे चित्तं विज्ञानम्पायुर्म्मे पचितिर्भसत् ॥ आनन्दनन्दावाण्डौ मे भगः सौभाग्यम्पसः ॥ जङ्घाभ्यांपद्भ्यान्धर्म्मोस्मि विशि राजा प्रतिष्ठितः ॥ इ० ॥ पद्माकाराऽथवा कुण्डमध्याकृतिबिभ्रती । आधारः सर्वकुण्डानां नाभिमावाहयाम्यहम् ॥ ॐभूर्भुवः स्वः नाभ्यै नमः नाभिमावाहयामि स्थापयामि ॥ नाभ्यै नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

नाभिप्रार्थना—नाभे त्वं कुण्डमध्ये तु देवैः सह प्रतिष्ठिता ॥ अतस्त्वां पूजयामीह शुभदा सिद्धिदा भव ॥

कुण्डमध्ये नैर्ऋत्यकोणे वास्तुपूजनम्—वास्तोष्पत इत्यस्य वसिष्ठऋषिः त्रिष्टुप्छन्दः वास्तोष्पतिर्देवता वास्तोष्पत्यावाहने विनियोगः ॥ ॐवास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽअनमीवो भवानः ॥ यत्त्वेमहे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शञ्चतुष्पदे ॥ पा०गृ० ॥ आवाहयामि देवेशं वास्तुदेवं महाबलम् । देवदेवं गणाध्यक्षं पातालतलवासिनम् ॥ ॐभूर्भुवः स्वः कुण्डमध्ये नैर्ऋत्यकोणे वास्तुपुरुषाय नमः वास्तुपुरुषमावाहयामि स्थापयामि ॥ वास्तुपुरुषाय नमः सर्वोपचारार्थं गन्धाक्षतपुष्पाणि समर्पयामि ॥

बलिदानम्-कुण्डपुरतःबलिंसंस्थाप्य-ॐवास्तुपुरुषायनमःअमुंबलिंस०

प्रार्थना—यस्य देहे स्थिता क्षोणी ब्रह्माण्डं विश्वमङ्गलम् ॥ व्यापिनं भीमरूपं च सुरूपं विश्वरूपिणम् ॥ पितामहसुतं मुख्यं वन्दे वास्तोष्पतिं प्रभुम् ॥ वास्तुपुरुष देवेश सर्वविघ्नहरो भव । शान्तिं कुरु सुखं देहि सर्वान्कामान्प्रयच्छ मे ॥ इति कुण्डपूजनम् ॥

अग्निप्रतिष्ठापनम्—सुवासिन्या श्रोत्रियागारात् अरणिसम्भवात् सूर्यकान्तसम्भवात् स्वगृहाद्वा समृद्धं निर्धूमं कांस्येनासम्भवे स्वहस्तघटितमृण्मयेन वा सजातीयपात्रयुग्मेन सम्पुटीकृतमाहृतमग्निं कुण्डस्य स्थण्डिलस्य वा आग्नेय्यां दिशि निदध्यात् ॥

---

प्रयोगरत्ने सङ्ग्रहे च—उत्तमः श्रोत्रियागारान्मध्यमः स्वगृहादिजः । उत्तमोऽरणिजन्योऽग्निर्मध्यमः सूर्यकान्तजः ॥ प्रदीप्तबहुलाङ्गारक्षम सन्तुहविर्भुजम् । लेखासु च प्रतिष्ठाप्येत्यनेन प्रतिपाद्यते ॥ शारदातिलकेपि—सूर्यकान्तादिसम्भूत यद्वाश्रोत्रियगेहजम् । आनीय चाग्निं पात्रेण क्रव्यादांश परित्यजेत् ॥ सूर्यकान्तादरणितः श्रोत्रियागारतोपि वा । पात्रेण पिहिते पात्रे वह्निमेवानयेतस्त॰॥ अक्षेणादाय तत्पात्र वर्मणोद्घाटयेद्द्रुतम् । अस्त्रमन्त्रेण नैर्ऋत्ये क्रव्यादांशततस्त्यजेत् ॥ त्याज्याग्निमाह देवलः— चाण्डालाग्निरमेध्याग्निः सूतकाग्निश्च कर्हिचित् । पतिताग्निश्चिताग्निश्च नशिष्टग्रहणोचित ॥ २ शुभं पात्रन्तु कांस्य स्यात्तेनाग्निं प्रणयेद्बुधः। तस्याभावेशरावेण नवेनापि दृढेन च ॥ अनि.—सौवर्णं राजतं ताम्रं तदभावे तु मृण्मयम् पात्रान्तरेण पिहितमग्निप्रणयने स्मृतम् ॥ गोभिल—पात्रान्तरेण पिहिते ताम्रपात्रादिके शुभे । अग्निप्रणयनं कुर्याच्छरावे तादृशेपि वा ॥ वर्ज्यपात्राणि—शरावेभिन्नपात्रेवाकपाले स्वायसेपिवा। नाग्निप्रणयन कुर्याद्व्याधिहानिभयावहम् ॥ अत्र शरावनिषेधकं वचनं कुलालचक्रघटितविषयकं पुराणशरावपर इति स्मृतिसारे ॥ अत्र गदाधर॰—कुलालचक्रघटित मृण्मय पात्रमासुरम् । तदेव हस्तघटित स्थाल्यादि दैवपैतृकम् ॥ गोभिलीयपरिशिष्टे—कपालैर्भिन्नपात्रैर्वा नत्वामैर्गोमयेन वा । अग्निप्रणयन कार्यं यजमानभयावहम् ॥ अल्पप्रणीतो विच्छिन्नोऽथमिद्धश्चापरिष्कृतः । त्वरया पुनरानीतो यजमानभयावह. ॥ तस्माच्छुभेन पात्रेण अविच्छिन्नाकृश बहु । अग्निप्रणयन

क्रव्यादांशहरणम्—क्रव्यादमग्निमित्यस्य दमन ऋषिः त्रिष्टुप्छन्दः अग्निर्देवता पूर्वार्द्धस्य क्रव्यादांशनिरसने उत्तरार्द्धस्य च पुरतः देवांशस्थापने विनियोगः ॥ ॐक्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः ॥ ॐफट् इत्यस्त्रेण पात्रमादाय हुं इति वर्मणोद्वाट्य ॐफट् इत्यस्त्रेण क्रव्यादांशं नैर्ऋत्यां क्षिप्त्वा—इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ॥ ३५/१९ ॥ इत्यनेनदेवांशं पुरतः स्थापयेत् ॥

हस्तयोरग्निग्रहणम्—मयिगृह्णामीत्यस्य प्रजापतिर्ऋषिः उष्णिक्छन्दः अग्निर्देवता हस्ताभ्यामग्निपात्रग्रहणे विनियोगः ॥ ॐमयि गृह्णाम्यग्रेऽअग्निꣳरायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥ मामु देवताः सचन्ताम् ॥ १३/१ ॥ इति मन्त्रेण कुण्डाद्बहिः स्थापितमग्निपात्रं आचार्यः गृह्णीयात् ॥

अग्निस्थापनम्—अग्निम्मूर्द्धेति विरूपाक्षऋषिः गायत्रीछन्दः अग्निर्देवता ॐकारस्यपरब्रह्मऋषिः गायत्रीछन्दः परमात्मा देवता तिसृणांव्या-

[illegible]

अयम् ॥ अपाꣳरेताꣳसि जिन्वति ॥ ३/१२ ॥ ॐभूर्भुवः स्वरोम् ॥ इति आग्नेयकोणमार्गेण योनिमार्गेण वा कुण्डे शतमङ्गलनामानमग्निमुपसमादधे ॥

---

कुर्याद्यजमानसुखावहम् ॥ २ सम्पुटेनाग्निमानीय स्थाप्याग्नेर्दिशि कुण्डतः । आमक्रव्यभुजंतस्मात्यक्त्वाकुण्डेनिनिक्षिपेत् ॥ शारदायाम्—आनीयास्त्रेणनैर्ऋत्येक्रव्यादांश परित्यजेत् ॥ श्रोत्रियलक्षणमाहदेवल.—एकशाखा सकल्पा च षड्भिरङ्गैरधीत्य च । षट्कर्मनिरतो विप्रः श्रोत्रियोनामधर्मवित् ॥ तथाच—जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥ १ परशुराममहापद्धतौ—शतमङ्गलनामानमग्निमुपसमादधे इत्युक्तम् ॥ कर्मविशेषे अग्निनामानि-पावकोलौकिकेह्यग्नि. प्रथमःसम्प्रकीर्तितः । अग्निस्तुमारुतोनाम गर्भाधानेविधीयते ॥

अग्न्याहरणपात्रे साक्षतोदकं निषिच्य समाचारात्तत्र किञ्चिद्धिरण्यमाभूषणं वा निक्षिप्य तत्सुवासिन्यै दापयेत् ॥

ततः पुंसवने ज्ञेयः पवमानस्तथैव च । सीमन्ते मङ्गलो नाम प्रबलो जातकर्मणि । नाम्नि वै पार्थिवो ह्यग्नि प्राशने तु शुचिः स्मृतः । सभ्यनामा तु चूडायां व्रतादेशे समुद्भव. ॥ गोदाने सूर्यनामा स्याद्वैश्वानरो विसर्गके । विवाहे योजको नाम चतुर्थ्यां शिखिनामकः ॥ आवसथ्ये द्विजो ज्ञेयो वैश्वदेवे तु पावकः । प्रायश्चित्ते तु विट् चैव पाकयज्ञेषु पावकः ॥ देवानां हव्यवाहश्च पितॄणां कव्यवाहनः । शान्तिके वरदः प्रोक्तः पौष्टिके बलवर्द्धनः । पूर्णाहुत्यां मृडो नाम क्रोधाग्निश्चाभिचारके । वश्यार्थे कामदो नाम वनदाहे तु दूषकः । कुक्षौ तु जाठरो ज्ञेयः क्रव्यादो मृतदाहके । वृषोत्सर्गेऽध्वरो नाम शुचये ब्राह्मणः स्मृतः ॥ समुद्रे वाडवो ह्यग्निः क्षये संवर्तकस्तथा । ब्रह्मा वै गार्हपत्ये स्याद्दक्षिणाग्नावथेश्वरः ॥ विष्णुराहवनीये स्यादग्निहोत्रे त्रयोऽग्नयः । लक्षहोमेऽभीष्टदः स्यात्कोटिहोमे महाशनः ॥ ग्रहहोमे विशेषः स्कान्दे–आदित्ये कपिलो नाम सोमे पिङ्गल उच्यते । धूमकेतुस्तथा भौमे जाठरोऽग्निर्बुधे स्मृतः ॥ गुरौ चैव शिखी नाम शुक्रे भवति हाटकः । शनैश्चरे महातेजा राहुकेत्वोर्हुताशनः ॥ इत्येवमग्निनामानि गृह्यकर्मे समाचरेत् ॥ अविदित्वा तु यो ह्यग्निं होमयेदविचक्षणः ॥ न हुतं न च संस्कारो न तु यज्ञफलं भवेत् ॥ वायवीयसंहितायाम्–वह्निबीजं समुच्चार्य स्वादधीताग्निमासने । योनिमार्गेण वै तद्वदात्मनः सन्मुखे न वा ॥ ( योनिमार्गेण मेखलोपरिस्थितरन्ध्रेणेत्यर्थः )

१ कुशकण्डिकाभाष्ये– अग्न्यानयनपात्रे तु प्रक्षिपेदक्षतोदकम् । यद्येवं नैव कुर्वीत यजमानभयावहम् ॥ अन्यच्च–अग्न्यानयनपात्रन्तु आर्द्रं कृत्वा समुद्धरेत् । अकृते भ्रष्टहोमः स्यादायस्तत्र न पूर्यते ॥ कल्पवल्लयामपि–आनीतपात्रयोरेव प्लवनं तत्क्षणे भवेत् । नोचेत्कर्तुर्मनस्तापः स्यात्सन्तापस्तयोरपि ॥ प्रयोगपारिजाते–अग्निसंस्थापनं कुर्याद्वाग्यतः संयतेन्द्रियः । श्वसतो वरुणः कान्तिं जुह्वतोऽग्निं श्रियं हरेत् । भुञ्जतो मृत्युरायुष्यं तस्मान्मौनं त्रिषु स्मृतम् ॥ ( व्याहृत्युच्चारणं कृत्वा तूष्णीमग्निं स्थापयेदित्यविरोधः )

आवाहनादिसप्तमुद्राप्रदर्शनम्—१ ॐ आवाहितो भव ॥ २ ॐ स्थापितो भव ॥ ३ ॐ सन्निहितो भव ॥ ४ ॐ सन्निरुद्धो भव ॥ ५ ॐ अवगुण्ठितो भव ॥ ६ ॐ अस्त्रेण संरक्षितो भव ॥ ७ ॐ धेनुमुद्रया अमृतीकृतो भव ॥

सन्धुक्षणम्—स्वाङ्कृतोसीति प्रजापतिर्ऋषिः जगतीछन्दः अग्निर्देवता सन्धुक्षणे विनियोगः ॥ ॐ स्वाङ्कृतोसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यो देवा ꣳशो यस्मै त्वेडे तत्सत्यमुपरिप्लुता भङ्गेन हतोसौ फट् प्राणाय त्वा व्यानाय त्वा ॥ ३ ॥ इति मन्त्रेण सन्धुक्षणम् ॥ ( सन्धुक्षणं नाम प्रोक्षितेन्धनप्रक्षेपः ) वेणुधमन्या प्रबोध्य ध्यायेत् ॥

---

१ आवाहनं स्थापनञ्च सन्निधानं निरोधनम् । ततोऽवगुण्ठनं चास्त्र धेनुमुद्राप्रदर्शनम् ॥ हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वयोः । अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावाहनी मता ॥ अधोमुखी त्वियं चेत्स्यात्स्थापिनीति निगद्यते । उच्छ्रिताङ्गुष्ठमुष्ट्योस्तु संयोगात्सन्निधापिनी ॥ अन्तःप्रवेशिताङ्गुष्ठा सैव संरोधिनी मता । सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी । अवगुण्ठनमुद्रेयमभितो भ्रामिता सती ॥ हस्तद्वयेन परस्परताल अस्त्रमुद्रा ॥ अन्योन्याभिमुखाश्लिष्टा कनिष्ठाऽनामिका पुनः । तथैव तर्जनी मध्या धेनुमुद्रेयमीरिता ॥ २ धर्मसूत्रे–नाग्नेिंक्षितमिति धमनमशावाद्ध्यात् ॥ ३ विश्वामित्रकल्पे–न पाणिना न शूर्पेण न चामेध्यादिनापि वा । मुखेनोपधमेदग्निं मुखादग्निरजायत ॥ पट्टकेन भवेद्व्याधिः शूर्पेण धननाशनम् । पाणिना मृत्युमाप्नोति कर्मसिद्धिर्मुखेन तु ॥ आपस्तम्ब –न कुर्यादग्निधमनं कदाचिद्व्यजनादिना । मुखेनैव धमेदग्निं धमन्या वेणुजातया ॥ उपरितनश्लोकद्वये मुखेनाग्निधमनं यदुक्तं तद्वेणुधमनीमन्तराऽपि वेवेति बोध्यम् । आस्यबिन्दून् पतनशङ्काभयात् केचन केवलं मुखेनैवाग्निधमनं मन्यन्ते तदलीकम् एतद्विषये प्रमाणान्यधो लिखितान्यूह्यानि । देवल–जुहत्श्चाथ पर्णेन पाणि शूर्पास्यदारुभिः । न कुर्याद

अग्निध्यानम्—चत्वारिशृङ्गेति वामदेवऋषिः त्रिष्टुप्छन्दः अग्निर्देवता अग्निध्याने विनियोगः ॥ हस्ते पुष्पाण्यादाय—ॐचत्वारि शृङ्गा त्रयोऽअस्य पादा द्वेशीर्षे सप्त हस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ २ऽ आविवेश ।[१]॥ ॐरुद्रतेजःसमुद्भूतं द्विमूर्धानं द्विनासिकम् । षण्णेत्रञ्च चतुःश्रोत्रं त्रिपादं सप्तहस्तकम् ॥ याम्यभागे चतुर्हस्तं सव्यभागे त्रिहस्तकम् । स्रुवं स्रुचञ्च शक्तिञ्च अक्षमालाञ्च दक्षिणे ॥ तोमरं व्यजनञ्चैव घृतपात्रन्तु वामके । बिभ्रतं सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकम् । याम्यानने चतुर्जिह्वं त्रिजिह्वं चोत्तरे मुखे । द्वादशकोटि-

---

धमनं तथा च व्यजनादिना ॥ पर्णेनैव भवेद्व्याधिः शूर्पेण धननाशनम् । पाणिनामृत्युमाप्नोति पटेन विफलं भवेत् ॥ व्यजनेनातिदुःखाय आस्येनायुःक्षयो भवेत् । वस्त्रेण श्रीविनाशः स्याद्दारुणा कान्तिनाशनम् । धमनीमन्तरा कृत्वा तृणं वा काष्ठमेव वा । मुखेनोपधमेदग्निं मुखादग्निरजायत । वेणोरग्निप्रसूतित्वाद्वेणुरग्नेश्च पावनः । तस्माद्वेणुधमन्यैव धमेदग्निं विचक्षणः ॥ श्रुतिरपि—तेजो वै वेणुस्तेजः प्रवर्ग्यस्तेजसैव तेजः समर्द्धयति ॥

१ गोभिलः—होष्यन्नग्नेर्विजानीयात्स्वरूपं श्रुतिनोदितम् । अजानता कृतं कर्म तदल्पफलमिष्यते ॥ वसिष्ठकल्पे—अग्निरूपमथो वक्ष्ये सिद्धयर्थं सर्वकर्मणाम् । यतस्तस्मिन्नविज्ञाते होमो भवति निष्फलः ॥ स्मरेदग्निं द्विजो होष्यन्रक्तं गोवृषरूपिणम् । वितलोर्ध्वाननं मध्ये बृहत्कर्णं सुलोचनम् ॥ चतुःशृङ्गं त्रिपादं च द्विशीर्षं सप्तहस्तकम् । द्विपुच्छं च त्रिधाबद्धं चतुर्नेत्रं त्रयीमयम् ॥ शृङ्गाश्चत्वार उद्दिष्टा या ऊर्ध्वसमिधश्च ताः । वैदिकं तान्त्रिकं चैव पादाः परिधयस्त्रयः ॥ ऋगाद्याश्च त्रयो वेदाः पुरुषार्थास्तदीक्षणः । छन्दांसि सप्तहस्तानि पुच्छौ पक्षौ सितासितौ ॥ रोमाण्यूरूणि तस्याहुश्चातुर्मास्यानि बन्धनम् । संवत्सरोऽनुयाजाख्याः समित्कर्म सुगद्यते ॥ तदा पञ्चदिनान्येव समिधः प्राहुरुत्तमाः । तच्च सर्वात्मनो वह्नेरात्मत्वेन निगद्यते ॥ शारदातिलके—वैश्वानर स्थित ध्यायेत्समिद्धोमेषु देशिकः । शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु ॥ एतच्च तान्त्रिके होमे नियतमिति रत्नमालायाम् ॥

मूत्याख्यं द्विपश्वाश्त्कलायुतम् । आत्माभिमुखमासीनं ध्यायेऽहं तु हुताशनम् । गोत्रमग्नेस्तु शाण्डिल्यं शाण्डिल्यासितदेवलाः।त्रयोऽमी प्रवरा माता स्वरणी वरुणः पिता ॥ पुष्पाणि कुण्डोपरि क्षिप्त्वा ज्वालिनीमुद्राप्रदर्शनम्—ॐचित्पिङ्गल हन हन दह दह पच पच सर्वाज्ञां ज्ञापय स्वाहा ॥

अग्न्यावाहनम्—आवोदेवास इत्यस्य प्रजापतिर्ऋषिः दैवी अनुष्टुप्छन्दः आशीर्देवता अग्न्यावाहने विनियोगः ॥ ॐआवो देवासऽ ईमहे वामम्प्रयत्यध्वरे ॥ आवो देवासऽ आशिषो यज्ञियासो हवामहे ॥५॥ रक्तमाल्याम्बरधरं रक्तपद्मासनस्थितम् । स्वाहास्वधावषट्कारैरङ्कितं मेषवाहनम् । शतमङ्गलकं रौद्रं वह्निमावाहयाम्यहम् । त्वं मुखं सर्वदेवानां सप्तार्चिरमितद्युते ॥ आगच्छ भगवन्नग्ने कुण्डेऽस्मिन्सन्निधो भव ॥ ॐभूर्भुवः स्वः वैश्वानर शाण्डिल्यगोत्र शाण्डिल्यासितदेवलेति त्रिप्रवर भूमिमातः वरुणपितः पश्चिमचरण पूर्वशिरस्कन्ध ऊर्ध्वपाद पातालदृष्टिगोचर मेषध्वज प्राङ्मुख अग्ने त्वं स्वागतो भव ॥

प्रतिष्ठापनम्—मनोजूतिरित्यस्य आङ्गिरसो बृहस्पतिर्ऋषिः यजुश्छन्दः विश्वेदेवादेवता अग्निप्रतिष्ठापने विनियोगः ॥ ॐमनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टं य्यज्ञᳪ समिमन्दधातु। विश्वेदेवासऽइहमादयन्तामो३म्प्रतिष्ठ ॥ $\frac{१३}{२}$ ॥ ॐभूर्भुवःस्वःशतमङ्गलनामाग्ने सुप्रतिष्ठितो वरदो भव ।

अग्नेः स्वात्माभिमुखीकरणम्—एषोहदेवेत्यस्य स्वयंभूर्ब्रह्मऋषिः त्रिष्टुप्छन्दः अग्निर्देवता अग्नेः स्वात्माभिमुखीकरणे विनियोगः ॥ ॐएषो

१ ज्वालिनीमुद्रालक्षण मुद्राप्रकारो—मणिबन्धयुतौ कृत्वा प्रसृताङ्गुलिकौ करौ । कनिष्ठाङ्गुष्ठयुगले मिलित्वान्तः प्रसारितौ । ज्वालिनीनाममुद्रेयं वैश्वानरप्रियकरी ॥ २ क्वचिच्छिष्टपठितमिदं यदग्नेर्भूमिमातृत्वं वरुणपितृत्वं च न विद्मः तस्मादचलोऽमूलं मृग्यम् ॥

ई॒ दे॒वः प्र॒दिशो॒ऽनु॒ सर्वाः॒ पूर्वो॑ ह जा॒तः स उ॒ गर्भे॑ अ॒न्तः ॥ स ए॒व जा॒तः स ज॑नि॒ष्यमा॑णः प्र॒त्यङ्जना॑स्तिष्ठति स॒र्वतो॑मुखः ॥ $\frac{४}{३२}$ ॥ ॐभूर्भुवः स्वः शतमङ्गलनामाग्ने मम सम्मुखो भव ॥

पूजनम्—ॐभूर्भुवः स्वः "शतमङ्गलनामाग्नये नमः" इति नाममन्त्रेण षोडशोपचारैः बहिः कुण्डनैर्ऋत्यकोणे मध्ये वा अग्निं सम्पूज्य प्रार्थयेत् ॥ कृतसम्पुटकरः—अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । हिरण्यवर्णममलं समृद्धं विश्वतोमुखम् ॥

---

१ अग्नये गन्धादिकं बहिरेव देयमिति कल्पद्रुमकारा । अन्ये तु मध्ये पूजनमिच्छन्ति । विष्णुधर्मोत्तरे–मध्येऽपि गन्धपुष्पादीन् दद्यादग्नेर्न संशय । बहिर्नैवेद्यमाभन्तु दातव्यमिति निश्चितम् ॥ गौडास्तत्र सप्तजिह्वा आवाह्य पूजयन्ति ॥ अग्निजिह्वानामानि–काली कराली च मनोजवा च सुलोहिता चैव सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुचिस्तथा च चलायमाना इति सप्तजिह्वा ॥ एताश्चोक्ताविशेषेण ज्ञातव्या ब्राह्मणेन तु । याभिर्हव्य समश्नाति हुतं सम्यक् द्विजोत्तमे ॥ आहूय चैव होतव्यो यो यत्र विहितो विधि । अविदित्वा तु यो ह्यग्निं होमयेदविचक्षणः ॥ न हुतं न च संस्कारो न तु यज्ञफलं भवेत् । अन्यत्र सप्तजिह्वैककरणमुक्तम्–जिह्वैककरणं प्रोक्तं सप्तानामेकया ऋचा । समुद्रादूर्मिरनया होतव्यं कर्मसिद्धये । जिह्वास्थानानि वसिष्ठकल्पे–कुण्डस्य पूर्वदिग्भागे काली जिह्वा प्रकीर्तिता । आग्नेये ॥ कराल्याख्या दक्षिणे तु मनोजवा ॥ सुलोहिता नैर्ऋते च धूम्रवर्णा तु वारुणे । स्फुलिङ्गिनी ॥ वायव्ये सौम्ये विश्वरुचिस्तथा ॥ काल्यां कराल्यां वा कुर्याच्छान्तिकं पौष्टिकं तथा । मनोजवायां जिह्वायामभिचारोऽभिधीयते ॥ सुलोहितायां जिह्वायां विदुरुच्चाटनं बुधा । सर्वार्थसिद्धिकां विश्वरुचिं मन्त्रविदो विदु ॥ अपरे वसुधारेति जिह्वां पूर्वादितां जगु । उपजिह्वेति सा प्रोक्ता लक्ष्मीस्तत्र प्रतिष्ठिता । कुण्डस्य मध्यमं पार्श्वमग्नेरास्यं प्रकीर्तितम् । तस्मिन्सर्वाणि कार्याणि साधनीयानि नित्यश ॥ सङ्ग्रहे विशेष–विवाहे वारुणी जिह्वा मध्यमा यज्ञकर्मसु । उत्तरा चोपनयने दक्षिणा पितृकर्मसु ॥

॥ अथ ऐशान्यां कृतरुद्रवेद्या दक्षिणभागे हस्तोन्मितो-च्छ्रायवप्रत्रययुक्तग्रहपीठोपरि ग्रहस्थापनार्थं ब्रह्मादिपञ्चपञ्चा-शत्सर्वतोभद्रमण्डलदेवतावाहनस्थापनप्रतिष्ठापूजनप्रयोगः ॥

यजमानः कृष्णाजिनकुशोत्तरे मृद्वासने ग्रहवेदीसमीपे पूर्वाभिमुख उपविश्य शिखां बद्ध्वा सव्यदक्षिणहस्तानामिकयोरेकैकं पवित्रं धृत्वा

---

प्राचीना सर्वकार्येषु ह्याग्नेयी सर्वकर्मसु । ऐशानी चोग्रकार्येषु बुद्ध्येत्तद्धोमलक्षणम् ॥ अन्यच्च—यत्र काष्ठस्तत्र कर्णौ धूमस्तत्र च नासिका । काष्ठमल्पं ज्वलं नेत्रं ज्वलनं मूर्ध्नि विन्यसेत् । प्रज्वाल्य वह्निं जिह्वायां होमं कुर्यादतन्द्रितः । अग्नौ कर्णाहुतिं कुर्याद् दुर्भिक्षव्याधिपीडनम् ॥ नासिकायां मनोदुःखं चक्षुषो ग्रामनाशनम् । मूर्ध्नि स्थानेऽशुभं कुर्याद्राजा राष्ट्रे विनश्यति ॥ तस्मात्सर्वप्रयत्नेन जिह्वायां होममाचरेत् । रुद्रमहे—शुभदा दक्षिणावर्ता अशुभा वाममागतः । घृतभारसहस्राणि काष्ठभारायुतानि च ॥ एवं च क्रियते होमे ध्यानहीने न सिद्ध्यति ।

१ सर्वत्र ग्रहवेदी ऐशान्यां कार्या रुद्रयागे तु रुद्रपीठाद्दक्षिणभागे एव कार्या । रुद्रपद्धतौ तत्रैशान्यां रुद्रवेद्युक्तत्वात् ॥ कुण्डरत्नावल्याम्—श्लोकाः ( १५२ तथा १५३, १५४ ) वर्जयित्वा रुद्रहोममीशान्यां ग्रहवेदिका ॥ करोऽर्धदोर्वोच्छ्रय एकहस्ता तता च तस्याधि२गुणा२गुलोच्चौ । वप्रो तृतीयो यदि चेद् द्वितीयतुल्यस्ततास्ते च यमाङ्गुलाभ्याम्॥ एवं वेद्यश्चापि तिस्रः प्रकुर्याच्छ्रोचिष्केशाक्रव्यभुग्वायुदिक्षु । स्थाप्यान्खेटान्मातृकाश्चापि वास्तून्क्षेत्रेशं च स्थापयेत्तासु यागे ॥ ग्रहपीठमालायाम्—वप्रत्रयान्वितां वेदीं वितस्त्युच्छ्रायव-न्मिताम् । द्व्यङ्गुलेनोच्छ्रितो वप्रः प्रथमः समुदाहृतः ॥ त्र्यङ्गुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि । द्व्यङ्गुलश्चैव विस्तारः सर्वेषां कथ्यते बुधैः ॥ रुद्रयागाद्भिन्नं सर्वत्र ग्रहवेदीकरणं मात्स्ये—मण्ड-पैशानभागे तु ग्रहवेदी करोन्मिता ॥ त्रिवप्रा चतुरस्रा च वितस्त्युच्छ्रायसम्मिता ॥ द्व्यङ्गुले-च्छ्रितो वप्रः प्रथमः समुदाहृतः । अङ्गुल्युच्छ्रायसंयुक्तं वप्रद्वयमथोपरि ॥ द्व्यङ्गुलस्तत्र विस्तारः सर्वेषां कथितो बुधैः ॥ २ सर्वतोभद्रमण्डलदेवतोपरि ग्रहस्थापने प्रमाणं लम्पदीक्षि-

आचम्य प्राणानायम्य हस्ते जलमादाय पूर्वोच्चरितशुभपुण्यतिथौ मारी-

तमहारुद्रप्रयोगे वसिष्ठसंहितायां च—अग्निप्रणयनं कृत्वा वेद्यामावाहयेत्सुरान् । ब्रह्मादीं-स्तत्र संस्थाप्य पूजयेद्रुद्रसंज्ञके ॥ यत्नेनाच्छाद्य तद्भद्रमुपर्यावाहयेद् ग्रहान् । आदित्या-भिमुखान्सर्वान्वेदाब्धिप्रमितान्सुरान् ॥ रुद्रकर्मणि ते सार्कं स्थापयेदधिकान्सुरान् । शेषादिकान्मनुष्यान्तान्वेदबाणमितांस्तथा ॥ सर्वतोभद्रमण्डलं व्रतराजे हेमाद्रौ स्कान्दे च—प्रागुदीच्यायता रेखाः कुर्यादेकोनविंशतिः । खण्डेन्दुस्त्रिपदः कोणे शृङ्खला पञ्चभिः पदैः ॥ एकादशपदा वल्ली भद्रं तु नवभिः पदैः । चतुर्विंशत्पदा वापी परिधिर्विंशतिपदैः॥ मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलं स्मृतम् । श्वेतेन्दुः शृङ्खला कृष्णा वल्लीर्नीलेन पूरयेत् ॥ भद्राऽरुणा सिता वापी परिधिः पीतवर्णिका । बाह्यान्तरदले श्वेता कर्णिका पीत वर्णिका ॥ परिध्यावेष्टित पद्म बाह्ये सत्त्व रजस्तमः । तन्मध्ये स्थापयेद्देवान्ब्रह्माद्यान्तुप-ञ्चकान् ॥ सर्वतोभद्रशब्दार्थः—स्थानतो नामतश्चापि संशयस्यापनुत्तये । कल्याण सर्वतः पुंसां चिन्तनाद्यस्य ब्रह्मणः ॥ तद्भद्रवाचकं मुख्यं मङ्गलानां च मङ्गलम् । यत्र तद्वेज्यते साक्षात्तद्धाम्ना तदुदीर्यते ॥ अधिदेवं तदध्यात्मं सर्वतोभद्रमिष्यते । विविच्य तत्रोभयं च प्रोच्यते यत्तुष्पकच्ये ॥ अण्डाद्यर्ब्रह्मलोकस्तु सर्वतोभद्रमुच्यते । तत्र स्वर्णमयं वेश्म निर्मितं प्रभुणा स्वयम् । तत्पद्ममिति विशेषं यत्र कार्यचितिः स्वयम् । तत्र यत्पु-ण्डरीकं तद्ब्रह्म स्थानमुच्यते ॥ वापीभद्रशब्दयोर्वाक्यार्थः—पीयूषवापनाद्वापी भद्रं भद्र-समीक्षणात् । साध्यशब्दप्रसिद्धा हि वर्तन्ते साधनेष्वपि ॥ सत्त्वरजस्तमोवर्णानां प्रयोजनम्-तस्मिन्नुक्तं रक्तनीलमित्यादिश्रुतिशासनात् । वर्णा अपि परस्मिंस्तूपासनार्थं भव-न्ति हि ॥ खण्डेन्दुशृङ्खलावल्लीशब्दानां वाक्यार्थं मनश्चन्द्रो महामोदः शृङ्खला स्नेहवल्लि-का । तैरिदं सर्वतस्तत्त्वं वेष्टितं घटव्योमवत् ॥ भद्रासनावश्यकता—हेमतन्तुमयं चैव रौप्य-तन्तुमयं तु वा । अथवा पट्टकूलस्य चैव कार्यं वरासनम् ॥ अथवा लेख्यमेतन्ते सर्वाभावे द्विजोत्तमैः । भूर्जपत्रे विलिखितं विशेषात्सिद्धिदं नृणाम् ॥ वा वस्त्रोपरि संलिख्य कर्तव्यं चित्रतन्तुभिः । विनाऽऽसनेन या पूजा सा पूजा निष्फला भवेत् ॥ स्वस्वभद्रासनं विना देवता-पूजने निष्फलत्वम्-स्वस्वभद्रासने पूजा कृता साऽतिफलप्रदा । भद्रासनैर्विहीनं यत्कर्म तथापि

प्सितद्धवनात्मकमहारुद्राख्ये कर्मणि ग्रहस्थापनाङ्गतया विहितं ब्रह्मादि-
पट्पञ्चाशत्सर्वतोभद्रमण्डलदेवतावाहनस्थापनप्रतिष्ठापूजनानि करिष्ये॥

---

निष्फलम् ॥ अतः स्वकीयमद्रे च द्वयं पूजनं कुरु । मद्रव्यत्ययदोषेण पूजनं निष्फलं भवेत् ॥ देवतापरत्वे मद्रव्यवस्था शान्तिसारे—गोभवं गौरितिलकं तिलकं लिङ्गमाल्यपि । लताविता निकास्पष्ट लिङ्गोद्भवमिमानि षट् ॥ मण्डलान्यागमोक्तानि भवन्ति भूतये भृशम् । कपालोदरवक्राख्यं शूलमाल्यामिधं तथा ॥ शैवं वैर्णयचक्रं चेत्युदितं मण्डलत्रयम् । हरेर्हरस्य च प्रीत्यै भवेदित्यागमोदितम् ॥ ग्रहादेर्मण्डलं भानोः सर्वतोभद्रमर्चने । लक्ष्म्याश्च सर्वतोभद्रं पूजने मण्डलं तथा ॥ सिंहोदरप्रकृतिकं पद्मोदरसमाह्वयम् । वाग्देव्याः सर्वतोभद्रं मण्डलं च पराह्वयम् ॥ भगवत्यादिकानां च शक्तीनां मण्डलं भवेत् । पूजने सर्वतोभद्रमेकलिङ्गोद्भवं तथा ॥ भैरवक्षेत्रपालादिपूजने मण्डलानि तु । सर्वतोभद्रमुख्यानि शैवोक्तान्यखिलान्यपि ॥ यतः स्यात्सर्वतोभद्रं सर्वदेवप्रियप्रदम् । सर्वेषां मण्डलानां च प्रकृतित्वेन वर्तते ॥ व्रतराजे—शैवमद्रं विना सर्वव्रतोद्यापनकर्मसु । कार्यं सुधास्त्वदृष्ट्या च सर्वतोभद्रमण्डलम् ॥ ग्रन्थान्तरे—गणपतिव्रते प्रोक्तं मद्रं वैनायकाभिधम् । देव्या व्रते गौरीभद्रं सूर्ये सूर्यस्य मण्डलम् ॥ शैवे च लिङ्गतोभद्रं सर्वतोभद्रकं हरेः॥स्वस्थभद्रालाभके तु कार्यं वै हरिमण्डलम्॥मण्डलकरणे विधिः स्थानलक्षणम्-निम्नतो-न्नुन्नताहीने सुश्लक्ष्णे वेदिकातले ॥ ईशानादिप्लवे नार्द्रे विलिप्ते गोमयेन च । घत्तूरपल्लवै-र्धूर्वैर्वाऽपामार्गपल्लवैः ॥ देवाराधनमन्त्रेण मन्त्रितात्पञ्चगव्यतः। अभ्युक्षितेऽस्त्रमन्त्रेण कृत्वा दिक्साधनं ततः ॥ खटिकामानसूत्रं च गन्धाद्यैरभिपूजयेत् । उत्तमाख्यं चतुर्भिः स्यान्मण्डलं चतुरस्रकम् ॥ व्रतराजे—बाहुमात्रां सदा वेदिं कुर्याच्छुद्धमृदा बुधः । तद्वेद्यां सर्वतोभद्रमण्डलं विलिखेत्ततः ॥ मण्डलकरणे विस्तारप्रमाणम्—चतुर्हस्त-( ४८ अङ्गुलानि ) प्रमाणन्तु पताकातोरणान्वितम् । उत्तमाख्यं चतुर्भिः स्यान्मण्डलं चतुरस्रकम् · हस्तैर्हस्तद्वयं च स्यान्मध्यमं हस्तमात्रकम् ।। कनिष्ठं हस्तमानं तु पूर्त्तयोगे प्रशस्यते ॥ मद्रार्थे वर्णनिर्णयः पञ्चरात्रे—रजांसि पंचवर्णानि मण्डलार्थं हि कारयेत् । शालितण्डुलचूर्णेन शुक्लं वा यवसम्भवम् ॥ रक्तं कुसुम्भसिन्दूरगै-

१ ब्रह्मजज्ञानमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः आदित्यो देवता ब्रह्मावाहने विनियोगः ॥ ॐब्रह्म जज्ञानम्प्रथमम्पुरस्ताद्विसीमत?

---

रक्तादिसमुद्भवम् । हरितालोद्भवं पीतं रजनीसम्भवं क्वचित् ॥ कृष्णं दग्धयवैः कार्यं हरितं पीतकृष्णजम् । शमीपत्रादिना नीलं श्यामं वा कारयेद्बुधः ॥ तन्त्रान्तरे-फलविशेषकामो मुक्ताविद्रुमपुष्परागनीलादिभिरेव रजः कुर्यात् ॥ वर्णपरत्वे धान्यानि-श्वेतत्वे तण्डुलाः प्रोक्ताश्चणकाश्च तु पीतके । रक्तवर्णे मसूराश्च गोधूमा वा स्मृता बुधैः ॥ अथवा रक्तवर्णे तु कुङ्कुमाक्ताक्षताः स्मृताः । हरिद्वर्णे च मुद्गाद्यं माषाद्यं कृष्णवर्णके ॥ वर्णत्रयेण परिधिः कार्यो न्यूनाधिको न हि । शुक्लं वा यदि वा कृष्णं पद्मं कार्यं सुशोभनम् । खण्डेन्दुः शृङ्खला षष्ठी वापी भद्रं तु पञ्चमम् ॥ परिध्यावेष्टितं पद्मं बाह्ये सत्त्वादिभिर्गुणैः । सप्तधान्येन ये मूढाः प्राकारान्कल्पयन्ति च ॥ स देशाचार एवास्ति न तु शास्त्रप्रमाणकम् । भुजपादादिकरणं मूढेन परिकल्पितम् ॥ तथवायुधचिह्नाना निषेधो नास्ति कुत्रचित् ॥ बृहन्मण्डले हस्तादिना विस्तारप्रमाणं नास्ति—शतमुद्रात्मकं रामभद्रमारभ्य तत्परम् । अष्टोत्तरसहस्राख्यलिङ्गतोभद्रकावधि ॥ यथावकाशं कर्तव्यं नात्र हस्तविचारणा ॥

१ नाममन्त्रैः ग्रहपीठोपरि ग्रहमण्डलदेवतास्थापनार्थं ब्रह्मादिपद्पञ्चाशत्सर्वतोभद्रमण्डलदेवतावाहनस्थापनप्रतिष्ठापूजनप्रयोगः ॥

१ मध्येकर्णिकायाम्ॐभूर्भुवःस्वः ब्रह्मणेनमः ब्रह्माणमा० स्था० भोब्रह्मन्इ० इ० ॥
२ उत्तरेपरिध्यन्तिके वाप्याम्-ॐभू० सोमायनमः सोममा० स्था० भोसोमइ०इ०॥
३ ऐशान्यांखण्डेन्दौ-ॐभू० ईशानायनम ईशानमा० स्था० भोईशानइ० इ०
४ पूर्वेवाप्याम्-ॐभूर्भुवः स्वः इन्द्रायनम इन्द्रमावाहयामिस्थाप० भोइन्द्रइ० इ०
५ आग्नेय्यांखण्डेन्दौ-ॐभूर्भुवः स्व- अग्नयेनमः अग्निमा० स्था० भोअग्नेइ० इ० ॥
६ दक्षिणेवाप्याम्-ॐभूर्भुव स्वः यमायनमः यममा० स्था० भोयमइहागच्छइहतिष्ठ ॥
७ नैर्ऋत्यांखण्डेन्दौॐभू० स्वः निर्ऋतयेनमः निर्ऋतिमा० स्था० भोनिर्ऋतेइ०इ० ॥
८ पश्चिमेवाप्याम्-ॐभूर्भुवः स्वः वरुणायनमः वरुणमा० स्था० भोवरुणइ० इ० ॥

सुरुचौं वेनऽ आवः ॥ स बुध्न्याऽ उपमाऽ अस्य विष्ठाः सतश्च

९ वायव्यां खण्डेन्दौ–ॐभू०वायवे नमः वायुमा०स्थापयामिभोवायोइहागच्छइ० ॥
१० वायुसोममध्ये मद्रे–ॐभू०अष्टवसुभ्यो नमः अष्टवसूना० स्था० भोअष्ट० इ० इ० ॥
११ सोमेशानमध्ये मद्रे–ॐभूर्भुवः स्वः एकादशरुद्रेभ्यो नमः एकादशरुद्रानावाहयामि स्थापयामि भो एकादशरुद्राः इहागच्छत इह तिष्ठत ॥
१२ ईशानपूर्वयोर्मध्ये मद्रे–ॐभूर्भुवः स्वः द्वादशादित्येभ्यो नमः द्वादशादित्यानावाहयामि स्थापयामि भो द्वादशादित्याः इहागच्छत इह तिष्ठत ॥
१३ इन्द्राग्निमध्ये मद्रे–ॐभू० अश्विभ्यां अश्विनौ० आ० स्थाप० भोअश्विनौइ० इ० ॥
१४ अग्नियममध्ये मद्रे–ॐभू० विश्वेभ्योदेवेभ्यो० विश्वा०आ०स्था०भोविश्वेदे०इ०इ०॥
१५ यमनिर्ऋतिमध्ये मद्रे–ॐभू० सप्तयक्षेभ्यो० स० आ० स्थाप० भोसप्तयक्षाः इ०इ०॥
१६ निर्ऋतिवरुणमध्ये मद्रे–ॐभू० भूतनागेभ्यो० भूतनागा०आ०स्था० भोभू०इ०इ०॥
१७ वरुणवायुमध्ये मद्रे–ॐभू० गन्धर्वाप्सरोभ्यो नमः गं० आ० स्था० भोगन्ध०इ०इ०
१८ ब्रह्मसोममध्येवाप्याम्–ॐभू० स्कन्दाय नमः स्कन्दमा० स्था० भोस्कन्दइ० इ० ॥
१९ स्कन्दादुत्तरे–ॐभू० नन्दिने नमः नन्दिनमावाहयामि स्था० भोनन्दिन् इ० इ० ॥
२० नन्दिकेश्वरादुत्तरतःॐभू० शूलमहाकालाभ्यां०शूलम०आ०स्था० भोशूलम०इ०इ०॥
२१ ब्रह्मेशानमध्ये वल्ल्याम्–ॐभू० दक्षादिसप्तगणे० दक्षा० आ० स्था० भोद०इ०इ० ॥
२२ ब्रह्मेन्द्रमध्ये वाप्याम्–ॐभू० दुर्गायै नमः दुर्गामावाहयामि स्था० भोदुर्गे इहा०इ०॥
२३ दुर्गापूर्वे–ॐभूर्भुवः स्वः विष्णवे नमः विष्णुमावाहयामिस्थापयामिभोविष्णो इ०इ०॥
२४ ब्रह्माग्निमध्ये वल्ल्याम्–ॐभू० स्वधायै नमः स्वधामा० स्थापयामि भोस्वधे इ०इ० ॥
२५ ब्रह्मयमयोर्मध्ये वाप्याम्–ॐभूर्भुवः स्वः मृत्युरोगाभ्यां नमः मृत्युरोगौ आवाहयामि स्थापयामि भो मृत्युरोगौ इहागच्छतम् इह तिष्ठतम् ॥

२६ ब्रह्मनिर्ऋतिमध्ये वल्ल्याम्–ॐभू० गणपतये० गणपतिं० स्था० भोगणपते०इ०इ०
२७ ब्रह्मवरुणमध्ये वाप्याम्–ॐभू० अद्भ्यो० अपआ० स्था० भोआप इहा० इह तिष्ठत ॥
२८ ब्रह्मवायुमध्ये वल्ल्याम्–ॐभू०मरुद्भ्यो० मरुतः आ० स्था० भोमरुतः इ० इ० ॥
२९ ब्रह्मणःपादमूलेकर्णिकाधःॐभू० पृथिव्यै० पृथिवीमा० स्था० भोपृथिवि इ० इ० ॥

योनिमसतश्च विवः ॥ ३/१३ ॥ मध्ये कर्णिकायाम्–ॐभूर्भुवः स्वः ब्रह्मणे

३० ब्रह्मणःपादमूले॰कर्णिकायाः पृथिव्युत्तरे–ॐभूर्भुवः स्व. गङ्गादिनदीभ्यो नमः गङ्गादिनदीः आवाहयामि स्थापयामि भो गङ्गादिनद्यः इहागच्छत इह तिष्ठत ॥
३१ ब्रह्मण.पाद॰ गङ्गाद्युत्तरे ॐभू॰ सप्तसागरेभ्यो॰ स॰ आ॰ स्था॰ भोसप्त॰ इ॰ इ॰
३२ कर्णिकोपरि–ॐभूर्भुवःस्व. मेरवे नम मेरुमा॰ स्थापयामि॰ भोमेरो इहा॰ इह॰ ॥

॥ मण्डलयाह्येश्वेतपरिधौउत्तरादिक्रमेणगदाद्यष्टायुधदेवतावाहनम् ॥

३३ उत्तरेसोमसमीपे–ॐभू॰ गदायै नमः गदामा॰ स्था॰ भोगदे इहागच्छ इह तिष्ठ॥
३४ ऐशान्यामीशानसमीपे–ॐभू॰ त्रिशूलाय नम. त्रिशूलमा॰ स्था॰ भोत्रिशूल इ॰इ॰॥
३५ पूर्वे इन्द्रसमीपे–ॐभूर्भुवःस्वःवज्राय नमः वज्रमा॰ स्था॰ भोवज्र इहा॰ इह तिष्ठ ॥
३६ आग्नेय्याम् अग्निसमीपे–ॐभूर्भुव ॰ शक्त्यै॰ शक्तिमा॰ स्था॰ भोशक्ते इ॰ इ॰॥
३७ दक्षिणे यमसमीपे–ॐभूर्भुवः स्वः दण्डाय नमः दण्डमा स्था॰ भोदण्ड इ॰ इ॰ ॥
३८ नैर्ऋत्यां निर्ऋतिसमीपे–ॐभू॰ खड्गाय नमः खड्गमा॰ स्था॰ भोखड्ग इ॰ इ॰ ॥
३९ पश्चिमे वरुणसमीपे–ॐभू॰ पाशाय नमः पाशमा॰ स्था॰ भोपाश इ॰ इह तिष्ठ॥
४० वायव्यां वायुसमीपे–ॐभू॰ अङ्कुशाय नमः अङ्कुशमावा॰ स्था॰ भोअङ्कुश इ॰ इ॰॥

॥ मण्डलयाह्येरक्तपरिधौउत्तरादिक्रमेणगौतमाद्यष्टदेवतावाहनम् ॥

४१ उत्तरे–ॐभू॰ गौतमाय नम. गौतममा॰ स्थापयामि भोगौतम इहागच्छ इह तिष्ठ॥
४२ ऐशान्याम्–ॐभू॰ भरद्वाजाय नम. भरद्वाजमा॰ स्था॰ भोभरद्वाज इहागच्छ इह॰॥
४३ पूर्वे ॐभू॰ विश्वामित्राय नम विश्वामित्रमा॰ स्थापयामि भोविश्वामित्र इ॰ इ॰॥
४४ आग्नेय्याम्–ॐभू॰ कश्यपाय नमः कश्यपमा॰ स्था॰ भोकश्यप इ॰ इह तिष्ठ ॥
४५ दक्षिणे–ॐभू॰ जमदग्नये नम जमदग्निमा॰ स्थापयामि भोजमदग्ने इ॰ इह॰ ॥
४६ नैर्ऋत्याम्–ॐभू॰ वसिष्ठाय नमः वसिष्ठमावाहयामि स्थापयामि भोवसिष्ठ इ॰ इ॰ ॥
४७ पश्चिमे–ॐभू॰ अत्रये नमः अत्रिमावाहयामि स्थापयामि भोअत्रे इहागच्छ इह॰ ॥
४८ वायव्याम्–ॐभू॰ अरुन्धत्यै नमः अरुन्धतीमा॰ स्थापयामि भोअरुन्धते इ॰ इ॰ ॥

नमः ब्रह्माणमावाहयामि स्थापयामि । भो ब्रह्मन् इहागच्छ इह तिष्ठ ॥

२ वयꣳसोमेत्यस्य बन्धुर्ऋषिः गायत्री छन्दः सोमो देवता सोमावाहने विनियोगः—ॐवुयꣳसोम व्व्रते तव मनस्तुनूषु बिभ्र्रतः ॥ प्रजावन्तꣳसचेमहि ॥ ५६/३ ॥ उत्तरे परिध्यन्तिके वाप्याम्—ॐभूर्भुवः स्वः सोमाय नमः सोममावाहयामि स्थापयामि । भो सोम इहागच्छ इह तिष्ठ ॥

३ तमीशानमिति गौतमऋषिः जगती छन्दः विश्वेदेवा देवताः ईशानावाहने विनियोगः—ॐतमीशानुञ्जगतस्तस्थुषुस्पतिंन्धियञ्जिन्वमवसे हूमहे वयम् ॥ पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वुस्तये ॥ १८/२५ ॥ ऐशान्याम्—परिध्यन्ते खण्डेन्दौ—ॐभूर्भुवः स्वः ईशानाय नमः ईशानमावाहयामि स्थापयामि । भो ईशान इहागच्छ इह तिष्ठ ॥

---

॥ मण्डलबाह्ये कृष्णपरिधौ पूर्वादिक्रमेण ऐन्द्र्याद्यष्टदेवतावाहनम् ॥

४९ पूर्वे-ॐभूर्भुव स्व ऐन्द्र्यै नम ऐन्द्रीमावाहयामि स्थापयामि भोऐन्द्रि इहागच्छ इ०॥

५० आग्नेय्याम्-ॐभूर्भुव स्व कौमार्यै नम कौमारीमा० स्था० भोकौमारि इ० इ० ॥

५१ दक्षिणे-ॐभूर्भुव स्व ब्राह्म्यै नम ब्राह्मीमा० स्थापयामि भोब्राह्मि इहा० इह० ॥

५२ नैर्ऋत्याम्-ॐभू० वाराह्यै नम वाराहीमावाहयामि स्थापयामि भोवाराहि इ० इ०॥

५३ पश्चिमे-ॐभूर्भुव स्व चामुण्डायै नम चामुण्डामावाहयामि स्थापयामि भो चामुण्डे इहागच्छ इह तिष्ठ ॥

५४ वायव्याम्-ॐभूर्भुव स्व वैष्णव्यै नम वैष्णवीमावाहयामि स्थापयामि भो वैष्णवि इहागच्छ इह तिष्ठ ॥

५५ उत्तरे—ॐभूर्भुव स्व० माहेश्वर्यै नम माहेश्वरीमावाहयामि स्थापयामि भो माहेश्वरि इहागच्छ इह तिष्ठ ॥

५६ ऐशान्याम्—ॐभूर्भुव स्व वैनायक्यै नम वैनायकीमावाहयामि स्थापयामि भो वैनायकि इहागच्छ इह तिष्ठ ॥

४ त्रातारमितिगर्गऋषिःत्रिष्टुप्छन्दःइन्द्रोदेवताइन्द्रावाहनेविनियोगः—ॐत्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ ¹/₂₀ ॥ पूर्वेपरिध्यन्तेवाप्याम्—ॐभूर्भुवःस्वःइन्द्रायनमःइन्द्रमावाहयामिस्थापयामिभोइन्द्रइहा० इ०।

५ त्वन्नोअग्नेइत्यस्यहिरण्यस्तूपऋषिःजगतीछन्दः अग्निर्देवता अग्न्यावाहने विनियोगः—ॐत्वन्नोऽ अग्ने तव देव पायुभिर्म्मघोनोरक्षतन्वश्च वन्द्य॥त्राताताेकस्यतनयेगवामस्यनिमेषꣳरक्षमाणस्तवव्व्रते ॥¹³/₃₄॥आग्नेय्यांखण्डेन्दौॐभूर्भुवःस्वः अग्नयेनमः अग्निमा०स्था०भो अग्नेइ०इहतिष्ठ॥

६ यमायत्वेति दध्यङ्ङाथर्वणऋषिः यजुश्छन्दः वातो देवता यमावाहने विनियोगः—ॐयमाय त्वाङ्गिरस्वते पितृमते स्वाहा ॥ स्वाहा घर्म्माय स्वाहा घर्म्मः पित्रे ॥ ¹/₁₀ ॥ दक्षिणे वाप्याम्—ॐभूर्भुवः स्वः यमाय नमः यममावाहयामि स्थापयामि । भो यम इहागच्छ इह तिष्ठ ॥

७ असुन्वन्तमित्यस्य मधुच्छन्दाऋषिः त्रिष्टुप्छन्दः निर्ऋतिर्देवता निर्ऋत्यावाहने विनियोगः—ॐअसुन्वन्तमयजमानमिच्छस्तेनस्ये

१ कात्यायनपरिशिष्टप्रतिज्ञासूत्रे तृतीयकण्डिकाया सूत्रे—१—२ अथानुस्वारस्य ꣳइत्यादेशः शषसहरेफेषु ॥ १ ॥ तस्य त्रैविद्ध्यमाख्यातं ह्रस्वदीर्घगुरुभेदैर्दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरुः ॥ २ ॥ भाष्यम्—अनुस्वारस्य ꣳकार आदेशः स्याद्रोष्मसु परेषु इतिसूत्रात् ꣳइत्युपदेशः सनिमित्तमादेशं विभजते ॥ १ ॥ तस्यꣳकारस्य ह्रस्वदीर्घगुरुभेदैस्त्रैविद्ध्य त्रिःप्रकारत्वमुक्तम् । ह्रस्वादीनां लक्षणान्युक्तानि "एकमात्रो ह्रस्व" इत्यादिना । वस्तुतस्तु गुरुदीर्घयोर्भेदो नास्ति तथाप्युपाधिभेदाद्भेदो मन्तव्यः अस्ति चात्रोपाधिः । संज्ञाभेदो निमित्तभेदो लिपिभेदश्च तृतीयस्तु इदानीं प्रायशः परिभ्रष्टस्तथापि प्राचीनसम्प्रदायानुरोधाद्विज्ञायते । तत्र दीर्घादक्षरात्परो दीर्घो भवति गुरौ संयुक्ताक्षरे परे गुरुर्भवति न तु दीर्घे परे असम्भवात् । अतएव दीर्घादक्षरादित्यत्र गुरोरक्षरादिति न भवति ॥

स्यामर्विहि तस्करस्य ॥ अन्यमस्मदिच्छ सा तऽ इत्या नमों दें । निर्ऋते तुब्भ्यमस्तु ॥ ६२/१२ ॥ नैर्ऋत्यां खण्डेन्दौ—ॐभूर्भुवः स्वः निर्ऋतये नमः निर्ऋतिमावाहयामि स्थापयामि। भो निर्ऋते इहागच्छ इह तिष्ठ ॥

८ तत्त्वायामीत्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणो देवता वरुणावाहने विनियोगः—ॐतत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोद्ध्युरुशंसु मा नुऽ आयुः प्रमोषीः ॥ २१/१८ ॥ पश्चिमे वाप्याम्—ॐभूर्भुवः स्वः वरुणाय नमः वरुणमावाहयामि स्थापयामि। भो वरुण इहागच्छ इह तिष्ठ ॥

९ आनोनियुद्भिरित्यस्य वसिष्ठऋषिः त्रिष्टुप्छन्दः वायुर्देवता वाय्वावाहने विनियोगः—ॐआ नो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् ॥ वायोऽ अस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः सदा नः ॥ २७/२८ ॥ वायव्यां खण्डेन्दौ—ॐभूर्भुवः स्वः वायवे नमः वायुमावाहयामि स्थापयामि। भो वायो इहागच्छ इह तिष्ठ ॥

१० सुगावो इत्यस्यात्रिऋषिः त्रिष्टुप्छन्दः देवा देवताः अष्टवस्वावाहने विनियोगः—ॐसुगावो देवाः सदनाऽ अकर्म्म यऽ आजग्मेदꣳ सवनञ्जुषाणाः ॥ भरमाणा वहमाना हवीꣳष्यस्मे धत्त वसवो वसूनि स्वाहा ॥ ८/१८ ॥ वायुसोममध्ये भद्रे—ॐभूर्भुवः स्वः अष्टवसुभ्यो नमः अष्टवसूनावाहयामि स्थापयामि। भो अष्टवसवः इहागच्छत इह तिष्ठत ॥

११ रुद्राः सꣳसृज्येत्यस्य सिन्धुद्वीपऋषिः अनुष्टुप्छन्दः रुद्रो

१ अत्र मकारस्य द्वित्वविषये—प्रातिशाख्यस्य चतुर्थाध्याये सूत्रम् १०२ ऊष्मान्तस्थान्यदच स्पर्श ॥ ऊष्माण शषसहा अन्त सा यरलवाः एतेभ्य. पर स्पर्शो द्विरुच्यते ॥

देवता रुद्रावाहने विनियोगः—ॐ रुद्राः? सुसृज्ज्य पृथिवीम्बृहज्ज्योतिः समीधिरे ॥ तेषाम्भानुरजस्र इच्छुक्रो देवेषु रोचते ॥ ॥ सोमेशानयोर्मध्ये भद्रे—ॐ भूर्भुवः स्वःएकादशरुद्रेभ्यो नमःएकादशरुद्रानावाहयामि स्थापयामि। भो एकादशरुद्राः इहागच्छत इह तिष्ठत ॥

१२ यज्ञोदेवानामित्यस्य कुत्सऋषिः यजुरन्तं त्रिष्टुप्छन्दः आदित्यो देवता द्वादशादित्यावाहने विनियोगः—ॐ यज्ञो देवानाम्प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः ॥ आ वोर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवोवित्तरासदादित्येभ्यस्त्वा ॥ ॥ ईशानपूर्वयोर्मध्ये भद्रे—ॐ भूर्भुवः स्वः द्वादशादित्येभ्यो नमः द्वादशादित्यानावाहयामि स्थापयामि। भो द्वादशादित्याः इहागच्छत इह तिष्ठत ॥

१३ यावाङ्कशेत्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः अश्विनौ देवते अश्विनोरावाहने विनियोगः-ॐ या वाङ्कशा मधुमत्यश्विना सूनृतावती॥ तया यज्ञम्मिमिक्षतम् ॥ उपयामगृहीतोस्यश्विभ्यान्त्वैष ते योनिर्माध्वीभ्यान्त्वा॥ ॥इन्द्राग्निमध्ये भद्रे—ॐ भूर्भुवःस्वःअश्विभ्यां नमःअश्विनौ आवाहयामि स्थापयामि। भो अश्विनौ इहागच्छतम् इह तिष्ठतम् ॥

१४ ओमासश्चर्षणीत्यस्य मधुच्छन्दाऋषिः गायत्रीछन्दः विश्वेदेवादेवताः विश्वेदेवावाहने विनियोगः—ॐ ओमासश्चर्षणीधृतो विश्वेदेवासऽआगत ॥ दाश्वांसो दाशुषः सुतम् ॥ उपयामगृहीतोसि विश्वेभ्यस्त्वा देवेभ्यऽएष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ३३/७ ॥ अग्नियममध्ये भद्रे—ॐ भूर्भुवः स्वः विश्वेभ्यो देवेभ्यो नमः विश्वान्देवानावाहयामि स्थापयामि। भो विश्वेदेवाः इहागच्छत इह तिष्ठत॥

१५अभित्यमित्यस्य वत्सऋषिःअग्निच्छन्दःसविता देवता सप्तयक्षावाहने विनियोगः—ॐ अभित्यन्देवꣳ सवितारमोण्योः कविक्रतुमर्चामि

सुत्त्यसंवꣲ रत्ननुधामभि प्प्रियम्मुतिङ्कुविम् ॥ ऊर्द्ध्वा सस्याप्मतिर्भाऽ अदिद्द्युतत्तसवींमनि हिरण्यपाणिरमिमीत सुक्रतुं॑ कृपास्स्वं॑ ॥ प्रजाब्भ्यस्त्वा प्प्रजास्त्वानुप्प्राणन्तु प्प्रजास्त्वमनुप्प्राणिहि ॥ २५/४ ॥ यमनिर्ऋतिमध्ये भद्रे—ॐभूर्भुवः स्वः सप्तयक्षेभ्यो नमः सप्तयक्षानावाहयामि स्थापयामि । भो सप्तयक्षाः इहागच्छत इह तिष्ठत ॥

१६ भूतायत्वेत्यस्य प्रजापतिर्ऋषिः गायत्रीछन्दः हविर्देवता भूतनागावाहने विनियोगः ॥ ॐभूताय त्वा नारातये स्वरभिविख्यै-षन्दृंहन्तान्दुर्य्याꣳ पृथिव्यामुर्व्वन्तरिक्षमन्वेमि पृथिव्यास्त्वा नाभौ सादयाम्म्यदित्याऽ उपस्थेऽग्ने हव्यꣳ रक्ष ॥ १/११ ॥ निर्ऋतिवरुण-मध्ये भद्रे—ॐभूर्भुवः स्वः भूतनागेभ्यो नमः भूतनागानावाहयामि स्थापयामि । भो भूतनागाः इहागच्छत इह तिष्ठत ॥

१७ ऋताषाडित्यस्य लुशोधानाऋषिः विराडुष्णिक्छन्दः गन्धर्वा-प्सरसो देवताः गन्धर्वाप्सरसावाहने विनियोगः—ॐऋताषाडृत-धामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसो मुदो नाम ॥ स नऽ इदम्ब्रह्म क्षत्रम्पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ ३८/१८ ॥ वरुणवायुमध्ये भद्रे—ॐभूर्भुवः स्वः गन्धर्वाप्सरोभ्यो नमः गन्धर्वाप्सरसः आवाहयामि स्थापयापि । भो गन्धर्वाप्सरसः इहागच्छत इह तिष्ठत ॥

१८ यदक्रन्द इत्यस्य जमदग्निर्दीर्घतमसावृषी त्रिष्टुप्छन्दः अश्वो देवता स्कन्दावाहने विनियोगः ॥ ॐयदक्रन्दꣳ प्प्रथमञ्जायमानऽ उद्यन्त्समुद्रादुत वा पुरीषात् ॥ श्येनस्य पक्षा हरिणस्य बाहूऽ उप-स्तुत्यम्महि जातन्तेऽ अर्वन् ।१२/२९॥ ब्रह्मसोममध्ये वाप्याम्—ॐभूर्भुवः स्वः स्कन्दाय नमःस्कन्दमावाहयामि स्थापयामि।भो स्कन्दइहागच्छ इह तिष्ठ॥

१९ आशुः शिशान इत्यस्याप्रतिरथऋषिः त्रिष्टुप्छन्दः इन्द्रो देवता नन्द्यावाहने विनियोगः ॥ ॐ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्॥ सङ्क्रन्दनोऽनिमिष एकवीरः शतꣳसेनाऽअजयत्साकमिन्द्रः ॥ $\frac{33}{17}$ ॥ स्कन्दादुत्तरे—ॐ भूर्भुवः स्वः नन्दिने नमः नन्दिनमावाहयामि स्थापयामि भो नन्दिन् इहागच्छ इह तिष्ठ ॥

२० उग्रँल्लोहितेनेत्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः लिङ्गोक्ता देवता शूलमहाकालावाहने विनियोगः ॥ ॐ उग्रँल्लोहितेन मित्रꣳ सौव्रत्येन रुद्रन्दौर्व्रत्येनेन्द्रम्प्रक्रीडेन मरुतो बलेन साद्ध्यान्प्रमुदा ॥ भवस्य कण्ठ्यꣳ रुद्रस्यान्तःपार्श्व्यम्महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत् ॥ $\frac{3}{9}$ ॥ नन्द्युत्तरे—ॐ भूर्भुवः स्वः शूलमहाकालाभ्यां नमः शूलमहाकालौ आवाहयामि स्थापयामि भो शूलमहाकालौ इहागच्छतम् इह तिष्ठतम् ॥

२१ अदितिर्द्यौरित्यस्य गौतमऋषिः त्रिष्टुप्छन्दः विश्वेदेवा देवताः दक्षादिसप्तगणावाहने विनियोगः॥ ॐ अदितिर्द्यौरदितिरन्तरिक्षमदि-

---

१० ध्रुवोऽध्वरश्च सोमश्च आपश्चैव निलोऽनलः । प्रत्यूषश्च प्रभाषश्च वसवोऽष्टौ प्रकीर्तिताः ॥ ११ वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः । अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः । भुवनाधीश्वरश्चैव कपाली च दिशांपतिः । स्थाणुर्भगश्च भगवान्रुद्रा एकादश स्मृताः॥ १२ आदित्यं भास्करं चैव प्रभाकरदिवाकरौ॥ सूर्यं ग्रहपतिं ब्रध्नं तेजोरूपं हरिद्वरम्॥ सप्ताश्वं वेदमूर्तिं च त्रिदेवत्यं क्रमेण च॥ इत्यादि द्वादशादित्यान्मण्डले स्थापयाम्यहम्॥ १५ सोमपाहग्निष्वात्ताश्च बर्हिषदः सुकालकः एकश्चैव ध्रुवश्चैव सप्तमो द्वितीयसोमपाः। एते तु सप्तपक्षाश्च स्थाप्या एवं मण्डले शुभे ॥ १६ अनन्तो वासुकिश्चैव कालीयो मणिभद्रकः। शङ्खश्च शङ्खपालश्च कर्कोटकधनञ्जयौ। धृतराष्ट्रश्च नागेशो भूतनागाः प्रकीर्तिताः॥

तिर्म्माता स पिता स पुत्रः॥ विश्वेदेवाऽ अदितिः पञ्चजनाऽ अदितिर्ज्जातमदितिर्ज्जनित्त्वम् ॥ २१/२३ ॥ ब्रह्मेशानमध्ये वह्व्याम्—ॐ भूर्भुवः स्वः दक्षादिसप्तगणेभ्यो नमः दक्षादिसप्तगणानावाहयामि स्थापयामि भो दक्षादिसप्तगणाः इहागच्छत इह तिष्ठत ॥

२२ अम्बेऽ अम्बिक इत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः अम्बा देवता दुर्गावाहने विनियोगः॥ ॐ अम्बेऽ अम्बिकेम्बालिके न मा नयति कश्चन ॥ ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥२३/१८॥ ब्रह्मेन्द्रयोर्मध्ये वाप्याम्—ॐ भूर्भुवः स्वः दुर्गायै नमः दुर्गाम् आवाहयामि स्थापयामि भो दुर्गे इहागच्छ इह तिष्ठ ॥

२३ इदंविष्णुरित्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः विष्णुर्देवता विष्णवावाहने विनियोगः ॥ ॐइदंविष्णुर्विचक्रमे त्रेधा निदधेपदम् ॥ समूढमस्य पाᳬसुरे स्वाहा ॥ ५/१५ ॥ दुर्गापूर्वे ॐ भूर्भुवः स्वः विष्णवे नमः विष्णुमावाहयामि स्थापयामि भो विष्णो इहागच्छ इह तिष्ठ ॥

२४ पितृभ्य इत्यस्य प्रजापत्यश्विसरस्वत्यऋषयः सर्वाणि यजूंषि छन्दांसि पितरो देवताः स्वधावाहने विनियोगः ॥ ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः ॥ अक्षन्पितरोमीमदन्त पितरोतीतृपन्तपितरः पितरः शुन्धध्वम्॥१९/३६॥ब्रह्माग्निमध्ये वह्व्याम्—ॐ भूर्भुवः स्वः स्वधायै नमः स्वधामावाहयामि स्थापयामि भो स्वधे इहागच्छ इह तिष्ठ ॥

२५ परम्मृत्यो इत्यस्य सङ्कुसुकऋषिः त्रिष्टुप्छन्दः मृत्युर्देवता मृत्युरोगयोरावाहने विनियोगः ॥ ॐ परम्मृत्योऽ अनुपरेहि पन्थां

व्यस्तेऽ अन्यऽ इतरो देवुयानात् ॥ चक्षुष्मते शृण्वते ते ब्रवीमि मा नै– प्रुजाᳬं रीरिषो मोत वीरान् ॥ ॥ ब्रह्मयमयोर्मध्ये वाप्याम्–ॐ भूर्भुवः स्वः मृत्युरोगाभ्यां नमः मृत्युरोगावावाहयामि स्थापयामि भो मृत्युरोगौ इहागच्छतम् इह तिष्ठतम् ॥

२६ गणानान्त्वेत्यस्य प्रजापतिर्ऋषिः चत्वारि यजूंषि च्छन्दांसि अश्वो देवता गणपत्यावाहने विनियोगः ॥ ॐ गुणानान्त्वा गुणपतिᳬं हवामहे प्रियाणान्त्वा प्रियपतिᳬं हवामहे निधीनान्त्वा निधिपतिᳬं हवामहे वसो मम ॥ आहमजानि गर्भधमा त्वमजासि गर्भधम्॥ ॥ ब्रह्मनिर्ऋतिमध्ये वल्ल्याम्–ॐभूर्भुवः स्वः गणपतये नमः गणपतिमावाहयामि स्थापयामि भो गणपते इहागच्छ इह तिष्ठ ॥

२७ शन्नोदेवीरित्यस्य दध्यङ्ङाथर्वणऋषिः गायत्रीछन्दः आपो देवताः अपावाहने विनियोगः ॥ ॐशन्नोदेवीरुभिष्टयऽआपो भवन्तु पीतये ॥ शंय्योरुभिस्रवन्तु नः ॥ ॥ ब्रह्मवरुणमध्ये वाप्याम्–ॐभूर्भुवः स्वः अद्भ्यो नमः अप आवाहयामि स्थापयामि भोआप इहागच्छत इहतिष्ठत॥

२८ मरुतो यस्येत्यस्य गौतमऋषिः गायत्रीछन्दः मरुतो देवताः मरुतावाहने विनियोगः॥ॐ मरुतो यस्य हि क्षये पुथा दिवो विमहसः॥ सं सुगोपातमो जनः ॥ ॥ब्रह्मवायुमध्ये वल्ल्याम्–ॐभूर्भुवःस्वः मरुद्भ्यो नमः मरुतः आवाहयामि स्थापयामि॥भो मरुतः इहागच्छत इह तिष्ठत॥

२९ स्योना पृथिवीत्यस्य मेधातिथिर्ऋषिः गायत्री छन्दः पृथिवी देवता पृथिव्यावाहने विनियोगः ॥ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नुः शर्म्म सुप्रथाः ॥ ॥ ॐभूर्भुवःस्वः पृथिव्यै नमः पृथिवीमावाहयामि स्थापयामि ॥ भो पृथिवि इहागच्छ इह तिष्ठ ॥

३० पञ्चनद्य इत्यस्य गृत्समदऋषिः अनुष्टुप्छन्दः सरस्वतीनदी देवता गङ्गादिनद्यावाहने विनियोगः ॥ ॐ पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः । सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ॥११॥ तत्रैव ब्रह्मणः पादमूले कर्णिकाधः–ॐ भूर्भुवः स्वः गङ्गादिनदीभ्यो नमः गङ्गादिनदीः आवाहयामि स्थापयामि भो गङ्गादिनद्यः इहागच्छत इह तिष्ठत ॥

३१ इमम्मइत्यस्य शुनःशेपऋषिः गायत्रीछन्दः वरुणो देवता सप्तसागरावाहने विनियोगः ॥ ॐ इमम्मे वरुणश्श्रुधी हवमद्या च मृडय ॥ त्वामवस्युराचके ॥१२॥ ब्रह्मणः पादमूले कर्णिकाधः गङ्गाद्युत्तरे–ॐ भूर्भुवः स्वः सप्तसागरेभ्यो नमः–सप्तसागरानावाहयामि स्थापयामि भो सप्तसागराः इहागच्छत इह तिष्ठत ॥

३२ कर्णिकोपरि—ॐ भूर्भुवः स्वः मेरवे नमः मेरुमावाहयामि स्थापयामि भो मेरो इहागच्छ इह तिष्ठ ॥

॥ मण्डलयाह्ये श्वेतपरिधौ उत्तरादिक्रमेण गदाद्यष्टायुधदेवतावाहनम् ॥

३३ उत्तरे सोमसमीपे—ॐ भूर्भुवः स्वः गदायै नमः गदामावाहयामि स्थापयामि भो गदे इहागच्छ इह तिष्ठ ॥

३४ ईशान्याम् ईशानसमीपे—ॐ भूर्भुवः स्वः त्रिशूलाय नमः त्रिशूलमावाहयामि स्थापयामि भो त्रिशूल इहागच्छ इह तिष्ठ ॥

३५ पूर्वे इन्द्रसमीपे–ॐ भूर्भुवः स्वः वज्राय नमः वज्रमावाहयामि स्थापयामि भो वज्र इहागच्छ इह तिष्ठ ॥

३६ आग्नेय्याम् अग्निसमीपे—ॐ भूर्भुवः स्वः शक्तये नमः शक्तिमावाहयामि स्थापयामि भो शक्ते इहागच्छ इह तिष्ठ ॥

३७ दक्षिणे यमसमीपे—ॐ भूर्भुवः स्वः दण्डाय नमः दण्डमावाहयामि स्थापयामि भो दण्ड इहागच्छ इह तिष्ठ ॥

३८ नैर्ऋत्याम् निर्ऋतिसमीपे—भूर्भुवः स्वः खड्गाय नमः खड्गमावाहयामि स्थापयामि भो खड्ग इहागच्छ इह तिष्ठ ॥

३९ पश्चिमे वरुणसमीपे—ॐभूर्भुवः स्वः पाशाय नमः पाशमावाहयामि स्थापयामि भो पाश इहागच्छ इह तिष्ठ ॥

४० वायव्याम् वायुसमीपे—ॐ भूर्भुवः स्वः अङ्कुशाय नमः अङ्कुशमावाहयामि स्थापयामि भो अङ्कुश इहागच्छ इह तिष्ठ ॥

॥ मण्डलबाह्ये रक्तपरिधौ उत्तरादिक्रमेण गौतमाद्यष्टदेवतावाहनम् ॥

४१ उत्तरे—ॐ भूर्भुवः स्वः गौतमाय नमः गौतममावाहयामि स्थापयामि भो गौतम इहागच्छ इह तिष्ठ ॥

४२ ईशान्याम्—ॐ भूर्भुवः स्वः भरद्वाजाय नमः भरद्वाजमावाहयामि स्थापयामि भो भरद्वाज इहागच्छ इह तिष्ठ ॥

४३ पूर्वे—ॐ भूर्भुवः स्वः विश्वामित्राय नमः विश्वामित्रमावाहयामि स्थापयामि भो विश्वामित्र इहागच्छ इह तिष्ठ ॥

४४ आग्नेय्याम्—ॐ भूर्भुवः स्वः कश्यपाय नमः कश्यपमावाहयामि स्थापयामि भो कश्यप इहागच्छ इह तिष्ठ ॥

४५ दक्षिणे—ॐ भूर्भुवः स्वः जमदग्नये नमः जमदग्निमावाहयामि स्थापयामि भो जमदग्ने इहागच्छ इह तिष्ठ ॥

४६ नैर्ऋत्याम्—ॐ भूर्भुवः स्वः वसिष्ठाय नमः वसिष्ठमावाहयामि स्थापयामि भो वसिष्ठ इहागच्छ इह तिष्ठ ॥

४७ पश्चिमे—ॐ भूर्भुवः स्वः अत्रये नमः अत्रिमावाहयामि स्थापयामि भो अत्रे इहागच्छ इह तिष्ठ ॥

४८ वायव्याम्—ॐ भूर्भुवः स्वः अरुन्धत्यै नमः अरुन्धतीमावाहयामि स्थापयामि भो अरुन्धति इहागच्छ इह तिष्ठ ॥

॥ मण्डलबाह्ये कृष्णपरिधौ पूर्वादिक्रमेण ऐन्द्राद्यष्टदेवतावाहनम् ॥

४९ पूर्वे—ॐ भूर्भुवः स्वः ऐन्द्र्यै नमः ऐन्द्रीमावाहयामि स्थापयामि भो ऐन्द्रि इहागच्छ इह तिष्ठ ॥

५० आग्नेय्याम्—ॐ भूर्भुवः स्वः कौमार्यै नमः कौमारीमावाहयामि स्थापयामि भो कौमारि इहागच्छ इह तिष्ठ ॥

५१ दक्षिणे—ॐ भूर्भुवः स्वः ब्राह्म्यै नमः ब्राह्मीमावाहयामि स्थापयामि भो ब्राह्मि इहागच्छ इह तिष्ठ ॥

५२ नैर्ऋत्याम्—ॐ भूर्भुवः स्वः वाराह्यै नमः वाराहीमावाहयामि स्थापयामि भो वाराहि इहागच्छ इह तिष्ठ ॥

५३ पश्चिमे—ॐ भूर्भुवः स्वः चामुण्डायै नमः चामुण्डामावाहयामि स्थापयामि भो चामुण्डे इहागच्छ इह तिष्ठ ॥

५४ वायव्याम्—ॐ भूर्भुवः स्वः वैष्णव्यै नमः वैष्णवीमावाहयामि स्थापयामि भो वैष्णवि इहागच्छ इह तिष्ठ ॥

५५ उत्तरे—ॐ भूर्भुवः स्वः माहेश्वर्यै नमः माहेश्वरीमावाहयामि स्थापयामि भो माहेश्वरि इहागच्छ इह तिष्ठ ॥

५६ ऐशान्याम्—ॐ भूर्भुवः स्वः वैनायक्यै नमः वैनायकी-मावाहयामि स्थापयामि भो वैनायकि इहागच्छ इह तिष्ठ ॥

प्रतिष्ठापनम्—ॐ मनो॑ जूतिर्ज्जु॑षतामाज्ज्य॑स्य बृह॒स्पति॑र्य्यज्ञमि॒मन्त॑नोत्त्वरि॑ष्टं य॒ज्ञꣳ समि॒मन्द॑धातु ॥ विश्वे॑ दे॒वास॑ऽ इ॒ह मा॑दयन्ता॒मो३॒म्प्रति॑ष्ठ ॥ ²⁄₁₃ ॥ ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताः सुप्रतिष्ठिताः वरदाः भवत ॥

ध्यानम्—ॐ ब्रह्म॑ जज्ञानम्प्र॑थ॒मम्पु॒रस्ता॒द्वि सी॑म॒तः सु॒रुचो॑ वे॒नऽ आ॑वः॥ स बु॒ध्न्या॒ऽ उप॒माऽ अ॑स्य वि॒ष्ठाः स॒तश्च॒ योनि॒मस॑तश्च॒ विवः ॥ ³⁄₁₃ ॥ ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः ध्यायामि ॥

आसनम्—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः आसनं समर्पयामि ॥

पाद्यम्—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः पाद्यं समर्पयामि ॥

अर्घ्यम्—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः अर्घ्यं समर्पयामि ॥

आचमनीयम्—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः आचमनीयं समर्पयामि ॥

---

१ सर्वतोभद्रमण्डलोपरिग्रहस्थापनप्रमाणमुक्तं वसिष्ठसंहितायाम्—अग्निप्रणयनं कृत्वा वेद्यामावाहयेत्सुरान्। ब्रह्मादींस्तत्र संस्थाप्य पूजयेद्रुद्रसंख्यके ॥ वह्नेर्णोत्तरतो तद्वद्ग्रहपर्यावाहयेद्ग्रहान् । आदित्यादिमुखान्सर्वान्वेदाब्धिप्रमितान्सुरान् ॥ रुद्रकर्मणि वै. साक स्थापयेदधिकान्सुरान् । शेषादिकान्मनुष्यान्तान्वेदबाणमितांस्तथा ॥

पञ्चामृतस्नानम्—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डल-देवताभ्यो नमः पञ्चामृतस्नानं समर्पयामि ॥ पञ्चामृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

गन्धोदकस्नानम्—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डल देवताभ्यो नमः गन्धोदकस्नानं समर्पयामि ॥ गन्धोदकस्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

उद्वर्तनस्नानम्—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डल-देवताभ्यो नमः उद्वर्तनस्नानं समर्पयामि ॥ उद्वर्तनस्नानान्ते उष्णोदकस्नानं समर्पयामि ॥ उष्णोदकस्नानान्ते शुद्धोदकस्नानं समर्पयामि॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

अभिषेकः—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः अभिषेकस्नानं समर्पयामि ॥

स्नानम्—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः स्नानं समर्पयामि ॥ स्नानान्ते आचमनीयं समर्पयामि ॥

वस्त्रम्—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः वस्त्रं समर्पयामि ॥ वस्त्रान्ते आचमनीयं समर्पयामि ॥

उपवीतम्—ॐ भूर्भुवःस्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः उपवीतं समर्पयामि ॥ उपवीतान्ते आचमनीयं समर्पयामि ॥

गन्धः—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः गन्धं समर्पयामि ॥

अक्षताः—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः अक्षतान्समर्पयामि ॥

पुष्पाणि—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः पुष्पाणि समर्पयामि ॥

सौभाग्यद्रव्याणि—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः सौभाग्यद्रव्याणि समर्पयामि ॥

आभूषणानि—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः आभूषणानि समर्पयामि ॥

धूपः—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः धूपमाघ्रापयामि ॥

दीपः—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः दीपं दर्शयामि ॥

नैवेद्यम्—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः नैवेद्यं निवेदयामि ॥ देवताग्रे गोमयेन जलेन वा चतुष्कोणं मण्डलं कृत्वा तदुपरि नैवेद्यपात्रं निधाय तत्र तुलसीपत्रं निक्षिप्य गायत्रीमन्त्रेण सम्प्रोक्ष्य धेनुमुद्रां प्रदर्श्य ग्रासमुद्रया तर्जनीमध्यमाङ्गुष्ठेन—ॐ प्राणाय स्वाहा । मध्यमानामिकाङ्गुष्ठेन—ॐ अपानाय स्वाहा । कनिष्ठिकानामिकाङ्गुष्ठेन—ॐ व्यानाय स्वाहा । कनिष्ठातर्जन्यङ्गुष्ठेन—ॐ उदानाय स्वाहा । साङ्गुष्ठाभिः सर्वाङ्गुलिभिः—ॐ समानाय स्वाहा ॥ पूर्वापोशनं समर्पयामि ॥ नैवेद्यमध्ये पानीयं समर्पयामि॥उत्तरापोशनं समर्पयामि ॥ हस्तप्रक्षालनार्थे जलं समर्पयामि ॥ मुखप्रक्षालनार्थे जलं समर्पयामि ॥ आचमनीयं समर्पयामि ॥ करोद्वर्तनार्थे चन्दनं समर्पयामि ॥

फलानि—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः ऋतूद्भवानि नानाविधफलानि समर्पयामि ॥

मुखवासार्थे ताम्बूलम्—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः मुखवासार्थे सपूगीफलताम्बूलं समर्पयामि ॥

दक्षिणा—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः सुवर्णपुष्पदक्षिणां समर्पयामि ॥

कर्पूरार्तिक्यम्—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः कर्पूरार्तिक्यं समर्पयामि ॥ जलेन प्रदक्षिणावर्तनम् । पुष्पैर्देववन्दनम् । आत्मवन्दनम् । हस्तप्रक्षालनम् ॥

मन्त्रपुष्पाञ्जलिः—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः मन्त्रपुष्पाञ्जलिं समर्पयामि ॥

प्रदक्षिणा—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः प्रदक्षिणां समर्पयामि ॥

नमस्कारः—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः नमस्करोमि ॥

विशेषार्घः—अर्घपात्रे जलं सम्पूर्य चन्दनपुष्पाक्षतसहितं नारिकेलं च धृत्वा—ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः विशेषार्घं समर्पयामि ॥

प्रार्थना—ब्रह्माद्यावाहिता देवाः सर्वतोभद्रमण्डले । पूजां गृह्णीत मद्दत्तां सर्वदा मे प्रसीदत ॥ ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः प्रार्थनापूर्वकं नमस्करोमि ॥

राजोपचाराः—छत्रं च चामरं चैव व्यजनं दर्पणं तथा । पादुकादीनि गृह्णीत ब्रह्माद्यावाहितामराः ॥ ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः राजोपचारान्समर्पयामि ॥ ( अभावे कल्पयामि ) ॥

समर्पणम्—अनया पूजया ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताः प्रीयन्ताम् ॥

॥ ब्रह्मादीनां पायसबलिः ॥

१ ॐ ब्रह्मणे नमः पायसबलिं समर्पयामि
२ ॐ सोमाय नमः पायसबलिं समर्पयामि
३ ॐ ईशानाय नमःपायसबलिं समर्पयामि
४ ॐ इन्द्राय नमः पायसबलिं समर्पयामि
५ ॐ अग्नये नमः पायसबलिं समर्पयामि
६ ॐ यमाय नमः पायसबलिं समर्पयामि
७ ॐ निर्ऋतये नमः पायसबलिं समर्पयामि
८ ॐ वरुणाय नमः पायसबलिं समर्पयामि
९ ॐ वायवे नमः पायसबलिं समर्पयामि
१० ॐ अष्टवसुभ्यो नमः पायसबलिं समर्पयामि
११ ॐ एकादशरुद्रेभ्यो नमः पायसबलिं समर्पयामि
१२ ॐ द्वादशादित्येभ्यो नमः पायसबलिं समर्पयामि
१३ ॐ अश्विभ्यां नमः पायसबलिं समर्पयामि
१४ ॐ विश्वेभ्यो देवेभ्यो नमः पायसबलिं समर्पयामि
१५ ॐ सप्तयक्षेभ्यो नमः पायसबलिं समर्पयामि
१६ ॐ भूतनागेभ्यो नमः पायसबलिं समर्पयामि
१७ ॐ गन्धर्वाप्सरोभ्यो नमः पायसबलिं समर्पयामि
१८ ॐ स्कन्दाय नमः पायसबलिं समर्पयामि
१९ ॐ नन्दिने नमः पायसबलिं समर्पयामि
२० ॐ शूलमहाकालाभ्यां नमः पायसबलिं समर्पयामि
२१ ॐ दक्षादिसप्तगणेभ्यो नमः पायसबलिं समर्पयामि

२२ ॐ दुर्गायै नमः पायसबलिं समर्पयामि
२३ ॐ विष्णवे नमः पायसबलिं समर्पयामि
२४ ॐ स्वधायै नमः पायसबलिं समर्पयामि
२५ ॐ मृत्युरोगाभ्यां नमः पायसबलिं समर्पयामि
२६ ॐ गणपतये नमः पायसबलिं समर्पयामि
२७ ॐ अद्भ्यो नमः पायसबलिं समर्पयामि
२८ ॐ मरुद्भ्यो नमः पायसबलिं समर्पयामि
२९ ॐ पृथिव्यै नमः पायसबलिं समर्पयामि
३० ॐ गङ्गादिनदीभ्यो नमः पायसबलिं समर्पयामि
३१ ॐ सप्तसागरेभ्यो नमः पायसबलिं समर्पयामि
३२ ॐ मेरवे नमः पायसबलिं समर्पयामि
३३ ॐ गदायै नमः पायसबलिं समर्पयामि
३४ ॐ त्रिशूलाय नमः पायसबलिं समर्पयामि
३५ ॐ वज्राय नमः पायसबलिं समर्पयामि
३६ ॐ शक्तये नमः पायसबलिं समर्पयामि
३७ ॐ दण्डाय नमः पायसबलिं समर्पयामि
३८ ॐ खड्गाय नमः पायसबलिं समर्पयामि
३९ ॐ पाशाय नमः पायसबलिं समर्पयामि
४० ॐ अङ्कुशाय नमः पायसबलिं समर्पयामि
४१ ॐ गौतमाय नमः पायसबलिं समर्पयामि
४२ ॐ भरद्वाजाय नमः पायसबलिं समर्पयामि
४३ ॐ विश्वामित्राय नमः पायसबलिं समर्पयामि
४४ ॐ कश्यपाय नमः पायसबलिं समर्पयामि
४५ ॐ जमदग्नये नमः पायसबलिं समर्पयामि

४६ ॐ वसिष्ठाय नमः पायसबलिं समर्पयामि
४७ ॐ अत्रये नमः पायसबलिं समर्पयामि
४८ ॐ अरुन्धत्यै नमः पायसबलिं समर्पयामि
४९ ॐ ऐन्द्र्यै नमः पायसबलिं समर्पयामि
५० ॐ कौमार्यै नमः पायसबलिं समर्पयामि
५१ ॐ ब्राह्म्यै नमः पायसबलिं समर्पयामि
५२ ॐ वाराह्यै नमः पायसबलिं समर्पयामि
५३ ॐ चामुण्डायै नमः पायसबलिं समर्पयामि
५४ ॐ वैष्णव्यै नमः पायसबलिं समर्पयामि
५५ ॐ माहेश्वर्यै नमः पायसबलिं समर्पयामि
५६ ॐ वैनायक्यै नमः पायसबलिं समर्पयामि

एवं बलिदानं विधाय तदुपरि श्वेतवस्त्रं प्रसार्य अक्षतैर्वृत्तचतुरस्र-त्रिकोणबाणाकारदीर्घचतुरस्रपञ्चकोणधनुःशूर्पध्वजाकाराणि कृत्वा शेषादि विशेषदेवतासहितसूर्यादिग्रहानावाहयेत्--

१ आकृष्णेनेत्यस्यहिरण्यस्तूपआङ्गिरसऋषिः त्रिष्टुप्छन्दः सूर्योदेवतासूर्यावाहनेविनियोगः—ॐआ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यंञ्च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ ॥ प्राङ्मुखं सूर्यं पीठमध्ये वर्तुले द्वादशाङ्गुले मण्डले—ॐभूर्भुवः स्वः कलिङ्गदेशोद्भव काश्यपसगोत्र रक्तवर्ण भो सूर्य इहागच्छ इह तिष्ठ ॥ ॐसूर्याय नमः सूर्यमावाहयामि स्थापयामि ॥

---

१ शूद्राणामपि मन्त्रवर्ज्यं ग्रहयज्ञकरणे अधिकारः—शूद्रधर्मप्रकरणे मनुः—धर्मेप्सवस्तु धर्मज्ञाः सतां धर्ममनुष्ठिताः । मन्त्रवर्ज्यं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ॥ केचन विप्राः द्रव्यलोभेन उपनयनरहितानां व्रात्यवैश्यक्षत्रियाणां द्रव्यमादाय ब्राह्मणद्वारा सत्तानिवृत्तिं कृत्वा वय कुर्मः इतिवदन्तः वैदिकविधिना कर्म कुर्वन्ति तदयुक्तम् ॥

२इमन्देवा इत्यस्य वरुणऋषिः अत्यष्टीछन्दः सोमो देवता सोमावाहने वि० ॥ ॐइमन्देवाऽअसपत्नꣳसुवद्ध्वम्महुतेक्षत्रायमहुतेज्ज्यैष्ठ्यायमहुते जानराज्ज्यायेन्द्रस्येन्द्रियाय । इममुष्ष्यपुत्रममुष्ष्यैपुत्रमस्यैविशऽएषवोऽमीराजासोमोस्माकम्ब्राह्मणानाꣳराजा॥४०॥ प्रत्यङ्मुखं सोममाग्नेय्यां चतुर्विंशत्यङ्गुलेमण्डले–ॐभूर्भुवःस्वः यमुनातीरोद्भवआत्रेयसगोत्रशुक्लवर्णभोसोमइहागच्छइहतिष्ठ ॐसोमायनमःसोममावाहयामिस्थापयामि॥

३ अग्निर्मूर्द्धेत्यस्य विरूपाक्षऋषिः गायत्रीछन्दः भौमो देवता भौमावाहने विनियोगः–ॐअग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् ॥ अपाꣳ रेताꣳसि जिन्वति ॥ १२ ॥ दक्षिणाभिमुखं भौमं दक्षिणस्यां दिशि त्रिकोणे त्र्यङ्गुले मण्डले–ॐभूर्भुवः स्वः अवन्ति

---

पराशरः—दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः । ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत् ॥ यत्र विप्रः शूद्रस्य दक्षिणामादाय तदीयं हविः शान्तिपुष्ट्यार्थं वैदिकैर्मन्त्रैर्जुहोति तत्र ब्राह्मणस्यैव दोषः शूद्रस्तु होमफलं लभते ॥ तत्सिद्धो ग्रहमख मूलानुसारिवास्तुशान्त्यादौ मन्त्रवर्ज्यं करणे शूद्रस्याधिकारः ॥ मोक्षधर्मे शूद्र प्रकृत्य–मन्त्रवर्जं न दुष्यन्ति कुर्वाणाः पौष्टिकीं क्रियाम् ॥ मात्स्ये—गर्तस्योत्तरपूर्वेण वितस्तिद्वयविस्तृताम् । वप्रद्वययुतां वेदीं वितस्त्युच्छ्रायसंयुताम् ॥ संस्थापनाय देवानां चतुरस्रामुदक्प्लवाम् ॥ स्कान्दे—तस्माच्चोत्तरपूर्वेण स्थण्डिलं हस्तमात्रकम् । त्रिवप्रं चतुरस्रं च वितस्त्युच्छ्रायसम्मितम् ॥ अत्र त्रिवप्राण्युक्तानि ॥ जन्मभूर्गोत्रमग्निश्च वर्णस्थानमुखानि च ॥ योऽज्ञात्वा कुरुते शान्तिं ग्रहास्तेनावमानिताः ॥ ग्रहदेशाः—उत्पन्नोऽर्कः कलिङ्गेषु यमुनायां च चन्द्रमाः । अङ्गारकस्त्ववन्त्यां च मगधायां हिमांशुजः ॥ सैन्धवेषु गुरुर्जातः शुक्रो भोजकटे तथा । शनैश्चरस्तु सौराष्ट्रे राहुर्वै राठिनापुरे॥ अन्तर्वेद्यां तथा केतुरित्येता ग्रहभूमयः ॥ ग्रहाणां गोत्राणि—आदित्यः काश्यपो गोत्र आत्रेयश्चन्द्रमा भवेत् । भारद्वाजो भवेद्भौमस्तथात्रेयश्च सोमजः ॥ शक्रपूज्योऽङ्गिरोगोत्रः शुक्रो वै भार्गवस्तथा । शनिः काश्यप एवात्र राहुः पैठीनसिस्तथा॥ केतवो जैमिनीयाश्च गोत्राण्याहुर्मनीषिणः ॥

देशोद्भव भारद्वाजसगोत्र रक्तवर्ण भो भौम इहागच्छ इह तिष्ठ ॥ ॐभौमाय नमः भौममावाहयामि स्थापयामि ॥

४ उद्बुध्यस्वेत्यस्य परमेष्ठीऋषिः त्रिष्टुप्छन्दः बुधो देवता बुधावाहने विनियोगः—ॐ उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्त्ते सᳬसृजेथामयञ्च॥अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत ॥१५॥उदङ्मुखं बुधमैशान्यां दिशिबाणाकारे चतुरङ्गुले मण्डले—ॐभूर्भुवः स्वः मगधदेशोद्भव आत्रेयसगोत्र पीतवर्ण भो बुध इहागच्छ इह तिष्ठ॥ ॐबुधाय नमः बुधमावाहयामि स्थापयामि ॥

५ बृहस्पत इत्यस्य गृत्समदऋषिः त्रिष्टुप्छन्दःबृहस्पतिर्देवताबृहस्पत्यावाहनेविनियोगः—ॐ बृहस्पतेऽअतियदर्य्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणन्धेहिचित्रम् ॥३॥ उदङ्मुखंबृहस्पतिमुत्तरस्यांदिशिलम्बदीर्घचतुरस्रेपद्माकारे षडङ्गुले मण्डले—ॐभूर्भुवःस्वः सिन्धुदेशोद्भवआङ्गिरसगोत्रपीतवर्ण भोबृहस्पते इहागच्छ इहतिष्ठ ॐबृहस्पतयेनमः बृहस्पतिमावाहयामि स्थापयामि ॥

६ अन्नात्परिस्रुतइत्यस्यआश्विसरस्वतीन्द्राऋषयः अतिजगतीछन्दः शुक्रोदेवताशुक्रावाहनेविनियोगः—ॐ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपि-

१ सकारेण तु वक्तव्य गोत्र सर्वत्र धीमता । सकार. कुतपो ज्ञेयस्तस्मायत्नेन त वदेत् ॥ ग्रहस्थानानि—मध्ये तु भास्करं विद्याच्छशिनं पूर्वदक्षिणे । दक्षिणे लोहितं विद्याद् बुधं पूर्वोत्तरेण तु॥ उत्तरे तु गुरुं विद्यात्पूर्वेणैव तु भार्गवम्। पश्चिमे तु शनिं विद्याद्राहुं दक्षिणपश्चिमे ॥ पश्चिमोत्तरतः केतुं स्थाप्या वै शुक्लतण्डुलैः॥ ग्रहवर्णाः— रविभौमौ रक्तवर्णौ श्वेतश्चन्द्रस्तु भार्गवः । बुधजीवौ पीतवर्णौ कृष्णौ मन्दविधुन्तुदौ ॥ धूम्रवर्णाः केतवश्च ग्रहवर्णाः प्रकीर्तिताः ।

धरक्षत्रम्पय॒ऽसोमंस्प्रजापतिः॥ऋतेनसुत्यमिन्द्रियंविपानंऽशुक्रमन्धसऽ-इन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु॥१९/७५॥प्राङ्मुखंशुक्रंपूर्वस्यां दिशिपश्चकोणे-नवाङ्गुलेमण्डले—ॐभूर्भुवःस्वःभोजकटदेशोद्भवभार्गवसगोत्रशुक्लवर्णभो-शुक्रइहागच्छ इहतिष्ठ ॥ ॐशुक्रायनमः शुक्रमावाहयामि स्थापयामि ॥

७ शन्नोदेवीरित्यस्य दध्यङ्ङाथर्वणऋषिः गायत्रीछन्दः शनैश्चरो देवता शनैश्चरावाहने विनियोगः—ॐशन्नो देवीरभिष्टयऽ आपो भवन्तु पीतये ॥ शंय्योरभिस्रवन्तु नः॥३६/१२॥ मत्स्यङ्मुखं शनिं पश्चिमायां दिशि धनुराकारे द्व्यङ्गुलेमण्डले—भूर्भुवः स्वः सौराष्ट्रदेशोद्भव काश्यपसगोत्र कृष्णवर्ण भो शनैश्चर इहागच्छ इह तिष्ठ ॥ ॐशनैश्चराय नमः शनैश्चरमावाहयामि स्थापयामि ॥

८ कयान इत्यस्य वामदेवऋषिः गायत्रीछन्दः राहुर्देवता राहा-वाहने विनियोगः—ॐकया नश्चित्रऽ आ भुवदूती सदावृधः सखा ॥ कया शचिष्ठया वृता॥३६/४॥ दक्षिणाभिमुखं राहु नैर्ऋत्यां दिशि शूर्पा-कारे द्वादशाङ्गुले मण्डले—ॐभूर्भुवः स्वः राठिनापुरोद्भव पैठिनसगोत्र नीलवर्ण भो राहो इहागच्छ इह तिष्ठ ॥ ॐराहवे नमः राहुमावा-हयामि स्थापयामि ॥

९ केतुङ्कृण्वन्नित्यस्य मधुच्छन्दाऋषिः अनिरुक्तागायत्रीछन्दः केतु-र्देवता केत्वावाहने विनियोगः—ॐकेतुङ्कृण्वन्न केतवे पेशो मर्य्याऽ अपेशसे ॥ समुषद्भिरजायथाः ॥२९/३७॥ दक्षिणाभिमुखं केतुं वायव्यां दिशि ध्वजाकारे षडङ्गुले मण्डले—ॐभूर्भुवः स्वः अन्तर्वेदिसमुद्भव जैमिनिसगोत्र धूम्रवर्ण भो केतो इहागच्छ इह तिष्ठ ॥ ॐ केतवे नमः केतुमावाहयामि स्थापयामि ॥

अधिदेवतावाहनम्—१ त्र्यम्बकमित्यस्य वसिष्ठऋषिः अनुष्टुप्छन्दः ईश्वरोदेवता ईश्वरावाहने वि०-ॐ त्र्यम्बकँय्यजामहे सुगन्धिम्पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥ ६०/३ ॥ सूर्यदक्षिणपार्श्वे ॐ भूर्भुवः स्वः भो ईश्वर इ० इ० ॥ ॐ ईश्वराय नमः ईश्वरमावाहयामि स्थापयामि॥

२ श्रीश्चत इत्यस्य उत्तरनारायणऋषिः त्रिष्टुप्छन्दः उमा देवता उमावाहने विनियोगः—ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्म इषाण सर्वलोकम्म इषाण॥ २२/३१ ॥ सोमदक्षिणपार्श्वे ॐ भूर्भुवः स्वः भो उमे इहागच्छ इह तिष्ठ ॥ ॐ उमायै नमः उमामावाहयामि स्थापयामि ॥

३ यदक्रन्द इत्यस्य भार्गवजमदग्निदीर्घतमाऋषयः त्रिष्टुप्छन्दः स्कन्दो देवता स्कन्दावाहने विनियोगः—ॐ यदक्रन्दः प्रथमञ्जायमानऽ उद्यन्त्समुद्रादुत वा पुरीषात् ॥ श्येनस्य पक्षा हरिणस्य बाहूऽ उपस्तुत्यम्महि जातन्तेऽ अर्वन्॥ ३२/२९ ॥ भौमदक्षिणपार्श्वे-ॐ भूर्भुवः स्वः भोः स्कन्द इहागच्छ इह तिष्ठ॥ ॐ स्कन्दाय नमः स्कन्दमावाहयामि स्थाप०॥

४ विष्णोरराटमित्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः विष्णुर्देवता विष्ण्वावाहने विनियोगः—ॐ विष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि। वैष्णवमसि विष्णवे त्वा॥ ५/२१ ॥ बुधदक्षिणपार्श्वे ॐ भूर्भुवः स्वः भो विष्णो इहा० इह०॥ ॐ विष्णवे० विष्णुमा० स्था०॥

५ आब्रह्मन्नित्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः ब्रह्मा देवता ब्रह्मावाहने विनियोगः॥ ॐ आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूरऽ इषव्योतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यज-

मानस्य च्छीरोजापतानिकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो नः ओषधयः पच्यन्ताँय्योगक्षेमो नः कल्पताम् ॥२२॥ गुरुदक्षिणपार्श्वे—ॐ भूर्भुवः स्वः भो ब्रह्मन् इहागच्छ इहतिष्ठ ॐ ब्रह्मणे नमः ब्रह्माणमावाहयामि स्थापयामि ॥

६ सजोषाइन्द्रेत्यस्य विश्वामित्रऋषिः त्रिष्टुप्छन्दः इन्द्रो देवता इन्द्रावाहने विनियोगः—ॐसजोषाऽ इन्द्र सगणो मरुद्भिः सोमम्पिब वृत्रहा शूर विद्वान् ॥ जहि शत्रूँ १ रप मृधो नुदस्वाथाभयङ्कृणुहि विश्वतो नः॥२५॥ शुक्रदक्षिणपार्श्वे—ॐभूर्भुवः स्वः भो इन्द्र इहागच्छ इह तिष्ठ ॐइन्द्राय नमः इन्द्रमावाहयामि स्थापयामि ॥

७ यमायत्वेत्यस्य दध्यङ्ङाथर्वणऋषिः यजुश्छन्दः यमो देवता यमावाहने विनियोगः—ॐयमायत्वाङ्गिरस्वतेपितृमतेस्वाहा ॥ स्वाहा घर्म्मायस्वाहाघर्म्मः? पित्रे ॥२६॥ शनिदक्षिणपार्श्वे—ॐभूर्भुवः स्वः भो यम इहागच्छ इह तिष्ठ ॐयमाय नमः यममावाहयामि स्थापयामि ॥

८ कार्षिरसीत्यस्यप्रजापतिऋषिः अनुष्टुप्छन्दःकालोदेवताकालावाहनेविनियोगः ॐकार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामि ॥ समापोऽअद्भिरग्मतसमोषधीभिरोषधीः ॥२७॥ राहुदक्षिणपार्श्वे—ॐभूर्भुवः स्वः भोकाल इहागच्छ इहतिष्ठ ॐकालायनमःकालमावाहयामि स्थापयामि॥

९ चित्रावसोइत्यस्य हिरण्यस्तूपऋषिः यजुर्जगतीछन्दः चित्रगुप्तो देवता चित्रगुप्तावाहने विनियोगः—ॐचित्रावसो स्वस्ति ते पारमशीय ॥२८॥ केतुदक्षिणपार्श्वे—ॐभूर्भुवः स्वः भो चित्रगुप्त इहागच्छ इह तिष्ठ। ॐचित्रगुप्ताय नमः चित्रगुप्तमावाहयामि स्थापयामि ॥

प्रत्यधिदेवतावाहनम्—१ अग्निन्दूतमित्यस्यविरूपाक्षऋषिः गायत्री-छन्दः अग्निर्देवताअग्न्यावाहनेविनियोगः—ॐअग्निन्दूतम्पुरोदधे हव्यवाहुमुपब्रुवे॥ देवाँ२आसादयादिह ॥१७/१॥ सूर्यवामपार्श्वे—ॐभूर्भुवःस्वः भो अग्ने इहागच्छ इहतिष्ठ ॐअग्नये नमः अग्निमावाहयामि स्थापयामि॥

२ आपोहिष्ठेति सिन्धुद्वीपऋषिः गायत्रीछन्दः आपो देवता अपावाहने विनियोगः-ॐआपो हि ष्ठा मयोभुवस्ता नऽ ऊर्ज्जे दधातन॥ महे रणाय चक्षसे ॥ ३५/३ ॥ सोमवामपार्श्वे—ॐ भूर्भुवः स्वः भो आप इहागच्छत इह तिष्ठत॥ॐअद्भ्यो नमः अप आवाहयामि स्थापयामि॥

३ स्योनापृथिवीत्यस्यमेधातिथिर्ऋषिः गायत्रीछन्दः पृथ्वीदेवता-पृथ्व्यावाहने विनियोगः—ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः ॥३६/३॥ भौमवामपार्श्वे—ॐभूर्भुवःस्वः भोपृथिवि इहागच्छ इह तिष्ठ ॥ ॐपृथिव्यै नमः पृथिवीमावाहयामि स्थापयामि॥

४ इदं विष्णुरित्यस्यमेधातिथिर्ऋषिः गायत्रीछन्दः विष्णुर्देवता विष्ण्वावाहने विनियोगः—ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्य पाꣳसुरे स्वाहा॥५/१५॥बुधवामपार्श्वे—ॐभूर्भुवःस्वः भोविष्णो इहागच्छ इहतिष्ठ ॥ ॐविष्णवे नमः विष्णुमावाहयामिस्थापयामि ॥

५ त्रातारमित्यस्य गर्गऋषिः त्रिष्टुप्छन्दः इन्द्रोदेवता इन्द्रावाहनेवि०—ॐत्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्र-

बृहन्नारदीये अध्याय १२१—धाता मित्रोर्यमापूषा शक्रोंशो वरुणो भगः । त्वष्टा विवस्वान्सविता विष्णुर्द्वादश ईरिताः ॥ ५९ ॥ एकादशरुद्राः—अजैकपादहिर्बुध्न्यो विरूपाक्ष. पिनाकधृक्। बहुरूपो हरो रुद्रो कपर्दी रैवतो वृष. त्र्यम्बको भगवान्शाश्चाद्रुद्रा एकादश स्मृता. ॥

म्पुरुहूतमिन्द्रᳬस्वस्तिनोमघवाधात्विन्द्रः॥ २०/५०॥गुरुवामपार्श्वे-ॐभूर्भुवः स्वःभोइन्द्रइहागच्छइहतिष्ठ। ॐइन्द्रायनमः इन्द्रमावाहयामि स्थापयामि॥

६ अदित्यैरास्नेत्यस्यदध्यङ्ङाथर्वणऋषिः यजुश्छन्दः इन्द्राणीदेवता इन्द्राण्यावाहने विनियोगः-ॐअदित्यैरास्नासीन्द्राण्याऽउष्णीषः॥ पूषासि घर्म्माय दीष्व॥ ३८/३॥शुक्रवामपार्श्वे-ॐभूर्भुवः स्वः भो इन्द्राणि इहागच्छ इह तिष्ठ॥ॐइन्द्राण्यै नमः इन्द्राणीमावाहयामि स्थापयामि॥

७ प्रजापत इत्यस्य हिरण्यगर्भऋषिः त्रिष्टुप्छन्दः प्रजापतिर्देवता प्रजापत्यावाहने विनियोगः-ॐप्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव॥ यत्कामास्ते जुहुमस्तन्नोऽ अस्तु वयᳬ स्याम पतयो रयीणाम्॥ १०/२० ॥ शनिवामपार्श्वे-ॐ भूर्भुवः स्वः भोः प्रजापते इहागच्छइहतिष्ठ॥ॐप्रजापतये नमः प्रजापतिमावाहयामि स्थापयामि॥

८ नमोस्तुसर्पेभ्यइत्यस्य प्रजापतिऋषिः अनुष्टुप्छन्दः सर्पादेवताः सर्पावाहने विनियोगः-ॐनमोस्तुसर्प्पेभ्योयेकेचपृथिवीमनु॥ येऽअन्तरिक्षेयेदिवितेब्भ्यःसर्प्पेभ्योनमः ॥ १३/६॥ राहुवामपार्श्वेॐभूर्भुवः स्वः भोसर्पाइहागच्छतइहतिष्ठत।ॐसर्पेभ्योनमः सर्पानावाहयामि स्था०॥

९ ब्रह्मजज्ञानमित्यस्य प्रजापतिऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता ब्रह्मावाहने विनियोगः-ॐब्रह्म जज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचो वेनऽ आवः॥ स बुध्न्याऽ उपमाऽ अस्यविष्ठाः सतश्च योनिमसतश्च विवः॥ १३/३॥ केतुवामपार्श्वे-ॐभूर्भुवः स्वः भो ब्रह्मन् इहागच्छ इह तिष्ठ॥ ॐब्रह्मणे नमः ब्रह्माणमावाहयामि स्थापयामि ॥

पञ्चलोकपालदेवतावाहनम्—१ गणानान्त्वेत्यस्य प्रजापतिऋषिः यजुश्छन्दः गणपतिर्देवता गणपत्यावाहने विनियोगः-ॐगणानान्त्वा

गणपतिᳬ हवामहे प्प्रियाणान्त्वा । प्प्रियपतिᳬ हवामहे निधीनान्त्वा निधिपतिᳬ हवामहे वसो मम ॥ आहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधम् ॥ १/२३ ॥ राहोरुत्तरतः—ॐ भूर्भुवः स्वः भो गणपते इहागच्छ इह तिष्ठ ॥ ॐ गणपतये नमः गणपतिमावाहयामि स्थापयामि ॥

२ अम्बेअम्बिकइत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः दुर्गादेवता दुर्गावाहने विनियोगः—ॐ अम्बेऽ अम्बिकेम्बालिकेनमानयतिकश्च न॥ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥ १/२३ ॥ शनेरुत्तरतः-ॐ भूर्भुवः स्वः भो दुर्गे इहागच्छ इह तिष्ठ ॥ ॐ दुर्गायै नमः दुर्गामावाहयामि स्थापयामि ॥

३ वायोयेतेइत्यस्य गृत्समदऋषिः गायत्रीछन्दः वायुर्देवता वाय्वावाहने विनियोगः—ॐ वायो ये ते सहस्रिणो रथासस्तेभिरागहि ॥ नियुत्वान्त्सोमपीतये ॥ १/२३ ॥ रवेरुत्तरतः—ॐ भूर्भुवः स्वः भो वायो इहागच्छ इह तिष्ठ ॥ ॐ वायवे नमः वायुमाह्वयामि स्थापयामि ॥

४ घृत घृतपावानइत्यस्य प्रजापतिर्ऋषिः ऋचापङ्क्तिश्छन्दः आकाशो देवता आकाशावाहने विनियोगः—ॐ घृतङ्घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा ॥ दिशः प्प्रदिशऽ आदिशो विदिशऽ उद्दिशो दिग्भ्यः स्वाहा ॥ ६/१९ ॥ राहोर्दक्षिणे—ॐ भूर्भुवः स्वः भो आकाश इहागच्छ इह तिष्ठ ॥ ॐ आकाशाय नमः आकाशमावाहयामि स्थापयामि ॥

५ यावाङ्कशेत्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः अश्विनौ देवते अश्विनावाहने विनियोगः—ॐ यावाङ्कशामधुमत्यश्विना सूनृतावती ॥ तयायज्ञम्मिमिक्षतम् ॥ ७/११ ॥ केतुदक्षिणे भूर्भुवः स्वः भो अश्विनौ इहागच्छतम् इह तिष्ठतम्-ॐ अश्विभ्यां नमः अश्विनावावाहयामि स्थापयामि॥

## अथ क्षेत्राधिपतेः वास्तोष्पतेश्चावाहनम् ।

१ नहिस्पशमित्यस्य विश्वामित्रऋषिः त्रिष्टुप्छन्दः क्षेत्राधिपतिर्देवत क्षेत्राधिपत्यावाहने विनियोगः । ॐ नुहि स्पर्शमविदन्नन्यमुस्माद्वैश्वानुरात्पुरऽ एतारमुग्नेः ॥ एमेनमवृधन्नुमृताऽ अमर्त्यं वैश्वानुरङ्क्षैत्रंजित्याय देवाः ॥$\frac{१०}{३}$॥ गुरोरुत्तरे–ॐ भूर्भुवःस्वःक्षेत्राधिपतये नमः क्षेत्राधिपतिमावाहयामि स्थापयामि॥भोः क्षेत्राधिपतेइहागच्छ इह तिष्ठ॥

१ वास्तोष्पत इत्यस्य वसिष्ठऋषिः वास्तोष्पतिर्देवता वास्तोष्पत्यावाहने विनियोगः॥ॐवास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशोऽ अनमीवो भवानः । यत्त्वेमहे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे ॥ क्षेत्राधिपोत्तरे–ॐभूर्भुवःस्वः वास्तोष्पतये नमः वास्तोष्पतिमावाहयामि स्थापयामि ॥ भो वास्तोष्पते इहागच्छ इह तिष्ठ ॥

### ॥ अथ मण्डलाद्बहिः प्रागादितः पीठसमन्तात् इन्द्रादिदशदिक्पालानामावाहनम् ॥

१ त्रातारमित्यस्यगर्गऋषिःत्रिष्टुप्छन्दः इन्द्रोदेवताइन्द्रावाहनेविनियोगः॥ॐत्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामि शुक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनो मुघवा धात्विन्द्रः ॥$\frac{२०}{३}$॥ मण्डलाद्बहिः पूर्वे–ॐभूर्भुवःस्वःइन्द्रायनमःइन्द्रमा०स्था०॥भोइन्द्रइहागच्छ इहतिष्ठ॥

२ त्वन्नोऽअग्नइत्यस्य हिरण्यस्तूप आङ्गिरसऋषिः जगतीछन्दः अग्निर्देवता अग्न्यावाहने विनियोगः ॥ ॐत्वन्नोऽ अग्ने तव देव पायुभिर्मुघोनों रक्ष तुन्वश्च वन्द्य॥त्राता तोकस्य तनये गवामुस्यनिमेषꣳ रक्षमाणुस्तव व्रुते ॥$\frac{२१}{३}$॥ मण्डलाद्बहिः आग्नेय्याम्–ॐ भूर्भुवः स्वः अग्नये नमः अग्निमावाहयामि स्थापयामि॥भो अग्ने इहागच्छ इह तिष्ठ॥

३ यमायेत्यस्य दधीचऋषिः आसुर्युष्णिक्छन्दः यमो देवता यमावाहने विनियोगः॥ ॐयमाय त्वाङ्गिरस्वते पितृमते स्वाहा ॥ स्वाहा घर्म्मायस्वाहाघर्म्मःपित्रे ॥ २६ ॥ मण्डलाद्बहिः दक्षिणे–ॐभूर्भुवः स्वः यमायनमःयममावाहयामि स्थापयामि ॥ भो यम इहागच्छ इह तिष्ठ ॥

४ असुन्वन्तमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः निर्ऋतिर्देवता निर्ऋत्यावाहने विनियोगः ॥ ॐअसुन्वन्तमयजमानमिच्छ स्तेनस्ये-त्यामन्विहि तस्करस्य ॥ अन्यमस्मदिच्छ सा तऽ इत्या नमो देवि निर्ऋते तुभ्यमस्तु॥ २६ ॥मण्डलाद्बहिः नैर्ऋत्याम्–ॐभूर्भुवःस्वःनिर्ऋतये नमः निर्ऋतिमावाहयामि स्थापयामि॥भो निर्ऋते इहागच्छ इह तिष्ठ॥

५ तत्त्वायामीत्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणो देवता वरुणावाहने विनियोगः॥ ॐतत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः॥अहेडमानो वरुणेह बोध्युरुशꣳस मा नऽ आयुः प्रमोषीः ॥ २६ ॥ मण्डलाद्बहिः पश्चिमे–ॐभूर्भुवः स्वः वरुणाय नमः वरुणमावाहयामि स्थापयामि ॥ भो वरुण इहागच्छ इह तिष्ठ ॥

६ आनोनियुद्भिरित्यस्य वसिष्ठऋषिः त्रिष्टुप्छन्दः वायुर्देवता वाय्वावाहने विनियोगः ॥ ॐआ नो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम्। वायोऽ अस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः सदा नः॥ २६ ॥ मण्डलाद्बहिः वायव्याम्–ॐभूर्भुवः स्वः वायवे नमः वायुमावाहयामि स्थापयामि॥भो वायो इहागच्छ इह तिष्ठ॥

७ वयꣳसोमेत्यस्य बन्धुर्ऋषिः गायत्रीछन्दः सोमोदेवता सोमावाहने विनियोगः॥ ॐवयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः॥प्रजावन्तः

सचेमहि ॥५१॥मण्डलाद्बहिः उत्तरे—ॐभूर्भुवः स्वः सोमाय नमः सोममावाहयामि स्थापयामि ॥ भोः सोम इहागच्छ इह तिष्ठ ॥

८ तमीशानमित्यस्य गौतमऋषिः जगतीछन्दः ईशानो देवता ईशानावाहने विनियोगः ॥ ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे वयम् ॥ पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये॥५६॥मण्डलाद्बहिः ईशान्याम्–ॐभूर्भुवःस्वः ईशानाय नमः ईशानमावाहयामि स्थापयामि॥भो ईशान इहागच्छ इह तिष्ठ॥

९ अस्मेरुद्रामेहनेत्यस्य मगायऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता ब्रह्मावाहने विनियोगः ॥अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः ॥ यः शꣳसते स्तुवते धायि पज्र इन्द्रज्येष्ठाऽ अस्माँ२ऽ अवन्तु देवाः॥५७॥मण्डलाद्बहिः ईशानेन्द्रयोर्मध्ये–ॐभूर्भुवःस्वः ब्रह्मणे नमः ब्रह्माणमावाहयामि स्थापयामि॥ भो ब्रह्मन् इहागच्छ इह तिष्ठ॥

१० स्योनापृथिवीत्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः अनन्तो देवता अनन्तावाहने विनियोगः ॥ ॐस्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म्म सप्रथाः ॥५८॥ मण्डलाद्बहिः निर्ऋतिवरुणयोर्मध्ये—ॐ भूर्भुवः स्वः अनन्ताय नमः अनन्तमावाहयामि स्थापयामि ॥ भो अनन्त इहागच्छ इह तिष्ठ ॥

अथ शेषादिमनुष्यान्तग्रहपीठस्थविशेषदेवतानामावाहनम्

१ रवेः पूर्वे–ॐ शेषाय नमः शेषमावाहयामि स्थापयामि ॥

२ सोमस्याग्रे–ॐवासुकये नमः वासुकिमावाहयामि स्थापयामि॥

३ भौमस्याग्रे–ॐ तक्षकाय नमः तक्षकमावाहयामि स्थापयामि ॥

४ बुधोत्तरे–ॐकर्कोटकाय नमः कर्कोटकमावाहयामि स्थापयामि॥

५ बृहस्पत्यग्रे–ॐ पद्माय नमः पद्ममावाहयामि स्थापयामि ॥

६ शुक्रोत्तरे–ॐमहापद्मायनमः महापद्ममावाहयामि स्थापयामि ॥

७ शनिपश्चिमे-ॐशङ्खपालायनमः शङ्खपालमावाहयामिस्थापयामि॥

८ राहुपुरतः–ॐकम्बलायनमः कम्बलमावाहयामि स्थापयामि॥

९ केतुपुरतः–ॐकुलीशायनमः कुलीशमावाहयामि स्थापयामि ॥

ततो भूग्रहाद्बहिः ॥ पूर्वे–१० ॐ अश्विन्यादिसप्तनक्षत्रेभ्यो नमः अश्विन्यादिसप्तनक्षत्राण्यावाहयामि स्थापयामि ॥

११ ॐ विष्कुम्भादिसप्तयोगेभ्यो नमः विष्कुम्भादिसप्तयोगानावाहयामि स्थापयामि ॥

१२ ॐववबालवकरणाभ्यांनमःववबालवकरणेआवाहयामिस्था०

१३ ॐ सप्तद्वीपेभ्यो नमः सप्तद्वीपानावाहयामि स्थापयामि ॥

१४ ॐ ऋग्वेदाय नमः ऋग्वेदमावाहयामि स्थापयामि ॥

दक्षिणे–१५ पुष्यादिसप्तनक्षत्रेभ्यो नमः पुष्यादिसप्तनक्षत्राण्यावाहयामि स्थापयामि ॥

१६ॐ धृत्यादिसप्तयोगेभ्योनमः धृत्यादिसप्तयोगानावाह०स्था०॥

१७ ॐ कौलवतैतिलकरणाभ्यां नमः कौलवतैतिलकरणे आवाहयामि स्थापयामि ॥

१८ ॐ सप्तसागरेभ्यो नमः सप्तसागरानावाहयामि स्थापयामि ॥

१९ ॐ यजुर्वेदाय नमः यजुर्वेदमावाहयामि स्थापयामि ॥

पश्चिमे–२० ॐ स्वात्यादिसप्तनक्षत्रेभ्यो नमः स्वात्यादि सप्तनक्षत्राण्यावाहयामि स्थापयामि ॥

२१ ॐ वज्रादिसप्तयोगेभ्यो नमः वज्रादिसप्तयोगानावाह०स्था०॥

२२ ॐ गरवणिजकरणाभ्यां नमः गरवणिजकरणे आवाह०स्था० ॥
२३ ॐ सप्तपातालेभ्यो नमः सप्तपातालानि आवाहयामि स्थापयामि
२४ ॐ सामवेदाय नमः सामवेदमावाहयामि स्थापयामि ॥
उत्तरे–२५ ॐ अभिजिदादिसप्तनक्षत्रेभ्यो नमः अभिजिदादि सप्तनक्षत्राण्यावाहयामि स्थापयामि ॥
२६ ॐ साध्यादिषड्योगेभ्योनमः साध्यादिषड्योगानावाह०स्था०
२७ ॐ विशिष्टकरणायनमः विशिष्टकरणमावाहयामि स्थापयामि॥
२८ ॐ भूरादिसप्तलोकेभ्योनमः भूरादिसप्तलोकानावाह०स्थापयामि
२९ ॐ अथर्ववेदाय नमः अथर्ववेदमावाहयामि स्थापयामि ॥
वायव्याम्–३० ॐ ध्रुवाय नमः ध्रुवमावाहयामि स्थापयामि ॥
३१ ॐ सप्तऋषिभ्यो नमः सप्तऋषीनावाहयामि स्थापयामि ॥
३२ ॐ गङ्गादिसप्तसरिद्भ्योनमः गङ्गादिसप्तनदीः आवा०स्था०॥
३३ ॐ सप्तकुलाचलेभ्योनमः सप्तकुलाचलानावाहयामि स्थापयामि॥
३४ ॐ अष्टवसुभ्यो नमः अष्टवसूनावाहयामि स्थापयामि ॥
ईशान्याम्–३५ ॐ एकादशरुद्रेभ्योनमः एकादशरुद्रानावा०स्था०॥
३६ ॐ द्वादशादित्येभ्योनमः द्वादशादित्यानावाहयामि स्थापयामि॥
३७ ॐ एकोनपञ्चाशद्मरुद्भ्यो नमः एकोनपञ्चाशद्मरुतः आवाहयामि स्थापयामि ॥
३८ ॐ षोडशमातृभ्यो नमः षोडशमातृः आवाहयामि स्थापयामि॥
३९ ॐ षड्ऋतुभ्यो नमः षड्ऋतूनावाहयामि स्थापयामि ॥
आग्नेय्याम्–४० ॐ द्वादशमासेभ्यो नमः द्वादशमासानावाह०स्था०
४१ ॐ द्वाभ्यामयनाभ्या नमः द्वे अयने आवाहयामि स्थापयामि॥

४२ ॐ पञ्चदशतिथिभ्यो नमः पञ्चदशतिथीः आवाहयामि स्था०॥
४३ ॐ षष्टिसंवत्सरेभ्यो नमः षष्टिसंवत्सरानावाहयामि स्थाप०॥
४४ ॐ सुपर्णेभ्यो नमः सुपर्णानावाहयामि स्थापयामि ॥
नैर्ऋत्याम्–४५ ॐ नागेभ्यो नमः नागानावाहयामि स्थापयामि॥
४६ ॐ सर्पेभ्यो नमः सर्पानावाहयामि स्थापयामि ॥
४७ ॐ यक्षेभ्यो नमः यक्षानावाहयामि स्थापयामि ॥
४८ ॐ गन्धर्वेभ्यो नमः गन्धर्वानावाहयामि स्थापयामि ॥
४९ ॐ सिद्धेभ्यो नमः सिद्धानावाहयामि स्थापयामि ॥
५० ॐ विद्याधरेभ्यो नमः विद्याधरानावाहयामि स्थापयामि ॥
पूर्वे–५१ ॐअप्सरोभ्यो नमः अप्सरसः आवाहयामिस्थापयामि॥
दक्षिणे–५२ ॐराक्षसेभ्यो नमः राक्षसानावाहयामि स्थापयामि॥
पश्चिमे–५३ ॐ भूतेभ्यो नमः भूतानि आवाहयामि स्थापयामि ॥
उत्तरे–५४ ॐ मनुष्येभ्यो नमः मनुष्यानावाहयामि स्थापयामि ॥

प्रतिष्ठापनम्—ॐ मनोजूतिर्ज्जुषतामाज्यस्य बृहस्पतिर्य्यज्ञमिमं त०॥ ॥सूर्याद्यावाहितग्रहमण्डलदेवताः सुप्रतिष्ठिताः वरदाः भवत॥

पूजनम्–अग्न्युत्तारणप्राणप्रतिष्ठादिकृतग्रहमूर्तिं ताम्रपात्रे संस्थाप्य ध्यानादारभ्य स्नानान्तमुपचारान्कृत्वा ग्रहमण्डलोपरि कर्मठाः स्थापयन्ति तत्र मूलं न पश्यामः ।

ध्यानम्–ॐ ग्रहाऽ ऊर्ज्जाहुतयो व्यन्तो विप्राय मतिम् ॥ तेषां विशिप्रियाणां वो हमिषमूर्ज्जं समग्रभमुपयामगृहीतोसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ ॥ ॐभूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः ध्यायामि ॥

आसनम्—ॐपुरुषऽएवेद सर्वं यद्भूतं यच्च भाव्यम्॥उता० ॥२/२॥ ॐभूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः आसनं समर्पयामि ॥

पाद्यम्—ॐएतावानस्य महिमातोज्यायाँश्च पूरुषः॥ पादो० ॥३/३॥ ॐभूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः पाद्यं समर्पयामि ॥

अर्घ्यम्—धामन्तेविश्वम्भुवनमधिश्रितमन्त०॥२/२॥ॐभूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः अर्घ्यं समर्पयामि ॥

आचमनीयम्-ॐत्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहा०॥४/४॥ॐभूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः आचमनीयं समर्पयामि ॥

पञ्चामृतस्नानम्—ॐघृतेन सीता मधुना समज्यतां विश्वैर्देवैरनु मतामरुद्भिः॥ ऊर्जस्वती० ॥ २०/२॥ ॐभूर्भुवःस्वःसूर्यादिग्रहमण्डलदेवताभ्यो नमः पञ्चामृतस्नानं समर्पयामि ॥ पञ्चामृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

गन्धोदकस्नानम्—गन्धर्वस्त्वाविश्वावसुःपरिदधातुविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः॥३/२॥ ॐभूर्भुवःस्वः सूर्यादिग्रहमण्डलदेवताभ्योनमःगन्धोदकस्नानंसमर्पयामि॥गन्धोदकस्नानान्ते शुद्धोदकस्नानंसमर्पयामि॥शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि॥

उद्वर्तनस्नानम्—ॐअंशुनाते अंशुः पृच्यतांपरुषापरुः—॥गन्धस्ते० ॥२०/२७॥ ॐभूर्भुवःस्वःसूर्यादिग्रहमण्डलदेवताभ्योनमःउद्वर्तनस्नानं समर्पयामि॥उद्वर्तनस्नानान्ते उष्णोदकस्नानंसम०॥ उष्णोदकस्नानान्ते शुद्धोदकस्नानंसमर्पयामि॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि॥

अभिषेकः—ॐमहीऽऊर्जाकृतयो अन्तोविष्पाय०॥ १/२ ॥ ॐभूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः अभिषेकस्नानं समर्पयामि ॥

स्नानम्—ॐशुद्धवालः सर्वशुद्ध०॥ ३/२४ ॥ ॐभूर्भुवःस्वःसूर्यादिग्रहमण्डलदेवताभ्योनमः स्नानंसमर्पयामि॥ स्नानान्ते आचमनीयंसमर्पयामि॥

वस्त्रम्—ॐप्रजातोज्ज्यो० ॥ ३०/२९ ॥ ॐभूर्भुवःस्वःसूर्यादिग्रहमण्डलदेवताभ्योनमः वस्त्रोपवस्त्रेसमर्पयामि ॥ वस्त्रान्ते आचमनीयंसमर्पयामि॥

उपवीतम्—ॐसुशोदेवानां० ॥ ३/८ ॥ ॐभूर्भुवःस्वःसूर्यादिग्रहमण्डलदेवताभ्योनमः उपवीतं समर्पयामि॥ उपवीतान्तेआचमनीयंसमर्पयामि॥

गन्धः—ॐत्वाङ्गन्धर्वाऽअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः॥ त्वामौषधे० ॥ १२/९८ ॥ ॐभूर्भुवःस्वःसूर्यादिग्रहमण्डलदेवताभ्योनमःगन्धंसम०॥

अक्षताः—ॐअक्षन्नमीमदन्तह्यवप्रियाऽअधूषत ॥ अस्तो०॥ ३/५१ ॥ ॐभूर्भुवःस्वः सूर्यादिनवग्रहमण्डलदेवताभ्योनमः अक्षतान्समर्पयामि॥

पुष्पाणि—ॐओषधीः प्रतिमोदध्वम्पुष्पवतीः प्रसूवरीः ॥ अश्वा०॥ १२/७७॥ॐभूर्भुवःस्वःसूर्यादिग्रहमण्डलदेवताभ्योनमःपुष्पाणिस०॥

सौभाग्यद्रव्याणि—ॐअहिरिवभोगैः पर्य्येतिबाहुञ्ज्यायां०॥ २९/५० ॥ ॐभूर्भुवःस्वःसूर्यादिग्रहमण्डलदेवताभ्योनमःसौभाग्यद्रव्याणि सम० ॥

आभूषणानि—ॐस्वर्ण घर्म्मः स्वाहा स्वर्णार्कः स्वाहा० ॥ १८/५० ॥ ॐभूर्भुवःस्वःसूर्यादिग्रहमण्डलदेवताभ्योनमः आभूषणानिसमर्पयामि॥

धूपः—ॐअश्वस्य त्वा वृष्ण्णः शक्ना धूपयामि देवयजनेपृथिव्याः॥ मखाय त्वा मखस्य त्वा शीर्ष्णे॥अश्वस्य त्वा वृष्ण्णः शक्ना धूपयामि देवयजने पृथिव्याः ॥ मखाय त्वा०॥३७/९॥ॐभूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः धूपमाघ्रापयामि ॥

दीपः–ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा । अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा ॥ ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥ ॐभूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः दीपं दर्शयामि ॥

नैवेद्यम्–ॐअन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्रप्र दातारं तारिषऽऊर्जं नो धेहि द्विपदे चतुष्पदे ॥ ॐभूर्भुवःस्वःसूर्यादिग्रहमण्डलदेवताभ्योनमःनैवेद्यंनिवेदयामि ॥ देवाग्रेगोमयेनजलेन वा चतुष्कोणं मण्डलं कृत्वा तदुपरिनैवेद्यपात्रं निधाय तत्रतुलसीपत्रं निक्षिप्य गायत्रीमन्त्रेण सम्प्रोक्ष्य धेनुमुद्रां प्रदर्श्य ग्रासमुद्रया तर्जनीमध्यमाङ्गुष्ठैः–ॐप्राणायस्वाहा । मध्यमानामिकाङ्गुष्ठैः–ॐअपानायस्वाहा । कनिष्ठिकानामिकाङ्गुष्ठैः–ॐव्यानायस्वाहा । कनिष्ठातर्जन्यङ्गुष्ठैः–ॐउदानायस्वाहा । साङ्गुष्ठाभिःसर्वाङ्गुलिभिः ॐसमानायस्वाहा । पूर्वापोशनं समर्पयामि ॥

नैवेद्यमध्ये पानीयम्–एलोशीरलवङ्गादिकर्पूरपरिवासितम् । प्राशनार्थं कृततोयं गृहाणपरमेश्वर ॥ ॐभूर्भुवःस्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः नैवेद्यमध्येपानीयंस० ॥ उत्तरापोशनंसम० ॥ हस्तप्रक्षालनंसम० ॥ मुखप्रक्षालनं स० ॥ आचमनीयं स० ॥ करोद्वर्तनार्थे चन्दनं समर्पयामि ॥

फलम्–ॐयाः फलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः० ॥ ॐभूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः फलं समर्पयामि ॥

मुखवासार्थेताम्बूलम्–उतस्मास्य द्रवतस्तुरण्यत० ॥ ॐभूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः मुखवासार्थे ताम्बूलंसमर्पयामि ॥

दक्षिणा ॐयद्दत्तंयत्परादानंयत्पूर्तंयाश्चदक्षिणाः० ॥ ॐभूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः सुवर्णपुष्पदक्षिणां समर्पयामि ॥

। कर्पूरार्तिक्यम्—ॐ ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ॥ अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमञ्जुषध्वम् ॥ १९ ॥
ॐ भूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः कर्पूरार्तिक्यं दर्शयामि॥ जलेन प्रदक्षिणावर्तनम् । पुष्पैर्देववन्दनम् । अभिवन्दनम् । आत्मवन्दनम् । हस्तप्रक्षालनम् ॥

मन्त्रपुष्पाञ्जलिः—ॐ यज्ञेन यज्ञमयजन्त देवास्तानि० ॥ १६ ॥ ॐ भूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः मन्त्रपुष्पाञ्जलिं समर्पयामि ॥

॥ प्रदक्षिणा—ॐ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः—० ॥ १५ ॥ ॐ भूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः प्रदक्षिणां समर्पयामि ॥

। विशेषार्घ्यम्—अर्घ्यपात्रे जलं सम्पूर्य चन्दनपुष्पाक्षतसहितं नारिकेलं च धृत्वा—आदित्याद्या ग्रहाः सर्वे पीठे चात्र प्रतिष्ठिताः । ते गृह्णन्तु मया दत्तमिदमर्घ्यं नमोऽस्तु वः ॥ ॐ भूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः विशेषार्घ्यं समर्पयामि ॥

प्रार्थनापूर्वकनमस्कारः—आयुर्विद्या धनं सौख्यं यशः शौर्यं च पुष्कलम् । ददतु धनपुत्रान्मे सर्वान्कामांश्च वै सदा ॥ यत्कृतं पूजनं देवा भक्तिश्रद्धाविवर्जितम् ॥ परिगृह्णन्तु तत्सर्वं सूर्याद्या ग्रहनायकाः॥ आदित्यादिग्रहाः सर्वे नानावर्णाः पृथग्विधाः । सुप्रसन्नाः प्रयच्छन्तु सौभाग्यं मम सर्वदा॥ ॐ भूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः प्रार्थनापूर्वकं नमस्करोमि ॥

राजोपचाराः—छत्रं च चामरं चैव व्यजनं दर्पणं तथा । पादुकादि च सर्वं वै गृह्यतां ग्रहनायकाः ॥ ॐ भूर्भुवः स्वः सूर्यादिग्रहमण्डलदेवताभ्यो नमः राजोपचारान्समर्पयामि ॥ ( अभावे कल्पयामि ) ॥

अर्पणम्—अनेन यथाज्ञानेन यथामिलितोपचारद्रव्यैः ध्यानावाहनासनपाद्यार्घ्याचमनीयस्नानवस्त्रोपवीतगन्धाक्षतपुष्पधूपदीपनैवेद्यताम्बूलदक्षिणाप्रदक्षिणामन्त्रपुष्परूपैः षोडशोपचारैः अन्योपचारैश्च कृतपूजनेन सूर्यादिग्रहमण्डलदेवताः प्रीयन्ताम् ॥

कलशस्थापनम्—ग्रहवेदीशानदिग्भागे गोमयोपलिप्ते सितैस्तन्दुलैः चतुर्विंशतिदलम् अष्टदलं वा कमलं सकर्णिकं विलिख्य तस्यां कर्णिकायाम् अव्रणं कलशं कलशस्थापनविधिना स्थापयेत् ॥

भूमिं स्पृष्ट्वा—ॐमही द्यौ॒ पृथिवी च न ऽ इमं यज्ञम्मिमिक्षताम् ॥ पिपृतान्नो भरीमभिः ॥ ३३ ॥

पद्मोपरि यवप्रक्षेपः—ॐओषधयः समवदन्त सोमेन सह राज्ञा ॥ यस्मै कृणोति ब्राह्मणस्तꣳ राजन्पारयामसि ॥ ३४ ॥

पद्मोपरि कलशं स्थापयेत्—ॐ आजिघ्र कलशम्मह्यात्वा विशन्त्विन्दवः। पुनरूर्ज्जा निवर्त्तस्व सानः सहस्रन्धुक्ष्वोरुधारा पयस्वती० ॥ ३५ ॥

कलशे जलपूरणम्—ॐवरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनी स्थो वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसदनमसि वरुणस्य० ॥ ३६ ॥

गन्धप्रक्षेपः—त्वाङ्गन्धर्वाऽ अखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥ ३७ ॥

धान्यप्रक्षेपः—ॐधान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा ॥ दीर्घामनु प्रसितिमायुषे धान्देवो वः सविता० ॥ ३८ ॥

सर्वौषधिप्रक्षेपः—ॐया ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्पुरा ॥ मनै नु बभ्रूणामहꣳ शतन्धामानि सप्त च ॥ ३९ ॥

दूर्वाप्रक्षेपः—ॐकाण्डात्काण्डात्प्ररोहन्ती परुषःपरुषस्परि ॥ एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ २०/१३ ॥

पञ्चपल्लवप्रक्षेपः—ॐअश्वत्थे वो निषदनम्पर्णे वो वसतिष्कृता ॥ गोभाजऽ इत्किलासथ यत्सनवथ पूरुषम् ॥ ७९/१२ ॥

सप्तमृद्प्रक्षेपः—ॐस्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म सप्रथाः ॥ ३५/२१ ॥

फलप्रक्षेपः—ॐया? फलिनीर्याऽ अफलाऽ अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ ८९/१२ ॥

पञ्चरत्नप्रक्षेपः—ॐपरि वाजपतिः कविरग्निर्हव्यान्यक्रमीत ॥ दधद्रत्नानि दाशुषे ॥ २५/११ ॥

हिरण्यप्रक्षेपः—ॐहिरण्यगर्भ?समवर्त्तताग्रे भूतस्यजात?पतिरेकऽआसीत्॥स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम॥४/१३॥

रक्तसूत्रेण वस्त्रेण च कलशं वेष्टयेत्—ॐसुवासुवासाः परिवीतऽआगात्सऽउश्रेयान्भवति जायमानः ॥ तन्धीरासः कवयऽ उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥ पारस्करगृह्यसूत्रकाण्डम् २ । कण्डिका २ । मन्त्रः ९ ॥

पूर्णपात्रमुपरिन्यसेत्—ॐपूर्णा दर्वि परा पत सुपूर्णा पुनरापत ॥ वस्नेव विक्रीणावहाऽ इषमूर्जꣳ शतक्रतो ॥ ४९/३ ॥

वरुणमावाहयेत्—तत्त्वेत्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणोदेवता वरुणावाहने विनियोगः। ॐतत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोध्युरुशꣳस मा नऽ आयुः

प्रमोंषीः ॥ ४/२१ ॥ ॐभूर्भुवः स्वः अस्मिन्कलशे वरुणं साङ्गम् आवाहयामि स्थापयामि ।

प्रतिष्ठापनम्–ॐमनोजूतिर्जुषतामाज्यस्य० ॥ १३/२ ॥ ॐवरुण सुप्रतिष्ठितो वरदो भव॥ ॐभूर्भुवः स्वः वरुणाय नमः इत्यनेन सम्पूजयेत्॥

पुष्पाञ्जलिः–वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम् । सुत्रामा यशसा बलं दधाना यज्ञमाशत॥ ७१/२० ॥ अनेन पूजनेन वरुणः प्रीयताम्॥

कलशाभिमन्त्रणपूर्वकदेवतावाहनम् ॥ अनामिकया कलशं स्पृष्ट्वा– सर्वे समुद्राः० । आयान्तु मम० ॥ कलशस्य मुखे० मूले तत्र० ॥ कुक्षौ तु० । ऋग्वेदोऽथ०॥ अङ्गैश्च सहिताः०। अत्रगायत्री०॥ आयान्तुमम० ॥ वरुणाद्यावाहितकलशाधिष्ठातृदेवताभ्यो नमः इत्यनेन पूजयेत् ॥

कलशं प्रार्थयेत्–देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः । त्वत्प्रसादादिदं कर्म कर्तुमीहे जलोद्भव । सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ इति प्रार्थयित्वा कलशं स्पृष्ट्वा साङ्गरुद्रजपः कार्यः ॥

---

१ अत्र केचन अर्वाचीना ग्रन्थकारा कल्शात्प्रभृति असङ्ख्यातेति मन्त्रेण रुद्रमावाह्य पूजयन्ति । केचन कलशोपरि पूर्णपात्रे रौप्यमयीं रुद्रमूर्ति संस्थाप्य पूजयन्ति परं च रुद्रकल्पद्रुम–प्रयोगाब्धि–देवभट्टकृतप्रतिष्ठाप्रयोग–शान्तिरत्नाकर–काशीदीक्षितकृतमहारुद्रप्रयोग–खण्डदीक्षितकृतमहारुद्रप्रयोग–स्मार्तगङ्गाधर्यादिप्राचीनग्रन्थेषु वरुणमावाह्य

मण्डलोपरि पञ्चवर्णं वितानं बध्नीयात्—इदं पुष्पमाला शोभितं वितानं बृहस्पतिदेवताकम् आदित्यादिग्रहेभ्यो न मम इति उत्सृजेत् ॥ इति ग्रहस्थापनप्रयोगः ॥

ग्रहपीठादुत्तरतः ऐशान्यां हस्तोच्छ्रायवत्यां चतुरस्रायां रुद्रवेद्यां त्रयश्चत्वारिंशद्रेखात्मकं हरिहरात्मकं द्वादशलिङ्गतोभद्रमण्डलं लिखित्वा तत्र स्थित्वा हस्ते जलमादाय महारुद्राख्यस्य कर्मणः साङ्गतासिद्ध्यर्थम्

---

साङ्गरुद्रजपः कार्यः इत्युक्तत्वात् अस्माभि. प्रयोगे तथैवादृतमस्ति। केचन अवढ्याततेति मन्त्रेण होममपि कुर्वन्ति परं न तत्र मूलवचनं पश्यामः । केचनमरुदेशीयग्रन्थकारास्तु—अवढ्याततेति सम्पूज्यो रुद्रो रुद्रघटाग्रभक्षि । प्रजापतेरग्रभागे शनिमण्डलके शुभे॥ पूज्यो विष्णुः स्वसूक्तेन षोडशार्चेन तत्र वै । रुद्रकुम्भाग्रतः पूज्या चामुण्डा जातवेदसे॥ शिवः शिवेति गौर्यादिमातरश्चैव पूजयेत्॥ सूर्याच्च पूर्वदिग्भागे अग्निमीळेऋचा ततः । इषेत्वेति यजुर्वेदं सूर्याद्दक्षिणतो न्यसेत् ॥ सूर्याच्च पश्चिमे साम अग्नआयाहि मन्त्रतः । रवेरुत्तर-दिग्भागे शन्नोदेवीत्यथर्वणम् । इत्यादिप्रमाणपुरःसरं रुद्रं विष्णुं चामुण्डां गौर्यादिमातरः ऋगादिवेदांश्च ग्रहमण्डले स्थापयन्ति तद्विषये प्राचीनग्रन्थेषु मूलं न पश्यामः॥वशिष्ठमतं स्वीकृत्य संस्कारभास्करकारेणापि तस्मिन्कलशे अवढ्याततेति मन्त्रेण रुद्रस्थापनमुक्तं परं च मत्स्यपुराणादिग्रन्थेषु मूलं न पश्यामः ।। गौडानामयमाचारो दरीदृश्यते ॥

१ महारुद्रे रुद्रवेदी—खण्डदीक्षिताः—मध्यभागे कुण्डकरणे तु—कुण्डादीशान्या मण्डपमध्य एव रुद्रवेदी कार्या—गर्तस्योत्तरपूर्वेण स्थण्डिलं हस्तमानकम्। द्विवप्रं चतुरस्रं च वितस्त्युच्छ्रायसम्मतम्॥ तत्र द्व्यङ्गुलोच्छ्रायः प्रथमो वप्रः ॥ त्र्यङ्गुलोच्छ्रायो द्वितीयो वप्रः ॥ विस्तारस्तु द्वयोरप्यङ्गुलमितः ॥ वप्रोपरि वेदी सप्ताङ्गुलोच्चा हस्तविस्तृता च वप्राभ्यां सह द्वादशाङ्गुलोन्नता भवति ॥ तद्दक्षिणतो ग्रहवेदी कार्या—

## अग्निपुराणोक्तः सर्वतोभद्रात्मकद्वादशलिङ्गतोभद्रमण्डलदेवतास्थापनं करिष्ये ॥

अथ हरिहरात्मकं पञ्च द्वादशलिङ्गतोभद्रमाह उक्तं च मण्डलसंग्रहे ॥
त्रयश्चत्वारिंशद् ४३ रेखात्मकम् ॥

त्रिचत्वारिंशतीरेखाः प्रागुदीचीः करोत्यथ ॥ खण्डेन्दुत्रिपदं कोणे शृङ्खला सप्तभिः पदैः ॥ लिङ्गं स्याचन इंशस्य अष्टाविंशतिभिः पदैः॥लिङ्गस्य पार्श्वतो वापी वाप्यालिङ्ग ततः परम्॥ एवं वाप्यश्चतस्रः स्युर्लिङ्गाना मध्यतस्त्रिकम् ॥ मध्ये स्यात्सर्वतोभद्रं सत्वरजस्तमोवृतम्॥शृङ्खलापिङ्गलवाप्या ऊर्ध्वं पीतेन पूरयेत्॥वापी पीतान्तराले तु रक्तवर्णेन पूरयेत् ॥ एवं द्वादशभिर्लिङ्गैः स्याद्धरिहरमण्डलम्॥ वैष्णवे च तथा शैवे व्रते कुर्यात्सुशोभनम् ॥ इति भद्रमार्तण्डे हरिहरात्मकं पञ्च द्वादशलिङ्गतोभद्रं नाम एकोनविंशतिमण्डलम् ॥

उक्तं प्रस्तराजे कौमुद्यां च—अर्कलिङ्गात्मकं भद्रं शृणु शिष्य यथोच्यते। प्रागुदीच्या कृता रेखा षट्त्रिंशद्भिः प्रकल्पयेत्॥ पदानि द्वादशशत पञ्चविंशतिरेव च॥खण्डेन्दुत्रिपदः कोणे शृङ्खला षट्पदैः स्मृता ॥ त्रयोदशपदा वल्ली भद्रं तु नवभिः पदैः । त्रयोदशपदा वापी लिङ्गमष्टादशैः स्मृतम्॥ लिङ्गत्रयस्य पङ्क्तौ तु शोभाकोष्ठाश्चतुर्दश । तेषामुपरि पङ्क्तौ तु कोष्ठाः सप्तदशैव तु॥ पूजा पङ्क्तिस्तु विज्ञेया परितः परिकीर्तिता । पूजापङ्क्त्यन्तरापङ्क्तौ कोष्ठा द्वात्रिंशसंख्यया ॥ परिधिः स च विज्ञेयो मंडलाभ्यन्तराद्बयोः । परिध्यन्तरकोष्ठेषु सर्वतोभद्रमालिखेत्॥विशेषश्चात्र विज्ञेयः शृङ्खला षट्पदा भवेत्। त्रयोदशपदा वल्ली भद्रं तु नवभिः पदैः॥ पञ्चविंशत्पदा वापी परिधिः षोडशात्मकः॥ मध्ये नवपदं पद्मं कर्णिका केसरान्वितम् ॥ सत्त्वरजस्तमो वर्णाः परितो मण्डलस्य तु । त्रयः परिधयः कार्यास्तत्र द्वाराणि पूजयेत् ॥ सितेन्दुः शृङ्खला कृष्णा वल्ली नीला प्रकीर्तिता । भद्रं चैवारुणं ज्ञेयं वापी स्याच्छ्वेतवर्णिका ॥ लिङ्गानि कृष्णवर्णानि पार्श्वतो द्वादशैव तु । परिधिः पीतवर्णः स्यात्कमलं पञ्चवर्णकम् ॥

वामहस्ते अक्षतान् गृहीत्वा तस्मात् दक्षिणहस्तेन अक्षतानादाय देवतामावाहयेत् ॥

१ ब्रह्मंजज्ञानमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः आदित्योदेवता ब्रह्मावाहने विनियोगः—ॐब्रह्मं जज्ञानम्प्रथमम्पुरस्ताद्विसीमुत? सुरुचो वेनऽ आवः॥ सबुध्न्या उपमाऽ अस्य विष्ठा? सतश्च योनिमसतश्च विवः ॥ $\frac{३}{१३}$ ॥ मध्ये कर्णिकायां—ॐभूर्भुवः स्वः ब्रह्मणे नमः ब्रह्माणमावाहयामि स्थापयामि भोब्रह्मन् इहागच्छ इह तिष्ठ ॥

---

१ नाममन्त्रैः पीठोपरि मण्डलदेवतास्थापनार्थं ब्रह्मादिपद्पश्चात् सर्वतोभद्रमण्डलदेवतावाहनस्थापनप्रतिष्ठापूजनप्रयोगः ॥

१ मध्येकर्णिकायाम्—ॐभूर्भुवःस्वः ब्रह्मणे नमः ब्रह्माणमा०स्था०भो ब्रह्मन्इ०इ०॥

२ उत्तरेपरिध्यन्तःवाप्याम्—ॐभू० सोमाय नमः सोममा० स्थाप०भो सोम इ०इ०॥

३ ऐशान्यांखण्डेन्दौ—ॐभूर्भुवः स्वः ईशानाय नमः ईशानमा०स्था०भोईशान इ०इ.॥

४ पूर्ववाप्याम्—ॐभूर्भुवः स्वः इन्द्राय नमः इन्द्रमावाहयामि स्थाप० भो इन्द्रइ०इ०॥

५ आग्नेय्यांखण्डेन्दौ—ॐभूर्भुवः स्वः अग्नये नमः अग्निमा० स्था० भो अग्ने इ०इ०॥

६ दक्षिणेवाप्याम्—ॐभूर्भुवः स्वः यमाय नमः यममा०स्था०भो यम इहागच्छ इइ०॥

७ नैर्ऋत्यांखण्डेन्दौॐभूर्भुवःस्वः निर्ऋतये नमः निर्ऋतिमा०स्था०भो निर्ऋते इ०इ०॥

८ पश्चिमेवाप्याम्—ॐभूर्भुवः स्वः वरुणाय नमः वरुणमा०स्था० भो वरुण इ०इ०॥

९ वायव्यांखण्डेन्दौ—ॐभूर्भुवः स्वः वायवे नमःवायुमा०स्था०भोवायोइहागच्छइ०॥

१० वायुसोममध्ये भद्रे—ॐभू० अष्टवसुभ्यो नमः अष्टवसूना०स्था० भोअष्ट०इ०इ०॥

११ सोमेशानमध्ये भद्रे—ॐभूर्भुवः स्वः एकादशरुद्रेभ्यो नमः एकादशरुद्रानावाहयामि स्थापयामि भो एकादशरुद्राः इहागच्छत इह तिष्ठत ॥

१२ ईशानपूर्वयोर्मध्ये भद्रे—ॐभूर्भुवः स्वः द्वादशादित्येभ्यो नमः द्वादशादित्यानावाहयामि स्थापयामि भो द्वादशादित्याः इहागच्छत इह तिष्ठत ॥

२वयःसोमेत्यस्य बन्धुर्ऋषिः गायत्री छन्दः सोमो देवता सोमावाहने विनियोगः—ॐवयः सोम व्रते तव मनस्तनूषु बिभ्रतः॥ प्रजावन्तः

१३ इन्द्राग्निमध्येमद्रे—ॐभूर्भुवः स्वः अश्विभ्या०अ०आ०स्था० भोअश्विनौ इ०इ०॥
१४ अग्नियममध्येमद्रे—ॐभू०विश्वेभ्यो देवेभ्यो०विश्वा०आ०स्था०भोविश्वेदे०इ०इ०॥
१५ यमनिर्ऋतिमध्येमद्रे—ॐभू० सप्तयक्षेभ्यो० स०आ०स्था० भो सप्त०इ०इहतिष्ठ॥
१६ निर्ऋतिवरुणमध्ये मद्रे—ॐभू०भूतनागेभ्यो०भूतनागा०आ०स्था०भोभू०इ०इ०॥
१७ वरुणवायुमध्येभद्रे—ॐभूर्भु० गन्धर्वाप्सरोभ्यो० ग०आ० स्था० भो ग०इ०इ०॥
१८ ब्रह्मसोममध्येवाप्याम्—ॐभूर्भुवः स्वः स्कन्दाय०स्कन्दमा०स्था०भो स्कन्द इ०इ०
१९ स्कन्दादुत्तरे—ॐभूर्भुवः स्व. नन्दिनेनमः नन्दिनमा०स्था० भो नन्दिन् इ०इ०॥
२०नन्दिकेश्वरादुत्तरतः ॐभूर्भु०शूलमहाकालाभ्या०शूल०आ०स्था०भोशूल०इ०इ०॥
२१ ब्रह्मेशानमध्येवल्ल्याम्—ॐभूर्भुवः दक्षादिसप्तगणे० दक्षा० स्था०भो द०इ०इ०॥
२२ ब्रह्मेन्द्रमध्येवाप्याम्—ॐभूर्भुवः स्वः दुर्गायैनमः दुर्गामा०स्था० भोदुर्गेइहा०इ०॥
२३ दुर्गापूर्वे—ॐभूर्भुवःस्वः विष्णवे नमः विष्णुमावा० स्थापयामि भोविष्णो इ०इ०॥
२४ ब्रह्माग्निमध्येवल्ल्याम्—ॐभूर्भुवःस्वः स्वधायै नमः स्वधामा०स्था०भोस्वधेइ०इ०॥
२५ ब्रह्मयमयोर्मध्ये वाप्याम्—ॐभूर्भुवः स्वः मृत्युरोगाभ्यां नमः मृत्युरोगौ आवाहयामि स्थापयामि भो मृत्युरोगौ इहागच्छतम् इह तिष्ठतम् ॥
२६ ब्रह्मनिर्ऋतिमध्येवल्ल्याम्—ॐभूर्भुवः०गणपतयेनमः गणपति०स्था०भोग०इ०इ०॥
२७ब्रह्मवरुणमध्येवाप्याम्—ॐभूर्भुवः स्वः अद्भ्यो०अपआ०स्था०भो आपइहा०इइ०॥
२८ ब्रह्मवायुमध्येवल्ल्याम्—ॐभूर्भुवःस्वः मरुद्भ्यो०मरुतःआ०स्था०भोमरुतःइ०इ०॥
२९ ब्रह्मणः पादमूले कर्णिकाधः—ॐभू० पृथिव्यै०पृथिवीमा०स्था०भोपृथिवि इ०इ०॥
३० ब्रह्मणः पादमूले कर्णिकाधः—ॐभूर्भुवः स्वः गङ्गादिनदीभ्यो नमः गङ्गादिनदीः आवाहयामि स्थापयामि भो गङ्गादिनद्यः इहागच्छत इह तिष्ठत ॥
३१ ब्रह्मणः पाद०गङ्गाद्युत्तरे—ॐभू०सप्तसागरेभ्यो०स०आ०स्था० भो सप्त०इ०इ०॥
३२ कर्णिकोपरि—ॐभूर्भुव.स्वः मेरवे नमः मेरुमा० स्थापयामि भो मेरो इहा०इइ०॥

सन्नेयहि॥५६॥ उत्तरे परिध्यन्तिके वाप्याम्–ॐभूर्भुवः स्वः सोमाय नमः सोममावाहयामि स्थापयामि भो सोम इहागच्छ इह तिष्ठ ॥

॥ मण्डलबाह्ये श्वेतपरिधौ उत्तरादिक्रमेण गदाद्यष्टायुधदेवतावाहनम् ॥

३३ उत्तरे सोमसमीपे–ॐभूर्भुवः स्वः गदायै नमः गदामा०स्था०भो गदे इ०इहतिष्ठ॥
३४ ऐशान्यामीशानसमीपे–ॐभूर्भुवः स्वः त्रिशूलाय०त्रिशूलमा०स्था०भोत्रिशूल इ.इ.॥
३५ पूर्वे इन्द्रसमीपे–ॐभूर्भुवः स्वः वज्राय नमः वज्रमा० स्था०भो वज्र इहा० इह०॥
३६ आग्नेय्याम् अग्निसमीपे–ॐभूर्भुवः स्वः शक्तये० शक्तिमा० स्था०भो शक्ते इ०इ०॥
३७ दक्षिणे यमसमीपे–ॐभूर्भुवः स्वः दण्डाय नमः दण्डमा०स्था०भोदण्ड इ० इ०॥
३८नैर्ऋत्यां निर्ऋतिसमीपे–ॐभूर्भुवः स्वः खड्गाय नमः खड्गमा०स्था०भो खड्ग इ०इ०
३९ पश्चिमे वरुणसमीपे–ॐभूर्भुवः स्वः पाशाय नमः पाशमा०स्था०भोपाशइ० इहतिष्ठ॥
४०वायव्यां वायुसमीपे–ॐभूर्भुवः स्वः अङ्कुशाय०अङ्कुशमावा०स्था०भोअङ्कुशइ०इ०॥

॥ मण्डलबाह्ये रक्तपरिधौ उत्तरादिक्रमेण गौतमाद्यष्टदेवतावाहनम् ॥

४१ उत्तरे–ॐभूर्भुवः स्वः गौतमाय नमः गौतममा०स्था०भो गौतम इहागच्छ इह०॥
४२ऐशान्याम् ॐभूर्भुवः स्वः भरद्वाजाय नमः भरद्वाजमा०स्था०भोभरद्वाजइहा०इह०॥
४३पूर्वे–ॐभूर्भुवः स्वः विश्वामित्राय नमः विश्वामित्रमा०स्था०भोविश्वामित्र इ०इ०॥
४४ आग्नेय्याम्–ॐभूर्भुवः स्वः कश्यपाय नमः कश्यपमा०स्था०भो कश्यप इ०इहतिष्ठ॥
४५ दक्षिणे–ॐभूर्भुवः स्वः जमदग्नये नमः जमदग्निमा० स्था० भो जमदग्ने इ०इह०॥
४६ नैर्ऋत्याम्–भूर्भुवः स्वः वसिष्ठाय नमः वसिष्ठमा०स्थापयामि भो वसिष्ठ इ० इ० ॥
४७ पश्चिमे–ॐभूर्भुवः स्वः अत्रये नमः अत्रिमा०स्थापयामि भो अत्रे इहागच्छ इह०॥
४८ वायव्याम्–ॐभूर्भुवः स्वः अरुन्धत्यै नमः अरुन्धतीमा०स्था० भोअरु०इ०इ०॥

॥ मण्डलबाह्ये कृष्णपरिधौ पूर्वादिक्रमेण ऐन्द्र्याद्यष्टदेवतावाहनम् ॥

४९ पूर्वे–ॐभूर्भुवः स्वः ऐन्द्र्यै नमः ऐन्द्रीमावाहयामि स्थापयामि भो ऐन्द्रि इहागच्छइ०॥
५० आग्नेय्याम्–ॐभूर्भुवः स्वः कौमार्यै नमः कौमारीमा०स्था०भो कौमारि इ० इ०॥

३ तमीशानमित्यस्य गोतमऋषिः जगती छन्दः विश्वेदेवा देवताः ईशानावाहने विनियोगः—ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे व्वयम्॥पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये॥ ३६/१८॥ऐशान्याम्—परिध्यन्तः खण्डेन्दौ ॐभूर्भुवः स्वः ईशानाय नमः ईशानमावाहयामि स्थापयामि भो ईशान इहागच्छ इह तिष्ठ ॥

४ त्रातारमित्यस्य गर्गऋषिः त्रिष्टुप्छन्दः इन्द्रो देवता इन्द्रावाहने विनियोगः—ॐत्रातारमिन्द्रमवितारमिन्द्रँ हवे हवे सुहवँ शूरमिन्द्रम्॥ ह्वयामि शक्रम्पुरुहूतमिन्द्रँ स्वस्ति नो मघवा धात्विन्द्रः ॥ २०/५०॥ पूर्वपरिध्यन्तः वाप्याम्—ॐभूर्भुवः स्वः इन्द्राय नमः इन्द्रमावाहयामि स्थापयामि भो इन्द्र इहागच्छ इह तिष्ठ ॥

५ त्वन्नोअग्नेइत्यस्यहिरण्यस्तूपऋषिःजगतीछन्दः अग्निर्देवता अग्न्यावाहनेविनियोगः ॐत्वन्नोऽअग्नेतवदेवपायुभिर्म्मघोनोरक्षतन्न्वश्चवन्द्य॥ त्रातातोकस्यतनयेगवामस्यनिमेषँ रक्षमाणस्तवव्रते ॥ ३४/१३ ॥ आग्नेय्यां खण्डेन्दौ—ॐभूर्भुवः स्वः अग्नये नमः अग्निमा०स्था०भोअग्नेइ०इहतिष्ठ॥

६ यमायत्वेत्यस्य दध्यङ्ङाथर्वणऋषिः यजुश्छन्दः यातोदेवता यमावाहने विनियोगः-ॐयमायत्वाङ्गिरस्वते पितृमते स्वाहा॥स्वाहा घर्म्माय

५१ दक्षिणे—ॐभूर्भुवः स्वः ब्राह्म्यै नमः ब्राह्मीमा०स्थापयामि भोब्राह्मि इहा० इह तिष्ठ॥
५२ नैर्ऋत्याम्—ॐभूर्भुवः स्वः वाराह्यै नमः वाराहीमावाहयामि स्था०भोवाराहि इ०इ०॥
५३ पश्चिमे—ॐभूर्भुवः स्वः चामुण्डायै नमः चामुण्डामा०स्था०भो चामुण्डे इ०इइ०॥
५४ वायव्याम्—ॐभूर्भुवः स्वः वैष्णव्यै नमः वैष्णवीमा०स्था०भो वैष्णवि इ०इहतिष्ठ॥
५५ उत्तरे ॐभूर्भुवः स्वः माहेश्वर्यै नमः माहेश्वरीमा०स्था०भो माहेश्वरि इहागच्छ इ०॥
५६ ऐशान्याम्—ॐभूर्भुवः स्वः वैनायक्यै०वैनायकीमा०स्था० भो वैनायकि इ०इ०॥

स्वाहा घर्म्म? पित्रे ॥ ३/२ ॥ दक्षिणे वाप्याम्—ॐभूर्भुवः स्वः यमाय नमः यममावाहयामि स्थापयामि भो यम इहागच्छ इह तिष्ठ ॥

७ असुन्वन्तमित्यस्य मधुच्छन्दाऋषिः त्रिष्टुप्छन्दः निर्ऋतिर्देवता निर्ऋत्यावाहनेविनियोगः—ॐअसुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य ॥ अन्यमस्मदिच्छ सा तऽ इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥ ६२/१२ ॥ नैर्ऋत्यां खण्डेन्दौ—ॐभूर्भुवः स्वः निर्ऋतये नमः निर्ऋतिमावाहयामि स्थापयामि भो निर्ऋते इहागच्छ इह तिष्ठ ॥

८ तत्त्वायामीत्यस्यशुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणो देवतावरुणावाहने विनियोगः—ॐतत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः—॥ अहेडमानोवरुणेहबोद्ध्युरुशꣳसमानऽआयुः प्रमोषीः ॥ २/१८ ॥ पश्चिमेवाप्याम्ॐभूर्भुवः स्वः वरुणाय नमः वरुणमा०स्था०भोव०इ०इ०

९ आनोनियुद्भिरित्यस्य वसिष्ठऋषिः त्रिष्टुप्छन्दः वायुर्देवता वाय्वावाहने विनियोगः—ॐआ नो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् ॥ वायोऽ अस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः सदा नः ॥ २/२७ ॥ वायव्या खण्डेन्दौ—ॐभूर्भुवः स्वः वायवे नमः वायुमावाहयामि स्थापयामि भो वायो इहागच्छ इह तिष्ठ ॥

१० सुगावो इत्यस्यात्रिऋषिः त्रिष्टुप्छन्दः देवा देवताः अष्टवस्वाहने विनियोगः—ॐसुगा वो देवाः सदना ऽ अकर्म्म यऽ आजग्मेदꣳ सवनञ्जुषाणा? ॥ भरमाणा वहमाना हवीꣳष्यस्मे धत्त वसवो वसूनि

---

१० ध्रुवोऽध्वरश्च सोमश्च ह्यापश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥

स्वाहा॥ ५८॥ वायुसोममध्ये भद्रे—ॐभूर्भुवः स्वः अष्टवसुभ्यो नमः अष्टवसूनावाहयामि स्थापयामि भो अष्टवसवः इहागच्छत इह तिष्ठत ॥

११ रुद्रा? सꣳसृज्येत्यस्य सिन्धुद्वीपऋषिः अनुष्टुप्छन्दः रुद्रो देवता रुद्रावाहने विनियोगः—ॐरुद्रा? सꣳसृज्य पृथिवीम्बृहज्ज्योतिꣳ समीधिरे ॥ तेषाम्भानुरजस्र इच्छुक्रो देवेषु रोचते ॥ ५४॥ सोमेशानमध्ये भद्रे—ॐभूर्भुवः स्वः एकादशरुद्रेभ्यो नमः एकादशरुद्रानावाहयामि स्थापयामि भो एकादशरुद्राः इहागच्छत इह तिष्ठत ॥

१२ यज्ञोदेवानामित्यस्य कुत्सऋषिः यजुरन्तं त्रिष्टुप्छन्दः आदित्यो देवता द्वादशादित्यावाहने विनियोगः—ॐयज्ञो देवानाम्प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः— ॥ आ वोर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासदादित्येभ्यस्त्वा ॥ ६ ॥

ईशानपूर्वयोर्मध्ये भद्रे—ॐभूर्भुवःस्वः द्वादशादित्येभ्योनमः द्वादशादित्यानावाहयामि स्थापयामि भो द्वादशादित्याः इहागच्छतइहतिष्ठत॥

१३ यावाङ्कशेत्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः अश्विनौ देवते अश्विनावाहने विनियोगः—ॐया वाङ्कशा मधुमत्यश्विना सूनृतावती ॥ तया यज्ञम्मिमिक्षतम् ॥ उपयामगृहीतोस्यश्विभ्यान्त्वैष ते

११ वीरभद्रश्च शम्भुश्च गिरिशश्च महायशा । अजैकपादहिर्बुध्न्य पिनाकी चापराजित । भुवनाधीश्वरश्चैव कपाली च दिशांपति । स्थाणुर्भगश्च भगवान्रुद्रा एकादश स्मृता ॥ १२ आदित्य भास्कर चैव प्रभाकरदिवाकरौ ॥ सूर्ये ग्रहपति ब्रध्न तेजोरूप हरिद्वरम् ॥ सविताश्च वेदमूर्ति च त्रिदैवत्य क्रमेण च ॥ इत्यादिद्वादशादित्या मण्डले स्थापयाम्यहम् ॥

योनिर्माद्धींभ्यान्त्वा॥[५/३]॥इन्द्राग्निमध्ये भद्रे—ॐभूर्भुवः स्वः अश्विभ्यां नमः अश्विनौ आवाहयामि स्थापयामि भो अश्विनौ इहागच्छतम् इह तिष्ठतम् ॥

१४ ओमासश्चर्षणीत्यस्य मधुच्छन्दाऋषिः गायत्रीछन्दः विश्वेदेवा देवताः विश्वेदेवावाहने विनियोगः—ॐओमासश्चर्षणीधृतो विश्वे देवा सुऽ आगत ॥ दाश्वाᳬंसो दाशुषंः सुतम् ॥ उपयामगृहीतोसि विश्वेभ्यस्त्वा देवेभ्यऽएष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यंः ॥[३३/७]॥ अग्नियममध्ये भद्रे—ॐभूर्भुवः स्वः विश्वेभ्यो देवेभ्यो नमः विश्वान्देवानावाहयामि स्थापयामि भो विश्वेदेवाः इहागच्छत इह तिष्ठत ॥

१५ अभित्यमित्यस्य वत्सऋषिः अष्टिच्छन्दः सविता देवता सप्तयक्षावाहने विनियोगः—ॐअभि त्यन्देवᳬ सवितारमोण्योंः कविक्रतुमर्चामि सत्यसंवᳬ रत्नधामभि प्रियम्मतिङ्कविम् ॥ ऊर्द्ध्वा यस्यामतिर्भाऽ अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपास्वंः ॥ प्रजाभ्यस्त्वा प्रजास्त्वानुप्राणन्तु प्रजास्त्वमनुप्राणिहि ॥[४/२५]॥ यमनिर्ऋतिमध्ये भद्रे—ॐभूर्भुवः स्वः सप्तयक्षेभ्यो नमः सप्तयक्षानावाहयामि स्थापयामि भो सप्तयक्षाः इहागच्छत इह तिष्ठत ॥

१६ भूतायत्वेत्यस्य प्रजापतिऋषिः गायत्रीछन्दः हविर्देवता भूतनागावाहने विनियोगः—ॐभूताय त्वा नारातये स्वरभिविख्येषन्दᳬ

---

१५ सोमपाश्चग्निष्वात्ताश्चबर्हिषदः सुकालकः। एकश्चैव शुचश्चैव सप्तमो द्वितीयसोमपाः। एते तु सप्तयक्षाश्च स्थाप्यावै मण्डले शुभे ॥ १६ अनन्तो वासुकिश्चैव कालियो मणिभद्रकः।शङ्खश्चशङ्खपालश्च कर्कोटकधनञ्जयौ। धृतराष्ट्रश्च नागेशा भूतनागाः प्रकीर्तिताः॥

इंतान्दुर्ष्वां८ पृथिव्यामुर्वन्तरिक्षमन्वेमि पृथिव्यास्त्वा नाभौं सादयाम्यदित्याऽ उपस्थेग्ने हव्यऽ रक्ष ॥ १३ ॥ निर्ऋतिवरुणमध्ये भद्रे–ॐभूर्भुवः स्वः भूतनागेभ्यो नमः भूतनागानावाहयामि स्थापयामि भो भूतनागाः इहागच्छत इह तिष्ठत ॥

१७ ऋताषाडित्यस्य लुशोधानाऋऋषिः विराडुष्णिक्छन्दः गन्धर्वाप्सरसो देवताः गन्धर्वाप्सरसावाहने विनियोगः–ॐऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोप्सरसो मुदो नाम ॥ स नऽ इदम्ब्रह्म क्षत्रं‌म्पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा ॥ १८ ॥ वरुणवायुमध्ये भद्रे–ॐभूर्भुवः स्वः गन्धर्वाप्सरोभ्यो नमः गन्धर्वाप्सरसः आवाहयामि स्थापयामि भो गन्धर्वाप्सरसः इहागच्छत इह तिष्ठत ॥

१८ यदक्रन्द इत्यस्य जमदग्निर्दीर्घतमसाहषी त्रिष्टुप्छन्दः अश्वो देवता स्कन्दावाहने विनियोगः॥ ॐयदक्रन्दः प्रथमञ्जायमानऽ उद्यन्त्समुद्रादुत वा पुरीषात् ॥ श्येनस्य पक्षा हरिणस्य बाहूऽ उपस्तुत्यम्महि जातन्तेऽ अर्वन् ॥ १२ ॥ ब्रह्मसोममध्ये वाप्याम्–ॐभूर्भुवः स्वः स्कन्दाय नमः स्कन्दमावाहयामि स्थापयामि भो स्कन्द इहागच्छ इह तिष्ठ ॥

१९आशु? शिशान इत्यस्याप्रतिरथऋषिः त्रिष्टुप्छन्दः इन्द्रो देवता नन्द्यावाहने विनियोगः ॥ ॐ आशु? शिशानो वृषभो न भीमो घनाघन? क्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोनिमिषऽ एकवीर? शतꣳसेनाऽ अजयत्साकमिन्द्रः ॥ १३ ॥ स्कन्दादुत्तरे–ॐभूर्भुवः स्वः नन्दिने नमः नन्दिनमावाहयामि स्थापयामि भो नन्दिन् इहागच्छ इह तिष्ठ ॥

२०उग्रँल्लोहितेनेत्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः लिङ्गोक्ता देवताः शूलमहाकालावाहने विनियोगः ॥ ॐउग्रँल्लोहितेन मित्रꣳ सौव्रत्येन

रुद्रन्दोव्वैंय्येनेन्द्रम्मक्कीडेनं मरुतो बलेन साद्ध्यान्प्रमुदा ॥ भुवस्य कण्ठ्यंह रुद्रस्यान्त८ पार्श्व्यम्महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः८ पुरीतत्॥ २१ ॥ नन्युत्तरे—ॐ भूर्भुवः स्वः शूलमहाकालाभ्यां नमः शूलमहाकालौ आवाहयामि स्थापयामि भो शूलमहाकालौ इहागच्छतम् इह०

२१ अदितिर्द्यौरित्यस्य गौतमऋषिः त्रिष्टुप्छन्दः विश्वेदेवा देवताः दक्षादिसप्तगणावाहने विनियोगः ॥ ॐ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता स पिता स पुत्रः॥ विश्वेदेवाऽ अदितिः८ पञ्चजनाऽ अदितिर्ज्जातमदितिर्ज्जनित्वम्॥ २३ ॥ ब्रह्मेशानमध्ये वव्याम्—ॐ भूर्भुवः स्वः दक्षादिसप्तगणेभ्यो नमः दक्षादिसप्तगणानावाहयामि स्थापयामि भो दक्षादिसप्तगणाः इहागच्छत इह तिष्ठत ॥

२२ अम्बेऽ अम्बिक इत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः अम्बो देवता दुर्गावाहने निनियोगः ॥ ॐ अम्बेऽ अम्बिकेम्बालिके न मा नयति कश्चन ॥ ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥ १८ ॥ ब्रह्मेन्द्रयोर्मध्ये वाप्याम्—ॐ भूर्भुवः स्वः दुर्गायै नमः दुर्गाम् आवाहयामि स्थापयामि भो दुर्गे इहागच्छ इह तिष्ठ ॥

२३ इदं विष्णुरित्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः विष्णुर्देवता-विष्णवावाहने विनियोगः ॥ ॐइदंविष्णुर्विचक्रमे त्रेधा निदधेपदम् ॥ समूढमस्य पाः८सुरे स्वाहा॥ १५ ॥ दुर्गापूर्वे—ॐभूर्भुवः स्वः विष्णवे नमः विष्णुमावाहयामि स्थापयामि भो विष्णो इहागच्छ इह तिष्ठ ॥

२४ पितृभ्य इत्यस्य प्रजापत्यश्विसरस्वत्यऋषयः सर्वाणि यजूंषि छन्दांसि पितरो देवताः स्वधावाहने विनियोगः॥ॐ पितृभ्यः— स्वधायिभ्यः— स्वधा नमः— पितामहेभ्यः— स्वधायिभ्यः— स्वधा नमः८ प्रपितामहेभ्यः८ स्वधायिभ्यः— स्वधा नमः— ॥ अक्षन्पितरोमीमदन्त

पितरोतीतृपन्तपितरुं पितरुं शुन्धद्ध्वम् ॥ ३६/२६ ॥ ब्रह्माग्निमध्ये वल्याम्–ॐ भूर्भुवः स्वः स्वधायै नमः स्वधामावाहयामि स्थापयामि भो स्वधे इहागच्छ इह तिष्ठ ॥

२५ परम्मृत्यो इत्यस्य सङ्कुसुकऋषिः त्रिष्टुप्छन्दः मृत्युर्देवता मृत्युरोगयोरावाहनेविनियोगः॥ॐपरम्मृत्योऽ अनुपरेहि पन्थाँयस्तेऽ अन्यऽ इतरो देवयानात् ॥ चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाᳬं रीरिषो मोत वीरान् ॥ ३५/७ ॥ ब्रह्मयमयोर्मध्ये वाप्याम्–ॐ भूर्भुवः स्वः मृत्युरोगाभ्यां नमः मृत्युरोगावावाहयामि स्थापयामि भो मृत्युरोगौ इहागच्छतम् इह तिष्ठतम् ॥

२६ गणानान्त्वेत्यस्य प्रजापतिर्ऋषिः चत्वारि यजूंषि च्छन्दांसि अश्वो देवता गणपत्यावाहने विनियोगः ॥ ॐ गणानान्त्वा गणपतिᳬं हवामहे प्रियाणान्त्वा प्रियपतिᳬं हवामहे निधीनान्त्वा निधिपतिᳬं हवामहे वसो मम ॥ आहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधम् ॥ २३/१९ ॥ ब्रह्मनिर्ऋतिमध्ये वल्याम्–ॐभूर्भुवः स्वः गणपतये नमः गणपतिमावाहयामि स्थापयामि भो गणपते इहागच्छ इह तिष्ठ ॥

२७ शन्नो देवीरित्यस्य दध्यङ्ङाथर्वणऋषिः गायत्रीछन्दः आपो देवताः अपावाहने विनियोगः ॥ ॐशन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये॥शंय्योरभिस्रवन्तु नः ॥ ३६/१२ ॥ ब्रह्मवरुणमध्ये वाप्याम्–ॐभूर्भुवः स्वः अद्भ्यो नमः आप आवाहयामि स्थापयामि भोआप इहागच्छ इह०॥

२८ मरुतो यस्येत्यस्य गौतमऋषिः गायत्रीछन्दः मरुतो देवताः मरुतावाहने विनियोगः ॥ ॐ मरुतो यस्य हि क्षये पाथा दिवोविमहसः॥ स सुगोपातमोजनः ॥ ८/३१ ॥ ब्रह्मवायुमध्ये वल्ल्याम्–ॐभूर्भुवः स्वः मरुद्भ्यो नमः मरुतः आवाहयामि स्थापयामि भो मरुतः इ० इ०॥

२९ स्योना पृथिवीत्यस्य मेधातिथिर्ऋषिः गायत्री छन्दः पृथिवी देवता पृथिव्यावाहने विनियोगः॥ॐ स्यो ना पृथिवि नो भवानृक्षरा-निवेशनी॥ यच्छा नः शर्म्म सप्रथाः॥ॐ भूर्भुवः स्वः पृथिव्यै नमः पृथिवीमावाहयामि स्थापयामि भो पृथिवि इहागच्छ इह तिष्ठ ॥

३० पञ्चनद्य इत्यस्य गृत्समदऋषिः अनुष्टुप्छन्दः सरस्वतीनदी देवता गङ्गादिनद्यावाहने विनियोगः॥ ॐ पञ्च नद्यः सरस्वतीमपि-यन्ति सस्रोतसः॥ सरस्वती तु पञ्चधा सो देशेभवत्सरित् ॥ ॥ तत्रैव ब्रह्मणः पादमूले कर्णिकाधः—ॐ भूर्भुवः स्वः गङ्गादिनदीभ्यो नमः गङ्गा-दिनदीः आवाहयामि स्थापयामि भो गङ्गादिनद्यः इहागच्छत इहतिष्ठत॥

३१ इमम्मइत्यस्य शुनः शेपऋषिः गायत्रीछन्दः वरुणो देवता सप्तसागरावाहने विनियोगः ॥ ॐ इमम्मे वरुणश्रुधी हवमद्या च मृडय ॥ त्वामवस्युराचके ॥ ॥ ब्रह्मणः पादमूले कर्णिकाधः गङ्गा-द्युत्तरे—ॐ भूर्भुवः स्वः सप्तसागरेभ्यो नमः सप्तसागरानावाहयामि स्थापयामि भो सप्तसागराः इहागच्छत इह तिष्ठत ॥

३२ ब्रह्मणः मस्तके कर्णिकोपरि—ॐ भूर्भुवः स्वः मेरवे नमः मेरुमावाहयामि स्थापयामि भो मेरो इहागच्छ इह तिष्ठ ॥

॥ मण्डलबाह्ये श्वेतपरिधौ उत्तरादिक्रमेण
गदाद्यष्टायुधदेवतावाहनम् ॥

३३ उत्तरे सोमसमीपे—ॐभूर्भुवः स्वः गदायै नमः गदामावा-हयामि स्थापयामि भो गदे इहागच्छ इह तिष्ठ ॥

३४ ऐशान्याम् ईशानसमीपे—ॐभूर्भुवः स्वः त्रिशूलाय नमः त्रिशूलमावाहयामि स्थापयामि भो त्रिशूल इहागच्छ इह तिष्ठ ॥

३५ पूर्वे इन्द्रसमीपे—ॐभूर्भुवः स्वः वज्राय नमः वज्रमावाहयामि स्थापयामि भो वज्र इहागच्छ इह तिष्ठ ॥

३६ आग्नेय्याम् अग्निसमीपे—ॐभूर्भुवः स्वः शक्तये नमः शक्तिमावाहयामि स्थापयामि भो शक्ते इहागच्छ इह तिष्ठ ॥

३७ दक्षिणे यमसमीपे—ॐभूर्भुवः स्वः दण्डाय नमः दण्डमावाहयामि स्थापयामि भो दण्ड इहागच्छ इह तिष्ठ ॥

३८ नैर्ऋत्याम् निर्ऋतिसमीपे—ॐभूर्भुवः स्वः खड्गाय नमः खड्गमावाहयामि स्थापयामि भो खड्ग इहागच्छ इह तिष्ठ ॥

३९ पश्चिमे वरुणसमीपे—ॐ भूर्भुवः स्वः पाशाय नमः पाशमावाहयामि स्थापयामि भो पाश इहागच्छ इह तिष्ठ ॥

४० वायव्याम्—वायुसमीपे—ॐ भूर्भुवः स्वः अङ्कुशाय नमः अङ्कुशमावाहयामि स्थापयामि भो अङ्कुश इहागच्छ इह तिष्ठ ॥

### ॥ मण्डलबाह्ये रक्तपरिधौ उत्तरादिक्रमेण गौतमाद्यष्टदेवतावाहनम् ॥

४१ उत्तरे—ॐभूर्भुवः स्वः गौतमाय नमः गौतममावाहयामि स्थापयामि भो गौतम इहागच्छ इह तिष्ठ ॥

४२ ऐशान्याम्—ॐ भूर्भुवः स्वः भरद्वाजाय नमः भरद्वाजमावाहयामि स्थापयामि भो भरद्वाज इहागच्छ इह तिष्ठ ॥

४३ पूर्वे—ॐ भूर्भुवः स्वः विश्वामित्राय नमः विश्वामित्रमावाहयामि स्थापयामि भो विश्वामित्र इहागच्छ इह तिष्ठ ॥

४४ आग्नेय्याम्—ॐ भूर्भुवः स्वः कश्यपाय नमः कश्यपमावाहयामि स्थापयामि भो कश्यप इहागच्छ इह तिष्ठ ॥

४५ दक्षिणे—ॐ भूर्भुवः स्वः जमदग्नये नमः जमदग्निमावाहयामि स्थापयामि भो जमदग्ने इहागच्छ इह तिष्ठ ॥

४६ नैर्ऋत्याम्—ॐ भूर्भुवः स्वः वसिष्ठाय नमः वसिष्ठमावाहयामि स्थापयामि भो वसिष्ठ इहागच्छ इह तिष्ठ ॥

४७ पश्चिमे—ॐ भूर्भुवः स्वः अत्रये नमः अत्रिमावाहयामि स्थापयामि भो अत्रे इहागच्छ इह तिष्ठ ॥

४८ वायव्याम्—ॐ भूर्भुवः स्वः अरुन्धत्यै नमः अरुन्धतीमावाहयामि स्थापयामि भो अरुन्धति इहागच्छ इह तिष्ठ ॥

॥ मण्डलबाह्ये कृष्णपरिधौ पूर्वादिक्रमेण ऐन्द्र्याद्यष्टदेवतावाहनम् ॥

४९ पूर्वे—ॐ भूर्भुवः स्वः ऐन्द्र्यै नमः ऐन्द्रीमावाहयामि स्थापयामि भो ऐन्द्रि इहागच्छ इह तिष्ठ ॥

५० आग्नेय्याम्—ॐ भूर्भुवः स्वः कौमार्यै नमः कौमारीमावाहयामि स्थापयामि भो कौमारि इहागच्छ इह तिष्ठ ॥

५१ दक्षिणे—ॐ भूर्भुवः स्वः ब्राह्म्यै नमः ब्राह्मीमावाहयामि स्थापयामि भो ब्राह्मि इहागच्छ इह तिष्ठ ॥

५२ नैर्ऋत्याम्—ॐ भूर्भुवः स्वः वाराह्यै नमः वाराहीमावाहयामि स्थापयामि भो वाराहि इहागच्छ इह तिष्ठ ॥

५३ पश्चिमे—ॐ भूर्भुवः स्वः चामुण्डायै नमः चामुण्डामावाहयामि स्थापयामि भो चामुण्डे इहागच्छ इह तिष्ठ ॥

५४ वायव्याम्—ॐ भूर्भुवः स्वः वैष्णव्यै नमः वैष्णवीमावाहयामि स्थापयामि भो वैष्णवि इहागच्छ इह तिष्ठ ॥

५५ उत्तरे-ॐ भूर्भुवः स्वः माहेश्वर्यै नमः माहेश्वरीमावाहयामि स्थापयामि भो माहेश्वरि इहागच्छ इह तिष्ठ ॥

५६ ऐशान्याम्-ॐ भूर्भुवः स्वः वैनायक्यै नमः वैनायकीमावाहयामि स्थापयामि भो वैनायकि इहागच्छ इह तिष्ठ ॥

## ॥ त्रिचत्वारिंशद्रेखात्मकहरिहरमण्डलस्थद्वादशलिङ्गतोभद्रमण्डलदेवतावाहनम् ॥

१ ईशान्यादिक्रमात्प्रथमपूर्वलिङ्गे—नमः शम्भवायेत्यस्य परमेष्ठी ऋषिः प्रजापतिर्देवा वा ऋषयः रुद्रो देवता यजुश्छंदः शिवावाहने विनियोगः—ॐ नमः॑ शम्भवाय॑ च मयोभवाय॑ च नमः॑ शङ्कराय॑ च मयस्कराय॑ च नमः॑ शिवाय॑ च शिवत॑राय च ॥ ४१ ॥ ॐ भूर्भुवः स्वः शिवाय नमः शिवमावाहयामि स्थापयामि ॥ भो शिव इहागच्छ इह तिष्ठ ॥

२ द्वितीयपूर्वलिङ्गे—यत्पुरुषमित्यस्य नारायण ऋषिः पुरुषो देवता त्रिष्टुप् छन्दः तत्पुरुषावाहने विनियोगः—ॐ यत्पुरु॑षं व्यद॑धुः कति॒धा व्य॑कल्पयन् ॥ मुखं॒ किम॑स्यासी॒त्किम्बा॒हू किमू॒रू पादा॑ऽ उच्येते ॥ १० ॥ ॐ भूर्भुवः स्वः तत्पुरुषाय नमः तत्पुरुषमावाहयामि स्थापयामि ॥ भो तत्पुरुष इहागच्छ इह तिष्ठ ॥

३ तृतीयपूर्वलिङ्गे—नमः शङ्गव इत्यस्य परमेष्ठी प्रजापतिर्वा देवा ऋषयः रुद्रो देवता भुरिगतिशक्करीछन्दः पशुपत्यावाहने विनियोगः—ॐ नमः॑ शङ्गवे॑ च पशुपत॑ये च नमः॑ उग्राय॑ च भीमाय॑ च नमो॑ ग्रेवधाय॑ च दूरेवधाय॑ च नमो॑ हन्त्रे च हनी॑यसे च नमो॑ वृक्षेभ्यो

हरिकेशेभ्यो नमस्तारायं॥ ॐ भूर्भुवःस्वः पशुपतये नमः पशुपति-मावाहयामि स्थापयामि ॥ भो पशुपते इहागच्छ इह तिष्ठ ॥

४ प्रथमदक्षिणलिङ्गे—उग्र इत्यस्य प्रजापतिर्ऋषिः मरुतो देवता गायत्रीछन्दः उग्रावाहने विनियोगः ॥ ॐ उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च॥ सासह्वाँश्चाभियुग्वा च विक्षिपः स्वाहा ॥ ॐ भूर्भुवः स्वः उग्राय नमः उग्रमावाहयामि स्थापयामि ॥ भो उग्र इहागच्छ इह तिष्ठ ॥

५ द्वितीयदक्षिणलिङ्गे—यात इत्यस्य परमेष्ठी ऋषिः रुद्रो देवता आर्षीस्वराऽनुष्टुप् छन्दः अघोरावाहने विनियोगः ॥ ॐ या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ॥ तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥ ॥ ॐ भूर्भुवः स्वः अघोराय नमः अघोरमावाहयामि स्थापयामि ॥ भो अघोर इहागच्छ इह तिष्ठ ॥

६ तृतीयदक्षिणलिङ्गे—नमस्त इत्यस्य परमेष्ठी ऋषिः रुद्रो देवता गायत्री छन्दः रुद्रावाहने विनियोगः—ॐनमस्ते रुद्र मन्यवऽउतो तऽइषवे नमः ॥ बाहुभ्यामुत ते नमः ॥ ॥ ॐ भूर्भुवः स्वः रुद्राय नमः रुद्रमावाहयामि स्थापयामि ॥ भो रुद्र इहागच्छ इह तिष्ठ ॥

७ प्रथमपश्चिमलिङ्गे—उग्र इत्यस्य प्रजापतिर्ऋषिः यजमानो देवता निच्यृद्ब्राह्मी त्रिष्टुप्छन्दः भवावाहने विनियोगः—ॐ उग्रँल्लोहितेन मित्रँ सौव्रत्येन रुद्रन्दौर्व्रत्येनेन्द्रम्प्रक्रीडेन मरुतो बलेन साध्यान्प्रमुदा ॥ भवस्य कण्ठ्यँ रुद्रस्यान्तः पार्श्व्यम्महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत् ॥ ॥ ॐ भूर्भुवः स्वः भवाय नमः भवमावाहयामि स्थापयामि ॥ भो भव इहागच्छ इह तिष्ठ ॥

८ द्वितीयपश्चिमलिङ्गे—सद्योजात इत्यस्य जमदग्निर्ऋषिः अग्निर्देवता त्रिष्टुप्छन्दः सद्योजातावाहने विनियोगः—ॐ सद्योजातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः। अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतᳬ हविरदन्तु देवाः ॥ ३६॥ ॐ भूर्भुवः स्वः सद्योजाताय नमः सद्योजातमावाहयामि स्थापयामि॥भोः सद्योजात इहागच्छ इह तिष्ठ॥

९ तृतीयपश्चिमलिङ्गे—नमः पर्ण्णायेत्यस्य परमेष्ठी प्रजापतिर्वा देवा ऋषयः रुद्रो देवता स्वराट्प्रकृतिछन्दः सर्वजातावाहने विनियोगः—ॐ नमः पर्ण्णाय च पर्ण्णशदाय च नमऽ उद्गुरमाणाय चाभिघ्नते च नमऽ आखिदते च प्रखिदते च नमऽ इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो नमो वः किरिकेभ्यो देवानाᳬ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नमऽ आनिर्हतेभ्यः ॥ ४६॥ ॐ भूर्भुवः स्वः सर्वजाताय नमः सर्वजातमावाहयामि स्थापयामि ॥ भो सर्वजात इहागच्छ इह तिष्ठ ॥

१० प्रथमउत्तरलिङ्गे—त्र्यम्बकमित्यस्य वसिष्ठ ऋषिः रुद्रो देवता वाड्ब्राह्मी त्रिष्टुप्छन्दः महालिङ्गावाहने विनियोगः—ॐ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ ६० ॥ ॐ भूर्भुवः स्वः महालिङ्गाय नमः महालिङ्गमावाहयामि स्थापयामि ॥ भो महालिङ्ग इहागच्छ इह तिष्ठ ॥

११ द्वितीयउत्तरलिङ्गे—वाममित्यस्य भरद्वाज ऋषिः सविता देवता निचृदार्षी त्रिष्टुप्छन्दः वामदेवावाहने विनियोगः—ॐ वाममद्य सवितर्वाममु श्वो दिवे दिवे वाममस्मभ्यᳬ सावीः ॥ वामस्य हि

क्षयस्य देवु भूरॆरुया धिया वांमुभाजं– स्याम ॥ $\frac{३}{८}$ ॥ ॐ भूर्भुवः स्वः वामदेवाय नमः वामदेवमावाहयामि स्थापयामि ॥ भो वामदेव इहागच्छ इह तिष्ठ ॥

१२ तृतीयउत्तरलिङ्गे—नमो ह्रस्वायेत्यस्य कुत्स ऋषिः रुद्रो देवता विराडार्षी त्रिष्टुप्छन्दः भीमावाहने विनियोगः—ॐ नमो ह्रस्वाय च वामुनाय च नमो बृहुते च वर्षीयसे च नमो वृद्धाय च सुवृधे च नमो ऽग्र्याय च प्रथुमाय च ॥ $\frac{३०}{१६}$ ॥ ॐ भूर्भुवः स्वः भीमाय नमः भीममावाहयामि स्थापयामि ॥ भो भीम इहागच्छ इह तिष्ठ ॥

॥ पूर्वेशान्यादिक्रमेण षोडशवापीषु प्रत्येकं देवतास्थापनम् ॥

१३ ॐ भूर्भुवः स्वः असिताङ्गभैरवाय नमः असिताङ्गभैरवमावाहयामि स्थापयामि॥ भो असिताङ्गभैरव इहागच्छ इह तिष्ठ ॥

१४ ॐ भूर्भुवः स्वः रुरुभैरवाय नमः रुरुभैरवमावाहयामि स्थापयामि ॥ भो रुरुभैरव इहागच्छ इह तिष्ठ ॥

१५ ॐ भूर्भुवः स्वः चण्डभैरवाय नमः चण्डभैरवमावाहयामि स्थापयामि ॥ भो चण्डभैरव इहागच्छ इह तिष्ठ ॥

१६ ॐ भूर्भुवः स्वः क्रोधभैरवाय नमः क्रोधभैरवमावाहयामि स्थापयामि ॥ भो क्रोधभैरव इहागच्छ इह तिष्ठ ॥

१७ ॐ भूर्भुवः स्वः उन्मत्तभैरवाय नमः उन्मत्तभैरवमावाहयामि स्थापयामि ॥ भो उन्मत्तभैरव इहागच्छ इह तिष्ठ ॥

१८ ॐ भूर्भुवः स्वः कपालीभैरवाय नमः कपालीभैरवमावाहयामि स्थापयामि ॥ भो कपालीभैरव इहागच्छ इह तिष्ठ ॥

१९ ॐ भूर्भुवः स्वः भीषणभैरवाय नमः भीषणभैरवमावाहयामि स्थापयामि ॥ भो भीषणभैरव इहागच्छ इह तिष्ठ ॥

२० ॐ भूर्भुवः स्वः संहारभैरवाय नमः संहारभैरवमावाहयामि स्थापयामि ॥ भो संहारभैरव इहागच्छ इह तिष्ठ ॥

२१ ॐ भूर्भुवः स्वः भवाय नमः भवमावाहयामि स्थापयामि ॥ भो भव इहागच्छ इह तिष्ठ ॥

२२ ॐ भूर्भुवः स्वः शर्वाय नमः शर्वमावाहयामि स्थापयामि ॥ भो शर्व इहागच्छ इह तिष्ठ ॥

२३ ॐ भूर्भुवः स्वः ईशानाय नमः ईशानमावाहयामि स्थापयामि भो ईशान इहागच्छ इह तिष्ठ ॥

२४ ॐ भूर्भुवः स्वः पशुपतये नमः पशुपतिमावाहयामि स्थापयामि ॥ भो पशुपते इहागच्छ इह तिष्ठ ॥

२५ ॐ भूर्भुवः स्वः रुद्राय नमः रुद्रमावाहयामि स्थापयामि ॥ भो रुद्र इहागच्छ इह तिष्ठ ॥

२६ ॐ भूर्भुवः स्वः उग्राय नमः उग्रमावाहयामि स्थापयामि ॥ भो उग्र इहागच्छ इह तिष्ठ ॥

२७ ॐ भूर्भुवः स्वः भीमाय नमः भीममावाहयामि स्थापयामि ॥ भो भीम इहागच्छ इह तिष्ठ ॥

२८ ॐ भूर्भुवः स्वः महते नमः महान्तमावाहयामि स्थापयामि ॥ भो महन् इहागच्छ इह तिष्ठ ॥

२९ ईशानेन्द्रमध्येभद्रे—ॐ भूर्भुवः स्वः शूलिने नमः शूलिनमावाहयामि स्थापयामि ॥ भो शूलिन् इहागच्छ इह तिष्ठ ॥

३० इन्द्राग्निमध्ये भद्रे–ॐ भूर्भुवः स्वः चन्द्रमौलिने नमः चन्द्रमौलिनमावाहयामि स्थापयामि ॥ भो चन्द्रमौलिन् इहागच्छ इह तिष्ठ ॥

३१ अग्नियममध्ये भद्रे—ॐ भूर्भुवः स्वः चन्द्रमसे नमः चन्द्रमसमावाहयामि स्थापयामि ॥ भो चन्द्रमः इहागच्छ इह तिष्ठ ॥

३२ यमनिर्ऋतिमध्ये भद्रे–भूर्भुवः स्वः वृषभध्वजाय नमः वृषभध्वजमावाहयामि स्थापयामि ॥ भो वृषभध्वज इहागच्छ इह तिष्ठ ॥

३३ निर्ऋतिवरुणमध्ये भद्रे–ॐ भूर्भुवः स्वः त्रिलोचनाय नमः त्रिलोचनमावाहयामि स्थापयामि ॥ भो त्रिलोचन इहागच्छ इह तिष्ठ ॥

३४ वरुणवायुमध्ये भद्रे–ॐ भूर्भुवः स्वः शक्तिधराय नमः शक्तिधरमावाहयामि स्थापयामि ॥ भो शक्तिधर इहागच्छ इह तिष्ठ ॥

३५ वायुसोममध्ये भद्रे—ॐभूर्भुवः स्वः महेश्वराय नमः महेश्वरमावाहयामि स्थापयामि ॥ भो महेश्वर इहागच्छ इह तिष्ठ ॥

३६ सोमेशानमध्ये भद्रे–ॐ भूर्भुवः स्वः शूलधारिणे नमः शूलधारिणमावाहयामि स्थापयामि भो शूलधारिन् इहागच्छ इह तिष्ठ ॥

अथेशानीमारभ्येशानीपर्यन्ताः प्रतिकोणं
अष्टौ अष्टौवल्ली देवताः स्थापयेत् ॥

३७ ईशानकोणे देवताः स्थापयेत् ॐ भूर्भुवः स्वः अनन्ताय नमः अनन्तमावाहयामि स्थापयामि ॥ भो अनन्त इहागच्छ इह तिष्ठ ॥

३८ ॐ भूर्भुवः स्वः तक्षकाय नमः तक्षकमावाहयामि स्थापयामि ॥ भो तक्षक इहागच्छ इह तिष्ठ ॥

३९ ॐ भूर्भुवः स्वः कुलिशाय नमः कुलिशमावाहयामि स्थापयामि ॥ भो कुलिश इहागच्छ इह तिष्ठ ॥

४० ॐ भूर्भुवः स्वः कर्कोटकाय नमः कर्कोटकमावाहयामि स्थापयामि ॥ भो कर्कोटक इहागच्छ इह तिष्ठ ॥

४१ ॐ भूर्भुवः स्वः शङ्खपालाय नमः शङ्खपालमावाहयामि स्थापयामि ॥ भो शङ्खपाल इहागच्छ इह तिष्ठ ॥

४२ ॐ भूर्भुवः स्वः कम्बलाय नमः कम्बलमावाहयामि स्थापयामि ॥ भो कम्बल इहागच्छ इह तिष्ठ ॥

४३ ॐ भूर्भुवः स्वः अश्वतराय नमः अश्वतरमावाहयामि स्थापयामि ॥ भो अश्वतर इहागच्छ इह तिष्ठ ॥

४४ ॐ भूर्भुवः स्वः पृथिव्यै नमः पृथिवीमावाहयामि स्थापयामि॥ भो पृथिवि इहागच्छ इह तिष्ठ ॥

४५ आग्नेयकोणे देवताः स्थापयेत्—ॐ भूर्भुवः स्वः भूम्यै नमः भूमिमावाहयामि स्थापयामि ॥ भो भूमे इहागच्छ इह तिष्ठ ॥

४६ ॐ भूर्भुवः स्वः हैहयाय नमः हैहयमावाहयामि स्थापयामि॥ भो हैहय इहागच्छ इह तिष्ठ ॥

४७ ॐ भूर्भुवः स्वः माल्यवते नमः माल्यवन्तमावाहयामि स्थापयामि ॥ भो माल्यवन् इहागच्छ इह तिष्ठ ॥

४८ ॐ भूर्भुवः स्वः पारिजाताय नमः पारिजातमावाहयामि स्थापयामि ॥ भो पारिजात इहागच्छ इह तिष्ठ ॥

४९ ॐ भूर्भुवः स्वः दिक्पतये नमः दिक्पतिमावाहयामि स्थापयामि ॥ भो दिक्पते इहागच्छ इह तिष्ठ ॥

६० ॐ भूर्भुवः स्वः भरताय नमः भरतमावाहयामि स्थापयामि॥ भो भरत इहागच्छ इह तिष्ठ ॥

६१ ॐ भूर्भुवः स्वः नलाय नमः नलमावाहयामि स्थापयामि ॥ भो नल इहागच्छ इह तिष्ठ ॥

६२ ॐ भूर्भुवः स्वः रामाय नमः राममावाहयामि स्थापयामि ॥ भो राम इहागच्छ इह तिष्ठ ॥

६३ ॐ भूर्भुवः स्वः सार्वभौमाय नमः सार्वभौममावाहयामि स्थापयामि ॥ भो सार्वभौम इहागच्छ इह तिष्ठ ॥

६४ ॐ भूर्भुवः स्वः नैषधाय नमः नैषधमावाहयामि स्थापयामि॥ भो नैषध इहागच्छ इह तिष्ठ ॥

६५ ॐ भूर्भुवः स्वः विन्ध्याचलाय नमः विन्ध्याचलमावाहयामि स्थापयामि ॥ भो विन्ध्याचल इहागच्छ इह तिष्ठ ॥

६६ ईशानकोणे शृङ्खलादेवताः स्थापयेत्—ॐ भूर्भुवः स्वः हेमकूटाय नमः हेमकूटमावाहयामि स्थापयामि॥ भो हेमकूट इहागच्छ इह तिष्ठ॥

६७ ॐ भूर्भुवः स्वः गन्धमादनाय नमः गन्धमादनमावाहयामि स्थापयामि ॥ भो गन्धमादन इहागच्छ इह तिष्ठ ॥

६८ ॐ भूर्भुवः स्वः कुलाचलाय नमः कुलाचलमावाहयामि स्थापयामि ॥ भो कुलाचल इहागच्छ इह तिष्ठ ॥

६९ ॐ भूर्भुवः स्वः हिमाचलाय नमः हिमाचलमावाहयामि स्थापयामि ॥ भो हिमाचल इहागच्छ इह तिष्ठ ॥

७० ॐ भूर्भुवः स्वः पृथिव्यै नमः पृथिवीमावाहयामि स्थापयामि ॥ भो पृथिवि इहागच्छ इह तिष्ठ ॥

७१ ॐ भूर्भुवः स्वः अनन्ताय नमः अनन्तमावाहयामि स्थापयामि ॥ भो अनन्त इहागच्छ इह तिष्ठ ॥

७२ ॐ भूर्भुवः स्वः कमलासनाय नमः कमलासनमावाहयामि स्थापयामि ॥ भो कमलासन इहागच्छ इह तिष्ठ ॥

अथ चतुर्दिक्षु खण्डेन्दुषु देवताः स्थापयेत् ॥

७३ ऐशाने ॐभूर्भुवःस्वः अश्विनीकुमाराभ्यां नमः अश्विनीकुमारौ आवाहयामि स्थापयामि॥भोअश्विनीकुमारौ इहागच्छतम् इह तिष्ठतम्॥

७४ आग्नेये—ॐ भूर्भुवः स्वः विश्वेभ्योदेवेभ्यो नमः विश्वान्देवानावाहयामि स्थापयामि ॥ भो विश्वेदेवाः इहागच्छत इह तिष्ठत ॥

७५ नैर्ऋत्ये—ॐ भूर्भुवः स्वः पितृभ्यो नमः पितॄनावाहयामि स्थापयामि ॥ भो पितरः इहागच्छत इह तिष्ठत ॥

७६ वायव्ये—ॐ भूर्भुवः स्वः नागेभ्यो नमः नागानावाहयामि स्थापयामि ॥ भो नागाः इहागच्छत इह तिष्ठत ॥

तद्बहिः सत्त्वरजस्तमः परिधिषु देवतास्थापनं पूर्वादिक्रमेण—

७७ सत्त्वपरिधौ पूर्वे ॐ भूर्भुवः स्वः इन्द्राय नमः इन्द्रमावाहयामि स्थापयामि ॥ भो इन्द्र इहागच्छ इह तिष्ठ ॥

७८ आग्नेये—ॐ भूर्भुवः स्वः अग्नये नमः अग्निमावाहयामि स्थापयामि ॥ भो अग्ने इहागच्छ इह तिष्ठ ॥

७९ दक्षिणे-ॐ भूर्भुवः स्वः यमाय नमः यममावाहयामि स्थापयामि ॥ भो यम इहागच्छ इह तिष्ठ ॥

८० नैर्ऋत्ये–ॐ भूर्भुवः स्वः निर्ऋतये नमः निर्ऋतिमावाहयामि स्थापयामि ॥ भो निर्ऋते इहागच्छ इह तिष्ठ ॥

८१ पश्चिमे–ॐ भूर्भुवः स्वः वरुणाय नमः वरुणमावाहयामि स्थापयामि ॥ भो वरुण इहागच्छ इह तिष्ठ ॥

८२ वायव्ये–ॐ भूर्भुवः स्वः वायवे नमः वायुमावाहयामि स्थापयामि ॥ भो वायो इहागच्छ इह तिष्ठ ॥

८३ उत्तरे–ॐ भूर्भुवः स्वः कुबेराय नमः कुबेरमावाहयामि स्थापयामि ॥ भो कुबेर इहागच्छ इह तिष्ठ ॥

८४ ऐशाने–ॐ भूर्भुवः स्वः ईशानाय नमः ईशानमावाहयामि स्थापयामि ॥ भो ईशान इहागच्छ इह तिष्ठ ॥

तद्बहिः रजःपरिधौ पूर्वादिक्रमेण आयुधावाहनम् ॥

८५ पूर्वे ॐ भूर्भुवः स्वः वज्राय नमः वज्रमावाहयामि स्थापयामि ॥ भो वज्र इहागच्छ इह तिष्ठ ॥

८६ आग्नेये–ॐ भूर्भुवः स्वः शक्तये नमः शक्तिमावाहयामि स्थापयामि ॥ भो शक्ते इहागच्छ इह तिष्ठ ॥

८७ दक्षिणे–ॐ भूर्भुवः स्वः दण्डाय नमः दण्डमावाहयामि स्थापयामि ॥ भो दण्ड इहागच्छ इह तिष्ठ ॥

८८ नैर्ऋत्ये–ॐ भूर्भुवः स्वः खड्गाय नमः खड्गमावाहयामि स्थापयामि ॥ भो खड्ग इहागच्छ इह तिष्ठ ॥

८९ पश्चिमे–ॐ भूर्भुवः स्वः पाशाय नमः पाशमावाहयामि स्थापयामि ॥ भो पाश इहागच्छ इह तिष्ठ ॥

९० वायव्ये—ॐ भूर्भुवः स्वः अङ्कुशाय नमः अङ्कुशमावाहयामि स्थापयामि ॥ भो अङ्कुश इहागच्छ इह तिष्ठ ॥

९१ उत्तरे—ॐ भूर्भुवः स्वः गदायै नमः गदामावाहयामि स्थापयामि ॥ भो गदे इहागच्छ इह तिष्ठ ॥

९२ ऐशाने—ॐ भूर्भुवः स्वः त्रिशूलाय नमः त्रिशूलमावाहयामि स्थापयामि ॥ भो त्रिशूल इहागच्छ इह तिष्ठ ॥

तद्बहिः तमःपरिधौ पूर्वादिक्रमेण ऋषीन् स्थापयेत् ॥

९३ पूर्वे ॐ भूर्भुवः स्वः कश्यपाय नमः कश्यपमावाहयामि स्थापयामि ॥ भो कश्यप इहागच्छ इह तिष्ठ ॥

९४ आग्नेये—ॐ भूर्भुवः स्वः अत्रये नमः अत्रिमावाहयामि स्थापयामि ॥ भो अत्रे इहागच्छ इह तिष्ठ ॥

९५ दक्षिणे—ॐ भूर्भुवः स्वः भरद्वाजाय नमः भरद्वाजमावाहयामि स्थापयामि ॥ भो भरद्वाज इहागच्छ इह तिष्ठ ॥

९६ नैर्ऋत्याम्—ॐ भूर्भुवः स्वः विश्वामित्राय नमः विश्वामित्रमावाहयामि स्थापयामि ॥ भो विश्वामित्र इहागच्छ इह तिष्ठ ॥

९७ पश्चिमे—ॐ भूर्भुवः स्वः गौतमाय नमः गौतममावाहयामि स्थापयामि ॥ भो गौतम इहागच्छ इह तिष्ठ ॥

९८ वायव्याम्—ॐ भूर्भुवः स्वः जमदग्नये नमः जमदग्निमावाहयामि स्थापयामि ॥ भो जमदग्ने इहागच्छ इह तिष्ठ ॥

९९ उत्तरे—ॐ भूर्भुवः स्वः वसिष्ठाय नमः वसिष्ठमावाहयामि स्थापयामि ॥ भो वसिष्ठ इहागच्छ इह तिष्ठ ॥

१०० ईशान्याम् ॐ भूर्भुवः स्वः भृगवे नमः भृगुमावाहयामि स्थापयामि ॥ भो भृगो इहागच्छ इह तिष्ठ ॥

प्रतिष्ठापनम्—ॐ मनोजूतिर्जूषता० षट्पञ्चाशदुत्तरशतसङ्ख्यकाः हरिहरमण्डलदेवताः सुप्रतिष्ठिताः वरदाः भवत ॥

ध्यानम्–ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः ध्यायामि॥

आसनम्–ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः आसनं समर्पयामि ॥

पाद्यम्—ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः पाद्यं समर्पयामि ॥

अर्घ्यम्—ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः अर्घ्यं समर्पयामि ॥

आचमनीयम्—ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः आचमनीयं समर्पयामि ॥

*पञ्चामृतस्नानम्*–ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः पञ्चामृतस्नानं समर्पयामि ॥ पञ्चामृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

गन्धोदकस्नानम्—भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः गन्धोदकस्नानं समर्पयामि ॥ गन्धोदकस्नानान्ते शुद्धोदकस्नानं समर्पयावि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

उद्वर्तनस्नानम्–ॐ भूर्भुवः स्वः हरिहरमण्डलदेताभ्यो नमः उद्वर्तनस्नानं समर्पयामि ॥ उद्वर्तनस्नानान्ते उष्णोदकस्नान समर्पयामि॥ उष्णोदकस्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

अभिषेकः–ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः अभिषेकस्नानं समर्पयामि ॥

स्नानम्–ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः स्नानं समर्पयामि ॥ स्नानान्ते आचमनीयं समर्पयामि ॥

वस्त्रम्–ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः वस्त्रं समर्पयामि ॥ वस्त्रान्ते आचमनीयं समर्पयामि ॥

उपवीतम्—ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः उपवीतं समर्पयामि ॥ उपवीतान्ते आचमनीयं समर्पयामि ॥

गन्धः—ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः गन्धं समर्पयामि ॥

अक्षताः—ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः अक्षतान्समर्पयामि ॥

पुष्पाणि–ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः पुष्पाणि समर्पयामि ॥

सौभाग्यद्रव्याणि–ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः सौभाग्यद्रव्याणि समर्पयामि ॥

आभूषणानि–ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः आभूषणानि समर्पयामि ॥

धूपः–ॐभूर्भुवःस्वः हरिहरमण्डलदेवताभ्योनमः धूपमाघ्रापयामि॥

दीपः—ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः दीपं दर्शयामि ॥

नैवेद्यम्–भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः नैवेद्यं निवेदयामि॥ देवताग्रे गोमयेन जलेन वा चतुष्कोणं मण्डलं कृत्वा तदुपरि

नैवेद्यपात्रं निधाय तत्र तुलसीपत्रं निक्षिप्य गायत्रीमन्त्रेण सम्प्रोक्ष्य धेनुमुद्रां प्रदर्श्य पूर्वापोशनं समर्पयामि ॥ ग्रासमुद्रया तर्जनीमध्यमाङ्गुष्ठेन—ॐ प्राणाय स्वाहा । मध्यमानामिकाङ्गुष्ठेन—ॐ अपानाय स्वाहा । कनिष्ठिकानामिकाङ्गुष्ठेन—ॐ व्यानाय स्वाहा । कनिष्ठातर्जन्यङ्गुष्ठेन—ॐ उदानाय स्वाहा । साङ्गुष्ठाभिः सर्वाङ्गुलिभिः—ॐ समानाय स्वाहा ॥ नैवेद्यमध्ये पानीयं समर्पयामि ॥ उत्तरापोशनं समर्पयामि ॥ हस्तप्रक्षालनार्थे जलं समर्पयामि ॥ मुखप्रक्षालनार्थे जलं समर्पयामि॥ आचमनीयं समर्पयामि॥ करोद्वर्तनार्थे चन्दनं समर्पयामि॥

फलानि—ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः ऋतूद्भवानि नानाविधफलानि समर्पयामि ॥

मुखवासार्थे ताम्बूलम्—ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः मुखवासार्थे सपूगीफलताम्बूलं समर्पयामि ॥

दक्षिणा—ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः सुवर्णपुष्पदक्षिणां समर्पयामि ॥

कर्पूरार्तिक्यम्—ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः कर्पूरार्तिक्यं समर्पयामि ॥ जलेन प्रदक्षिणावर्तनम् । पुष्पैर्देववन्दनम् । आत्मवन्दनम् । हस्तप्रक्षालनम् ॥

मन्त्रपुष्पाञ्जलिः—ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः मन्त्रपुष्पाञ्जलिं समर्पयामि ॥

प्रदक्षिणा—ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः प्रदक्षिणां समर्पयामि ॥

नमस्कार:—ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः नमस्करोमि ॥ विशेषार्घः—अर्घपात्रे जलं सम्पूर्य चन्दनपुष्पाक्षतसहितं नारिकेलं धृत्वा—ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः विशेषार्घं समर्पयामि ॥ प्रार्थना—ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः प्रार्थनापूर्वकं नमस्करोमि॥ राजोपचाराः—छत्रं च चामरं चैव व्यजनं दर्पणं तथा। पादुकादीनि गृह्णीत ब्रह्माद्यावाहितामराः॥ ॐ भूर्भुवः स्वः हरिहरमण्डलदेवताभ्यो नमः राजोपचारान्समर्पयामि॥ (अभावे कल्पयामि)

समर्पणम्—अनया पूजया हरिहरमण्डलदेवताः प्रीयन्ताम्॥

॥ ब्रह्मादीनां पायसबलिः॥

१ ॐ ब्रह्मणे नमः पायसबलिं समर्पयामि
२ ॐ सोमाय नमः पायसबलिं समर्पयामि
३ ॐ ईशानाय नमः पायसबलिं समर्पयामि
४ ॐ इन्द्राय नमः पायसबलिं समर्पयामि
५ ॐ अग्नये नमः पायसबलिं समर्पयामि
६ ॐ यमाय नमः पायसबलिं समर्पयामि
७ ॐ निर्ऋतये नमः पायसबलिं समर्पयामि
८ ॐ वरुणाय नमः पायसबलिं समर्पयामि
९ ॐ वायवे नमः पायसबलिं समर्पयामि
१० ॐ अष्टवसुभ्यो नमः पायसबलिं समर्पयामि
११ ॐ एकादशरुद्रेभ्यो नमः पायसबलिं समर्पयामि
१२ ॐ द्वादशादित्येभ्यो नमः पायसबलिं समर्पयामि
१३ ॐ अश्विभ्यां नमः पायसबलिं समर्पयामि
१४ ॐ विश्वेभ्यो देवेभ्यो नमः पायसबलिं समर्पयामि
१५ ॐ सप्तयक्षेभ्यो नमः पायसबलिं समर्पयामि

१६ ॐ भूतनागेभ्यो नमः पायसबलिं समर्पयामि
१७ ॐ गन्धर्वाप्सरोभ्यो नमः पायसबलिं समर्पयामि
१८ ॐ स्कन्दाय नमः पायसबलिं समर्पयामि
१९ ॐ नन्दिने नमः पायसबलिं समर्पयामि
२० ॐ शूलमहाकालाभ्यां नमः पायसबलिं समर्पयामि
२१ ॐ दक्षादिसप्तगणेभ्यो नमः पायसबलिं समर्पयामि
२२ ॐ दुर्गायै नमः पायसबलिं समर्पयामि
२३ ॐ विष्णवे नमः पायसबलिं समर्पयामि
२४ ॐ स्वधायै नमः पायसबलिं समर्पयामि
२५ ॐ मृत्युरोगाभ्यां नमः पायसबलिं समर्पयामि
२६ ॐ गणपतये नमः पायसबलिं समर्पयामि
२७ ॐ अद्भ्यो नमः पायसबलिं समर्पयामि
२८ ॐ मरुद्भ्यो नमः पायसबलिं समर्पयामि
२९ ॐ पृथिव्यै नमः पायसबलिं समर्पयामि
३० ॐ गङ्गादिनदीभ्यो नमः पायसबलिं समर्पयामि
३१ ॐ सप्तसागरेभ्यो नमः पायसबलिं समर्पयामि
३२ ॐ मेरवे नमः पायसबलिं समर्पयामि
३३ ॐ गदायै नमः पायसबलिं समर्पयामि
३४ ॐ त्रिशूलाय नमः पायसबलिं समर्पयामि
३५ ॐ वज्राय नमः पायसबलिं समर्पयामि
३६ ॐ शक्तये नमः पायसबलिं समर्पयामि
३७ ॐ दण्डाय नमः पायसबलिं समर्पयामि
३८ ॐ खड्गाय नमः पायसबलिं समर्पयामि
३९ ॐ पाशाय नमः पायसबलिं समर्पयामि
४० ॐ अङ्कुशाय नमः पायसबलिं समर्पयामि

४१ ॐ गौतमाय नमः पायसबलिं समर्पयामि
४२ ॐ भरद्वाजाय नमः पायसबलिं समर्पयामि
४३ ॐ विश्वामित्राय नमः पायसबलिं समर्पयामि
४४ ॐ कश्यपाय नमः पायसबलिं समर्पयामि
४५ ॐ जमदग्नये नमः पायसबलिं समर्पयामि
४६ ॐ वसिष्ठाय नमः पायसबलिं समर्पयामि
४७ ॐ अत्रये नमः पायसबलिं समर्पयामि
४८ ॐ अरुन्धत्यै नमः पायसबलिं समर्पयामि
४९ ॐ ऐन्द्री नमः पायसबलिं समर्पयामि
५० ॐ कौमार्यै नमः पायसबलिं समर्पयामि
५१ ॐ ब्राह्म्यै नमः पायसबलिं समर्पयामि
५२ ॐ वाराह्यै नमः पायसबलिं समर्पयामि
५३ ॐ चामुण्डायै नमः पायसबलिं समर्पयामि
५४ ॐ वैष्णव्यै नमः पायसबलिं समर्पयामि
५५ ॐ माहेश्वर्यै नमः पायसबलिं समर्पयामि
५६ ॐ वैनायक्यै नमः पायसबलिं समर्पयामि
५७ ॐ शिवाय नमः पायसबलिं समर्पयामि
५८ ॐ तत्पुरुषाय नमः पायसबलिं समर्पयामि
५९ ॐ पशुपतये नमः पायसबलिं समर्पयामि
६० ॐ उग्राय नमः पायसबलिं समर्पयामि
६१ ॐ अघोराय नमः पायसबलिं समर्पयामि
६२ ॐ रुद्राय नमः पायसबलिं समर्पयामि
६३ ॐ भवाय नमः पायसबलिं समर्पयामि
६४ ॐ सद्योजाताय नमः पायसबलिं समर्पयामि
६५ ॐ सर्वजाताय नमः पायसबलिं समर्पयामि

६६ ॐ महालिङ्गाय नमः पायसवलिं समर्पयामि
६७ ॐ वामदेवाय नमः पायसवलिं समर्पयामि
६८ ॐ भीमाय नमः पायसवलिं समर्पयामि
६९ ॐ असिताङ्गभैरवाय नमः पायसवलिं समर्पयामि
७० ॐ रुरुभैरवाय नमः पायसवलिं समर्पयामि
७१ ॐ चन्डभैरवाय नमः पायसवलिं समर्पयामि
७२ ॐ क्रोधभैरवाय नमः पायसवलिं समर्पयामि
७३ ॐ उन्मत्तभैरवाय नमः पायसवलिं समर्पयामि
७४ ॐ कपालीभैरवाय नमः पायसवलिं समर्पयामि
७५ ॐ भीषणभैरवाय नमः पायसवलिं समर्पयामि
७६ ॐ संहारभैरवाय नमः पायसवलिं समर्पयामि
७७ ॐ भवाय नमः पायसवलिं समर्पयामि
७८ ॐ शर्वाय नमः पायसवलिं समर्पयामि
७९ ॐ ईशानाय नमः पायसवलिं समर्पयामि
८० ॐ पशुपतये नमः पायसवलिं समर्पयामि
८१ ॐ रुद्राय नमः पायसवलिं समर्पयामि
८२ ॐ उग्राय नमः पायसवलिं समर्पयामि
८३ ॐ भीमाय नमः पायसवलिं समर्पयामि
८४ ॐ महते नमः पायसवलिं समर्पयामि
८५ ॐ शूलिने नमः पायसवलिं समर्पयामि
८६ ॐ चन्द्रमौलिने नमः पायसवलिं समर्पयामि
८७ ॐ चन्द्रमसे नमः पायसवलिं समर्पयामि
८८ ॐ वृषभध्वजाय नमः पायसवलिं समर्पयामि
८९ ॐ त्रिलोचनाय नमः पायसवलिं समर्पयामि
९० ॐ शक्तिधराय नमः पायसवलिं समर्पयामि

९१ ॐ महेश्वराय नमः पायसबलिं समर्पयामि
९२ ॐ शूलधारिणे नमः पायसबलिं समर्पयामि
९३ ॐ अनन्ताय नमः पायसबलिं समर्पयामि
९४ ॐ तक्षकाय नमः पायसबलिं समर्पयामि
९५ ॐ कुलिशाय नमः पायसबलिं समर्पयामि
९६ ॐ कर्कोटकाय नमः पायसबलिं समर्पयामि
९७ ॐ शङ्खपालाय नमः पायसबलिं समर्पयामि
९८ ॐ कम्बलाय नमः पायसबलिं समर्पयामि
९९ ॐ अश्वतराय नमः पायसबलिं समर्पयामि
१०० ॐ पृथिव्यै नमः पायसबलिं समर्पयामि
१०१ ॐ भूम्यै नमः पायसबलिं समर्पयामि
१०२ ॐ हैहयाय नमः पायसबलिं समर्पयामि
१०३ ॐ माल्यवत्यै नमः पायसबलिं समर्पयामि
१०४ ॐ पारिजाताय नमः पायसबलिं समर्पयामि
१०५ ॐ दिक्पतये नमः पायसबलिं समर्पयामि
१०६ ॐ महादेवाय नमः पायसबलिं समर्पयामि
१०७ ॐ विष्णवे नमः पायसबलिं समर्पयामि
१०८ ॐ माल्यवते नमः पायसबलिं समर्पयामि
१०९ ॐ महारुद्राय नमः पायसबलिं समर्पयामि
११० ॐ कालाग्निरुद्राय नमः पायसबलिं समर्पयामि
१११ ॐ द्वादशादित्येभ्यो नमः पायसबलिं समर्पयामि
११२ ॐ महेश्वराय नमः पायसबलिं समर्पयामि
११३ ॐ मृत्युरोगाभ्यां नमः पायसबलिं समर्पयामि
११४ ॐ वैनायक्यै नमः पायसबलिं समर्पयामि
११५ ॐ शाकुन्तलेयाय नमः पायसबलिं समर्पयामि

११६ ॐ भरताय नमः पायसबलिं समर्पयामि
११७ ॐ नलाय नमः पायसबलिं समर्पयामि
११८ ॐ रामाय नमः पायसबलिं समर्पयामि
११९ ॐ सार्वभौमाय नमः पायसबलिं समर्पयामि
१२० ॐ नैषधाय नमः पायसबलिं समर्पयामि
१२१ ॐ विन्ध्याचलाय नमः पायसबलिं समर्पयामि
१२२ ॐ हेमकूटाय नमः पायसबलिं समर्पयामि
१२३ ॐ गन्धमादनाय नमः पायसबलिं समर्पयामि
१२४ ॐ कुलाचलाय नमः पायसबलिं समर्पयामि
१२५ ॐ हिमाचलाय नमः पायसबलिं समर्पयामि
१२६ ॐ पृथिव्यै नमः पायसबलिं समर्पयामि
१२७ ॐ अनन्ताय नमः पायसबलिं समर्पयामि
१२८ ॐ कमलासनाय नमः पायसबलिं समर्पयामि
१२९ ॐ अश्विनीकुमाराभ्यां नमः पायसबलिं समर्पयामि
१३० ॐ विश्वेभ्यो देवेभ्यो नमः पायसबलिं समर्पयामि
१३१ ॐ पितृभ्यो नमः पायसबलिं समर्पयामि
१३२ ॐ नागेभ्यो नमः पायसबलिं समर्पयामि
१३३ ॐ इन्द्राय नमः पायसबलिं समर्पयामि
१३४ ॐ अग्नये नमः पायसबलिं समर्पयामि
१३५ ॐ यमाय नमः पायसबलिं समर्पयामि
१३६ ॐ निर्ऋतये नमः पायसबलिं समर्पयामि
१३७ ॐ वरुणाय नमः पायसबलिं समर्पयामि
१३८ ॐ वायवे नमः पायसबलिं समर्पयामि
१३९ ॐ कुबेराय नमः पायसबलिं समर्पयामि
१४० ॐ ईशानाय नमः पायसबलिं समर्पयामि

१४१ ॐ वज्राय नमः पायसबलिं समर्पयामि
१४२ ॐ शक्तये नमः पायसबलिं समर्पयामि
१४३ ॐ दण्डाय नमः पायसबलिं समर्पयामि
१४४ ॐ खड्गाय नमः पायसबलिं समर्पयामि
१४५ ॐ पाशाय नमः पायसबलिं समर्पयामि
१४६ ॐ अङ्कुशाय नमः पायसबलिं समर्पयामि
१४७ ॐ गदायै नमः पायसबलिं समर्पयामि
१४८ ॐ त्रिशूलाय नमः पायसबलिं समर्पयामि
१४९ ॐ कश्यपाय नमः पायसबलिं समर्पयामि
१५० ॐ अत्रये नमः पायसबलिं समर्पयामि
१५१ ॐ भरद्वाजाय नमः पायसबलिं समर्पयामि
१५२ ॐ विश्वामित्राय नमः पायसबलिं समर्पयामि
१५३ ॐ गौतमाय नमः पायसबलिं समर्पयामि
१५४ ॐ जमदग्नये नमः पायसबलिं समर्पयामि
१५५ ॐ वसिष्ठाय नमः पायसबलिं समर्पयामि
१५६ ॐ भृगवे नमः पायसबलिं समर्पयामि

एवं हरिहरदेवताभ्यः पायसबलिं दद्यात् ॥ अनेन बलिदानेन हरिहरमण्डलदेवताः प्रीयन्ताम् ॥

अथ प्रधानकलशस्थापनम् । सर्वतोभद्रमण्डलकर्णिकायां ब्रह्मोत्तरे ताम्रमयं कलशं विधिना स्थापयेत् ॥

भूमिं स्पृष्ट्वा—ॐमही द्यौः पृथिवी च नऽ इमं यज्ञम्मिमिक्षताम् ॥ पिपृतान्नो भरीमभिः ॥ ३२ ॥

पद्मोपरि यवप्रक्षेपः—ॐओषधयः समवदन्त सोमेन सह राज्ञा ॥ यस्मै कृणोति ब्राह्मणस्तꣳ राजन्पारयामसि ॥ ९६ ॥

पद्मोपरिकलशंस्थापयेत्–ॐ आजिघ्रकलशंम्मह्यात्त्वाविशन्त्विन्दवः। पुनरूर्ज्जानिवर्त्तस्वसानःसहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्मा० ॥ $\frac{२२}{८}$॥

कलशेजलपूरणम्–ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनी स्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्य० ॥ $\frac{३६}{४}$॥

गन्धप्रक्षेपः–त्वाङ्गन्धर्वाऽ अखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वा मोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥ $\frac{९८}{१२}$॥

धान्यप्रक्षेपः–ॐ धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा । दीर्घामनु प्रसितिमायुषे धान्देवो वः सविता० ॥ $\frac{२०}{१}$॥

सर्वौषधिप्रक्षेपः–ॐ याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्पुरा॥ मनै नु बभ्रूणामहः शतन्धामानि सप्त च ॥ $\frac{७५}{१२}$ ॥

दूर्वाप्रक्षेपः–ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ॥ एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ $\frac{२०}{१३}$ ॥

पञ्चपल्लवप्रक्षेपः–ॐ अश्वत्थे वो निषदनम्पर्णे वो वसतिष्कृता॥ गोभाजऽ इत्किलासथ यत्सनवथ पूरुषम् ॥ $\frac{७९}{१२}$॥

सप्तमृद्प्रक्षेपः–ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म्म सप्रथाः ॥ $\frac{१३}{३६}$ ॥

फलप्रक्षेपः–ॐ याः फलिनीर्याऽ अफलाऽ अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ $\frac{८९}{१२}$॥

पञ्चरत्नप्रक्षेपः–ॐ परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानि दाशुषे ॥ $\frac{२५}{११}$ ॥

हिरण्यप्रक्षेपः–ॐ हिरण्यगर्भः समवर्त्तताग्रेभूतस्य जातः पतिरेकऽ आसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषा विधेम ॥ $\frac{४}{१३}$॥

रक्तसूत्रेण वस्त्रेण च कलशं वेष्टयेत्–ॐ युवासुवासाः परिवीतऽ आगात्सऽउश्रेयान्भवति जायमानः ॥ तन्धीरासः कवयऽ उन्नयन्ति

स्वाध्यो मनसा देवयन्तः॥ पारस्करगृह्यसूत्रकाण्डम् २ । कण्डिका २ । मन्त्रः ९ ॥

'पूर्णपात्रस्थानेऽतिविशालं ताम्रपात्रं पूर्णपात्रमुपरि न्यसेत्—ॐ पूर्णा दर्वि परा पत सुपूर्णा पुनरापत ॥ वस्नेव विक्रीणावहा ऽ इषमूर्ज्जꣳ शतक्रतो ॥ $\frac{४}{३}$ ॥

वरुणमावाहयेत्-तत्त्वेत्यस्य शुनःशेप ऋषिः त्रिष्टुप्छन्दः वरुणो देवता वरुणावाहने विनियोगः। ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्त-दाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोद्ध्युरुशꣳ स मा नऽ आयुः प्रमोषीः ॥$\frac{१८}{४९}$॥ ॐ भूर्भुवः स्वः अस्मिन्कलशे वरुणं साङ्गम् आवाहयामि स्थापयामि ॥

प्रतिष्ठापनम्—ॐ मनो जूतिर्जुषतामाज्यस्य०॥$\frac{१३}{२}$॥ ॐ वरुण सुप्रतिष्ठितो वरदो भव॥ ॐ भूर्भुवः स्वः वरुणाय नमः इत्यनेन सम्पूजयेत्॥

पुष्पाञ्जलिः—वरुणꣳ क्षत्रमिन्द्रियं भगेन सविता श्रियम्। सुत्रामा यशसा बलं दधाना यज्ञमाशत॥$\frac{२०}{६}$॥ अनेन पूजनेन वरुणः प्रीयताम् ॥

पूर्णपात्रोपरि कार्पासं क्षौमं वा यन्त्रलेखनयोग्यं वस्त्रमास्तीर्य तस्मिन्वस्त्रे होमाङ्गपीठपूजार्थं यन्त्रं समालिख्य पूजयेत् ॥

---

१ रुद्रपीठमहायन्त्रप्रकारः ॥ स्कन्दपुराणे—कुङ्कुमागरुकर्पूरैर्भूर्जपत्रेऽथवा पटे॥ लिखितं पूजितं भक्त्या सर्वकामार्थसिद्धिदम् । यन्त्रमत्र मया प्रोक्तं मन्त्रात्मा देवतेति च ॥ पूजनीयं प्रयत्नेन तेनेदं देवतामयम् ॥ नाग्निचोरभयं तत्र न च राजभयं क्वचित्॥ यत्रेदं लिखितं यन्त्रं पूज्यते विधितः सदा ॥ होमाङ्गपीठपूजार्थं तत्र यन्त्रं समालिखेत्॥ प्रणम्य जगतामीशमुमादेहार्द्धधारिणम् । यन्त्रोद्धारमहं वक्ष्ये रुद्रकल्पानुसारतः ॥ मध्ये वृत्तं समालिख्य तन्मध्ये च दशाश्रम्॥ बहिरष्टदलं पद्मं ८ ततः षोडश १६ पत्रकम्॥ चतुर्विंशतिपत्राब्जं २४ द्वात्रिंशत्पत्रकं ३२ तथा ॥ चत्वारिंशत्पत्रकं तु ४० वृत्तं सूर्यसमप्रभम् ॥ पञ्चपद्मात्मकं वृत्तं चतुरस्रं च सुप्रदम् । सत्वं रजस्तमश्चैव त्रिगुणैः परितो वृतम्॥ चतुर्द्वारं द्वारदेशे बहिर्नागसमावृतम् । रुद्रपीठमिति ख्यातं देवतास्तत्र विन्यसेत्॥

अथ पूजनम् ॥ कृतनित्यक्रियेण परिहिताहतवाससा सोत्तरीयेण यज्ञोपवीतिना दक्षिणपार्श्वे बद्धशिखेन कृतनग्नत्रसव्यान्तरभस्मरुद्राक्षधारणेन सुप्रक्षालितपाणिपादेन सव्ये पाणौ कृतकुशोपग्रहेण दक्षिणे पाणौ धृतपवित्रेण यजमानेन यथोक्ते गोमयलिप्ते शुचौ देशे रुद्रपीठाद्दक्षिणतः प्रागग्राणामुदग्राणां वा त्रयाणां कुशानामास्तरणं तदुपरि यथाकामं व्याघ्रादिचर्म उत्तरलोम्नः प्राग्रीवस्यास्तरणम् तदभावे श्वेतकम्बलस्य चित्रकम्बलस्य वा आस्तरणम्॥तदुपरि मृदुवस्त्रस्य च॥

शिखाबन्धनम्—ॐ ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभोजने । तिष्ठ देवि शिखाबन्धे चामुण्डे ह्यपराजिते ॥ सहस्राणीत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छन्दः एको रुद्रो देवता महीप्रार्थने विनियोगः—ॐ सहस्राणि सहस्रशो बाह्वोस्तवहेतयः—।तासामीशानो भगवः पराचीना मुखा कृधि ॥५३॥ यएतावन्तश्च इत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छन्दः बहवो रुद्रा देवताः ककुभा प्रार्थने विनियोगः—ॐ यऽ एतावन्तश्च भूयांऽसश्च दिशो रुद्रा वितस्थिरे ॥ तेषांऽ सहस्रयोजनेव धन्वानि तन्मसि॥६३॥पृथ्वीतिमन्त्रस्य मेरुपृष्ठ ऋषिः सुतलञ्छन्दः कूर्मो देवता आसने विनियोगः—पृथ्वि त्वया धृता लोका देवि त्व विष्णुना धृता॥ त्वं च धारय मा देवि पवित्रं कुरु चासनम्॥इति मन्त्रेण तस्मिन्नासने उदङ्मुखेनैवोपवेशनम् । अत्र ऋत्विग्भिः साकं भस्मोद्धूलनादि कुर्यात्॥

अथ भस्मोद्धूलनप्रयोगः ॥ ॐ अस्त्राय फट् इति मन्त्रेण अस्त्रमुद्रा प्रदर्श्य सर्वाङ्गे हस्तापकर्षणेन मलोद्धूलनम् ॥ इदं विमलस्नानम् ॥

अथ विधिस्नानम् । सद्योजातमित्यस्य सद्योजात ऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता वामदेवायेत्यस्य वामदेव ऋषिः जगती छन्दः विष्णुर्देवता अघोरेत्यस्य अघोर ऋषिः अनुष्टुप्छन्दः रुद्रो देवता तत्पुरुषायेत्यस्य तत्पुरुष ऋषिः गायत्री छन्दः रुद्रो देवता ईशान इत्यस्य ईशान ऋषिः अनुष्टुप्छन्दः रुद्रो देवता सर्वेषां भस्मपरिग्रहणे

विनियोगः—ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ॥ भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः । वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ॥ सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि ॥ तन्नो रुद्रः प्रचोदयात् ॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ॥ ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदा शिवोम् ॥ इति पञ्चभिर्मन्त्रैर्नर्धसम्भवस्यावसथ्यसम्भवस्य वा भस्मनः सव्यहस्ते परिग्रहणं दक्षिणहस्तेनाच्छादनम् ।

भस्मनोऽभिमन्त्रणम्—अग्निरित्यादिभस्माभिमन्त्रणमन्त्राणां पिप्पलादऋषिः गायत्री छन्दः कालाग्निरुद्रो देवता भस्माभिमन्त्रणे विनियोगः ॥ अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वꣳ ह वा इदं भस्म मन एतानि चक्षूंषि भस्मानि तस्माद्व्रतमेतत्पाशुपतं यद्भस्मनाङ्गानि संस्पृशेत्तस्माद्व्रतमेतत्पाशुपतं पशुपाशविमोक्षाय इति मन्त्रेण त्रिःकृत्वो भस्मनोऽभिमन्त्रणम् ॥

भस्मन्यपाम् आसेचनम्—आपो ज्योतिरित्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः ब्रह्माग्निवायुसूर्या देवताः भस्मन्यपाम् आसेचने विनियोगः ॥ ॐ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् इति मन्त्रेण जलाधिपं विष्णुमभिध्यायन्भस्मन्यपामासेचनम् ॥ शिवषडक्षरमन्त्रस्य वामदेव ऋषिः त्रिष्टुप्छन्दः सदाशिवो देवता भस्मसम्मर्दने विनियोगः ॥ ॐ नमः शिवाय इति षडक्षरमन्त्रेण सम्मर्दनम् ॥

ईशान इत्यस्य ईशान ऋषिः अनुष्टुप्छन्दः रुद्रो देवता शिरसि भस्मोद्धूलने विनियोगः ॥ ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां

ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ इति मन्त्रेण शिरसि ।

तत्पुरुषायेत्यस्य तत्पुरुष ऋषिः गायत्री छन्दः रुद्रो देवता मुखे भस्मोद्धूलने विनियोगः॥ ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ मुखे ॥ अघोरेभ्य इत्यस्य अघोर ऋषिः अनुष्टुप्छन्दः रुद्रो देवता हृदये भस्मोद्धूलने विनियोगः ॥ ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ हृदये ॥ वामदेवायेत्यस्य वामदेव ऋषिः जगती छन्दः विष्णुर्देवता गुह्ये भस्मोद्धूलने विनियोगः ॥ ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ गुह्ये ॥ सद्योजातमिति सद्योजात ऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता पादयोर्भस्मोद्धूलने विनियोगः ॥ ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवे भवे नातिभवे भवस्व मा भवोद्भवाय नमः ॥ पादयोः ॥ प्रणवस्य ब्रह्मा ऋषिः दैवी गायत्री छन्दः परमात्माग्निर्देवता सर्वाङ्गे भस्मोद्धूलने विनियोगः ॥ ॐ इति प्रणवेन मस्तकादिपादपर्यन्तं सर्वाङ्गे धारणम् ॥

त्रिपुण्ड्रधारणम्—मानस्तोक इत्यस्य कुत्स ऋषिः जगती छन्दः एको रुद्रो देवता भस्मोद्धरणे विनियोगः ॥ ॐ मा नस्तोके तनये मा नऽ आयुषि मा नो गोषु मा नोऽ अश्वेषु रीरिषः। मा नो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ १६ ॥ इत्यनेन भस्मोद्धरणम् ॥

मूर्द्धानमित्यस्य भरद्वाज ऋषिः त्रिष्टुप्छन्दः अग्निर्देवता शिरसि भस्मना त्रिपुण्ड्रकरणे विनियोगः॥ ॐ मूर्द्धानन्दिवोऽ अरतिम्पृथिव्या वैश्वानरमृतऽ आजातमग्निम्॥ कविᳬ सम्राजमतिथिञ्जनानामासन्ना पात्रञ्जनयन्त देवाः ॥ ६ ॥ इत्यनेन मन्त्रेण शिरसि ॥

त्रिलोचन इत्यस्य अग्निर्ऋषिः रुद्रो देवता दक्षिणनेत्रे वामनेत्रे च भस्मोद्धूलने विनियोगः ॥ ॐ त्रिलोचनाय नमः इति दक्षिणनेत्रे । ॐ त्रिलोचनाय नमः इति वामनेत्रे ॥

वार्त्रहत्यायेति अग्निर्ऋषिः गायत्री छन्दः वृत्रहेन्द्रो देवता दक्षिणश्रोत्रे वामश्रोत्रे च भस्मना त्रिपुण्ड्रकरणे विनियोगः ॥ ॐ वार्त्रहत्याय शवसे पृतनाषाह्याय च ॥ इन्द्र त्वावर्त्तयामसि ॥६/६॥ इत्यनेन दक्षिणश्रोत्रे भस्मना त्रिपुण्ड्रकरणम् ॥ तथा अनेनैव मन्त्रेण वामश्रोत्रे च भस्मना त्रिपुण्ड्रकरणम् ॥

अणोरणीयानिति ब्रह्मा ऋषिः अनुष्टुप्छन्दः शिवो देवता मुखे भस्मना त्रिपुण्ड्रकरणे विनियोगः ॥ ॐ अणोरणीयानहमेव तद्वन्महानहं विश्वमिदं विचित्रम् । पुरातनोऽहं पुरुषोहमीश हिरण्मयोऽहं शिवरूपमस्मि ॥ इत्यनेन मुखे भस्मना त्रिपुण्ड्रकरणम् ॥

अग्निꣳ हृदयेनेति प्रजापतिर्ऋषिः अत्र सर्वाणि यजूंषिच्छन्दांसि लिङ्गोक्ता देवता हृदये भस्मना त्रिपुण्ड्रधारणे विनियोगः॥ॐ अग्निꣳ हृदयेनाशनिꣳ हृदयाग्रेण पशुपतिङ्कृत्स्नहृदयेन भवं यक्ना ॥ शर्वम्मतस्नाभ्यामीशानम्मन्युना महादेवमन्तःपर्शव्येनोग्रन्देवं वनिष्ठुना वसिष्ठहनुꣳ शिङ्गीनि कोश्याभ्याम् ॥६/६॥ इति मन्त्रेण हृदये भस्मना त्रिपुण्ड्रधारणम् ॥

नाभिर्मे इति प्रजापतिर्ऋषिः महापङ्क्तिछन्दः इन्द्रशरीरावयवदेवता नाभौ भस्मना त्रिपुण्ड्रकरणे विनियोगः॥ ॐ नाभिर्म्मे चित्तं विज्ञानम्पायुर्म्मेपचितिर्भसत्॥आनन्दनन्दावाण्डौ मे भगꣳ सौभाग्यम्पसः॥ जङ्घाभ्याम्पद्भ्यान्धर्म्मोस्मि विशि राजा प्रतिष्ठितꣳ ॥१/२०॥ इति मन्त्रेण नाभौ भस्मना त्रिपुण्ड्रकरणम्॥ॐ भवाय नमः इति दक्षबाहौ॥

ॐ रुद्राय नमः इति दक्षिणकूर्परे ॥ ॐ शर्वाय नमः इति दक्षिणमणिबन्धे ॥ ॐ पशुपतये नमः इति दक्षकरपृष्ठे ॥ ॐ उग्राय नमः इति वामबाहौ॥ॐ अग्रेवधाय नमः इति वामकूर्परे॥ॐ दूरेवधाय नमः इति वाममणिबन्धे॥ॐ हन्त्रे नमः इति वामकरपृष्ठे॥ॐ शङ्कराय नमः इति उदरे॥ॐ शम्भवे नमः इति पृष्ठे॥ॐ शिवाय नमः इति दक्षपार्श्वे॥ ॐ शिवाय नमः इति वामपार्श्वे ॥ इति भस्मत्रिपुण्ड्रधारणम् ॥

त्र्यम्बकमित्यस्य वसिष्ठ ऋषिः अनुष्टुप्छन्दः त्र्यम्बको रुद्रो देवता त्र्यायुषमित्यस्य नारायण ऋषिः उष्णिक्छन्दः आशीर्देवता भस्मना त्रिपुण्ड्रधारणे विनियोगः ॥

ध्यानम्—यास्य प्रथमारेखा सा गार्हपत्यश्चाकारो रजोभूर्लोकश्चात्मा क्रियाशक्तिर्ऋग्वेदः प्रातःसवनं महादेवो देवता यास्य द्वितीयारेखा सा दक्षिणाग्निरुकारः सत्त्वमन्तरिक्षमन्तरात्माचेच्छाशक्तिर्यजुर्वेदो माध्यन्दिनं सवनं महेश्वरो देवता यास्य तृतीया रेखा सा आहवनीयो मकारस्तमोद्यौः परमात्माज्ञानशक्तिः सामवेदस्तृतीयं सवनं शिवो देवता ॥ इति ध्यानम् ॥

ॐ त्र्यम्बकँय्यजामहे सुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ॥६०॥

ॐ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम्॥यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम् ॥६२॥ इति द्वाभ्यामृग्भ्या मध्यमाङ्गुलिभिस्तिसृभिः शिरसि त्रिपुण्ड्रधारणम्॥ॐ त्र्यम्बकँय्यजामहे सुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात्॥६०॥ॐ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम् ॥ यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम् ॥६२॥ इति द्वाभ्यामृग्भ्यां नेत्रयुग्मप्रमाणं भ्रुवोरन्तरं यावत्त्रिपुण्ड्रं ललाटे ॥

ॐ त्र्यम्बकँय्यजामहे सुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात् ॥६०॥ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम् ॥ यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम्॥६१॥एताभ्यामेव ऋग्भ्यां तथैव वक्षसि ॐ त्र्यम्बकँय्यजामहे सुगन्धिम्पुष्टिवर्द्धनम्॥उर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात् ॥६०॥ ॐ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम्॥यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम्॥६१॥ एवमेव दक्षिणोत्तरयोः स्कन्धयोश्च ॥ भस्मोदकपात्रे हस्तौ प्रक्षाल्य ॥ आपः पुनन्त्विति कश्यप ऋषिः अनुष्टुप्छन्दः आपो देवताः भस्मोदकपाने विनियोगः ॥ ॐ आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् ॥ पुनन्तुब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् ॥ यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम ॥ सर्वं पुनन्तुमामापोऽ सतां च प्रतिग्रहँ स्वाहा ॥ इति मन्त्रेण तज्जलं पिबेत् ॥ ध्यानम्—भूतिर्भूतिकरी पवित्रजननी पापौघविध्वंसिनी सर्वानन्दकरी सदाशिवकरी सर्वार्थसम्पत्करी ॥ रक्षोभूतपिशाचराक्षसमहाक्षौभैकसन्त्रासिनी तेनोराज्यविशेषमोक्षकरिणी भूतिः सदा धार्यताम् ॥ एतानि तानि शिवमन्त्रपवित्रितानि भस्मानि कामदहनाङ्गविलेपनानि॥ त्रैपुण्ड्रकानि रचितानि ललाटपट्टे लुम्पन्ति देवलिखितानि दुरक्षराणि ॥ इति भस्मधारणम् ॥

रुद्राक्षमालाधारणविधिः ॥ रुद्राक्षान् पात्रे निधाय—उदकेन प्रक्षाल्य ॥ शिवषडक्षरमन्त्रस्य वामदेवऋषिः देवीपङ्क्तिश्छन्दः शिवो देवता रुद्राक्षाणां प्रतिष्ठायां पूजने च विनियोगः ॥ ॐ नमः शिवाय रुद्राक्षाः प्रतिष्ठिता भवन्तु ॥ ॐ नमः शिवाय रुद्राक्षेभ्यो नमः गन्धं समर्पयामि॥ ॐ नमः शिवाय रुद्राक्षेभ्यो नमः पुष्पाणि समर्पयामि ॥

ॐ नमः शिवाय रुद्राक्षेभ्यो नमः धूपं समर्पयामि॥ ॐ नमः शिवाय रुद्राक्षेभ्यो नमः दीपं समर्पयामि॥ ॐ नमः शिवाय रुद्राक्षेभ्यो नमः नैवेद्यं निवेदयामि ॥ ॐ नमः शिवाय रुद्राक्षेभ्यो नमः आचमनीयं समर्पयामि ॥ ध्यानम्-विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरःशरीरः। अत्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य॥ हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम्॥ तथादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ॥ उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ॥ ॐ नमः शिवाय रुद्राक्षेभ्यो नमः ध्यानं समर्पयामि ॥

त्र्यम्बकमित्यस्य वसिष्ठ ऋषिः अनुष्टुप्छन्दः त्र्यम्बको रुद्रो देवता कण्ठे मस्तके कर्णयोः करयोर्बाह्वोर्नयनयोः शिखायां वक्षसि च रुद्राक्षधारणे विनियोगः॥ ॐ त्र्यम्बकंयजामहे सुगन्धिम्पुष्टिवर्द्धनम्॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥१॥

इति मन्त्रेण कण्ठे मस्तके कर्णयोः करयोर्बाह्वोर्नयनयोः शिखायां वक्षसि च रुद्राक्षान् धारयेत् ॥

---

१ रुद्राक्षान्कण्ठदेशे दशन ३२ परिमितान्मस्तके विंशती द्वे ४० षट् षट् कर्णप्रदेशे करयुगलकृते द्वादश द्वादशैव ॥ बाह्वोरिन्दोः कलाभि १६ र्नयनयुगकृते १ एकमेकं १ शिखायां वक्षस्यष्टाधिक यः कलयति शतकं १०८ स स्वयं नीलकण्ठः ॥ प्रश्नोत्तरखण्डेऽपि-रुद्राक्षधारणं पुण्यं केन वा सदृशं भवेत्। महाव्रतमिदं प्राहुर्मुनयस्तत्त्वदर्शिन.॥ सहस्रं धारयेद्यस्तु रुद्राक्षाणां धृतव्रतः। तं नमन्ति सुराः सर्वे यथा रुद्रस्तथैव स. ॥ अभावे तु सहस्रस्य बाह्वोः षोडश षोडश। एकं शिखायां करयोर्द्वादश द्वादशैव हि ॥ द्वात्रिंशत्कण्ठदेशे तु चत्वारिंशच्च मस्तके। नेत्रैकं कर्णयोः षट् षट् पञ्चस्यष्टोत्तर शतम्॥ यो धारयति रुद्राक्षान् रुद्रवत्सोऽपि पूज्यते। मुक्ताप्रवालस्फटिकरौप्यवैदूर्यकाञ्चनैः। समेतान्धारयेद्यस्तु रुद्राक्षान्स शिवो भवेत् ॥

## ॥ अथ भूशुद्धिप्रयोगः ॥

हस्ते जलमादाय ॐ नमो भगवते रुद्रायेति दशाक्षरमन्त्रस्य प्रजापतिर्ऋषिः रुद्रो देवता विराट् छन्दः आचमने प्राणायामे च विनियोगः । ॐ नमो भगवते रुद्राय स्वाहा । ॐ नमो भगवते रुद्राय स्वाहा । ॐ नमो भगवते रुद्राय स्वाहा । हस्तप्रक्षालनम्–ॐ नमो भगवते रुद्राय । प्राणायामः ॐ नमो भगवते रुद्राय । ॐ नमो भगवते रुद्राय । ॐ नमो भगवते रुद्राय । हस्ते जलमादाय तिथ्यादि संकीर्त्य श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थम् कायिकाद्यखिलपापक्षयार्थं धर्मार्थकाममोक्षाणामन्यतरकामो वा श्रीरुद्रदेवता प्रीतये करिष्यमाणकर्माङ्गत्वेन देवताराधनयोग्यताप्राप्त्यर्थं ऋत्विग्भिः सह भूशुद्ध्याख्यं कर्म करिष्ये ।

नमस्काराः—दक्षिणे–ॐ सरस्वत्यै नमः ॐ शङ्खनिधये नमः । वामभागे–ॐ लक्ष्म्यै नमः ॐ पद्मनिधये नमः ।

आसनम्—पृथ्वि त्वयेति मेरुपृष्ठ ऋषिः कूर्मो देवता सुतल छन्दः आसने विनियोगः । ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

---

१ केवलान्वापि रुद्राक्षान्यथा लाभ बिभर्ति य । त न स्पृशन्ति पापानि तमासीव विभावसुम् ॥ परशुरामकारिकायाम्–भूरसीति च भूशुद्धिं कार्याकार्यस्य सिद्धये । रामतापिन्याम्–देवो भूत्वा यजेद्देव नादेवा देवमर्चयेत् । देवार्चायोग्यताप्राप्त्यै भूतशुद्धिं समाचरेत् । भूतशुद्धिं विधायैव प्राणस्थापनमाचरेत् । एव प्राणान्प्रतिष्ठाप्य मातृका न्यासमाचरेत्॥ रुद्रकल्पद्रुमस्याभिषेकपरिच्छेदे–भूतशुद्ध्यादिक कार्यमिति परशुरामादय नैवेति देवयाज्ञिकनारायणभट्टादय, हेमाद्रौ महार्णवे चाप्येवम् । भूतशुद्ध्याद्यकरणे न रुद्रवैगुण्य करणे तु फलभूयस्त्वमिति केचित् ।

प्रार्थना—ॐ विश्वशक्त्यै नमः ॐमहाशक्त्यै नमः ॐ कूर्मासनाय नमः ॐयोगासनाय नमः ॐअनन्तासनाय नमः ॐविमलासनाय नमः। मध्ये—ॐ परमसुखासनाय नमः ॐभूर्भुवः स्वः आत्मासनाय नमः—इति मन्त्रेण पुष्पादिना आत्मनः आसनदानम् ॥

शिखाबन्धनम्—चिद्रूपिणि महामाये दिव्यतेजःसमन्विते। तिष्ठ देवि शिखाबन्धे तेजो वृद्धिं कुरुष्व मे ॥ अङ्गुष्ठमात्रां शिखां नैर्ऋत्या बद्ध्वा दिग्बन्धः—अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम्। सर्वेषामवरोधेन ब्रह्मकर्मसमारभे ॥ तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ॥ भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥

तालत्रयकरणम्—ॐ सर्वभूतनिवारकाय शार्ङ्गाय सशराय सुदर्शनाय अस्त्रराजाय हुंफट् स्वाहा ॥ तालत्रयं कृत्वा स्वस्य परितः सर्वदिक्षु अस्त्रमुद्रां प्रदर्शयेत्। स्वदक्षिणभागे—ॐगुरुभ्यो नमः ॐपरमगुरुभ्यो नमः ॐपरमेष्ठिगुरुभ्यो नमः ॐपूर्वसिद्धेभ्यो नमः ॐआचार्येभ्यो नमः। स्ववामभागे—ॐगणेशाय नमः ॐदुर्गायै नमः ॐक्षेत्रपालाय नमः ॐयोगिनीभ्यो नमः ॐक्षेत्रेशाय नमः।

भूमिताडनम्—अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम्। सर्वेषामवरोधेन भूशुद्ध्यादि समारभे ॥ स्ववामपार्ष्णिना त्रिवारं भूमिं ताडयेत्। भूरसीत्यस्य प्रजापतिर्ऋषिः मातृका देवता प्रस्तारपङ्क्तिश्छन्दः भूशुद्धौ विनियोगः ॥ भूमौ हस्तं कृत्वा—ॐ भूरसि

भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री। पृथिवीं यच्छ पृथिवीन्दृꣳह पृथिवीम्माहिꣳसीः ॥ १३/१८ ॥

भैरवनमस्कारः–यो भूतानामित्यस्य कौण्डिन्य ऋषिः नारायणो देवता अनुष्टुप्छन्दः भैरवनमस्कारे विनियोगः–ॐयो भूतानामधिपतिर्य्यस्मिँल्लोका ऽ अधिश्रिताः । य ऽ ईशे महतो महाँस्तेन गृह्णामि त्वामहम्मयि गृह्णामि त्वामहम् ॥ २०/३२ ॥ भैरवाय नमः ॥ इति भूशुद्धिः ॥

## ॥ अथ भूतशुद्धिप्रयोगः ॥

कुम्भकप्राणायामेन मूलाधारात्कुण्डलीं परदेवता बिसतन्तुनिभा समुत्थाप्य ब्रह्मरन्ध्रगता स्मृत्वा हृदयस्थं जीवं प्रदीपकलिकाकारं गृहीत्वा सुषुम्णामार्गेण ब्रह्मरंध्रं गत्वा—

ॐहंसः सोहमिति मन्त्रेण जीवं ब्रह्मणि संयोजयेत् । मातृकोपसंहारः–

| | |
|---|---|
| ॐक्षकारं हकारे उपसंहरामि | ॐहकारं सकारे उपसंहरामि |
| ॐसकारं षकारे उपसंहरामि | ॐषकारं शकारे उपसंहरामि |
| ॐशकारं वकारे उपसंहरामि | ॐवकारं लकारे उपसंहरामि |
| ॐलकारं रकारे उपसंहरामि | ॐरकारं यकारे उपसंहरामि |
| ॐयकारं मकारे उपसंहरामि | ॐमकारं भकारे उपसंहरामि |
| ॐभकारं बकारे उपसंहरामि | ॐबकारं फकारे उपसंहरामि |
| ॐफकारं पकारे उपसंहरामि | ॐपकारं नकारे उपसंहरामि |

१ मूलाधारात्समुत्थाप्य कुण्डलीं परदेवताम् । सुषुम्णामार्गमाश्रित्य ब्रह्मरन्ध्रगता स्मरेत् । जीवं ब्रह्मणि संयोज्य हंसमन्त्रेण साधकः ॥ २ मातृकोपसंहारः आह्निकसूत्रावल्याम् अस्ति ॥ केष्वपि प्राचीनग्रन्थेषु न दृश्यते तत्र मूलं मृग्यम् ॥

| | | | | | |
|---|---|---|---|---|---|
| ॐनकारं | धकारे | उपसंहरामि | ॐधकारं | दकारे | उपसंहरामि |
| ॐदकारं | थकारे | उपसंहरामि | ॐथकारं | तकारे | उपसंहरामि |
| ॐतकारं | णकारे | उपसंहरामि | ॐणकारं | ढकारे | उपसंहरामि |
| ॐढकारं | डकारे | उपसंहरामि | ॐडकारं | ठकारे | उपसंहरामि |
| ॐठकारं | टकारे | उपसंहरामि | ॐटकारं | ञकारे | उपसंहरामि |
| ॐञकारं | झकारे | उपसंहरामि | ॐझकारं | जकारे | उपसंहरामि |
| ॐजकारं | छकारे | उपसंहरामि | ॐछकारं | चकारे | उपसंहरामि |
| ॐचकारं | ङकारे | उपसंहरामि | ॐङकारं | घकारे | उपसंहरामि |
| ॐघकारं | गकारे | उपसंहरामि | ॐगकारं | खकारे | उपसंहरामि |
| ॐखकारं | ककारे | उपसंहरामि | ॐककारं | अःकारे | उपसंहरामि |
| ॐअःकारं | अंकारे | उपसंहरामि | ॐअंकारं | औकारे | उपसंहरामि |
| ॐऔकारं | ओकारे | उपसंहरामि | ॐओकारं | ऐकारे | उपसंहरामि |
| ॐऐकारं | एकारे | उपसंहरामि | ॐएकारं | ॡकारे | उपसंहरामि |
| ॐॡकारं | ऌकारे | उपसंहरामि | ॐऌकारं | ॠकारे | उपसंहरामि |
| ॐॠकारं | ऋकारे | उपसंहरामि | ॐऋकारं | ऊकारे | उपसंहरामि |
| ॐऊकारं | उकारे | उपसंहरामि | ॐउकारं | ईकारे | उपसंहरामि |
| ॐईकारं | इकारे | उपसंहरामि | ॐइकारं | आकारे | उपसंहरामि |
| ॐआकारं | अकारे | उपसंहरामि ॥ | | | |

ॐअकारः सहस्रदलाम्बुजाकारे ब्रह्मरन्ध्रे परमात्मनिलयं गत इति भावयेत्। शरीरस्यात्मा ऋषिः प्रकृतिश्छन्दः परमात्मा देवता शरीर-भूतशुद्ध्यर्थे जपे विनियोगः। ॐ पृथ्वीबीजमन्त्रस्य ब्रह्मा ऋषिः

१ शरीराकारभूतानां भूतानां यद्विशोधनम्। अव्ययब्रह्मसम्पर्काद्भूतशुद्धिरियं मता॥ भूतशुद्धिं विना कर्म क्रियते यज्जपादिकम्। तत्सर्वं निष्फलं यस्मात्तस्मात्तां पूर्वमाचरेत्॥

गायत्रीछन्दः पृथ्वीदेवता पृथ्वीभूतशुद्ध्यर्थे जपे विनियोगः-पादादिजानुपर्यन्तं पृथिवीस्थानं चतुरस्रं पीतवर्णं सबिन्दुकं लँबीजसहितं ध्यायेत् ॥

ॐवरुणबीजमन्त्रस्य हिरण्यगर्भ ऋषिः अनुष्टुप्छन्दः वरुणो देवता वारुणीभूतशुद्ध्यर्थे जपे विनियोगः-जान्वादिनाभिपर्यन्तं वरुणमण्डलं धनुराकारं शुभ्रवर्णं सबिन्दुकं वँबीजसहितं ध्यायेत् ।

ॐवह्निबीजमन्त्रस्य कश्यपऋषिः जगतीछन्दः जातवेदोऽग्निर्देवता आग्नेयभूतशुद्ध्यर्थे जपे विनियोगः-नाभ्यां आरभ्य हृदयपर्यन्तं त्रिकोणम् अग्निमण्डलं रक्तवर्णं सबिन्दुकं रँबीजसहितं ध्यायेत् ।

ॐवायुबीजमन्त्रस्य किष्कन्दऋषिः बृहतीछन्दः वायुर्देवता वायव्याख्यभूतशुद्ध्यर्थे जपे विनियोगः-हृदयादारभ्य भ्रूमध्यपर्यन्तं वायुमण्डलं वर्तुलं धूम्रवर्णं सबिन्दुकं यँबीजसहितं ध्यायेत ।

ॐआकाशबीजमन्त्रस्य रुद्रऋषिः त्रिष्टुप्छन्दः परमात्मा देवता आकाशाख्यभूतशुद्ध्यर्थे जपे विनियोगः-भ्रूमध्यादारभ्य ललाटान्त-

---

१ परशुराममहारुद्रपद्धतौ-पादादिजानुपर्यन्तं भूतत्त्व तत्र मण्डलम् । पार्थिवं चतुरस्रं तल्लँबीज वज्रलाञ्छितम्॥ पीतवर्णं च तं ध्यात्वा बीजोच्छ्रितेन वा पुनः । भावितेन च तेनैव पृथिवीं मार्ग्यशोधयेत् ॥ २ जान्वादिनाभिपर्यन्तम् आपस्तत्त्वं द्वितीयकम् । वारुणं मण्डलं तत्र धनुर्वद्बिन्दुलाञ्छितम् ॥ वं बीजं शुक्लवर्णं तद्ध्यात्वाऽऽपस्तेन शोधयेत् ॥ ३ नाभिहृदयपर्यंतं तेजस्तत्त्वं तृतीयकम् । मण्डलं वह्निसदृशं तत्त्रिकोणं पद्मलाञ्छितम्॥ रँबीजं रक्तवर्णं तद्ध्यात्वा तेजस्तु शोधयेत्॥ ४ हृदयादिभ्रुवोरन्तं वायुतत्त्वं चतुर्थकम् । वायव्यं मण्डलं तत्र वर्तुलं स्वस्तिकान्वितम् ॥ कृष्णवर्णं च यंबीजं ध्यात्वा वायुं विशोधयेत् ॥ ५ भ्रूमध्याद् ब्रह्मरन्ध्रान्तं व्योमतत्त्वं च पञ्चमम् । हंबीजं निर्मलं ध्यात्वा तेनैव व्योम शोधयेत् ॥

पर्यन्तम् आकाशमण्डलं नीरूपम् अवर्णं मबिन्दुकं हँबीजसहितं ध्यायेत् ।

ततो वायुं सम्यङ् निरुध्य पृथिवीम् अप्सु लयं नयेत्—ॐ लँ ह्रॉं ह्रुँ फट् भुवं जले प्रविलापयामि ॥ ततो जलम् अग्नौ संहरेत्—ॐ वँ ह्रीं ह्रः फट् जलं शुचौ प्रविलापयामि । ततः अग्निं वायौ संहरेत्—ॐ रँ ह्रूँ ह्रः फट् अग्निं वायौ प्रविलापयामि । ततो वायुम् आकाशे लयं नयेत्—ॐ यँ ह्रैं ह्रुँ ह्रः फट् वायुम् आकाशे प्रविलापयामि । तत आकाशम् अहंकारे संहरेत्—ॐ हँ ह्रौं ह्रः फट् आकाशम् अहंकारे प्रविलापयामि ॥ ॐ अहंकारं प्रकृतौ प्रविलापयामि । ॐ प्रकृतिं परमात्मनि प्रविलापयामि । ततः शिरसि कर्णिकाकेसरैर्युते अष्टदले पद्मे चन्द्रसन्निभं चित्प्रकाशितं शिवं स्मृत्वा शुद्धचिन्मयो भूत्वा वामकुक्षिस्थितं कृष्णम् अङ्गुष्ठपरिमाणकं विप्रहत्या शिरोयुक्तं कनकस्तेयबाहुकं मदिरापानहृदयं गुरुतल्पकटीयुतं तत्संयोगिपदद्वन्द्वम् उपपातकरोमकं खड्गचर्मधरं दुष्टम् अधोवक्त्रं दुःसहं पापपूरुषं चिन्तयेत् ॥ यँ इति वायुबीजं नाभौ एकादशवार स्मृत्वा एनं पापपूरुषं शोषयेत्—ॐ यमिति वायुबीजमन्त्रस्य किष्किन्धऋषिः बृहतीछन्दः वायुर्देवता पापपूरुषशोषणे विनियोगः—नाभिकुहरादुत्थितेन महावायुना ॐ यँ यँ यँ यँ यँ यँ यँ यँ यँ यँ यँ ( जप्त्वा ) ॐ पापपूरुषं शोषयामि ॥

---

१ एव भूतानि सञ्चिन्त्य प्रत्येक प्रविलापयेत् । भुव जल जल वह्नौ वह्निं वायौ नभस्यमुम् ॥ विलाप्य खमहंकारे महत्तत्त्वेऽप्यहंकृतम् । महान्त प्रकृतौ मायामात्मनि प्रविलापयेत् ॥ २ नाभौ स्मृत्वा मरुद्बीज यमित्यक्षरसंयुतम् । कृष्ण षट्कोणमध्यस्थ शोषयेत्तच्च वायुना ॥

ॐ रंमिति अग्निबीजमन्त्रस्य कश्यपऋषिः जगतीछन्दः जातवेदोऽग्निर्देवता पापपुरुषदहने विनियोगः—मूलाधारादुत्थितेन अग्निकलापेन नवरन्ध्रप्रविष्टेन ॐ रँ रँ रँ रँ रँ रँ रँ रँ रँ रँ रँ ( जप्त्वा ) ॐ पापपुरुषं सन्दहामि ॥ ॐ वंमिति वरुणबीजमन्त्रस्य हिरण्यगर्भऋषिः अनुष्टुप्छन्दः वरुणो देवता जीवसन्देहाप्लवने विनियोगः—दग्ध्वा तद्दक्षिणया नासिकया विरेच्य मूलाधारात्सुषुम्णा मार्गेण कुण्डलिनीं सच्चिदानन्दमयीं द्वादशान्तं नीत्वा तत्संसर्गाद्द्रुतचिच्चन्द्रमण्डलाद्विगलितसुधाधारापूरेण ॐ वँ वँ वँ वँ वँ वँ वँ वँ वँ वँ वँ (इत्यमृतबीज जप्त्वा) ॐ जीवसन्दोहम् आप्लावयामि ॥ ॐ लंमिति पृथिवीबीजमन्त्रस्य ब्रह्माऋषिः गायत्रीछन्दः पृथिवी देवता भस्मपिण्डीकरणे विनियोगः—ॐ लँ लँ लँ लँ लँ लँ लँ लँ लँ लँ लँ ( जप्त्वा ) ॐ अमृतपिण्डाच्छरीरमुत्पादयामि ॥ ॐ हंमिति आकाशबीजमन्त्रस्य ब्रह्मा ऋषिः गायत्रीछन्दः परमात्मादेवता अवकाशीकरणे विनियोगः—ॐ हँहँहँहँहँहँहँहँहँहँहँ ( जप्त्वा ) ॐसावकाशं करोमि ॥ ततः सृष्टिमार्गेण ब्रह्मणः सकाशादाकाशादीनि भूतानि उत्पादयेत्—ब्रह्मणः प्रकृतिः प्रकृतेर्महत् महतो-

---

१ रमित्यक्षरसंयुक्तं त्रिकोणं वह्निमण्डलम् । रुद्रवारं जपित्वा तु निर्दहेत्पापपूरुषम् ॥ अन्यग्रन्थेषु यमिति बीजं षोडशवारं रमिति चतुःषष्टिवारं वमिति द्वात्रिंशद्वारं जप्त्वा शोषणादिविधिर्दर्शितस्तथाप्यत्र प्रयोगे काशीदीक्षितकृतरुद्रपद्धत्यनुसारेण सर्वाण्यपि बीजान्येकादशवारं जप्त्वा शोषणादिविधिरुक्तः ॥ २ ततो हृत्पद्ममध्यस्थाच्चन्द्रबिम्बात्परिस्रुतात् । वमित्यक्षरसंयुक्तादिर्गतामृतवृष्टिभिः । सुधाबीजेन दहोत्थं भस्म सम्प्लावयेत्सुधीः ॥ ३ भूबीजेन घनीकृत्य भस्म तत्कनकाण्डवत् ॥ ४ हबीजं निर्मलं जप्त्वा सावकाशं तु कारयेत् ॥

ऽहङ्कारः अहङ्कारादाकाशः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम् अन्नाद्रेतः रेतसः पुरुषः स वा एष पुरुषोऽन्नरसमयः ॐ हंसः सोऽहम् ब्रह्मण्येकभूतं जीवं स्वहृदयाम्बुजे संस्थाप्य कुण्डलीं मूलाधारगतां संस्मरेत् ॥ इति भूतशुद्धिः ॥

## ॥ अथ प्राणप्रतिष्ठाप्रयोगः ॥

अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामानि छन्दांसि जगत्स्रष्टिः प्राणशक्तिर्देवता आँ बीजं ह्रीँ शक्तिः क्रोँ कीलकं स्वशरीरे प्राणप्रतिष्ठापने विनियोगः—ॐ ब्रह्मविष्णुमहेश्वरऋषिभ्यो नमः शिरसि । ऋग्यजुःसामच्छन्दोभ्यो नमः मुखे। जगत्स्रष्ट्यै प्राणशक्त्यै नमः हृदये । आँ बीजाय नमः लिङ्गे । ह्रीँ शक्तये नमः पादयोः क्रोँ कीलकाय नमः सर्वाङ्गेषु ।

अथ करन्यासाः—ॐ आँ ह्रीँ क्रोँ अँ कँ खँ गँ घँ ङँ पृथिव्यप्तेजोवाय्वाकाशात्मने आँ अङ्गुष्ठाभ्यां नमः ।

ॐ आँ ह्रीँ क्रोँ इँ चँ छँ जँ झँ ञँ शब्दस्पर्शरूपरसगन्धात्मने ईँ तर्जनीभ्यां नमः। ॐ आँ ह्रीँ क्रोँ उँ टँ ठँ डँ ढँ णँ श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊँ मध्यमाभ्यां नमः । ॐ आँ ह्रीँ क्रोँ एँ तँ थँ दँ धँ नँ वाक्पाणिपादपायूपस्थात्मने ऐँ अनामिकाभ्यां नमः । ॐ आँ ह्रीँ क्रोँ ओँ पँ फँ बँ भँ मँ वक्तव्यादानगमनविसर्गानन्दात्मने औँ कनिष्ठि-

---

१ कुण्डलीं जीवमादाय परब्रह्मसुधामयीम् । संस्थाप्य हृदयाम्भोजे मूलाधारगतां स्मरेत् ॥

काभ्यां नमः । ॐ आँ ह्रीँ क्रोँ अँ यँ रँ लँ वँ शँ षँ सँ हँ ळँ क्षँ मनोबुद्ध्यहङ्कारचित्तविज्ञानात्मने अः करतलकरपृष्ठाभ्यां नमः।

अथ हृदयादिन्यासाः—ॐ आँ ह्रीँ क्रोँ अँ कँ खँ गँ घँ ङँ पृथिव्यप्तेजोवाय्वाकाशात्मने आँ हृदयाय नमः। ॐआँह्रीँ क्रोँ इँ चँ छँ जँ झँ ञँ शब्दस्पर्शरूपरसगंधात्मने इँ शिरसे स्वाहा । ॐ आँ ह्रीँ क्रोँ उँटँठँडँढँणँ श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने उँ शिखायै वषट् । ॐ आँ ह्रीँ क्रोँ एँ तँ थँ दँ धँ नँ वाक्पाणिपादपायूपस्थात्मने ऐँ कवचायहुम् । ॐ आँ ह्रीँ क्रोँ ओँ पँफँबँभँमँ वक्तव्यादानगमनविसर्गानन्दात्मने औँ नेत्रत्रयाय वौषट् । ॐआँह्रीँक्रोँअँयँरँलँवँशँषँसँहँळँक्षँ मनोबुद्ध्यहङ्कारचित्तविज्ञानात्मने अः अस्त्राय फट् । आँ इति पाशबीज नाभेरारभ्य पादान्तं न्यसामि । ह्रीँ इति शक्तिबीजं हृदयादारभ्य नाभ्यन्तं न्यसामि । क्रोँ इति अङ्कुशबीजं मस्तकादारभ्य हृदयान्तं न्यसामि । ॐ यँ त्वगात्मने हृदयाय नमः। ॐ रँ असृगात्मने दोर्मूलाभ्यां नमः। ॐ लँ मांसात्मने ग्रीवायै नमः। ॐ वँ मेद आत्मने कुक्षिभ्यां नमः । ॐ शँ अस्थ्यात्मने दक्षिणकराय नमः । ॐ षँ मज्जात्मने वामकराय नमः । ॐ सँ शुक्रात्मने दक्षिणपादाय नमः । ॐ हँ प्राणात्मने वामपादाय नमः । ॐ ळँ शक्त्यात्मने जठराय नमः । ॐ क्षँ वीजात्मने आस्याय नमः ।

ध्यानम्—रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैः पाशं कोदण्डमिक्षूद्भवमथगुणमप्यङ्कुशं पञ्चबाणान् । बिभ्राणासृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥

हृदये हस्तं निधाय-ॐ आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ ळँ क्षँ हंसः सोहं मम प्राणा इह प्राणाः ॐ आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ ळँ क्षँ हंसः सोहं मम जीव इह स्थितः ॐ आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ ळँ क्षँ हंसः सोहं मम सर्वेन्द्रियाणि इहायान्तु ॐ आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ ळँ क्षँ हंसः सोहं मम वाङ्मनश्चक्षुः श्रोत्रघ्राणप्राणाः इहैवागत्य स्वस्तये सुखं चिरं तिष्ठन्तु स्वाहा। षोडशवारं प्रणवं जपन् षोडशसंस्कारान्भावयेत्–१ ॐ गर्भाधानं सम्पादयामि २ ॐ पुंसवनं सम्पादयामि ३ ॐ सीमन्तोन्नयनं संपादयामि। ४ ॐ जातकर्म संपादयामि। ५ ॐ नामकरणं संपादयामि। ६ ॐ निष्क्रमणं संपादयामि। ७ ॐअन्नप्राशनं संपादयामि। ८ ॐचूडाकरणं संपादयामि। ९ ॐउपनयनं संपादयामि। १०।११।१२।१३ ॐ ॐ ॐ ॐ वेदव्रतचतुष्टयं संपादयामि। १४ ॐ गोदानं संपादयामि। १५ ॐ व्रतविसर्गं संपादयामि। १६ ॐ विवाहं संपादयामि। इति प्राणप्रतिष्ठाप्रयोगः॥

## ॥ अथ अन्तर्मातृकान्यासप्रयोगः ॥

अस्य श्री अन्तर्मातृकान्यासस्य ब्रह्मऋषिः दैवी गायत्रीछन्दः अन्तर्मातृकासरस्वती देवता हलोबीजानि स्वराः शक्तयः बिन्दवः कीलकम् अनुष्ठीयमानश्रीरुद्रपूजनपूर्वकरुद्राभिषेकाङ्गत्वेन न्यासे विनियोगः॥

१ सोहमिति॥

ऋष्यादिन्यासाः–ॐब्रह्मणे नमः शिरसि ॐगायत्रीछन्दसे नमो मुखे ॐ अन्तर्मातृकासरस्वतीदेवतायै नमो हृदि ॐ हल्बीजेभ्यो नमः गुह्ये ॐस्वरशक्तिभ्यो नमः पादयोः ॐविन्दुकीलकाय नमः सर्वाङ्गे ॥ प्राणायामत्रयं कृत्वा करन्यासाः ॐ अँ कँ खँ गँ घँ ङँ आँ अङ्गुष्ठाभ्यां नमः ॐ इँ चँ छँ जँ झँ ञँ ईँ तर्जनीभ्यां नमः ॐ उँ टँठँडँढँणँ ऊँ मध्यमाभ्यां नमः ॐ एँ तँ थँ दँ धँ नँ ऐँ अनामिकाभ्यां नमः ॐ ओँ पँ फँ बँ भँ मँ औँ कनिष्ठिकाभ्यां नमः ॐ अँ यँ रँ लँ वँ शँ षँ सँ हँ ळँ क्षँ अः करतलकरपृष्ठाभ्यां नमः ।

हृदयादिषडङ्गन्यासाः–ॐ अँ कँ खँ गँ घँ ङँ आँ हृदयाय नमः ॐ इँ चँ छँ जँ झँ ञँ ईँ शिरसे स्वाहा ॐ उँ टँ ठँ डँ ढँ णँ ऊँ शिखायै वषट् ॐ एँ तँ थँ दँ धँ नँ ऐँ कवचायहुम् ॐ ओँ पँ फँ बँ भँ मँ औँ नेत्रत्रयाय वौषट् ॐ अँ यँ रँ लँ वँ शँ षँ सँ हँ ळँ क्षँ अः अस्त्राय फट् ।

ध्यानम्–पञ्चाशल्लिपिभिर्विभक्त मुखदोःहृत्पद्मवक्षःस्थलां भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम् । मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजैर्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवता-

१ उच्चार्यैव ऋषिच्छन्दोदेवताबीजशक्तयः । शिरोवदनहृद्गुह्यपादेषु क्रमता न्यसेत् ॥
२ इडया पूरयेत्प्राणान्स्वरैर्वर्णैश्च कुम्भयेत् । रेचयेद्यादिकैर्वर्णैस्ततः पिङ्गलया पुनः ॥
तथैव पूरणं वायोः कुम्भकं रेचनं पुनः । इडया स्याचतो द्वाभ्यां पूरणादि त्रयं पुनः ॥
प्राणायामत्रयं ह्येवं कृत्वा न्यासान्समारभेत् ॥

मा:श्रये ॥ कण्ठस्थपोडशदलपद्मे अकारादिषोडशस्वरान्न्यसेत्—अँ आँ इँ ईँ उँ ऊँ ऋँ ॠँ लृँ ॡँ एँ ऐँ ओँ औँ अं अः । हृदयस्थे द्वादशदलपद्मे कादिठान्तान्न्यसेत्—अँ कँ खँ गँ घँ ङँ चँ छँ जँ झँ ञँ टँ ठँ । नाभौ दशदलपद्मे डादिफान्तान्न्यसेत्—अँ डँ ढँ णँ तँ थँ दँ धँ नँ पँ फँ । तदधः लिङ्गे षड्दले बादिलान्तान्न्यसेत् । अँ बँ भँ मँ यँ रँ लँ । आधारे गुदे चतुर्दले वादिसान्तान्न्यसेत्—अँ वँ शँ षँ सँ । ललाटे द्विदले अँ हँ क्षँ इति द्वौ वर्णौ विन्यसेत् ।

ध्यानम्—आधारे लिङ्गनाभौ प्रकटितहृदये तालुमूले ललाटे द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्द्धे चतुष्के । वासान्ते बालमध्ये डफकटसहिते कण्ठदेशे स्वराणां हं क्षं तत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि ॥ बन्धूकाभा त्रिनेत्रा पृथुजघनलसत्कुक्षिमुद्रत्नवक्त्रा पीनोत्तुङ्गमवृद्धस्तनजघनभरा यौवनारम्भरुद्धाम् । सर्वालङ्कारयुक्तां सरसिजवदनामिन्दुसङ्क्रान्तमौलिं धम्पापाशाङ्कुशेष्टाभयवरदकराम्बिकां तां नमामि ॥ वर्णाङ्गवर्णमालाङ्गीं भारतीं भाललोचनाम् । रत्नसिंहासनां देवीं वन्देऽहं सिद्धमातृकाम् ॥

॥ अथ बहिर्मातृकान्यासप्रयोगः ॥

अस्य श्रीबहिर्मातृकान्यासस्य ब्रह्मा ऋषिः दैवीगायत्रीच्छन्दः बहिर्मातृकासरस्वतीदेवता हलोबीजानि स्वराः शक्तयः बिन्दुः कीलकम् अनुष्ठीयमानश्रीरुद्रपूजनपूर्वकरुद्राभिषेकाङ्गत्वेन न्यासे विनियोगः ।

ऋष्यादिन्यासः–ॐ ब्रह्मणे नमः शिरसि ॐ गायत्रीच्छन्दसे नमो मुखे ॐ वह्निमातृकासरस्वतीदेवतायै नमो हृदि ॐ हल्बीजेभ्यो नमः गुह्ये ॐ स्वरशक्तिभ्यो नमः पादयोः । ॐ अँ नमः मौलौ ॐ आँ नमः मुखे ॐ इँ नमः दक्षिणनेत्रे ॐ ईँ नमः वामनेत्रे ॐ उँ नमः दक्षिणकर्णे ॐ ऊँ नमः वामकर्णे ॐ ऋँ नमः दक्षिणनासापुटे ॐ ॠँ नमः वामनासापुटे ॐ ऌँ नमः दक्षिणकपोले ॐ ॡँ नमः वामकपोले ॐ एँ नमः ऊर्ध्वदन्तपङ्क्तौ ॐ ऐँ नमः अधोदन्तपङ्क्तौ ॐ ओँ नमः ऊर्ध्वोष्ठे ॐ औँ नमः अधरोष्ठे ॐ अँ नमः जिह्वामूले ॐ अः नमः ग्रीवायाम् ॥

ॐ कँ नमः दक्षिणबाहुमूले ॐ खँ नमः दक्षिणकूर्परे ॐ गँ नमः दक्षिणमणिबन्धे ॐ घँ नमः दक्षिणकराङ्गुलिमूले ॐ ङँ नमः दक्षिणकराङ्गुल्यग्रे ॐ चँ नमः वामबाहुमूले ॐ छँ नमः वामकूर्परे ॐ जँ नमः वाममणिबन्धे ॐ झँ नमः वामाङ्गुलिमूले ॐ ञँ नमः वामकराङ्गुल्यग्रे ॐ टँ नमः दक्षिणपादमूले ॐ ठँ नमः दक्षिणजानुनि ॐ डँ नमः दक्षिणगुल्फे ॐ ढँ नमः दक्षिणपादाङ्गुलिमूले ॐ णँ नमः

---

१ आद्यो मौलिरथापरो मुखमिहि नेत्रे च कर्णावुभौ नासावंशपुटे क्रमात् तदनुजौ वर्णौ कपोलद्वये । दन्ताश्चोर्ध्वमधस्तथोष्ठयुगल सन्ध्यक्षराणि क्रमाजिह्वामूलमुदग्रबिन्दुरपरो ग्रीवा विसर्गीश्वरः ॥ २ कादिर्दक्षिणतो भुजस्तदपरो वर्गश्च वामो भुजष्टादिस्तादिरनुक्रमेण चरणौ कुक्षिद्वयं वै पफौ । अंसः पृष्ठभवोऽथ नाभिरुदरं बादित्रयं धातवो याद्याः सप्तसमीरणाश्च सपराः क्षान्तास्तु क्रोडे न्यसेत् ॥ त्वगसृगमांसमेदोऽस्थिमज्जाशुक्राणि धातवः । प्राणशक्त्यात्मपरमात्मोचिताव्यापकास्त्वमी ॥

दक्षिणपादाङ्गुल्यग्रे ॐ तँ नमः वामपादमूले ॐ थँ नमः वामजानुनि ॐ दँ नमः वामगुल्फे ॐ धँ नमः वामपादाङ्गुलिमूले ॐ नँ नमः वामपादाङ्गुल्यग्रे ॐ पँ नमः दक्षिणकुक्षौ ॐ फँ नमः वामकुक्षौ ॐ बँ नमः पृष्ठे ॐ भँ नमः नाभौ ॐ मँ नमः उदरे ॐ यँ त्वगात्मने नमः हृदि ॐ रँ असृगात्मने नमः दक्षिणांसे ॐ लँ मांसात्मने नमः ककुदि ॐ वँ मेद आत्मने नमः वामांसे ॐ शँ अस्थ्यात्मने नमः हृदादि-दक्षिणहस्तान्तम् ॐ षँ मज्जात्मने नमः हृदादिवामहस्तान्तम् ॐ सँ शुक्रात्मने नमः हृदादिदक्षिणपादान्तम् ॐ हँ प्राणात्मने नमः हृदादि-वामपादान्तम् ॐ ळँ शक्त्यात्मने नमः उदरे ॐ क्षँ परमात्मने नमः मुखे ॥

ध्यानम्—पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादहृत्कुक्षिवक्षोदेशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् । अक्षस्त्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्थामच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥ इति बहिर्मातृकान्यासप्रयोगः ॥

## ॥ अथ महान्यासप्रयोगः ॥

छन्दःपुरुषन्यासः—ॐतिर्यग्बिलाय चमसायोर्ध्वबुध्नाय छन्दःपुरुषाय नमः शिरसि ॐगोतमभरद्वाजाभ्यां नमः नेत्रयोः ॐ विश्वा-

१ पादयो हृदयेऽछेऽय ककुत्से हृदादि च । करपादयुगे न्यस्येदुदराननयोस्तथा । लिपिवर्गान्स्वशरीरे स्वे देशिको यतमानसः ॥ २ एवं अनादेशे सर्वेऽप्यङ्गुष्ठानामिकाभ्यां कार्याः आदेशे तु यथादेशम् ॥

मित्रजमदग्निभ्यां नमः श्रोत्रयोः ॐवसिष्ठकश्यपाभ्यां नमः नासापुटयोः ॐ अत्रये नमः वाचि ॐ गायत्र्यै छन्दसे नमः अग्नये नमः शिरसि ॐ उष्णिहे छन्दसे नमः सवित्रे नमः ग्रीवायाम् ॐबृहत्यै छन्दसे नमः बृहस्पतये नमः अनूके ॐबृहद्रथन्तराभ्यां नमः द्यावापृथिवीभ्यां नमः बाह्वोः ॐ त्रिष्टुभे छन्दसे नमः इन्द्राय नमः मध्ये ॐजगत्यै छन्दसे नमः आदित्याय नमः श्रोण्योः ॐअतिछन्दसे नमः प्रजापतये नमः लिङ्गे ॐयज्ञायज्ञियाय छन्दसे नमः वैश्वानराय नमः पायौ ॐ अनुष्टुभे छन्दसे नमः विश्वेभ्यो देवेभ्यो नमः ऊर्वोः ॐपङ्क्त्यै छन्दसे नमः मरुद्भ्यो नमः अष्ठीवतोः ॐद्विपदायै छन्दसे नमः विष्णवे नमः पादयोः ॐविच्छन्दसे नमः वायवे नमः प्राणेषु ॐ न्यूनाक्षराय छन्दसे नमः अद्भ्यो नमः हस्तद्वयविपर्यासेन मस्तकादिपादान्तं सर्वाङ्गेषु । इति सर्वानुक्रमसूत्रविहितश्छन्दःपुरुषन्यासः ॥

अथ बृहत्पराशरस्मृतिविहितः पञ्चाङ्गरुद्राणां न्यासः प्रथमः— मनोजूतिरित्यस्य आङ्गिरसो बृहस्पतिर्ऋषिः यजुश्छन्दः विश्वेदेवा देवता हृदये न्यासे विनियोगः । हृदयं स्पृष्ट्वा—ॐ मनोजूतिर्जुष-

१ अनूकं पृष्ठवंशम् ॥ २ मध्यमुदरम् ॥ ३ अष्ठीवान् जानु ॥ ४ प्राणवायोः सञ्चारस्थानं नासिका प्राणशब्देनोच्यते॥ ५ वक्ष्यमाणेषु सर्वेष्वङ्गन्यासेषु तत्तदङ्गं स्पृष्ट्वा सर्वे न्यासमन्त्राः सस्वरा एव न्यस्तव्याः ॥ ६ जूतिर्जुषतामित्यस्य स्थाने ज्योतिर्जुषतामित्येव काण्वपाठः एवं न्यासपूजादौ प्रतीकेन विनियुक्तमन्त्राः स्वशाखासमधीतपाठाः पठनीया नपुर्माध्यन्दिनशाखासमधीत पाठा. इति तेषां विशेषः ।

दक्षिणपादाङ्गुल्यग्रे ॐ तँ नमः वामपादमूले ॐ थँ नमः वामजानुनि ॐ दँ नमः वामगुल्फे ॐ धँ नमः वामपादाङ्गुलिमूले ॐ नँ नमः वामपादाङ्गुल्यग्रे ॐ पँ नमः दक्षिणकुक्षौ ॐ फँ नमः वामकुक्षौ ॐ बँ नमः पृष्ठे ॐ भँ नमः नाभौ ॐ मँ नमः उदरे ॐ यँ त्वगात्मने नमः हृदि ॐ रँ असृगात्मने नमः दक्षिणांसे ॐ लँ मांसात्मने नमः ककुदि ॐ वँ मेद आत्मने नमः वामांसे ॐ शँ अस्थ्यात्मने नमः हृदादि दक्षिणहस्तान्तम् ॐ षँ मज्जात्मने नमः हृदादिवामहस्तान्तम् ॐ सँ शुक्रात्मने नमः हृदादिदक्षिणपादान्तम् ॐ हँ प्राणात्मने नमः हृदादिवामपादान्तम् ॐ ळँ शक्त्यात्मने नमः उदरे ॐ क्षँ परमात्मने नमः मुखे ॥

ध्यानम्—पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादहृत्कुक्षिवक्षोदेशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् । अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्थामच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥ इति बहिर्मातृकान्यासप्रयोगः ॥

॥ अथ महान्यासप्रयोगः ॥

छन्दःपुरुषन्यासः—ॐतिर्यग्बिलाय चमसायोर्ध्वबुध्नाय छन्दःपुरुषाय नमः शिरसि ॐगोतमभरद्वाजाभ्यां नमः नेत्रयोः ॐ विश्वा

१ यादयो हृदयेऽसृय ककुदस हृदादि च । करपादयुगे न्यसेदुदराननयोस्तथा । लिपिवर्णशरीरे स्वे देशिको यत्नमानस ॥ २ एवं अनादेशे सर्वेऽप्यङ्गुष्ठानामिकाभ्यां कार्या. आदेशे तु यथादशम् ॥

अथ द्वितीयो न्यासः—याते रुद्रेत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छन्दः एको रुद्रो देवता शिखायां न्यासे विनियोगः—ॐ या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ॥ तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥२॥ शिखायाम् ॥

अस्मिन्महत्यर्णव इत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छन्दः बहवो रुद्रा देवताः शिरसि न्यासे विनियोगः—ॐ अस्मिन्महत्यर्णवेऽन्तरिक्षे भवाऽ अधि ॥ तेषांᳫं सहस्रयोजनेव धन्वानि तन्मसि ॥ ५५ ॥ शिरसि ॥

असङ्ख्याता इत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छन्दः बहवो रुद्रा देवता ललाटे न्यासे विनियोगः—ॐ असंख्याता सहस्राणि ये रुद्राऽ अधि भूम्याम् ॥ तेषांᳫंसहस्रयोजनेव धन्वानि तन्मसि ॥५४॥ ललाटे ॥

त्र्यम्बकमिति द्वयोराद्यस्य वसिष्ठऋषिः द्वितीयस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः त्र्यम्बको रुद्रो देवता नेत्रयोर्न्यासे विनियोगः—ॐ त्र्यम्बकँय्यजामहे सुगन्धिम्पुष्टिवर्द्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ त्र्यम्बकँय्यजामहे सुगन्धिम्पतिवेदनम् ॥ उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः ॥६०॥ नेत्रयोः ॥

मानस्तोक इत्यस्य कुत्सऋषिः जगतीछन्दः एको रुद्रो देवता नासिकाया न्यासे विनियोगः—ॐ मा नस्तोके तनये मा नऽ आयुषि मा नो गोषु मा नोऽ अश्वेषु रीरिषः ॥ मा नो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥१६॥ नासिकायाम् ।

अवतत्येत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छन्दः एको रुद्रो देवता मुखे

तामाज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टं य्यज्ञꣳसमिमन्दधातु ॥ विश्वे देवासऽइहमादयन्तामोꣳम्प्रतिष्ठ ॥ १३/२ ॥ हृदयाय नमः ॥

अबोध्यग्निरित्यस्य बुधगविष्ठिरावृषी त्रिष्टुप्छन्दः अग्निर्देवता शिरसि न्यासे विनियोगः ॥ शिरः स्पृष्ट्वा—ॐ अबोध्यग्निः समिधा जनानाम्प्रति धेनुमिवायतीमुषासम् । यह्वाऽइव प्रवयामुज्जिहानाः प्रभानव—सिस्रते नाकमच्छ ॥ ३/२६ ॥ शिरसे स्वाहा ॥

मूर्द्धानमित्यस्य भरद्वाजऋषिः त्रिष्टुप्छन्दः वैश्वानरोऽग्निर्देवता शिखायां न्यासे विनियोगः ॥ शिखा स्पृष्ट्वा—ॐ मूर्द्धानन्दिवोऽअरतिम्पृथिव्या वैश्वानरमृतऽआजातमग्निम् ॥ कविꣳसम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्त देवाः ॥३/४॥ शिखायै वषट् ॥

मर्म्माणित इत्यस्य विवस्वानृषिः त्रिष्टुप्छन्दः लिङ्गोक्ता देवताः कवचन्यासे विनियोगः—ॐ मर्म्माणि ते वर्म्मणाच्छादयामि सोमस्त्वाराजामृतेनानुवस्ताम् ॥ उरोर्वरीयो वरुणस्ते कृणोतु जयन्तन्त्वानु देवामदन्तु ॥१७/४९॥ कवचाय हुम् ।

मानस्तोक इत्यस्य कुत्सऋषिः जगतीछन्दः एको रुद्रो देवता अस्त्रन्यासे विनियोगः—ॐमानस्तोके तनयेमानऽ आयुषिमानो गोषुमानोऽ अश्वेषु रीरिषः ॥ मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ १६/१६ ॥ अस्त्राय फट् । इति पञ्चाङ्गन्यासः प्रथमः ॥

अथ द्वितीयो न्यासः—याते रुद्रेत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छन्दः एको रुद्रो देवता शिखायां न्यासे विनियोगः—ॐ या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ॥ तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥२॥ शिखायाम् ॥

अस्मिन्महत्यर्णव इत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छन्दः बहवो रुद्रा देवताः शिरसि न्यासे विनियोगः—ॐ अस्मिन्महत्यर्णवेऽन्तरिक्षे भवाऽअधि ॥ तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि ॥५५॥ शिरसि ॥

असङ्ख्याता इत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छन्दः बहवो रुद्रा देवता ललाटे न्यासे विनियोगः—ॐ असङ्ख्याता सहस्राणि ये रुद्राऽअधि भूम्याम् ॥ तेषाᳬसहस्रयोजनेऽव धन्वानि तन्मसि ॥५४॥ ललाटे ॥

त्र्यम्बकमिति द्वयोराद्यस्य वसिष्ठऋषिः द्वितीयस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः त्र्यम्बको रुद्रो देवता नेत्रयोर्न्यासे विनियोगः—ॐ त्र्यम्बकँयजामहे सुगन्धिम्पुष्टिवर्द्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ त्र्यम्बकँयजामहे सुगन्धिम्पतिवेदनम् ॥ उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः ॥६०॥ नेत्रयोः ॥

मानस्तोक इत्यस्य कुत्सऋषिः जगतीछन्दः एको रुद्रो देवता नासिकायां न्यासे विनियोगः—ॐ मा नस्तोके तनये मा नऽआयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः ॥ मा नो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥१६॥ नासिकायाम् ।

अवतत्येत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छन्दः एको रुद्रो देवता मुखे

न्यासे विनियोगः—ॐ अवतत्य धनुष्ट्वᳬ सहस्राक्ष शतेषुधे ॥ निशीर्य्य शल्यानाम्मुखा शिवो नः सुमना भव ॥ ५३/१६ ॥ मुखे ॥

नीलग्रीवा इति द्वयोः परमेष्ठी ऋषिः अनुष्टुप्छन्दः बहवो रुद्रा देवताः कण्ठे न्यासे विनियोगः ॥ ॐ नीलग्रीवाᳬ शितिकण्ठा दिवᳬ रुद्राऽ उपश्रिताः ॥ तेषाᳬ सहस्रयोजनेव धन्वानि तन्मसि ॥ ५६/१६ ॥ ॐ नीलग्रीवाः शितिकण्ठाः शर्वाऽ अधः क्षमाचराः ॥ तेषाᳬ सहस्रयोजनेव धन्वानि तन्मसि ॥ ५७/१६ ॥ कण्ठे ॥

नमस्तऽ आयुधायेत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छन्दः एको रुद्रो देवता प्रकोष्ठयोर्न्यासे विनियोगः—ॐ नमस्तऽ आयुधायानातताय धृष्णवे ॥ उभाभ्यामुत ते नमो बाहुभ्यान्तव धन्वने ॥ १४/१६ ॥ प्रकोष्ठयोः ॥

ये तीर्थानीत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छन्दः बहवो रुद्रा देवता हस्तयोर्न्यासे विनियोगः—ॐ ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः ॥ तेषाᳬ सहस्रयोजनेव धन्वानि तन्मसि ॥ ६१/१६ ॥ हस्तयोः ॥

नमो वः किरिकेभ्य इत्यस्य परमेष्ठी ऋषिः साम्नोष्णिक् यजुरुष्णिक् देवी जगती वा छन्दांसि किरिकादयो मन्त्रवर्णावगता अन्यतरतो नमस्कारा बहवो रुद्रा देवता हृदये न्यासे विनियोगः—नमो वः किरिकेभ्यो देवानाᳬ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नमऽ आनिर्हतेभ्यः ॥ ४६/१६ ॥ हृदये ॥

---

१ मणिबन्धादुपरि कूर्परादधोभाग प्रकोष्ठ ॥

नमो हिरण्यबाहव इत्यस्य परमेष्ठी ऋषिः अत्रैकादशाक्षराणां यजुस्त्रिष्टुप् अष्टाक्षराणां यजुरनुष्टुप् दशाक्षरस्य यजुःपङ्क्तिरिति छन्दांसि हिरण्यबाह्वादयो मन्त्रवर्णावगता उभयतो नमस्कारा बहवो रुद्रा देवता नाभौ न्यासे विनियोगः–ॐ नमो हिरण्यबाहवे सेनान्ये दिशाञ्च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनाम्पतये नमो नमः शष्पिञ्जराय त्विषीमते पथीनाम्पतये नमो नमो हरिकेशायोपवीतिने पुष्टानाम्पतये नमः ॥१७॥ नाभौ ।

इमा रुद्रायेत्यस्य कुत्सऋषिः जगतीछन्दः एको रुद्रो देवता गुह्ये न्यासे विनियोगः–ॐ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः। यथा शमसद्द्विपदे चतुष्पदे विश्वम्पुष्टं ग्रामेऽअस्मिन्ननातुरम् ॥४८॥ गुह्ये ॥

मानोमहान्तमित्यस्य कुत्सऋषिः जगतीछन्दः एको रुद्रो देवता ऊर्वोर्न्यासे विनियोगः–ॐमा नो महान्तमुत मा नोऽअर्भकम्मा नऽउक्षन्तमुत मा नऽउक्षितम्। मा नो वधीः पितरम्मोत मातरम्मा नः प्रियास्तन्वो रुद्र रीरिषः ॥१५॥ ऊर्वोः ।

एषत इत्यस्य प्रजापतिर्ऋषिः साम्नपङ्क्तिर्यजुर्जगती छन्दांसि रुद्रो देवता जान्वोर्न्यासे विनियोगः–ॐ एष ते रुद्र भागः सह स्वस्राम्बिकया तञ्जुषस्व स्वाहैष ते रुद्र भागऽआखुस्ते पशुः ॥ ५७ ॥ जान्वोः ॥

अवरुद्रमित्यस्य प्रजापतिर्ऋषिः पंक्तिश्छन्दः रुद्रो देवता जङ्घयोर्न्यासे विनियोगः–ॐ अव रुद्रमदीमह्यव देवन्त्र्यम्बकम् ॥ यथा नो

वस्यंसुस्करुद्ध्यथा नुदं ऽश्रेयंसस्करुद्ध्यथा नो व्यवसाययात् ॥ ५८/३ ॥ जङ्घयोः ॥

अद्ध्यवोचदित्यस्य परमेष्ठी ऋषिः पंक्तिश्छन्दः एको रुद्रो देवता कवचन्यासे विनियोगः—अद्ध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ॥ अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्योधराचीः परासुव ॥ ५/१० ॥ कवचायहुम् ।

नमो बिल्मिन इत्यस्य परमेष्ठी ऋषिः पडक्षराणां यजुर्गायत्री पञ्चाक्षरयोर्दैवी पङ्क्तिः सप्ताक्षरस्य यजुरुष्णिक् छन्दांसि बिल्मिनादयो मन्त्रवर्णाविगता अन्यतरतो नमस्कारा बहवो रुद्रा देवता उपकवचन्यासे विनियोगः—ॐ नमो बिल्मिने च कवचिने च नमो वर्म्मिणे च वरूथिने च नमः श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च ॥ ३५/१६ ॥ उपकवचम् ॥

नमोस्तु नीलग्रीवायेत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छन्दः एको रुद्रो देवता तृतीयनेत्रन्यासे विनियोगः—ॐ नमोस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे॥ अथोयेऽअस्यसत्त्वानोहन्तेभ्यो करन्नमः ॥ ८/१६ ॥ प्रथितो बिप्रक्तया मध्यमया तृतीयनेत्रे ॥

प्रमुञ्चेत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छन्दः एको रुद्रो देवता अस्त्रन्यासे विनियोगः—ॐ प्रमुञ्च धन्न्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ॥ याश्च ते हस्तऽ इषवः परा ता भगवो वप ॥ ९/१६ ॥ अस्त्राय फट् ॥

यऽएतावन्तश्चेत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छन्दः बहवो रुद्रा देवता दिग्बन्धने विनियोगः—ॐयऽ एतावन्तश्च भूयांꣳसश्च दिशो

१ जानुगुल्फयोरन्तरालं जङ्घा ॥ २ कवचाद्विपरीतमुपकवचमिति महार्णवकारानुसारिणः सर्वे निबन्धकाराः पद्धतिकाराश्च । कवचोपरि कवचमुपकवचमित्यपरे ॥

रुद्रा वितस्थिरे ॥ तेषाᳬ सहस्रयोजनेव धन्वानि तन्मसि ॥ ५३/१६ ॥ दिक्षु विदिक्षु च परस्परं तर्जन्यङ्गुष्ठाग्रस्फोटनेन दिग्बन्धः ॥ इति शिखाद्यस्त्रान्तो दिग्बन्धसहित एकोनविंशत्यङ्गन्यासो द्वितीयः ॥

अथ तृतीयो न्यासः—ॐ नमो भगवते रुद्रायेति दशाक्षरमन्त्रस्य प्रजापतिर्ऋषिः विराट् छन्दः श्रीरुद्रो देवता न्यासे विनियोगः—ॐ नमः मूर्द्धनि ॐ नं नमः नासिकायाम् ॐ मों नमः ललाटे ॐ भं नमः मुखे ॐ गं नमः कण्ठे ॐ वं नमः हृदये ॐ तें नमः दक्षिणहस्ते ॐ रुं नमः वामहस्ते ॐ द्रां नमः नाभौ ॐ यं नमः पादयोः इति दशाक्षरमन्त्रन्यासस्तृतीयः ॥

अथ चतुर्थो न्यासः—त्रातारमित्यस्य गर्गऋषिः त्रिष्टुप्छन्दः इन्द्रो देवता प्राच्यां सम्पुटीकरणे विनियोगः—ॐ त्रातारमिन्द्रमवितारमिन्द्रᳬ हवे हवे सुहवᳬ शूरमिन्द्रम्॥ ह्वयामि शक्रम्पुरुहूतमिन्द्रᳬ स्वस्ति नो मघवा धात्विन्द्रः[1]॥ २०/५० ॥ प्राच्याम् ॥

त्वन्नोऽ अग्न इत्यस्य हिरण्यस्तूप आङ्गिरस ऋषिः जगतीछन्दः अग्निर्देवता आग्नेय्यां सम्पुटीकरणे विनियोगः—ॐ त्वन्नोऽ अग्ने तव देव पायुभिर्म्मघोनो रक्ष तन्वश्च वन्द्य ॥ त्राता तोकस्य तनये गवा-मस्यनिमेषᳬ रक्षमाणस्तव व्रते ॥ ३४/१३ ॥ आग्नेय्याम् ॥

सुगन्नुपन्थामित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः वैवस्वतो देवता दक्षिणस्यां दिशि सम्पुटीकरणे विनियोगः—ॐ सुगन्नुपन्थां प्रदिशं नऽ एहि ज्योतिष्मद्‌ध्येह्यजरन्नऽआयुः ॥ अपैतु मृत्युरमृतं मऽ आगाद्वै-वस्वतो नोऽ अभयं कृणोतु ॥ दक्षिणस्याम् ॥

---

१ स च मुद्रिताञ्जलिना प्राच्यादिदिक्षु वक्ष्यमाणमन्त्रैः कार्यः ॥

असुन्वन्तमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः निर्ऋतिर्देवता नैर्ऋत्यां सम्पुटीकरणे विनियोगः—ॐ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य॥ अन्यमस्मदिच्छ सा तऽइत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥६५/१२॥ नैर्ऋत्याम् ॥

तत्त्वायामीत्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणो देवता प्रतीच्यां सम्पुटीकरणे विनियोगः—ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः॥ अहेडमानो वरुणेह बोध्युरुशꣳस मा नऽआयुः प्रमोषीः ॥२१/२॥ प्रतीच्याम् ।

आनोनियुद्भिरित्यस्य वसिष्ठऋषिः त्रिष्टुप्छन्दः वायुर्देवता वायव्यां सम्पुटीकरणे विनियोगः—ॐ आ नो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् ॥ वायोऽअस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः सदा नः। २८/२७॥ वायव्याम् ॥

वयꣳ सोमेत्यस्य बन्धुर्ऋषिः गायत्रीछन्दः सोमो देवता उदीच्यां सम्पुटीकरणे विनियोगः—ॐ वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः ॥ प्रजावन्तः सचेमहि ॥३/५६॥ उत्तरस्याम् ॥

तमीशानमित्यस्य गौतमऋषिः जगतीछन्दः ईशानो देवता ऐशान्यां सम्पुटीकरणे विनियोगः—ॐ तमीशानञ्जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम्॥ पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥२५/१८॥ ऐशान्याम् ॥

अस्मे रुद्रा इत्यस्य प्रगाथऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता ऊर्ध्वायां सम्पुटीकरणे विनियोगः—ॐ अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये

भरहृतो सुजोपाठं ॥ य? शश्वसते स्तुवते धायि पुज्रऽ इन्द्रज्येष्ठाऽ
अस्माँ२ऽ अवन्तु देवा? ॥११/३३॥ ऊर्ध्वायाम् ॥

स्योना पृथिवीत्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः अनन्तो देवता
अधोदिशि सम्पुटीकरणे विनियोगः—ॐ स्योना पृथिवि नो भवानृ-
क्षरा निवेशनी ॥ यच्छा नुठं शर्म्म सप्रथाठं ॥३/२२॥ अधोदिशि ॥

त्रातारमित्यस्य गर्गऋषिः त्रिष्टुप्छन्दः इन्द्रो देवता प्राच्यां नम-
स्कारे विनियोगः—ॐ त्रातारमिन्द्रमवितारमिन्द्रठं हवे हवे सुहवठं
शूरमिन्द्रम् ॥ ह्वयामि शक्रम्पुरुहूतमिन्द्रठं स्वस्ति नो मघवा
धात्विन्द्रः ॥२/२॥ इन्द्राय नमः ॥

त्वन्नोऽअग्न इत्यस्य हिरण्यस्तूप आङ्गिरस ऋषिः जगतीछन्दः
अग्निर्देवता आग्नेय्यां नमस्कारे विनियोगः—ॐ त्वन्नोऽ अग्नेऽ तव देव
पायुभिर्म्मघोनो रक्ष तन्वश्च वन्द्य ॥ त्राता तोकस्य तनये गवामस्य-
निमेषठं रक्षमाणस्तव व्रते ॥३/२॥ अग्नये नमः ॥

सुगन्नुपन्थामित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः वैवस्वतो देवता
दक्षिणस्यां दिशि नमस्कारे विनियोगः—ॐ सुगन्नुपन्थां प्रदिशं नऽ
एहि ज्योतिष्मद्ध्येह्यजरन्नऽ आयुः॥ अपैतु मृत्युरमृतं मऽ आगाद्वैवस्वतो
नोऽ अभयं कृणोतु ॥ यमाय नमः ॥

असुन्वन्तमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः निर्ऋतिर्देवता
नैर्ऋत्यां नमस्कारे विनियोगः—ॐ असुन्वन्तमयजमानमिच्छस्तेनस्ये-
त्यामन्विहि तस्करस्य ॥ अन्यमस्मदिच्छ सा तऽ इत्या नमो देवि
निर्ऋते तुभ्यमस्तु ॥१/२॥ निर्ऋतये नमः ॥

तत्त्वायामीत्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणो देवता
प्रतीच्यां नमस्कारे विनियोगः—ॐ तत्त्वा यामि ब्रह्मणा वन्दमान-

स्वदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोद्ध्युरुशꣳस मा नऽ आयुः प्रमोषीः ॥ ॥ वरुणाय नमः ॥

आनोनियुद्भिरित्यस्य वसिष्ठऋषिः त्रिष्टुप्छन्दः वायुर्देवता वायव्यां नमस्कारे विनियोगः—ॐ आ नो नियुद्भिः शतिनीभिरध्वरꣳ सꣳहस्रिणीभिरुप याहि यज्ञम् ॥ वायोऽ अस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥ ॥ वायवे नमः ॥

वयꣳसोमेत्यस्य बन्धुऋषिः गायत्री छन्दः सोमो देवता उदीच्यां नमस्कारे विनियोगः—ॐ वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः ॥ प्रजावन्तः सचेमहि ॥ ॥ कुबेराय नमः ॥

तमीशानमित्यस्य गौतमऋषिः जगतीछन्दः ईशानो देवता ऐशान्यां नमस्कारे विनियोगः—ॐ तमीशानञ्जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम् ॥ पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ ॥ ईशानाय नमः ॥

अस्मे रुद्रा इत्यस्य मगायऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता ऊर्ध्वायां नमस्कारे विनियोगः—ॐ अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः ॥ यः शꣳसते स्तुवते धायि पज्रऽ इन्द्रज्येष्ठाऽ अस्माँ२ऽ अवन्तु देवाः ॥ ॥ ब्रह्मणे नमः ॥

स्योना पृथिवीत्यस्य मेधातिथिऋषिः गायत्रीछन्दः अनन्तो देवता अधोदिशि नमस्कारे विनियोगः—ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म्म सप्रथाः ॥ ॥ अनन्ताय नमः ॥

इति सम्पुटनमस्काराख्यो न्यासश्चतुर्थः ॥

अथ पञ्चमो न्यासः—यज्जाग्रत इति षडृचे[1] शिवसङ्कल्पसूक्तस्य शिवसङ्कल्पऋषिः त्रिष्टुप्छन्दः मनो देवता हृदये न्यासे विनियोगः—मुष्टिविनिर्गताङ्गुष्ठौ संयुक्तौ कृत्वा हृदये संस्थाप्य—ॐ यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति ॥ दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनः शिवसंकल्पमस्तु॥१/३४॥येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ॥ यदपूर्वं यक्षमन्तः प्रजानान्तन्मे मनः शिवसंकल्पमस्तु ॥२/३४॥ यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु॥यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥३/३४॥ येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेन सर्वम्॥ येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥४/३४॥ यस्मिन्नृचः साम यजूंषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ॥ यस्मिँश्चित्तं सर्वमोतम्प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु ॥५/३४॥ सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिनऽ इव॥ हृत्प्रतिष्ठं यदजिरं जविष्ठन्तन्मे मनः शिवसङ्कल्पमस्तु॥६/३४॥हृदयाय नमः॥

सहस्रशीर्षेति षोडशर्चस्य पुरुषसूक्तस्य नारायणपुरुष ऋषिः आद्यानां पञ्चदशानामनुष्टुप्छन्दः यज्ञेन यज्ञमित्यस्यास्त्रिष्टुप् छन्दः जगद्बीजं पुरुषो देवता शिरसि न्यासे विनियोगः। मुष्टिविनिर्गताङ्गुष्ठौ संयुक्तौ निस्तर्जनीकौ ललाटे कृत्वा—

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्॥सभूमिं सर्वतस्पृत्वा त्यतिष्ठद्दशाङ्गुलम् ॥१/३१॥ पुरुषऽ एवेदं सर्वं यद्भूतं यच्च भाव्यम् ॥

---

१ काण्वशाखायां त्वेकस्या एव ऋचः शिवसङ्कल्पदृष्टायाः समाम्नातत्वात् यज्जाग्रत इत्येकया ऋचा हृदयन्यास इति काण्वानां विशेषः ॥

उतामृतत्त्वस्येशानो यदन्नेनातिरोहति ॥२/१॥ एतावानस्य महिमातो
ज्यायाँश्च पूरुषः ॥ पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतन्दिवि ॥३/१॥
त्रिपादूर्ध्वऽ उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ॥ ततो विष्वङ्व्यक्राम-
त्साशनानशनेऽ अभि ॥४/१॥ ततो विराडजायत विराजोऽ अधिपूरुषः ॥
स जातोऽअत्त्यरिच्यत पश्चाद्भूमिमथो पुरः ॥५/१॥ तस्माद्यज्ञात्सर्वहुतः
सम्भृतम्पृषदाज्यम् ॥ पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥६/१॥
तस्माद्यज्ञात्सर्वहुतऽ ऋचः सामानि जज्ञिरे ॥ छन्दाᳬसि जज्ञिरे
तस्माद्यजुस्तस्मादजायत ॥७/१॥ तस्मादश्वाऽ अजायन्त ये के चोभ-
यादतः ॥ गावो ह जज्ञिरे तस्मात्तस्माज्जाताऽ अजावयः ॥८/१॥ तं
यज्ञम्बर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः ॥ तेन देवाऽ अयजन्त साध्याऽ
ऋषयश्च ये ॥९/१॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ॥ मुखङ्किमस्या
सीत्किम्बाहू किमूरू पादाऽ उच्येते ॥१०/१॥ ब्राह्मणोऽस्य मुखमासीद्बाहू
राजन्यः कृतः ॥ ऊरू तदस्य यद्वैश्यः पद्भ्याᳬ शूद्रोऽ अजायत ॥११/१॥
चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽअजायत ॥ श्रोत्राद्वायुश्च प्राणश्च
मुखादग्निरजायत ॥१२/१॥ नाभ्याऽ आसीदन्तरिक्षᳬ शीर्ष्णो द्यौः सम
वर्त्तत ॥ पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ऽ अकल्पयन् ॥१३/१॥
यत्पुरुषेण हविषा देवा यज्ञमतन्वत ॥ वसन्तोऽस्यासीदाज्यङ्ग्रीष्मऽ
इध्मः शरद्धविः ॥१४/१॥ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ॥
देवा यद्यज्ञन्तन्वानाऽ अबध्नन्पुरुषम्पशुम् ॥१५/१॥ यज्ञेन यज्ञमयजन्त
देवास्तानि धर्म्माणि प्रथमान्यासन् ॥ ते ह नाकम्महिमानः सचन्त
यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६/१ ॥ शिरसे स्वाहा ॥

अद्भ्यः सम्भृत इति षड्चस्य उत्तरनारायणस्य नारायणपुरुषऋषिः आद्यानां तिसृणां त्रिष्टुप्छन्दः चतुर्थपञ्चमयोरनुष्टुप्छन्दः अन्त्यायास्त्रिष्टुप्छन्दः आदित्यो देवता शिखायां न्यासे विनियोगः ॥ मुष्टिपुटौ करौ कृत्वाऽङ्गुष्ठावधः प्रसक्ताग्रौ कनिष्ठे चोर्ध्वतः प्रसक्ताग्रे कृत्वा शिखां स्पृष्ट्वा–ॐ अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्म्मणः समवर्त्तताग्रे॥ तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥ १७ ॥ वेदाहमेतम्पुरुषम्महान्तमादित्यवर्ण्णन्तमसः परस्तात् ॥ तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यते ऽयनाय॥१८॥प्रजापतिश्चरति गर्ब्भे ऽ अन्तरजायमानो बहुधा विजायते॥तस्य योनिम्परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा॥१९॥ यो देवेब्भ्य ऽ आतपति यो देवानाम्पुरोहितः ॥ पूर्वो यो देवेब्भ्यो जातो नमो रुचाय ब्राह्मये॥२०॥ रुचम्ब्राह्मञ्जनयन्तो देवा ऽ अग्ग्रे तदब्रुवन् ॥ यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवा ऽ असन्वशे ॥ २१ ॥ श्रीश्च ते लक्ष्मीश्च पत्क्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्म ऽ इषाण सर्वलोकम्म ऽ इषाण ॥२२॥ शिखायै वषट् ॥

आशुः शिशान इति द्वादशर्चस्याप्रतिरथस्य अप्रतिरथऋषिः त्रिष्टुप्छन्दः इन्द्रो देवता कवचन्यासे विनियोगः। ॐ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनो निमिषऽ एकवीरः शतऽ सेनाऽ अजयत्साकमिन्द्रः॥३३॥ सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ॥ तदिन्द्रेण जयत तत्सहद्धं युधो नरऽ इषुहस्तेन वृष्णा॥३४॥सऽ इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा स युधऽ इन्द्रो गणेन॥ सꣳसृष्टजित्सोमपा बाहुशर्द्ध्यु-

ग्रधंन्वा प्रतिहिताभिरस्ता॥३५/१७॥ बृहस्पते परिदीया रथेन रक्षोहा-
मित्राँ२ऽ अपबाधमानः ॥ प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्मा-
कमेध्यविता रथानाम् ॥३६/१७॥ बलविज्ञाय स्थविरः प्रवीरः सह-
स्वान्वाजी सहमानऽ उग्रः ॥ अभिवीरो अभिसत्वा सहोजा जैत्र-
मिन्द्र रथमातिष्ठ गोवित्॥३७/१७॥गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म
प्रमृणन्तमोजसा॥ इमꣳ सजाताऽ अनु वीरयध्वमिन्द्रꣳ सखायोऽ अनु
सꣳ रभध्वम् ॥ ३८/१७ ॥ अभि गोत्राणि सहसा गाहमानो दयो वीरः
शतमन्युरिन्द्रः ॥ दुश्च्यवनः पृतनाषाड युध्यो ऽस्माकꣳ सेनाऽ
अवतु प्रयुत्सु ॥३९/१७॥ इन्द्रऽ आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुरऽ
एतु सोमः॥ देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम्॥
॥ ४०/१७ ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञऽ आदित्यानां मरुताꣳ शर्द्धऽ
उग्रम्॥ महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥४१/१७॥
उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनाꣳसि ॥ उद्वृत्रहन्वा-
जिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः ॥४२/१७॥ अस्माकमिन्द्रः
समृतेषु ध्वजेष्वस्माकं याऽ इषवस्ता जयन्तु ॥ अस्माकं वीराऽ
उत्तरे भवन्त्वस्माँ२ऽ उ देवा ऽअवता हवेषु ॥४३/१७॥ अमीषां चित्तं प्र-
तिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि॥ अभि प्रेहि निर्दह हृत्सु शोकै-
रन्धेनामित्रास्तमसा सचन्ताम् ॥ ४४/१७ ॥ कवचाय हुम् ॥ इत्युच्चार्य
अङ्गुष्ठौ मसक्ताग्रौ तर्जन्यौ च त्रिकोणवत्कृत्वा मूर्ध्नि पश्चान्मुखं कृत्वा
उभयपार्श्वतः करौ हृदन्तं नयन्कवचं न्यसेत् ॥

विभ्राडित्यस्य विभ्राट् सौर्यऋषिः जगती छन्दः सूर्यो देवता उदु-
त्यमिति तिसृणां प्रस्कण्वऋषिः गायत्री छन्दः सूर्यो देवता तमत्सन-

थेत्यस्य ब्रह्मस्वयंभूर्ऋषिः जगती छन्दः विश्वेदेवा देवता अयं वेन इत्यस्य ब्रह्मस्वयंभूर्ऋषिः त्रिष्टुप्छन्दः सोमो देवता चित्रमित्यस्य ब्रह्मस्वयंभूर्ऋषिः त्रिष्टुप्छन्दः सूर्यो देवता आन इत्यस्य अगस्त्यऋषिः त्रिष्टुप्छन्दः सूर्यो देवता यदद्येत्यस्य श्रुतकक्षसुतकक्षावृषी गायत्री छन्दः सूर्यो देवता तरणिरित्यस्य मस्कण्वऋषिः गायत्रीछन्दः सूर्यो देवता तत्सूर्यस्येतिद्वयोः कुत्सऋषिः त्रिष्टुप्छन्दः सूर्यो देवता बण्महा-नितिद्वयोर्जमदग्निर्ऋषिः आद्यस्य बृहतीछन्दः द्वितीयस्य सतोबृहती-छन्दः सूर्यो देवता श्रायन्त इवेत्यस्य नृमेधऋषिः बृहतीछन्दः सूर्यो देवता अद्यादेवा इत्यस्य कुत्सऋषिः त्रिष्टुप्छन्दः सूर्यो देवता आकृ-ष्णेनेत्यस्य हिरण्यस्तूप आङ्गिरस ऋषिः त्रिष्टुप्छन्दः सूर्यो देवता नेत्रत्रयन्यासे विनियोगः—ॐ विभ्राड् बृहत्पिबतु सोम्यम्मद्ध्वायुर्दध-द्यज्ञपतावविह्रुतम्॥ वातजूतो योऽ अभिरक्षति त्मना प्रजाः पुपोष पुरुधा विराजति ॥ ३०/३३ ॥ उदु त्यञ्जातवेदसन्देवं वहन्ति केतवः॥ दृशे विश्वाय सूर्य्यम्॥ ३१/३३॥ येना पावक चक्षसा भुरण्यन्तञ्जनाँ२ऽ अनु ॥ त्वं वरुण पश्यसि ॥ ३२/३३॥ दैव्यावद्ध्वर्यूऽ आगतᳩ रथेन सूर्य्यत्वचा ॥ मद्ध्वा यज्ञᳩ समञ्जाथे ॥ तम्प्रत्नथायं वेनश्चित्रन्देवानाम् ॥ ३३/३३ ॥ तम्प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिम्बर्हिषदᳪ स्वर्विदम् ॥ प्रतीचीनं वृजनन्दोहसे धुनिमाशुञ्जयन्तमनु यासु वर्द्धसे ॥ १२/७ ॥ अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ॥ इममपाᳪ संगमे सूर्य्यस्य शिशुन्न विप्रा मतिभी रिहन्ति॥ १६/७॥चित्रन्देवानामुद-गादनीकञ्चक्षुर्म्मित्रस्य वरुणस्याग्नेः॥ आप्रा द्यावापृथिवीऽ अन्त-

रिक्षुꣳ सूर्य्यंऽ आत्मा जगतस्तस्थुषश्च ॥३३/३३॥ आ नऽ इडाभिर्विदथे सुशस्ति विश्वानरꣳ सविता देवऽ एतु ॥ अपि यथा युवानो मत्सथा नो विश्वञ्जगदभिपित्वे मनीषा ॥ ३४/३३ ॥ यदद्य कच्च वृत्रहन्नुदगाऽ अभिसूर्य्य ॥ सर्वन्तदिन्द्र ते वशे ॥३५/३३॥ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य्य ॥ विश्वमाभासि रोचनम् ॥३६/३३॥ तत्सूर्य्यस्य देवत्वन्तन्महित्वम्मध्या कर्त्तोर्विततꣳ सञ्जभार ॥ यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥३७/३३॥ तन्मित्रस्य वरुणस्याभिचक्षे सूर्य्यो रूपङ्कृणुते द्योरुपस्थे ॥ अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सम्भरन्ति ॥३८/३३॥ बण्महाँ२ऽ असि सूर्य्य बडादित्य महाँ२ऽ असि ॥ महस्ते सतो महिमा पनस्यतेद्धा देव महाँ२ऽ असि ॥३९/३३॥ बट् सूर्य्य श्रवसा महाँ२ऽ असि सत्रा देव महाँ२ऽ असि ॥ मह्ना देवानामसुर्य्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥४०/३३॥ श्रायन्तऽ इव सूर्य्यं विश्वेदिन्द्रस्य भक्षत ॥ वसूनि जाते जनमानऽ ओजसा प्रति भागन्न दीधिम ॥४१/३३॥ अद्या देवाऽ उदिता सूर्य्यस्य निरꣳहसः पिपृता निरवद्यात् ॥ तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवीऽ उत द्यौः ॥४२/३३॥ आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥४३/३३॥ नेत्रत्रयाय वौषट् । नेत्रोन्मुखं हस्तं कृत्वा मंसक्तमङ्गुष्ठं कनिष्ठिकां च कृत्वा मध्यमां किञ्चित्प्रसार्य इतराङ्गुली नमयन् नेत्रेषु न्यसेत् ॥

---

१ चित्रमित्यादिकं भुवनानि पश्यन् इत्यन्तं प्रतीकचोदिताभिस्ताभिः षट्सप्तदशर्चमनुवाकं जप्त्वा नेत्रत्रये न्यसेत् ॥

,. नमस्ते रुद्रेति शतरुद्रियाख्यस्य रौद्राध्यायस्य परमेष्ठी ऋषिः देवा ऋषयः प्रजापतिर्वा ऋषिः, नमस्ते रुद्रेत्यस्य गायत्रीछन्दः याते रुद्रे त्यादीनां तिसृणामनुष्टुप् छन्दः अद्ध्यवोचदधीत्यादितिसृणां पङ्क्तिश्छन्दः नमोऽस्तु नीलग्रीवायेत्यादिसप्तानामनुष्टुप्छन्दः मानो महान्तमितिद्वयोः कुत्सोऽपि ऋषिः जगती छन्दः ‹ सर्वासामेको रुद्रो देवता नमो हिरण्यबाहव इत्यादिद्रापेत्यन्तः प्राक्तनेषु चतुरक्षराणां यजुषां दैवी बृहतीछन्दः पञ्चाक्षराणां दैवी पङ्क्तिः षडक्षराणां दैवी त्रिष्टुप् यजुर्गायत्री वा सप्ताक्षराणां दैवी जगती यजुरुष्णिग्वा अष्टाक्षराणां यजुरनुष्टुप् प्राजापत्या गायत्री वा नवाक्षराणां यजुर्बृहती आसुरी जगती वा दशाक्षराणां यजुः पङ्क्तिः एकादशाक्षराणां यजुस्त्रिष्टुप् आसुरी पङ्क्तिर्वा द्वादशाक्षराणां यजुर्जगती आसुरी बृहती वा प्राजापत्योष्णिग्वा सामगायत्री वा चतुर्दशाक्षरस्य सामोष्णिक् नमो हिरण्यबाहव इत्यादीनां श्वपतिभ्यश्चवो नम इत्यन्तानां यजुषां हिरण्यबाहुः सेनानीर्दिशाम्पतिरित्यादिमंत्रवर्णावगतनामका उभयतो नमस्कारा बहवो रुद्रा देवताः नमो भवायच रुद्रायचेत्यादीनां प्रखिदते चेत्यन्तानां यजुषां भवादयो मन्त्रलिङ्गावगता अन्यतरतो नमस्कारा बहवो रुद्रा देवताः नम इषुकृद्भ्यो धनुष्कृद्भ्यश्चवो नम इत्यस्य यजुष उभयतो नमस्कारा बहवो रुद्रा देवताः नमो हिरण्यबाहव इत्यादयो नमस्तिष्ठद्भ्यो धावद्भ्यश्चवो नम इत्यन्ता द्वन्द्विनः नमः सभाभ्य इत्यादयोनम आनिर्हतेभ्य इत्यन्ता जाताख्याः नमो वः किरिकेभ्य

१ नमो हिरण्यबाहव इत्यादीना यजुषामनियताक्षरत्वाच्छन्दोनास्तीत्येकेषा मते, पिङ्गलमते तु एकाक्षरप्रभृत्येकैकाक्षरवृद्ध्या नियताक्षराणा षडधिकशताक्षरपर्यन्तानां यजुषा छन्दोविशेष नियमोऽस्त्येव ॥ २ नमो व॰ किरिकेभ्य इति चतुर्दशाक्षर सामोष्णिगेकमेव । तत्र देवतामन्त्रवर्णादेवचतुर्थ्यन्ताः प्रसिद्धाः । ३ चतु.षष्टिकण्डिकात्मको रौद्राध्याय इति काण्वाना विशेष. ॥

इत्यादीनामग्निवायुसूर्यहृदयभूतव्याहृतीनाम् अन्यतरतो नमस्कारा बहवो रुद्रा देवताः द्रापे इत्यस्या उपरिष्टाद्बृहतीछन्दः इमारुद्रायेत्यस्याः कुत्सोपि ऋषिः जगतीछन्दः यात इत्यस्या अनुष्टुप्छन्दः परिन इति द्वयोस्त्रिष्टुप्छन्दः विकिरिद्र–सहस्राणीतिद्वयोः अनुष्टुप्छन्दः सप्तानामेको रुद्रो देवता असङ्ख्यातेत्यादिना दशानामनुष्टुप्छन्दः बहवो रुद्रा देवता नमोस्तु रुद्रेभ्य इत्यादीनां त्रयाणां यजुषां धृतिश्छन्दः बहवो रुद्रा देवताः सकलाध्यायस्य शतशीर्षो रुद्रो वा देवता अङ्गन्यासे विनियोगः–ॐ नर्मस्ते रुद्र मुन्यर्वऽ उतो तऽ इषेवे नर्मः ॥ बाहुभ्यामुत ते नर्मः ॥ १/१६ ॥ या ते रुद्र शिवा तुनूरघोरा पापकाशिनी ॥ तया नस्तुन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥ २/१६ ॥ यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ॥ शिवां गिरित्र तां कुरु माहिꣳसीः पुरुषं जगत् ॥ ३/१६ ॥ शिवेन वचसा त्वा गिरिशाच्छा वदामसि ॥ यथा नुः सर्वमिज्जगदयक्ष्मꣳ सुमना ऽअसत् ॥ ४/१६ ॥ अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ॥ अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्योऽधराचीः परासुव ॥ ५/१६ ॥ असौ यस्ताम्रोऽ अरुणऽ उत बभ्रुः सुमङ्गलः ॥ ये चैनꣳ रुद्राऽ अभितो दिक्षु श्रिताः सहस्रशोऽवैषाꣳ हेडऽ ईमहे ॥ ६/१६ ॥ असौ योऽवसर्पति नीलग्रीवो विलोहितः ॥ उतैनं गोपाऽ अदृश्रन्नदृश्रन्नुदहार्यः स दृष्टो मृडयाति नः ॥ ७/१६ ॥ नमोस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ॥ अथो येऽ अस्य सत्वानोऽहं तेभ्योऽकरं नर्मः ॥ ८/१६ ॥ प्रमुञ्च धन्वनुस्त्वमुभयोरार्त्न्योर्ज्याम् ॥ याश्च ते हस्तऽ इषवः परा ता भगवो वप ॥ ९/१६ ॥ विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ२ उत ॥ अनेशन्नस्य याऽ इषवऽ आभुरस्य निषङ्गधिः ॥ १०/१६ ॥ या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ॥

तयास्म्मान्विश्श्वतुस्त्वमयुक्ष्म्मया परिंभुज ॥ १२ ॥ परिं ते धन्वनो हेतिरुस्म्मान्वृणक्तु विश्श्वतंः॥अथो यऽ इषुधिस्तवारेऽ अस्म्मन्निधेहि तम् ॥१२॥ अवुतत्त्य धनुष्ट्वꣳसहस्राक्ष शतेषुधे ॥ निशीर्य्य शुल्ल्यानां मुखा शिवो नंः सुमनां भव ॥ १३ ॥ नमंस्तऽ आयुधायानांतताय धृष्ण्णवे॥ उभाब्भ्यांमुत ते नमो बाहुब्भ्यान्तव धन्वने ॥१४॥ मा नो मुहान्तंमुत मा नोऽ अर्ब्भकम्मा नुऽ उक्षन्तमुत मा नंऽ उक्षितम् ॥ मा नो वधीः पितरम्मोतमातरम्मा नंः प्रियास्तुन्न्वोरुद्द्ररीरिषः ॥ १५ ॥ मा नस्तोके तनये मा नुऽ आयुषि मा नो गोषु मा नोऽ अश्श्वेषु रीरिषः॥ मा नो वीरान्रुद्र भामिनो वधीर्हुविष्म्मन्तः सदुमित्त्वा हवामहे ॥१६॥ नमो हिरंण्ण्यबाहवे सेनान्न्ये दिशाञ्चपतये नमो नमो वृक्षेब्भ्यो हरिकेशेब्भ्यः पशूनाम्पतये नमोनमंः शुष्प्पिञ्जरायुत्त्विषीमतेपथीनाम्पतये नमोनमोहरिकेशायोपवीतिनेपुष्टानाम्पतये नमोनमोबब्भ्लुशायव्व्याधिनेन्नानाम्पतयेनमोनमोभुवस्यहेत्यैजगताम्पतयेनमोनमोरुद्रायाततायिने क्षेत्राणाम्पतयेनमोनमंः सूताया हन्त्यैवनानाम्पतयेनमोनमोरोहिताय स्त्थपतये वृक्षाणाम्पतये नमोनमो भुवन्तयेवारिवस्कृतायौषधीनाम्पतये नमोनमोमुन्त्रिणेवाणिजायकक्षाणाम्पतयेनमोनमंऽउच्चैर्घोषायाक्क्रन्दयते पत्तीनाम्पतयेनमोनमंः कृत्स्नायतयाधावतेसत्त्वनाम्पतयेनमोनमः सहमानायनिव्याधिनंऽ आव्याधिनीनाम्पतयेनमोनमोनिषुङ्गिणेककुभाय स्तेनानाम्पतये नमोनमोनिचेरवेपरिचरायारण्ण्यानाम्पतये नमोनमो ञ्चतेपरिवञ्चतेस्तायूनाम्पतयेनमोनमोनिषुङ्गिणेऽइषुधिमतेतस्कराणाम्पतयेनमोनमंः सृकायिब्भ्योजिघांꣳसद्भ्योमुष्ण्णताम्पतये नमोनमो

सिमद्भ्यो नक्तञ्चरंद्भ्योविकृन्तानाम्पतयेनमः॥१७/१६ १८/१६ १९/१६ २०/१६ २१/१६॥नमऽ
उष्णीषिणेगिरिचरायकुलुञ्चानाम्पतयेनमोनमऽ इषुमद्भ्योधन्वायि-
भ्यश्चवोनमोनमऽ आतन्वानेभ्यः प्रतिदधानेभ्यश्चवो नमोनमऽ
आयच्छद्भ्योऽस्यद्भ्यश्चवोनमोनमोविसृजद्भ्योविद्ध्यद्भ्यश्चवो नमोनमः
स्वपद्भ्योजाग्रद्भ्यश्चवो नमोनमःशयानेभ्यऽआसीनेभ्यश्चवो नमो
नमस्तिष्ठद्भ्योधावद्भ्यश्चवोनमोनमः सभाभ्यः सभापतिभ्यश्चवो नमो
नमोऽश्वेभ्योऽश्वपतिभ्यश्चवो नमोनमऽ आव्याधिनीभ्योविविध्यन्ती-
भ्यश्चवोनमोनमऽ उगणाभ्यस्तृंहतीभ्यश्चवोनमोनमोगणेभ्यो गण-
पतिभ्यश्चवो नमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोनमो गृत्सेभ्यो
गृत्सपतिभ्यश्चवो नमोनमो विरूपेभ्यो विश्वरूपेभ्यश्चवो नमोनमः
सेनाभ्यःसेनानिभ्यश्चवोनमोनमोरथिभ्योऽअरथेभ्यश्चवोनमोनमः
क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्चवो नमोनमोमहद्भ्योऽ अर्भकेभ्यश्चवो नमः॥
॥२२/१६ २३/१६ २४/१६ २५/१६ २६/१६॥नमस्तक्षभ्योरथकारेभ्यश्चवो नमोनमःकुलालेभ्यः
कर्म्मारेभ्यश्चवो नमो नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्चवो नमो नमः
श्वनिभ्योमृगयुभ्यश्चवोनमोनमःश्वभ्यःश्वपतिभ्यश्चवो नमो नमो
भवायचरुद्रायचनमः शर्वायचपशुपतये च नमो नीलग्रीवायच शिति-
कण्ठायचनमः कपर्दिनेचव्युप्तकेशायचनमः सहस्राक्षायचशतधन्वनेच
नमोगिरिशयायचशिपिविष्टायचनमो मीढुष्टमायचेषुमतेच नमोह्रस्वाय
चवामनायचनमोबृहतेचवर्षीयसेचनमो वृद्धायचसवृधेच नमोऽग्र्यायच
प्रथमायचनमऽ आशवेचाजिरायचनमः शीघ्र्यायचशीभ्यायचनमऽ
ऊर्म्म्यायचावस्वन्यायचनमोनादेयायचद्वीप्यायच।२७/१६ २८/१६ २९/१६ ३०/१६ ३१/१६।

नमो॑ ज्येष्ठाय॑ च कनिष्ठाय॑ च॒ नम॑: पूर्व॒जाय॑ चापर॒जाय॑ च॒ नमो॑ मध्य॒माय॑ चापगल्भाय॑ च॒ नमो॑ जघ॒न्या॑य च बु॒ध्न्या॑य च॒ नम॑: सो॒भ्या॑य च प्रतिस॒र्या॑य च॒ नमो॒ याम्या॑य च॒ क्षेम्या॑य च॒ नम॑: श्लो॒क्या॑य चावसा॒न्या॑य च॒ नम॑ उर्व॒र्या॑य च॒ खल्या॑य च॒ नमो॒ वन्या॑य च॒ कक्ष्या॑य च॒ नम॑: श्र॒वाय॑ च प्रतिश्र॒वाय॑ च॒ नम॑ आ॒शुषे॑णाय चा॒शुर॑थाय च॒ नम॒: शूरा॑य चावभे॒दिने॑ च॒ नमो॑ बि॒ल्मिने॑ च कव॒चिने॑ च॒ नमो॑ व॒र्मिणे॑ च वरू॒थिने॑ च॒ नम॑: श्रु॒ताय॑ च श्रुतसे॒नाय॑ च॒ नमो॑ दुन्दु॒भ्या॑य चाहन॒न्या॑य च॒ नमो॑ धृ॒ष्णवे॑ च प्रमृ॒शाय॑ च॒ नमो॑ निष॒ङ्गिणे॑ चेषुधि॒मते॑ च॒ नम॑स्ती॒क्ष्णेष॑वे चायु॒धिने॑ च॒ नम॑: स्वायु॒धाय॑ च सु॒धन्व॑ने च ॥ ३२/३६ ३३/३६ ३४/३६ ३५/३६ ३६/३६ ॥ नम॒: स्रुत्या॑य च॒ पथ्या॑य च॒ नम॒: काट्या॑य च॒ नीप्या॑य च॒ नम॒: कुल्या॑य च सर॒स्या॑य च॒ नमो॑ नादे॒याय॑ च वैश॒न्ताय॑ च॒ नम॒: कूप्या॑य चावट्या॑य च॒ नमो॒ वीध्र्या॑य चात॒प्या॑य च॒ नमो॒ मेघ्या॑य च विद्यु॒त्या॑य च॒ नमो॒ वर्ष्या॑य चावर्ष्याय॑ च॒ नमो॒ वात्या॑य च॒ रेष्म्या॑य च॒ नमो॑ वास्त॒व्या॑य च वास्तु॒पाय॑ च॒ नम॒: सोमा॑य च रु॒द्राय॑ च॒ नम॑स्ता॒म्राय॑ चारु॒णाय॑ च॒ नम॑: श॒ङ्गवे॑ च पशु॒पत॑ये च॒ नम॑ उ॒ग्राय॑ च भी॒माय॑ च॒ नमो॑ अग्रेव॒धाय॑ च दूरेव॒धाय॑ च॒ नमो॑ ह॒न्त्रे च॒ हनी॑यसे च॒ नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यो॒ नम॑स्ता॒राय॑ ॥ ३७/३६ ३८/३६ ३९/३६ ४०/३६ ॥ नम॑: श॒म्भवाय॑ च मयो॒भवाय॑ च॒ नम॑: शङ्क॒राय॑ च मयस्क॒राय॑ च॒ नम॑: शि॒वाय॑ च शि॒वत॑राय च ॥ ४१/३६ ॥ नम॒: पार्या॑य चावा॒र्या॑य च॒ नम॑: प्र॒तर॑णाय चो॒त्तर॑णाय च॒ नम॒स्तीर्थ्या॑य च॒ कूल्या॑य च॒ नम॒: शष्प्या॑य च॒ फेन्या॑य च ॥ ४२/३६ ॥ नम॑: सिक॒त्या॑य च प्रवा॒ह्या॑य च॒ नम॑: किꣳशि॒लाय॑ च क्षय॒णाय॑ च॒ नम॑: कप॒र्दिने॑ च पुलस्त॒ये॑ च॒ नम॑ इरि॒ण्या॑य च प्रप॒थ्या॑य च ॥ ४३/३६ ॥ नमो॑ व्र॒ज्या॑य च॒ गोष्ठ्या॑य

चुनमस्तल्प्प्यायचगेह्यायचनमोंह्रद्य्यायचनिवेष्प्प्यायचनमः काट्यां-
यचगहूरेष्ठायच ॥ ४४/११ ॥ नमः शुष्क्यायच हरित्यायचनमः-पाठंसु-
ष्यायचरजस्यायचनमोलोप्प्यायचोलप्प्यायचनमऽऊर्व्यायच सूर्व्यायच
॥४५/११॥ नमः- पुण्र्यायचपर्ण्णशदायचनमऽ उद्गुरमाणायचाभिघ्नतेचनमऽ
आखिदतेचप्रखिदतेचनमऽइषुकृद्भ्यो धनुष्कृद्भ्यश्चवो नमोनमोवः
किरिकेभ्योदेवानाहृदयेभ्योनमोविचिन्वत्केभ्योनमो विक्षिणत्के-
भ्यो नमऽ आनिर्हतेभ्यः- ॥ ४६/११ ॥ द्रापेऽ अन्धसस्पते दरिद्र नीलं-
लोहित॥ आसाम्प्रजानामेषाम्पशूनाम्मा भेर्म्मा रोङ्मोचनः किञ्चना-
ममत् ॥४७/११॥ इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहे मती?॥यथा
शमसद्द्विपदे चतुष्प्पदेविश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम्॥४८/११॥या ते रुद्र
शिवा तनू? शिवा विश्वाहा भेषजी शिवा रुतस्य भेषजी तया नो मृड
जीवसे॥४९/११॥परि नो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्म्मतिरघायो?॥
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड॥५०/११॥ मीढु-
ष्टम शिवतम शिवो नः सुमनाभव ॥ परमे वृक्षऽ आयुधन्निधाय कृत्तिं
वसानऽ आचर पिनाकम्बिभ्रदागहि॥५१/११॥विकिरिद्र विलोहित नमस्तेऽ
अस्तु भगवः॥यास्ते सहस्रᳪ हेतयोन्यमस्मन्निवपन्तु ता?॥५२/११॥ सह-
स्राणि सहस्रशो बाह्वोस्तवहेतयः- ॥ तासामीशानो भगवः पराचीना
मुखाकृधि॥५३/११॥असंख्याता सहस्राणि ये रुद्राऽ अधिभूम्म्याम्। तेषाᳪ
सहस्रयोजनेव धन्वानि तन्मसि ॥ ५४/११ ॥ अस्मिन्महत्यर्ण्णवेन्तरिक्षे
भवाऽ अधि॥ तेषाᳪसहस्रयोजनेव धन्वानि तन्मसि ॥५५/११॥ नील-
ग्रीवाः शितिकण्ठा दिवᳪ रुद्राऽ उपश्रिताः ॥ तेषाᳪ सहस्रयोज-

नेषु धन्वानि तन्मसि ॥५६॥ नीलग्रीवाः शितिकण्ठाः शर्वाऽ अधः क्षमाचराः ॥ तेषाᳬं सहस्रयोजनेव धन्वानि तन्मसि ॥५७॥ ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः॥ तेषाᳬं सहस्रयोजनेव धन्वानि तन्मसि॥५८॥ ये भूतानामधिपतयो विशिखासः कपर्दिनः॥ तेषाᳬं सहस्रयोजनेव धन्वानि तन्मसि ॥५९॥ ये पथाम्पथिरक्षयऽ ऐलबृदाऽ आयुर्युधः ॥ तेषाᳬं सहस्रयोजनेव धन्वानि तन्मसि ॥ ६० ॥ ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः ॥ तेषाᳬं सहस्रयोजनेव धन्वानि तन्मसि ॥६१॥ येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ॥ तेषाᳬं सहस्रयोजनेव धन्वानि तन्मसि॥६२॥यऽ एतावन्तश्च भूयाᳬंसश्च दिशो रुद्रा वितस्थिरे॥तेषाᳬं सहस्रयोजनेव धन्वानि तन्मसि ॥६३॥ नमोऽस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः॥तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्यो नमोऽ अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥६४॥ नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वातऽ इषवः॥ तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः॥तेभ्यो नमोऽ अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः॥६५॥नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः॥ तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्यो नमोऽ अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥६६॥ अस्त्राय फट् इत्युच्चार्य परस्परतालं कुर्वन् अस्त्रं न्यसेत् ॥ इति पञ्चमो न्यासः ॥

अथ षष्ठो न्यासः—प्रजनने ब्रह्मा तिष्ठतु पादयोर्विष्णुस्तिष्ठतु हस्तयोर्हरस्तिष्ठतु बाह्वोरिन्द्रस्तिष्ठतु जठरेऽग्निस्तिष्ठतु हृदये शिवस्तिष्ठतु कण्ठे वसवस्तिष्ठन्तु वक्त्रे सरस्वती तिष्ठतु नासिकयोर्वायुस्तिष्ठतु नयनयोः सूर्याचन्द्रमसौ तिष्ठताम् कर्णयोरश्विनौ तिष्ठताम् ललाटे रुद्रास्तिष्ठन्तु मूर्ध्नि आदित्यास्तिष्ठन्तु शिरसि महापुरुषस्तिष्ठतु शिखायां चामुण्डा तिष्ठतु पृष्ठे पिनाकी तिष्ठतु पुरतः शूली तिष्ठतु पार्श्वयोः शिवाशङ्करौ तिष्ठताम् सर्वतो वायुस्तिष्ठतु बहिः सर्वतोऽग्निर्ज्वालामालापरिवृतस्तिष्ठतु सर्वेष्वङ्गेषु सर्वा देवतास्तिष्ठन्तु सर्वाङ्गं मा रक्षन्तु॥ इति षष्ठो न्यासः ॥

अथ लघुन्यासः—अग्निर्मे वाचि श्रित इत्यादिभिर्मन्त्रैर्यथालिङ्गमङ्गानि संस्पृशेत् ॥

ॐ अग्निर्मे वाचि श्रित वाक् हृदये हृदय मयि अहममृते अमृतं ब्रह्मणि—वाचं स्पृशेत् ॥

ॐ वायुर्मे प्राणे श्रितः प्राणो हृदये हृदय मयि अहममृते अमृतं ब्रह्मणि—हृदयं स्पृशेत् ॥

ॐ सूर्यो मे चक्षुषि श्रित. चक्षुर्हृदये हृदय मयि अहममृते अमृतं ब्रह्मणि—चक्षुषी स्पृशेत् ॥

ॐ चन्द्रमा मे मनसि श्रितः मनो हृदये हृदय मयि अहममृते अमृतं ब्रह्मणि—वक्षः स्पृशेत् ॥

---

१ स च अभिषेक एव भवेत् ॥ २ आत्मवायुश्च सूर्यश्च चन्द्रमा दिश एव च । आप पृथिव्यापश्च इन्द्र पर्जन्य एव च । ईशान आत्मा च पुनर्लघुन्यास पयोदश ॥
३ मनसः स्थानत्वात् ॥

ॐ दिशो मे श्रोत्रे श्रिताः श्रोत्रं हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणि—श्रोत्रे स्पृशेत् ॥

ॐ आपो मे रेतसि श्रिताः रेतो हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणि—लिङ्गं स्पृशेत् ॥

ॐ पृथिवी मे शरीरे श्रिता शरीरं हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणि—शरीरं स्पृशेत् ॥

ॐ ओषधिवनस्पतयो मे लोमसु श्रिताः लोमानि हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणि—रोमकूपान् स्पृशेत् ॥

ॐ इन्द्रो मे बले श्रितः बलं हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणि—सर्वाङ्गं स्पृशेत् ॥

ॐ पर्जन्यो मे मूर्ध्नि श्रितः मूर्द्धा हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणि—मस्तकं स्पृशेत् ॥

ॐ ईशानो मे मन्यौ श्रितः मन्युर्हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणि—हृदयं स्पृशेत् ॥

ॐ आत्मा म आत्मनि श्रितः आत्मा हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणि—वक्षः स्पृशेत् ॥

ॐ पुनर्म आत्मा पुनरायुरागात्पुनः प्राणः पुनराकूतमागात् । वैश्वानरो रश्मिभिर्वावृधानः अन्तस्तिष्ठत्वमृतस्य गोपाः । सर्वशरीरं स्पृशेत् ॥ एषत इत्यस्य प्रजापतिर्ऋषिः सामपङ्क्तिर्यजुर्जगती छन्दसी रुद्रो देवता योनिमुद्राप्रदर्शने विनियोगः ॥ एष ते रुद्र भाग? सह

---

१ क्रोधादिस्थानत्वात् ॥ २ चित्तस्थानत्वात् ॥

स्वसाम्बिकया तज्जुषस्व स्वाहैष ते रुद्र भागऽ आखुस्ते पशुः ॥५२॥
अनेन मन्त्रेण योनिमुद्रां प्रदर्शयेत् ॥

## ॥ अथ रुद्रपूजनप्रयोगः ॥

आत्मनः श्रीरुद्रस्वरूपेण ध्यानम्—पञ्चास्यं सौम्यमात्मानं सर्वाभरणभूषितम्। मृगलाञ्छनमूर्द्धानं शुद्धस्फटिकसन्निभम् ॥ फणासहस्रविस्फूर्जदुरगेन्द्रोपवीतिनम्। सत्यार्चिर्विज्वलज्ज्वालजटाजूटकिरीटिनम् ॥ सहस्रकरविभ्राजत्खट्वाङ्गादिविभूषितम् ॥ ब्रह्माण्डखण्डवत्स्फारकपालवरधारिणम् । देदीप्यमानं चन्द्रार्कज्वलदग्नित्रिनेत्रिणम् ॥ त्रैलोक्यद्योतिकृद्भास्वरस्कन्धैकपालमालिनम् । दीप्तनक्षत्रमालावदक्षमालाधरं विभुम् ॥ निःशेषवारिसम्पूर्णकमण्डलुकरं स्वजम् । जगद्धाधिर्यकृन्नादमुखं डमरुधारिणम् ॥ केयूरबद्धनागेन्द्रमूर्द्धमणिविराजितम् । मेखलाकिङ्किणीमालामुक्तारावविराजितम् ॥ घर्घराव्यक्तनिर्गच्छद्गम्भीरारावनूपुरम् । व्याघ्रचर्मपरीधानं गजचर्मवसानकम्॥ सहेमपट्टनीलाभव्याघ्रचर्मोत्तरीयकम् । विद्युल्लतामभागङ्गाभातमूर्भं सुरार्चितम् ॥ समस्तभुवनाधारधरणीश्वासनस्थितम् । त्रैलोक्यवनितामूर्द्ध-

---

१ रुद्रकल्पद्रुमे—एवं न्यासविधिं कृत्वा ततो मुद्रां प्रदर्शयेत् । शिवपुष्टिः शिवरुपोक्ता सैव शान्तिप्रदायिनी ॥ एष ते रुद्रभाग इति मुद्राप्रदर्शनम् । श्रीकामः शीर्षे कुर्वीत तेजस्कामस्तु नेत्रयोः ॥ मुखे त्वन्नाद्यकामस्तु श्रोत्रायां रोगनाशने। हृदये सर्वकामस्तु नाभौ ज्ञानी प्रदर्शयेत्॥प्रजाकामस्तु गुह्ये वै पशुकामस्तु जङ्घयोः। जानुभ्यां ग्रामकामस्तु राष्ट्रकामस्तु पादयोः ॥ वशीकरणकामस्तु वामहस्ते प्रदर्शयेत् । शापदपेऽभिचारे च वशाभेरपगमे तथा॥ बहिः शरीरात्कुर्वीत शिवरक्षेति च स्मरन् । एवं प्रदर्शयित्वा तु ततो ध्यानं समारभेत् ॥

नतदेहार्धपार्वतीम् ॥ लक्षसूर्यप्रभाभास्वत्त्रैलोक्यकृतपाण्डुरम् । अमृतप्लुतहृष्टाङ्गं दिव्यभोगसमाकुलम्॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् । नित्यं शाश्वतमव्यक्तं व्यापिनं नन्दिनं ध्रुवम् ॥ इत्थं श्रीरुद्रस्वरूपमात्मानं ध्यात्वा आत्मनि पुष्पाक्षतप्रक्षेपेण श्रीरुद्रस्यावाहनम्—ॐआराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः । आराधयामि भक्त्या त्वां गृहाण परमेश्वर ॥ श्रीरुद्र इहागच्छ इह तिष्ठ इत्यात्मनि पुष्पाक्षतप्रक्षेपणं कुर्यात् ॥ त्र्यम्बकमित्यस्य वसिष्ठ ऋषिः अनुष्टुप्छन्दः त्र्यम्बको रुद्रो देवता स्वात्मनि श्रीरुद्रपूजने विनियोगः। ॐत्र्यंम्बकं यजामहे सुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवं बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ ½ ॥ स्वशरीरेऽवस्थितश्रीरुद्रस्वरूपिणे जीवात्मने नमः गन्धाक्षतपुष्पाणि समर्पयामि॥ नैवेद्यं परिकल्पयामि ॥ स्वदक्षिणभागे साधारस्य ताम्रपात्रस्य स्थापनम् ॥ ॐ नमः शम्भवायेत्यस्य परमेष्ठी ऋषिः अत्र सप्ताक्षराणां यजुरुष्णिक् छन्दः षडक्षराणां यजुर्गायत्री छन्दः शम्भवाद्यो मन्त्रवर्णावगता अन्यतरतो नमस्कारा बहवो रुद्रा देवता अर्घपूरणे विनियोगः॥ॐनमः—शम्भवायं च मयोभवायं च नमः—शङ्करायं च मयस्करायं च नमः— शिवायं च शिवतराय च ॥ ⅙ ॥ अनेन मन्त्रेण तीर्थोदकेनार्घं पूरयित्वा तस्मिन्गन्धाक्षतपुष्पाणि प्रक्षिपेत् । ॐ नमः शम्भवायेत्यस्य परमेष्ठी ऋषिः अत्र सप्ताक्षराणां यजुरुष्णिक छन्दः षडक्षराणां यजुर्गायत्री छन्दः शम्भवाद्यो मन्त्रवर्णा-

---

१ द्विजो ध्यात्वैवमात्मानं सम्यग्रुद्रस्वरूपिणम् । सम्यग्ध्वस्तान्तरायः सन् ततो यजनमारभेत् ॥ २ अत्र नैवेद्यमपि मानसं परिकल्पयेदिति महार्णवः ॥

स्वसाम्बिकया तञ्जुषस्व स्वाहा[१] तें रुद्र भागऽ आखुस्ते पशुः ॥५॥
अनेन मन्त्रेण योनिमुद्रां प्रदर्शयेत् ॥

## ॥ अथ रुद्रपूजनप्रयोगः ॥

आत्मनः श्रीरुद्रस्वरूपेण ध्यानम्—पञ्चास्यं सौम्यमात्मानं सर्वाभरणभूषितम् । मृगलाञ्छनमूर्द्धानं शुद्धस्फटिकसन्निभम् ॥ फणासहस्रविस्फूर्जदुरगेन्द्रोपवीतिनम् । सत्यार्चिर्विज्वलज्ज्वालजटाजूटकिरीटिनम् ॥ सहस्रकरविभ्राजत्खट्वाङ्गादिविभूषितम् ॥ ब्रह्माण्डखण्डवरशूलकपालवरधारिणम् । देदीप्यमानं चन्द्रार्कज्वलदग्नित्रिनेत्रिणम् ॥ त्रैलोक्यद्योतिकृद्धासस्वस्कन्धैकपाशमालिनम् । दीप्तनक्षत्रमालावदक्षमालाधरं विभुम् ॥ निःशेषवारिसम्पूर्णकमण्डलुकरं स्वजम् । जगद्व्याधिर्यकृन्नादमुखं डमरुधारिणम् ॥ केयूरबद्धनागेन्द्रमूर्द्धमणिविराजितम् । मेखलाकिङ्किणीमालामुक्तारावविराजितम् ॥ घर्घराव्यक्तनिर्गच्छद्गम्भीरारावनूपुरम् । व्याघ्रचर्मपरीधानं गजचर्मवसानकम् ॥ सहेमपट्टनीलाभव्याघ्रचर्मोत्तरीयकम् । विद्युल्लताभगङ्गाभातमूर्ध्नं सुरार्चितम् ॥ समस्तभुवनाधारधरणीक्षासनस्थितम् । त्रैलोक्यवनितामूर्द्ध-

---

१ रुद्रकल्पद्रुमे—एवं न्यासविधिं कृत्वा ततो मुद्राः प्रदर्शयेत् । शिवपुष्टिः शिवस्योक्ता सैव शान्तिप्रदायिनी ॥ एष ते रुद्रभाग इति मुद्राप्रदर्शनम् । श्रीकामः शीर्षे कुर्वीत तेजस्कामस्तु नेत्रयोः ॥ मुखे स्वस्त्ययनकामस्तु ग्रीवायां रोगनाशने । हृदये सर्वकामस्तु नाभौ ज्ञानी प्रदर्शयेत् ॥ प्रजाकामस्तु गुह्ये वै पशुकामस्तु जङ्घयोः । जानुभ्यां ग्रामकामस्तु राष्ट्रकामस्तु पादयोः ॥ वशीकरणकामस्तु वामहस्ते प्रदर्शयेत् । पापक्षयेऽभिचारे च व्याधेरपगमे तथा ॥ बहिः शरीरात्कुर्वीत शिवस्याज्ञेति च स्मरन् । एवं प्रदर्शयित्वा तु ततो ध्यानं समारभेत् ॥

नतदेहार्धपार्वतीम् ॥ लक्षसूर्यप्रभाभास्वत्त्रैलोक्यकृतपाण्डुरम् । अमृतप्लुतहृष्टाङ्गं दिव्यभोगसमाकुलम्॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् । नित्यं शाश्वतमव्यक्तं व्यापिनं नन्दिनं ध्रुवम् ॥ इत्थं श्रीरुद्रस्वरूपमात्मानं ध्यात्वा आत्मनि पुष्पाक्षतप्रक्षेपेण श्रीरुद्रस्यावाहनम्—ॐआराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः । आराधयामि भक्त्या त्वां गृहाण परमेश्वर ॥ श्रीरुद्र इहागच्छ इह तिष्ठ इत्यात्मनि पुष्पाक्षतप्रक्षेपणं कुर्यात् ॥ त्र्यम्बकमित्यस्य वसिष्ठ ऋषिः अनुष्टुप्छन्दः त्र्यम्बको रुद्रो देवता स्वात्मनि श्रीरुद्रपूजने विनियोगः। ॐत्र्यम्बकंयजामहे सुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ १ ॥ स्वशरीरेऽवस्थितश्रीरुद्रस्वरूपिणे जीवात्मने नमः गन्धाक्षतपुष्पाणि समर्पयामि॥ नैवेद्यं परिकल्पयामि ॥ स्वदक्षिणभागे साधारस्य ताम्रपात्रस्य स्थापनम् ॥ ॐ नमः शम्भवायेत्यस्य परमेष्ठी ऋषिः अत्र सप्ताक्षराणां यजुरुष्णिक् छन्दः षडक्षराणां यजुर्गायत्री छन्दः शम्भवादयो मन्त्रवर्णावगता अन्यतरतो नमस्कारा बहवो रुद्रा देवता अर्घपूरणे विनियोगः॥ॐनमः—शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥ ४१/१६ ॥ अनेन मन्त्रेण तीर्थोदकेनार्घं पूरयित्वा तस्मिन्गन्धाक्षतपुष्पाणि प्रक्षिपेत् । ॐ नमः शम्भवायेत्यस्य परमेष्ठी ऋषिः अत्र सप्ताक्षराणां यजुरुष्णिक् छन्दः षडक्षराणां यजुर्गायत्री छन्दः शम्भवादयो मन्त्रवर्णा-

१ द्विजो ध्यात्वैवमात्मानं रुद्ररूपं रुद्रस्वरूपिणम् । सम्यग्ध्यस्तान्तरायः सन् ततो यजनमारभेत् ॥ २ अत्र नैवेद्यमपि मानसं परिकल्पयेदिति महार्णवः ॥

वगता अन्यतरतो नमस्कारा बहवो रुद्रा देवता अर्घाभिमन्त्रणे विनियोगः—ॐनमः शम्भवाय० इति मन्त्रमष्टवारं जपित्वा अर्घाभिमन्त्रणं कुर्यात् । ॐ नमः शम्भवायेत्यस्य परमेष्ठी ऋषिः अत्र सप्ताक्षराणां यजुरुष्णिक् छन्दः षडक्षराणां यजुर्गायत्री छन्दः शम्भवादयो मन्त्रवर्णावगता अन्यतरतो नमस्कारा बहवो रुद्रा देवताः सम्भारप्रोक्षणे विनियोगः—ॐ नमः शम्भवाय० इति मन्त्रेण पात्रान्तरगृहीतेन तदर्घोदकेन पूजासम्भारान् सम्प्रोक्षयेत् ।

[ आसनाद्युपचारसमर्पणादि वक्ष्यमाणं सर्वं देवकार्यमनेनैवार्घोदकेन कर्तव्यम् ॥ ] अथाक्षतैः पुष्पैर्वा पीठपूजा । पीठस्याधोभागे—ॐआधारशक्त्यै नमः । ॐकूर्माय नमः । ॐअनन्ताय नमः । ॐ वराहाय नमः । ॐपृथिव्यै नमः । ॐविचित्रदिव्यमण्डपाय नमः । मण्डपपरितः—ॐकल्पवृक्षेभ्यो नमः । ॐसुवर्णवेदिकायै नमः । ॐरत्नसिंहासनाय नमः । एभिर्मन्त्रैरुपर्युपरिपूजा । सिंहासनपादेषु—आग्नेय्याम्—ॐधर्माय नमः । नैर्ऋत्याम्—ॐज्ञानाय नमः । वायव्याम्—ॐवैराग्याय नमः । ऐशान्याम्—ॐऐश्वर्याय नमः । गात्रेषु—पूर्वस्याम्—ॐअधर्माय नमः । दक्षिणस्याम्—ॐअज्ञानाय नमः । पश्चिमायाम्—ॐअवैराग्याय नमः । उत्तरस्याम्—ॐअनैश्वर्याय नमः । सिंहासनोपरि—ॐतल्पाकारायानन्ताय नमः । ॐपद्माय नमः । ॐ आनन्दकन्दाय नमः । ॐसंविन्नालाय नमः । ॐप्रकृतिमयपत्रेभ्यो नमः । ॐविकारमयकेसरेभ्यो नमः । ॐपञ्चाशद्वर्णाढ्यकर्णिकायै नमः । पद्मस्य दलकेसरकर्णिकास्वर्चनम्—पद्मदलेषु—ॐअँ सत्त्वाय नमः ॥

केसरेषु–ॐउँ रजसे नमः॥ कर्णिकासु–ॐमं तमसे नमः॥ एवं प्रति-त्रिकं सर्वत्र–यथा पद्मदलेषु–ॐ अँद्वादशकलात्मनेऽर्कमण्डलाय नमः॥ केसरेषु–ॐउँ षोडशकलात्मने सोममण्डलाय नमः॥ कर्णिकायाम्–ॐमं दशकलात्मनेऽग्निमण्डलाय नमः॥पद्मदलेषु–ॐअँ ब्रह्मणे नमः॥ केसरेषु–ॐउँ विष्णवे नमः॥ कर्णिकायाम्–ॐमं महेश्वराय नमः॥ पद्मदलेषु–ॐअँ आत्मने नमः॥ केसरेषु–ॐउँ अन्तरात्मने नमः॥ कर्णिकायाम्–ॐमं परमात्मने नमः॥ पद्मेषु सर्वत्र–ॐआँ ज्ञानात्मने नमः॥ स्वाग्रतः पद्मपूर्वादिपत्रेषु–ॐवामायै नमः। ॐज्येष्ठायै नमः। ॐरौद्र्यै नमः। ॐकाल्यै नमः। ॐकलविकरण्यै नमः। ॐबलविकरण्यै नमः। ॐबलप्रमथिन्यै नमः। ॐसर्वभूतदमन्यै नमः। इत्यष्टौ शक्तीः सम्पूज्य। कर्णिकायाम्–ॐमनोन्मन्यै नमः॥ॐनमो भगवते सकलगुणात्मशक्तियुक्तायानन्ताय योगपीठात्मने नमः इति कर्णिकायां पुष्पाञ्जलिना पीठं सम्पूज्य सत्यज्ञानानन्तानन्दरूपं परं धामैव सकलं पीठमिति चिन्तयेत्॥ इति पीठपूजा॥ पीठोपरि स्थापितपात्रे शिवलिङ्गं धातुमयीं शैवीं प्रतिमां वा प्रतिष्ठाप्य आवाहनम्—अञ्जलौ पुष्पाण्यादाय सूर्यमण्डले स्वहृत्कमले वा श्रीरुद्रं ध्यात्वा ॐआत्वावहन्तुहरयः सचेतसः श्वेतैरश्वैः सहकेतुमद्भिः। वाताजवैर्बलवद्भिर्मनोजवैरायाहि शीघ्रं मम हव्याय शर्वोम्॥ ॐत्र्यम्बकँयजामहे० सद्योजातं प्रपद्यामि भगवन्तं सहस्राक्षं विरूपाक्षं महादेवं साम्बशिवम्

१ एवं त्र्यम्बकं यजामह इति मन्त्रेण सह समुच्चितैः सद्योजातं प्रपद्यामीति-मन्त्रैः सर्वेऽप्युपचाराः कार्या इति कल्पद्रुमे।

आवाहयामि॥इति सूर्यमण्डले स्वहृत्कमले वा स्थिताया देवमूर्तेः सकाशादीपादीपान्तरमिव निर्गतं दक्षिणनासापुटेनाञ्जलिस्थपुष्पेष्वागतं देवं विभाव्य पीठस्थे शिवलिङ्गादावञ्जलिस्थपुष्पप्रक्षेपेण शिवमावाहयेत् ॥ ॐत्र्यम्बकँय्यजामहे० ॥ सद्योजाताय वै नमो नमः भगवते साम्बशिवाय आसनं समर्पयामि । ॐत्र्यम्बकँय्यजामहे० ॥ भवे भवे नातिभवे भवस्व मां भगवते साम्बशिवाय पाद्यं समर्पयामि। त्र्यम्बकँय्यजामहे० भवोद्भवाय नमः भगवते साम्बशिवाय अर्घ्यं समर्पयामि। ॐआपो हि० योवः–०तस्माऽअरंङ्ग० ॐत्र्यम्बकँय्यजामहे० वामदेवाय नमः भगवते साम्बशिवाय नमः आचमनीयं समर्पयामि॥पयःस्नानम्– ॐ पयः– पृथिव्याम्पयऽ ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः॥ पयस्वतीः प्रदिशः– सन्तु मह्यम् ॥३६॥ कामधेनुसमुत्पन्नं सर्वेषां जीवनं परम् ॥ पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम्॥भगवते साम्बशिवाय नमः पयःस्नानं समर्पयामि ॥ पयः स्नानान्ते शुद्धोदकस्नानं समर्पयामि॥शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि॥दधिस्नानम्–दधिक्राव्णोऽ अकारिषञ्जिष्णोरश्वस्य वाजिनः– ॥ सुरभि नो मुखा करत्प्रणऽ आयूᳬषि तारिषत् ॥ ²³⁄₃ ॥ पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ॥ दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम् ॥ भगवते साम्बशिवाय नमः दधिस्नानं समर्पयामि ॥ दधिस्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ घृतस्नानम्—ॐघृतङ्घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा ॥ दिशः–प्रदिशऽ आदिशो विदिशऽ उद्दिशो

दिग्भ्य? स्वाहा ॥१॥ नवनीतसमुत्पन्नं सर्वमन्तोषकारकम् ॥ घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम्॥ भगवते साम्बशिवाय नमः घृतस्नानं समर्पयामि ॥ घृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि॥मधुस्नानम्—ॐमधु वाताऽऋतायते मधु क्षरन्ति सिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः ॥१॥ मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः॥ मधु द्यौरस्तु नः पिता ॥२॥ मधुमान्नो वनस्पतिर्मधुमाँ२ऽ अस्तु सूर्यः॥ माध्वीर्गावो भवन्तु नः ॥ ३ ॥ तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु ॥ तेजःपुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥ भगवते साम्बशिवाय नमः मधुस्नानं समर्पयामि ॥ मधुस्नानान्ते शुद्धोदकस्नानं समर्पयामि॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ शर्करास्नानम्—ॐअपाꣳ रसमुद्वयसꣳ सूर्ये सन्तꣳ समाहितम् ॥ अपाꣳ रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥१॥ इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका ॥ मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ॥ भगवते साम्बशिवाय नमः शर्करास्नानं समर्पयामि ॥ शर्करास्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ गन्धोदकस्नानम्—ॐ गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽ ईडितः ॥१॥ मलयाचलसम्भूतं चन्दनागरुसम्भवम् ॥ चन्दनं देवदेवेश स्नानार्थं प्रतिगृह्यताम् ॥ भगवते साम्बशिवाय नमः गन्धोदकस्नानं समर्पयामि॥ गन्धोदकस्नानान्ते शुद्धो-

दकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ उद्वर्तनस्नानम्—ॐ अꣳशुनाते अꣳशुः पृच्यतां परुषा परुः। गन्धस्ते सोममवतु मदाय रसोऽअच्युतः ॥ ३२ ॥ नानासुगन्धिद्रव्यं च चन्दनं रजनीयुतम् ॥ उद्वर्तनं मया दत्तं स्नानार्थं प्रतिगृह्यताम् ॥ भगवते साम्बशिवाय नमः उद्वर्तनस्नानं समर्पयामि ॥ उद्वर्तनस्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ पञ्चामृतस्नानाङ्गपूजा—ॐ भगवते साम्बशिवाय नमः वस्त्रोपवस्त्रार्थे अक्षतान्समर्पयामि ॥ ॐ भगवते साम्बशिवाय नमः यज्ञोपवीतार्थे अक्षतान्समर्पयामि॥ गन्धं समर्पयामि॥ नानापरिमलसौभाग्यद्रव्याणि समर्पयामि॥ यथाऋतुकालोद्भवपुष्पाणि समर्पयामि॥ धूपमाघ्रापयामि॥ दीपं दर्शयामि॥ शर्करोपहारनैवेद्यम्—ॐ प्राणाय स्वाहा ॥ ॐ अपानाय स्वाहा ॥ ॐ व्यानाय स्वाहा ॥ ॐ समानाय स्वाहा ॥ ॐ उदानाय स्वाहा ॥ नैवेद्यं समर्पयामि ॥ नैवेद्यान्ते हस्तप्रक्षालनं मुखप्रक्षालनं च समर्पयामि ॥ करोद्वर्तनार्थं चन्दनं समर्पयामि॥ मुखवासार्थे पूगीफलं ताम्बूलं च समर्पयामि ॥ हिरण्यमुद्रां दक्षिणां समर्पयामि ॥ कर्पूरार्तिक्यं दर्शयामि ॥ प्रदक्षिणां समर्पयामि ॥ मन्त्रपुष्पाञ्जलिं समर्पयामि ॥ प्रार्थनापूर्वकं नमस्करोमि ॥ अनेन यथाशक्त्या पञ्चामृतादिस्नानाङ्गपूर्वाराधनकृतेन भगवान् साम्बशिवः प्रीयतां न मम ॥ निर्माल्यम् उत्तरे विसृज्य गन्धाक्षतपुष्पाणि समर्प्य अभिषेकं कुर्यात्॥

॥ अथ ऋष्यादिस्मरणपूर्वकरुद्राभिषेकः ॥

ततः शिवस्य मूर्द्धनि सौवर्णेन राजतेन ताम्रेण वा कलशेन मधुना

गव्येन सर्पिषा पयसा वा तदभावे माहिषेण वा इक्षुरसेन नालिकेर-रसेनाम्ररसेन वा गन्धोदकेन वा केवलोदकेन वा वक्ष्यमाणैर्मन्त्रैरभि-षेकः कर्तव्यः॥ तत्रादौ अभिषेकमन्त्राणाम् ऋष्यादिस्मरणम्—गणाना-न्त्वेत्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः लिङ्गोक्ता देवता गायत्रीत्रिष्टु-बितिद्वयोः प्रजापतिर्ऋषिः उष्णिगनुष्टुभौ छन्दसी अश्वो देवता सहस्तोमा इत्यस्य यज्ञः प्राजापत्य ऋषिः त्रिष्टुप्छन्दः ऋषयो देवताः माङ्गल्यमात्यर्थे जपे विनियोगः ॥ यज्जाग्रत इति षण्णां शिवसङ्कल्प ऋषिः त्रिष्टुप्छन्दः मनो देवता अभिषेके विनियोगः ॥ सहस्रशीर्षेति पुरुषसूक्तस्य नारायणपुरुष ऋषिः आद्यानां पञ्चदशानाम् अनुष्टु-प्छन्दः यज्ञेन यज्ञमित्यस्यास्त्रिष्टुप्छन्दः जगद्वीजं पुरुषो देवता अभिषेके विनियोगः ॥ अद्भ्यः सम्भृत इति उत्तरनारायणस्य नारा-यणपुरुष ऋषिः आद्यानां तिसृणां त्रिष्टुप्छन्दः चतुर्थपञ्चमयोरनु-ष्टुप्छन्दः अन्त्यायास्त्रिष्टुप्छन्दः आदित्यो देवता अभिषेके विनि-योगः॥आशुः शिशान इति द्वादशानाम् अप्रतिरथ ऋषिः त्रिष्टुप्छन्दः इन्द्रो देवता अभिषेके विनियोगः॥ विभ्राडित्यस्य विभ्राट् सौर्य ऋषिः जगती छन्दः सूर्यो देवता उदुत्यमिति तिसृणां प्रस्कण्व ऋषिः गायत्री छन्दः सूर्यो देवता तम्प्रत्नथेत्यस्य ब्रह्मस्वयम्भूर्ऋषिः जगती छन्दः विश्वेदेवा देवता अयं वेन इत्यस्य ब्रह्मस्वयंभूर्ऋषिः त्रिष्टुप्छन्दः सोमो देवता चित्रमित्यस्य ब्रह्मस्वयम्भूर्ऋषिः त्रिष्टुप्छन्दः सूर्यो देवता आन इत्यस्य अगस्त्य ऋषिः त्रिष्टुप्छन्दः सूर्यो देवता यद्द्येत्यस्य श्रुतकक्षसुतंकक्षावृषी गायत्री छन्दः सूर्यो देवता तरणिरित्यस्य प्रस्कण्व

ऋषिः गायत्री छन्दः सूर्यो देवता तरणिरित्यस्य प्रस्कण्व ऋषिः गायत्रं छन्दः सूर्यो देवता तत्सूर्यस्येतिद्वयोः कुत्स ऋषिः त्रिष्टुप्छन्दः सूर्यो देवता बण्महानितिद्वयोर्जमदग्निर्ऋषिः आद्यस्य बृहती छन्दः द्वितीयस्य सतो बृहतीछन्दः सूर्यो देवता श्रायन्त इवेत्यस्य नृमेध ऋषिः बृहती छन्दः सूर्यो देवता अद्या देवा इत्यस्य कुत्सऋषिः त्रिष्टुप्छन्दः सूर्यो देवता आकृष्णेनेत्यस्य हिरण्यस्तूप आङ्गिरस ऋषिः त्रिष्टुप्छन्दः सूर्यो देवता अभिषेके विनियोगः॥ ॐकारस्य ब्रह्मा ऋषिः दैवी गायत्री छन्दः अग्निः परमात्मा देवता महाव्याहृतीनां प्रजापतिर्देवता अग्निर्गन्धर्वा वा ऋषयः दैवी गायत्री दैव्युष्णिक् दैवी गायत्री छन्दांसि अग्निवायुसूर्याः क्रमेण देवताः नमस्ते रुद्रेति रौद्राध्यायस्य परमेष्ठी ऋषिः देवता वा ऋषयः प्रजापतिर्वा ऋषिः नमस्ते रुद्रेत्यस्य गायत्रीछन्दः याते रुद्रेत्यादीनां तिसृणाम् अनुष्टुप्छन्दः अध्यवोचदधीत्यादि तिसृणां पङ्क्तिछन्दः नमोस्तुनीलग्रीवायेत्यादिसप्तानाम् अनुष्टुप्छन्दः मानोमहान्तमिति द्वयोः कुत्सोपि ऋषिः जगती छन्दः सर्वासामेको रुद्रो देवता नमो हिरण्यबाहव इत्यादीनि द्वापे इत्यतः प्राक्तनानि सर्वाणि यजूंषि नमो हिरण्यबाहव इत्यादीनां श्वपतिभ्यश्चवो नम इत्यन्तानां यजुषां हिरण्यबाहुः सेनानीर्दिशांपतिरित्यादिमन्त्रवर्णावगतनामका उभयतो नमस्कारा बहवो रुद्रा देवताः नमो भवाय च रुद्राय चेत्यादीनां आखिदते चेत्यन्तानां यजुषां भवादयो मन्त्रलिङ्गावगता अन्यतरतो नमस्कारा बहवो रुद्रा देवताः नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नम इत्यस्य यजुष उभयतो नमस्कारा बहवो रुद्रा देवताः नमो वः किरिकेभ्य इत्यादीनामग्निवायुसूर्यहृदयभूतव्याहृतीनाम् अन्यतरतो नमस्कारा बहवो रुद्रा देवताः

द्रापे इत्यस्या उपरिष्टाद् बृहती छन्दः इमारुद्रायेत्यस्याः कुत्सोपि ऋषिर्जगती छन्दः यात इत्यस्यानुष्टुप् छन्दः सप्तानामेको रुद्रो देवता असङ्ख्याताेत्यादीनां दशानामनुष्टुप् छन्दः बहवो रुद्रा देवता नमोस्तु रुद्रेभ्य इत्यादीनां त्रयाणां यजुषां धृतिछन्दः बहवो रुद्रा देवताः सकलाध्यायस्य शतशीर्षो रुद्रो वा देवता अभिषेके विनियोगः ॥

· वयः सोमेत्यस्य बन्धुर्ऋषिः गायत्री छन्दः सोमो देवता एषत इत्यनयोः प्रजापतिर्ऋषिः सामपङ्क्तियजुर्जगती छन्दसी रुद्रो देवता अवरुद्रमित्यस्य प्रजापतिर्ऋषिः पङ्क्तिछन्दः रुद्रो देवता भेषजमसीत्यस्य प्रजापतिर्ऋषिः ककुप् छन्दः रुद्रो देवता त्र्यम्बकमित्यनयोः क्रमेण वसिष्ठप्रजापती ऋषी अनुष्टुप् छन्दः त्र्यम्बको रुद्रो देवता एतत्त इत्यस्य प्रजापतिर्ऋषिः आस्तारपङ्क्तिछन्दः रुद्रो देवता त्र्यायुषमित्यस्य नारायण ऋषिः उष्णिक् छन्दः आशीर्देवता शिवो नामेत्यस्य प्रजापतिर्ऋषिः प्राजापत्यबृहती छन्दः क्षुरो देवता निवर्तयाम्येत्यस्य प्रजापतिर्ऋषिः प्राजापत्यत्रिष्टुप् छन्दः लिङ्गोक्ता देवता अभिषेके विनियोगः ॥

न तं विदाथ–विश्वकर्मेत्यनयोर्विश्वकर्मा भौवन ऋषिः त्रिष्टुप्छन्दः विश्वकर्मा देवता अभिषेके विनियोगः ॥

उग्रश्चेत्यस्य....प्रजापतिः परमेष्ठी प्राजापत्यो वा ऋषिः गायत्री छन्दः मरुतो देवता अग्निंहृदयेनेत्यादीनां यजुषां प्रजापतिर्ऋषिः लिङ्गोक्ता देवता आयासायस्वाहेत्यादीनां प्रजापतिर्ऋषिः लिङ्गोक्ता देवता अभिषेके विनियोगः ॥

वाजश्च मे प्रसवश्चम इत्यादीनां चमकमन्त्राणाम् अनड्वाँश्चमे धेनुश्चमे

यज्ञेन कल्पन्तामित्यन्तानां वाजाय स्वाहेत्यादीना वेट्स्वाहेत्यन्तानां देवा ऋषयः वाजश्च इत्यादीना चतुरक्षराणा दैवी बृहती छन्दः ऊर्क्चम इत्यादीना त्र्यक्षराणा दैव्यनुष्टुप् मयतिश्च इत्येवं पश्चाक्षराणा दैवी पङ्क्तिः आधिपत्यश्च इत्यादीना षडक्षराणा दैवी त्रिष्टुप् यजुर्गायत्री वा हारियोजनश्च इत्यादीनां सप्ताक्षराणा दैवी जगती यजुरुष्णिग्वा आयुर्यज्ञेन कल्पतामित्यादीनाम् अष्टाक्षराणा यजुरनुष्टुप् प्राजापत्या गायत्री वा भुवनस्य पतये स्वाहेत्यादीनां नवाक्षराणा यजुर्बृहती आसुरी जगती वा मुग्धाय वै नः शिनायेत्यादीना दशाक्षराणा यजुः पङ्क्तिः आसुरी त्रिष्टुप वा विन्ऽशिन आन्त्यायनायेत्यादीनाम् एकादशाक्षराणां यजुस्त्रिष्टुप् आसुरी पङ्क्तिर्वा अङ्गुलयः शक्वरयो दिशश्च इत्यस्य द्वादशाक्षरस्य यजुर्जगती सामगायत्री वा प्राजापत्योष्णिग्वा आसुरी बृहती वा सर्वेषाममिर्देवता अभिषेके विनियोगः॥

ऋचं वाचमिति शान्त्यध्यायस्य दध्यङ्ङाथर्वण ऋषिः सकलाध्यायस्यैव विश्वेदेवा देवता ऋचं वाचमितिचतुर्णा यजुषा दैवी जगतीछन्दः ऋगादयो लिङ्गोक्ता देवता वागोज इत्यस्य यजुर्जगती छन्दः वागादिलिङ्गोक्ता देवता यन्म इत्यस्य पङ्क्तिछन्दः बृहस्पतिर्देवता तिसृणा महाव्याहृतीना दध्यङ्ङाथर्वण ऋषिः दैवी गायत्री दैव्युष्णिक् दैवी गायत्री छन्दासि अग्निवायुसूर्याः क्रमेण देवताः तत्सवितुरितिदध्यङ्ङाथर्वण ऋषिः गायत्री छन्दः सविता देवता कया न इति त्र्यृचस्य दध्यङ्ङाथर्वण ऋषिः द्वयोर्गायत्री छन्दः तृतीयायाः पादनिचृद्गायत्री छन्दः इन्द्रो देवता कयात्वमित्यस्यानिरुक्ता गायत्री छन्दः इन्द्रो देवता इन्द्रो विश्वस्येति द्विपदा विराट् छन्दः इन्द्रो देवता शन्नो मित्रः शन्नो वात इति

त्योरनुष्टुप्छन्दः मित्रावरुणादयो लिङ्गोक्ता देवता अहानिशमित्यस्य द्विपदा गायत्री छन्दः अहानि रात्रयश्च देवताः शन्नइन्द्राग्नी इत्यस्य त्रैष्टुप् छन्दः इन्द्राग्नी इन्द्रावरुणौ इन्द्रापूषणौ इन्द्रासोमौ च देवताः शन्नोदेवीरित्यस्य गायत्री छन्दः आपो देवताः स्योनापृथिवीत्यस्य दध्यङ्ङाथर्वणऋषिः गायत्री छन्दः पृथिवी देवता आपोहिष्ठेतित्र्यृचस्य दध्यङ्ङाथर्वण ऋषिः गायत्री छन्दः आपो देवताः द्यौः शान्तिरित्यस्य दध्यङ्ङाथर्वणऋषिः एकाधिकशक्वरी छन्दः द्यौरादयो लिङ्गोक्ता देवता दृतेदृंहमा इत्यस्य दध्यङ्ङाथर्वण ऋषिः ब्राह्मी अनुष्टुप् छन्दः घर्मो देवता दृतेदृंहमाज्योक्ते इत्यस्य दध्यङ्ङाथर्वण ऋषिः उष्णिक् छन्दः घर्मो देवता नमस्ते हरस इत्यस्य दध्यङ्ङाथर्वण ऋषिः बृहती छन्दः अग्निर्देवता नमस्तेऽ अस्त्वित्यस्य दध्यङ्ङाथर्वण ऋषिः अनुष्टुप्छन्दः विद्युतस्तनयित्नुर्भगवान्देवता यतोयत इत्यस्य दध्यङ्ङाथर्वणऋषिः अनुष्टुप् छन्दः महावीरो देवता सुमित्रियान इत्यस्य दध्यङ्ङाथर्वण ऋषिः प्राजापत्या जगती छन्दः आपो देवताः तच्चक्षुरित्यस्य दध्यङ्ङाथर्वण ऋषिः पुर उष्णिक् छन्दः ब्राह्मी त्रिष्टुप् न्यूहनादत्यष्टिर्वा अक्षरातीतं पुर उष्णिग्वा सूर्यो देवता सर्वाध्यायस्य शान्तिकरणे विनियोगः ॥

हरिः—ॐ गुणानान्त्वा गुणपतिᳪं हवामहे प्रियाणान्त्वा प्रियपतिᳪं हवामहे निधीनान्त्वा निधिपतिᳪं हवामहे वसो मम ॥ आहमजानि गर्भधमा त्वमजासि गर्भधम् ॥१ २३/२३॥ गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह ॥ बृहत्युष्णिहा ककुप्सूचीभिः—शम्यन्तु त्वा ॥२ ३४/२३॥ द्विपदा याश्चतुष्पदास्त्रिपदा याश्च षट्पदाः ॥ विच्छन्दा याश्च सच्छन्दाः

१ कात्यायनसम्मतम् ॥ २ सर्वानुक्रमसूत्रभाष्यकारसम्मतम् ॥ ३ आचारादर्शकारश्रीदत्तोपाध्यायसम्मतम् ॥

सूचीभिः शम्यन्तु त्वा ॥२ ३४/२३ ॥ सहस्तोमाः सहछन्दसऽ आवृतः सहप्रमाऽ ऋषयः सप्त दैव्याः॥पूर्वेषाम्पन्थामनुदृश्य धीराऽ अन्वालेभिरे रथ्यो न रश्मीन् ॥४ ४९/३४॥ ॐ यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति ॥ दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनः शिवसङ्कल्पमस्तु ॥ १ १/३४ ॥ येन कर्म्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ॥ यदपूर्वं यक्षमन्तः प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु ॥२ २/३४॥ यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतम्प्रजासु॥ यस्मान्नऽ ऋते किञ्चन कर्म्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु॥३ ३/३४॥ येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेन सर्वम् ॥ येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥ ४ ४/३४ ॥ यस्मिन्नृचः साम यजूꣳषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ॥ यस्मिँश्चित्तꣳ सर्वमोतम्प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु॥५ ५/३४॥ सुषारथिरश्वानिव यन्मनुष्यान्नेनीयते भीशुभिर्वाजिनऽ इव ॥ हृत्प्रतिष्ठं यदजिरञ्जविष्ठन्तन्मे मनः शिवसङ्कल्पमस्तु ॥ ६ ६/३४॥ इति प्रथमोऽध्यायः ॥

---

१ तुक्निषेधः—शुक्लयजुः प्रातिशाख्ये चतुर्थाध्याये सूत्रं २६—यस्यातिहायसहेति न ॥ भाष्यम्—यस्य, अतिहाय, सह इत्येतैः पदैरुपहितः स्वरः छकारे प्रत्यये न चकारेण व्यवधीयते यथा—यस्य छाया० ॥ १३/२५ ॥ अतिहाय छिद्रागात्राणि० ॥ ४१/२५ ॥ सहस्तोमाः सह छन्दस० ॥ ४९/३४ ॥

२ इति शिवसङ्कल्पसूक्तस्य हृदयरूपाङ्गस्य षण्मन्त्रैरभिषेकः॥ उक्तञ्च—शिवसंकल्पहृदयं सूक्तं स्यात्पौरुषं शिरः। प्राहुर्नारायणीयं च शिखा स्याच्चोत्तराभिधम् ॥ आद्यः विभ्राट्‌कवचं नेत्रं विभ्राड् बृहत्स्मृतम्।शतरुद्रियमस्त्रं स्यात्पडङ्ग क्रम ईरितः॥हृच्छिरश्च शिखा वर्म नेत्रं चास्त्रं महामते। प्राहुर्विविधा रुद्रस्य षडङ्गानि स्वयाजतः ॥

ॐसहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्॥ स भूमिꣳ सर्वतस्स्पृ-
त्वात्यतिष्ठद्दशाङ्गुलम् ॥१॥ पुरुषऽएवेदꣳ सर्वं यद्भूतं यच्च भाव्यम् ॥
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥२॥ एतावानस्य महिमातो
ज्यायाँश्च पूरुषः॥पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥३॥
त्रिपादूर्ध्वऽ उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ॥ ततो विष्वङ् व्यक्रा-
मत्साशनानशनेऽ अभि ॥ ४ ॥ ततो विराडजायत विराजोऽ अधि
पूरुषः ॥ स जातोऽ अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥५॥ तस्मा-
द्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ॥ पशूँस्ताँश्चक्रे वायव्यानारण्या
ग्राम्याश्च ये ॥६॥ तस्माद्यज्ञात्सर्वहुतऽ ऋचः सामानि जज्ञिरे॥
छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥७॥ तस्मादश्वाऽ
अजायन्त ये के चोभयादतः॥गावो ह जज्ञिरे तस्मात्तस्माज्जाताऽ
अजावयः ॥८॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ॥ तेन
देवाऽ अयजन्त साध्याऽ ऋषयश्च ये॥९॥यत्पुरुषं व्यदधुः कतिधा
व्यकल्पयन्॥मुखं किमस्यासीत्किं बाहू किमूरू पादाऽ उच्येते॥१०॥
ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः॥ऊरू तदस्य यद्वैश्यः
पद्भ्याꣳ शूद्रोऽ अजायत॥११॥चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽ
अजायत॥श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥१२॥नाभ्याऽ
आसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्त्तत ॥ पद्भ्यां भूमिर्दिशः श्रो-
त्रात्तथा लोकाँ२ऽ अकल्पयन् ॥ १३ ॥ यत्पुरुषेण हविषा देवा
यज्ञमतन्वत॥वसन्तोऽस्यासीदाज्यं ग्रीष्मऽ इध्मः शरद्धविः॥१४॥
सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः॥देवा यद्यज्ञं तन्वानाऽ
अबध्नन्पुरुषं पशुम्॥१५॥यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि

प्रथमान्यासन् ॥ ते ह नाकम्महिमानं सचन्त यत्र पूर्वे साध्या॒ सन्ति देवा॒ ॥१६॥

ॐअद्भ्य॒ सम्भृतः पृथिव्यै रसाच्च विश्वकर्म्मणः समवर्त्तताग्रे ॥ तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥ १ ॥ वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णन्तमसः परस्तात् ॥ तमेव विदित्वाति मृत्युमेति नान्य॒ पन्था विद्यतेऽयनाय॥२॥ प्रजापतिश्चरति गर्भेऽ अन्तरजायमानो बहुधा विजायते॥तस्य योनिम्परि पश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा॥३॥यो देवेभ्यऽ आतपति यो देवानाम्पुरोहितः॥ पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥४॥रुचम्ब्राह्मञ्जनयन्तो देवाऽ अग्रे तदब्रुवन्॥यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवाऽ असन्वशे॥५॥श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्मऽ इषाण सर्वलोकम्मऽ इषाण ॥ ६ ॥ इति द्वितीयोऽध्यायः ॥

ॐआशुः शिशानो वृषभो न भीमो घनाघन॒ क्षोभणश्चर्षणीनाम्॥सङ्क्रन्दनो निमिषऽ एकवीर॒ शतꣳ सेनाऽ अजयत्साकमिन्द्र॥ १ ॥ सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना॥तदिन्द्रेण जयत तत्सहध्वं युधो नरऽ इषुहस्तेन वृष्णा॥२॥ सऽ इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा स युधऽ इन्द्रो गणेन ॥ सꣳसृष्टजित्सोमपा बाहुशर्द्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥३॥ बृहस्पते परिदीया रथेन रक्षोहामित्राँ२ऽ अपबाधमानः॥ प्रभञ्जन्त्सेनाः

१ इति पुरुषसूक्तस्य शिरोनामकाङ्गस्य षाडशमन्त्रैरभिषेकः ॥ २ इत्युत्तरनारायणसूक्तस्य शिखारूपाङ्गस्य षण्मन्त्रैरभिषेकः । शिखास्पर्शश्चोत्तराभिषेकम् ।

प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥ ४ ३६/१७ ॥ बलविज्ञाय
स्थविरँ प्रवीरँ सहस्वान्वाजी सहमान उग्रः ॥ अभिवीरो
अभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥ ५ ३७/१७ ॥ गोत्रभिदं गो-
विदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ॥ इमँ सजाता अनु वी-
रयध्वमिन्द्रँ सखायो अनु सँ रभध्वम् ॥ ६ ३८/१७ ॥ अभि गोत्राणि सहसा गाह-
मानोऽदयो वीरः शतमन्युरिन्द्रः ॥ दुश्च्यवनः पृतनाषाडयुध्योऽस्माकँ
सेना अवतु प्र युत्सु ॥ ७ ३९/१७ ॥ इन्द्र आसां नेता बृहस्पतिर्दक्षिणा
यज्ञः पुर एतु सोमः ॥ देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो
यन्त्वग्रम् ॥ ८ ४०/१७ ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताꣳ
शर्ध उग्रम् ॥ महामनसां भुवनच्यवानां घोषो देवानां जयतामुद-
स्थात् ॥ ९ ४१/१७ ॥ उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनाꣳसि ॥
उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः ॥ १० ४२/१७ ॥
अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ॥ अस्माकं
वीरा उत्तरे भवन्त्वस्माँ२ उ देवा अवता हवेषु ॥ ११ ४३/१७ ॥ अमी-
षां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ॥ अभि प्रेहि निर्दह
हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥ १२ ४४/१७ ॥

---

१ इत्यप्रतिरथसूक्तस्य कण्वचरूपाङ्गस्य द्वादशमन्त्रैरभिषेकः ॥ सप्तदशर्चेनेति-
कर्कः । तस्मात्सप्तदशपक्षे सप्तदशानामप्रतिरथत्वापेक्षयादिविनियोगं कृत्वा सप्त-
दशर्चेनाप्रतिरथेनाभिषेक ॥ सप्तदशमन्त्रैरभिषेकपक्षे—अवसृष्टा परापत शरव्ये
ब्रह्मसंशिते ॥ गच्छामित्रान्प्रपद्यस्व मामीषां कञ्चनोच्छिषः ॥ १ ४५/१७ ॥
प्रेता जयता नर इन्द्रो वः शर्म यच्छतु ॥ उग्रा वः सन्तु बाहवो-
नाधृष्या यथासथ ॥ २ ४६/१७ ॥ असौ या सेना मरुतः परेषामभ्येति

ॐ विभ्राड् बृहत्पिबतु सोम्यम्मध्वायुर्दधद्यज्ञपतावविंहुतम् ॥
वातजूतो योऽ अभिरक्षति त्मना प्रजाः पुपोष पुरुधा विराजति ॥१ ३/३३॥
उदु त्यञ्जातवेदसन्देवं वहन्ति केतवः ॥ दृशे विश्वाय सूर्य्यम् ॥२ ३१/३३ ॥
येना पावक चक्षसा भुरण्यन्तञ्जनाँ२ऽ अनु ॥ त्वं वरुण पश्यसि ॥३ ३२/३३॥
दैव्यावध्वर्यूऽ आगतꣳ रथेन सूर्य्यत्वचा ॥ मध्वा यज्ञꣳ समञ्जाथे ॥ तम्प्र-
त्नथायं वेनश्चित्रन्देवानाम् ॥ ४ ३३/३३ ॥ तम्प्रत्नथा पूर्वथा विश्वथेमथा
ज्येष्ठतातिम्बर्हिषदꣳ स्वर्विदम् ॥ प्रतीचीनं वृजनन्दोहसे धुनिमाशु-
ञ्जयन्तमनु यासु वर्द्धसे ॥ ५ २/७ ॥ अयं वेनश्चोदयत्पृश्निगर्भा ज्योति-
र्जरायू रजसो विमाने ॥ इममपाꣳ सङ्गमे सूर्य्यस्य शिशुन्न विप्रा म-
तिभी रिहन्ति ॥ ६ १६/७ ॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्य वरु-
णस्याग्नेः ॥ आप्रा द्यावापृथिवीऽ अन्तरिक्षꣳ सूर्य्यऽ आत्मा जग-
तस्तस्थुषश्च ॥७ ४२/७॥ आ नऽ इडाभिर्विदथे सुशस्ति विश्वानरः स-
विता देवऽ एतु॥ अपि यथा युवानो मत्सथा नो विश्वञ्जगदभिपित्वे
मनीषा॥८ ३४/३३॥ यदद्य कच्च वृत्रहन्नुदगाऽ अभि सूर्य्य ॥ सर्वन्तदिन्द्र ते
वशे॥९ ३५/३३॥ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य्य ॥ विश्वमा भासि
रोचनम् ॥१० ३६/३३॥ तत्सूर्य्यस्य देवत्वन्तन्महित्वम्मध्या कर्त्तोर्विततꣳ

नुऽ ओजसा स्पर्द्धमाना ॥ तां गूहत तमसापव्रतेन यथामीऽ अन्योऽ
अन्यन्न जानन्॥३ ४/१७॥ यत्र बाणाः सम्पतन्ति कुमारा विशिखाऽ इव॥
तन्नऽ इन्द्रो बृहस्पतिरदितिः शर्म्म यच्छतु विश्वाहा शर्म्म यच्छतु ॥
॥४ ४/१७॥ मर्म्माणि ते वर्म्मणा च्छादयामि सोमस्त्वा राजामृतेनानुव-
स्ताम्॥ उरोर्वरीयो वरुणस्ते कृणोतु जयन्तन्त्वानु देवा मदन्तु ॥५ ४/१७॥
एतान्पञ्चमन्त्रान्योजयित्वा ससदशेनाभिषेकः कार्यः ॥

सञ्जभार ॥ युदेदयुक्त हुरितं- सुधस्त्थादाद्रात्री वासंस्तनुते सिमस्मै ॥ ११ ३/३३ ॥ तन्मित्रस्य वरुणस्याभिचक्षे सूर्य्यो रूपङ्कृणुते द्योरुपस्थे ॥ अनुन्तमुन्यद्रुशदस्य पाजः- कृष्णमुन्यद्धरितुः सम्भरन्ति ॥१२ ३/३९॥ बण्महाँ२ऽ असि सूर्य्य बडादित्य मुहाँ२ऽ असि॥मुहस्ते सुतो मंहिमा पनस्यतेद्धा देव मुहाँ२ऽ असि ॥१३ ३/३३॥ बट् सूर्य्य श्रवसा महाँ२ऽ असि सुत्रा देव मुहाँ२ऽ असि ॥ मुह्ना देवानामसुर्य्यः- पुरोहितो विभु ज्योतिरदाभ्यम् ॥ १४ ४/३७ ॥ श्रायन्तऽ इव सूर्य्यं विश्वेदिन्द्रस्य भक्षत। वसूनि जाते जनमानुऽ ओजसा प्रतिं भागन्न दीधिम॥१५ ४/३४॥ अद्या देवाऽ उदिता सूर्य्यस्य निरंहसः पिपृता निरवुद्यात् ॥ तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः- पृथिवीऽ उतद्यौः ॥१६ ४/३३॥ आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नुमृतम्मर्त्यं॑ञ्च ॥ हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ १७ ४/३३ ॥ इति चतुर्थोऽध्यायः ॥

ॐभूः ॐभुवः ॐस्वः ॐनमस्ते रुद्र मुन्यवऽ उतो तुऽ इषवे नमः-॥

---

१ इति भ्रमसूक्तस्य नेत्ररूपस्य पञ्चमाङ्गस्य सप्तदशमन्त्रैरभिषक । २ कैवल्यो पनिषदि-य शतरुद्रियमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आत्मपूतो भवति स सुरापानात्पूतो भवति स ब्रह्महत्यायाः पूतो भवति स सुवर्णस्तेयात्पूतो भवति स कृत्याकृत्यात्पूतो भवति तस्मादविमुक्तमाश्रितो भवत्यत्याश्रमी सर्वदा सकृद्वा जपेत् । अनेन ज्ञानमाप्नोति संसारार्णवनाशनम् । तस्मादेवं विदित्वैनं कैवल्यं पदमश्नुते ॥ जाबालोपनिषदि-अथ हैनं ब्रह्मचारिण ऊचुः किं जप्येनामृतत्वं ब्रूहीति स होवाच याज्ञवल्क्यः शतरुद्रियेणेत्येतान्येव ह वा अमृतस्य नामानि एतैर्ह वा अमृतो भवतीति एवमेवैतद्याज्ञवल्क्य ॥

बाहुभ्यामुत ते नमः ॥ १/१६ ॥ या ते रुद्र शिवा तनूरघोरापापकाशिनी ॥
तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥ २/१६ ॥ यामिषुं गिरि-
शन्त हस्ते बिभर्ष्यस्तवे ॥ शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं
जगत् ॥ ३/१६ ॥ शिवेन वचसा त्वा गिरिशाच्छा वदामसि ॥ यथा नः
सर्वमिज्जगदयक्ष्मꣳ सुमना असत् ॥ ४/१६ ॥ अध्यवोचदधिवक्ता प्रथमो
दैव्यो भिषक् ॥ अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यो धराचीः
परासुव ॥ ५/१६ ॥ असौ यस्ताम्रो ऽअरुण ऽउत बभ्रुः सुमङ्गलः ॥ ये
चैनꣳ रुद्रा ऽअभितो दिक्षु श्रिताः सहस्रशो वैषाꣳ हेड ऽईमहे ॥ ६/१६ ॥
असौ यो ऽवसर्पति नीलग्रीवो विलोहितः ॥ उतैनं गोपा ऽअदृश्रन्नदृ-
श्रन्नुदहार्य्यः स दृष्टो मृडयाति नः ॥ ७/१६ ॥ नमोऽस्तु नीलग्रीवाय
सहस्राक्षाय मीढुषे ॥ अथो ये ऽअस्य सत्वानो ऽहं तेभ्यो ऽकरं नमः ॥ ८/१६ ॥
प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ॥ याश्च ते हस्त ऽइषवः परा ता
भगवो वप ॥ ९/१६ ॥ विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ २ उत ॥
अनेशन्नस्य या ऽइषव ऽआभुरस्य निषङ्गधिः ॥ १०/१६ ॥ या ते हेतिर्मी-
ढुष्टम हस्ते बभूव ते धनुः ॥ तयास्मान्विश्वतस्त्वमयक्ष्मया परिभुज
॥ ११/१६ ॥ परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः ॥ अथो य ऽ
इषुधिस्तवारे ऽअस्मन्नि धेहि तम् ॥ १२/१६ ॥ अवतत्य धनुष्ट्वꣳ सहस्राक्ष
शतेषुधे ॥ निशीर्य्य शल्यानां मुखा शिवो नः सुमना भव ॥ १३/१६ ॥
नमस्त ऽआयुधायानातताय धृष्णवे ॥ उभाभ्यामुत ते नमो बाहु
भ्यां तव धन्वने ॥ १४/१६ ॥ मा नो महान्तमुत मा नो ऽअर्भकं मा न ऽ
उक्षन्तमुत मा न ऽउक्षितम् ॥ मा नो वधीः पितरं मोत मातरं मा नः

प्रियास्तुन्वोरुद्ररीरिषः ॥१५॥ मा नस्तोके तनये मा नऽ आयुषि मा नोगोषु मा नोऽ अश्वेषु रीरिषः ॥ मा नो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥१६॥ नमो हिरण्यबाहवे सेनान्ये दिशाञ्चपतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनाम्पतये नमो नमः शष्पिञ्जराय त्विषीमते पथीनाम्पतये नमोनमो हरिकेशायोपवीतिने पुष्टानाम्पतये नमोनमो बभ्लुशाय व्याधिनेऽन्नानाम्पतये नमोनमो भवस्य हेत्यै जगताम्पतये नमोनमो रुद्रायाततायिने क्षेत्राणाम्पतये नमो नमः सूतायाहन्त्यै वनानाम्पतये नमोनमो रोहिताय स्थपतये वृक्षाणाम्पतये नमोनमो भुवन्तये वारिवस्कृतायौषधीनाम्पतये नमोनमो मन्त्रिणे वाणिजाय कक्षाणाम्पतये नमोनमऽ उच्चैर्घोषायाक्रन्दयते पत्तीनाम्पतये नमोनमः कृत्स्नायतया धावते सत्त्वनाम्पतये नमोनमः सहमानाय निव्याधिनऽ आव्याधिनीनाम्पतये नमोनमो निषङ्गिणे ककुभाय स्तेनानाम्पतये नमोनमो निचेरवे परिचरायारण्यानाम्पतये नमो नमो वञ्चते परिवञ्चते स्तायूनाम्पतये नमोनमो निषङ्गिणऽ इषुधिमते तस्कराणाम्पतये नमोनमः सृकायिभ्यो जिघांसद्भ्यो मुष्णताम्पतये नमोनमोऽसिमद्भ्यो नक्तञ्चरद्भ्यो विकृन्तानाम्पतये नमः ॥१७ १८ १९ २० २१॥ नमऽ उष्णीषिणे गिरिचराय कुलुञ्चानाम्पतये नमोनमऽ इषुमद्भ्यो धन्वायिभ्यश्च वो नमोनमऽ आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नमऽ आयच्छद्भ्योऽस्यद्भ्यश्च वो नमोनमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमोनमः शयानेभ्यऽ आसीनेभ्यश्च वो नमोनमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमोनमः सभाभ्यः सभापतिभ्यश्च वो

नमोनमोश्वेभ्योश्वंपतिभ्यश्चवो नमोनमऽ आव्याधिनीभ्योविविध्यं
न्तीभ्यश्चवो नमोनमऽ उगणाभ्यस्तृंहतीभ्यंश्चवो नमोनमो गणेभ्यो
गुणपतिभ्यश्चवो नमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोनमो गृत्से-
भ्यो गृत्संपतिभ्यश्चवो नमोनमो विरूपेभ्यो विश्वरूपेभ्यश्च वो
नमोनमः सेनाभ्यः सेनानिभ्यंश्चवोनमोनमोरथिभ्योऽ अरथेभ्यंश्च
वो नमोनमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यंश्च वो नमोनमो महद्भ्योऽ
अर्भकेभ्यंश्चवो नमः ॥ २२ २३ २४ २५ २६ ॥ नमस्तक्षभ्योरथकारेभ्यं
श्चवो नमोनमः कुलालेभ्यः कर्मारेभ्यश्चवो नमो नमो निषादेभ्यः
पुञ्जिष्ठेभ्यश्चवो नमो नमः श्वनिभ्यो मृगयुभ्यंश्चवो नमो नमः
श्वभ्यः श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च नमः शर्वाय
चपशुपतये च नमो नीलग्रीवायच शितिकण्ठायचनमः कपर्दिने च व्यु
प्तकेशायचनमः सहस्राक्षायंचशतधन्वनेच नमोगिरिशयायचशिपिवि-
ष्टायंचनमो मीढुष्टमायचेषुमतेच नमो ह्रस्वाय चवामनायचनमोबृहते
चवर्षीयसेचनमो वृद्धायचसवृधेच नमोग्र्यायच प्रथमाय च नमऽ
आशवेचाजिरायंचनमः शीघ्र्यायचशीभ्यायचनमऽ ऊर्म्यायचाव-
स्वन्यायचनमोनादेयायंचद्वीप्यायच॥ २७ २८ ॥ २९ ३० ३१ ॥ नमोज्येष्ठाय
च कनिष्ठायंचनमः पूर्वजायंचापरजायंचनमोमध्यमायंचापगल्भायंच
नमो जघन्यायचबुध्न्यायचनमः सोभ्यायचप्रतिसर्यायच नमो या-
म्यायचक्षेम्यायचनमः श्लोक्यायचावसान्यायचनमऽ उर्वर्याय
चखल्यायचनमोवन्यायचकक्ष्यायच नमः श्रवायचप्रतिश्रवाय
चनमऽ आशुषेणायचाशुरथायच नमः शूरायचावभेदिने च नमो

विलिम्मनेंचकवुचिनेंचुनमों वुर्म्मिणेंच वरूथिनें चुनमंः श्रुतायंच श्रुतसेनायंचुनमोंदुन्दुभ्यांय चाहनन्यायचु नमों धृष्णवेंच प्रमृशायं चु नमों निषुङ्गिणेंचेषुधिमतें चुनमंस्तीक्ष्णेषवेचायुधिनेंचुनमंः स्वायुधायंचसुधन्वनेंच॥ ३२/१६ ३३/१६ ३४/१६ ३५/१६ ३६/१६॥ नमुःस्रुत्यांयचुपथ्यांयचुनमुः काट्यांय चु नीप्यांय चुनमुः कुल्यांयचसरस्यांयचुनमोंनादेयायंच वैशन्तायंचुनमुः कूप्यांयचावुट्यांय चु नमो वीध्र्यांयचातुप्यांयचु नमो मेघ्यांय च विद्युत्यांय चु नमो वर्ष्यांय चावुर्ष्यांयचुनमो वात्यांयचुरेष्म्यांयचु नमोंवास्तव्यांय चवास्तुपायंचु नमुः सोमांयच रुद्रायं चुनमंस्ताम्रायं चारुणायंचुनमंः शुङ्गवेंचपशुपतंये चु नमं उग्रायंचभीमायंचुनमोंऽग्रेवुधायंचदूरे वुधायंचुनमों हुन्त्रे चु हनींयसे चु नमों वृक्षेभ्यो हरिंकेशेभ्यो नमंस्ताराय ॥ ३७/१६ ३८/१६ ३९/१६ ४०/१६ ॥ नमंः शम्भुवायं च मयोभुवायं चु नमंः शङ्करायं च मयस्करायं चु नमंः शिवायं च शिवतंराय च॥ ४१/१६॥ नमुः पार्य्यांय चावुार्य्यांय चु नमंः प्रुतरंणायचोत्तरंणायचु नमुस्तीर्थ्यांयचकूल्यांयचुनमुः शष्प्यांयचुफेन्यांयचु ॥ ४२/१६॥ नमंः सिकुत्यांय च प्रवाह्यांय चु नमंः किंशिलायं च क्षयुणायं चु नमंः कपुर्दिनें च पुलस्तयें चु नमं इरिण्यांयच प्रपुथ्यांयचु ॥ ४३/१६॥ नमोव्रज्यांयचुगोष्ठ्यांय चुनमुस्तल्प्यांयचुगेह्यांयचुनमोंहृदय्यांयचनिवेष्प्यांयचुनमुःकाट्यांयचगह्वरेष्ठायंचु ॥ ४४/१६ ॥ नमुः शुष्क्यांयच हरित्यांयचुनमंः पांसुव्यांयचरजस्यांयचुनमो लोप्यांयचोलुप्यांयचुनमु ऊर्व्यांयचु सूर्व्यांयचु ॥ ४५/१६॥ नमंः पुर्णायं चपर्णशुदायं चुनमं उद्गुरमाणायचाभिघ्नुते चुनमं आखिदुतेचंप्र-

खिदते च नमऽ इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो नमो वऽ किरिकेभ्यो देवानाᳬ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नमऽ आनिर्हतेभ्यः ॥ ४६/१६ ॥ द्रापेऽ अन्धसस्पते दरिद्र नीललोहित ॥ आसाम्प्रजानामेषाम्पशूनाम्मा भेर्म्मा रोङ्मो चनऽ किञ्चनाममत् ॥ ४७/१६ ॥ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मती? ॥ यथा शमसद्द्विपदे चतुष्पदे विश्वम्पुष्टङ्ग्रामेऽ अस्मिन्ननातुरम् ॥ ४८/१६ ॥ या ते रुद्र शिवा तनू? शिवा विश्वाहा भेषजी ॥ शिवा रुतस्य भेषजी तया नो मृड जीवसे ॥ ४९/१६ ॥ परि नो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्म्मतिरघायो? ॥ अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड ॥ ५०/१६ ॥ मीढुष्टम शिवतम शिवो नः सुमना भव ॥ परमे वृक्षऽ आयुधन्निधाय कृत्तिं वसानऽ आचर पिनाकम्बिभ्रदागहि ॥ ५१/१६ ॥ विकिरिद्र विलोहित नमस्तेऽ अस्तु भगवऽ ॥ यास्ते सहस्रᳬ हेतयो ऽन्यमस्मन्निवपन्तु ता? ॥ ५२/१६ ॥ सहस्राणि सहस्रशो बाह्वोस्तव हेतयः ॥ तासामीशानो भगवऽ पराचीना मुखा कृधि ॥ ५३/१६ ॥ असङ्ख्याता सहस्राणि ये रुद्राऽ अधि भूम्याम् । तेषाᳬ सहस्रयोजनेव धन्वानि तन्मसि ॥ ५४/१६ ॥ अस्मिन्महत्यर्णवेन्तरिक्षे भवाऽ अधि ॥ तेषाᳬ सहस्रयोजनेव धन्वानि तन्मसि ॥ ५५/१६ ॥ नीलग्रीवाऽ शितिकण्ठा दिवᳬ रुद्राऽ उपश्रिताऽ ॥ तेषाᳬ सहस्रयोजनेव धन्वानि तन्मसि ॥ ५६/१६ ॥ नीलग्रीवाऽ शितिकण्ठाऽ शर्वाऽ अध? क्षमाचरा? ॥ तेषाᳬ सहस्रयोजनेव धन्वानि तन्मसि ॥ ५७/१६ ॥ ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताऽ ॥ तेषाᳬ सहस्रयोजनेव धन्वानि तन्मसि ॥ ५८/१६ ॥

ये भूतानामधिपतयो विशिखासः कपर्दिनः॥ तेषाᳪं सहस्रयोजनेव धन्वानि तन्मसि ॥५९॥ ये पथां पथिरक्षय ऐलबृदा आयुर्युधः॥ तेषाᳪं सहस्रयोजनेव धन्वानि तन्मसि ॥६०॥ ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः॥ तेषाᳪं सहस्रयोजनेव धन्वानि तन्मसि ॥६१॥ येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ॥ तेषाᳪं सहस्रयोजनेव धन्वानि तन्मसि ॥ ६२ ॥ य एतावन्तश्च भूयाᳪं सश्च दिशो रुद्रा वितस्थिरे॥तेषाᳪं सहस्रयोजनेव धन्वानि तन्मसि ॥ ६३ ॥ नमोऽस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः ॥ तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥६४॥ नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवः ॥ तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः॥ तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥६५॥ नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः ॥ तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥६६॥

ॐभूः ॐभुवः ॐस्वः ॐ ॥ इति पञ्चमोऽध्यायः ॥

ॐ वयᳪं सोम व्रते तव मनस्तनूषु बिभ्रतः ॥ प्रजावन्तः सचेमहि ॥ १ ॥ एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहैष ते रुद्र भाग आखुस्ते पशुः ॥ २ ॥ अव रुद्रमदीमह्यव

देवन्त्र्यम्बकम् ॥ यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥३॥ भेषजमसि भेषजङ्गवेऽश्वाय पुरुषाय भेषजम् ॥ सुखम्मेषाय मेष्यै ॥४॥ त्र्यम्बकंयजामहे सुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ त्र्यम्बकंयजामहे सुगन्धिम्पतिवेदनम् ॥ उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः ॥५॥ एतत्ते रुद्रावसन्तेन परो मूजवतोऽतीहि ॥ अवततधन्वा पिनाकावसः कृत्तिवासाऽ अहिंसन्नः शिवोऽतीहि ॥ ६ ॥ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् ॥ यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम् ॥७॥ शिवो नामासि स्वधितिस्ते पिता नमस्तेऽ अस्तु मा मा हिंसीः ॥ निवर्त्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥८॥ ॐ न तं विदाथ यऽ इमा जजानान्यद्युष्माकमन्तरम्बभूव ॥ नीहारेण प्रावृता जल्प्या चासुतृपऽ उक्थशासश्चरन्ति ॥९॥ विश्वकर्म्मा ह्यजनिष्ट देवऽ आदिद्गन्धर्वोऽअभवद्द्वितीयः ॥ तृतीयः पिता जनितौषधीनामपाङ्गर्भं व्यदधात्पुरुत्रा ॥ १० ॥ ॐ उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च ॥ सासह्वांश्चाभियुग्वा च विक्षिपः स्वाहा ॥११॥ अग्निः हृदयेनाशनिः हृदयाग्रेण पशुपतिङ्कृत्स्नहृदयेन भवँय्यक्ना ॥ शर्वम्मतस्नाभ्यामीशानम्मन्युना महादेवमन्तः पर्शव्येनोग्रन्देवं वनिष्ठुना वसिष्ठहनुः शिङ्गीनि कोश्याभ्याम् ॥१२॥ उग्रँल्लोहितेन मित्रः सौव्रत्येन रुद्रन्दौर्व्रत्येनेन्द्रं-

---

१ इत्यनेनाष्टप्रणवयुक्तेन रौद्राध्यायेनाभिषेकः । २ इति महद्भिर्योऽस्माभिरष्टभिरभिषेकः। काण्वानां तु शतरुद्रिकाभिषिति विशेष ।३ इति देवपदत्युक्तद्वाभ्यामभिषेक ॥

म्प्रक्रीडेनं मुरुतो वलेन साद्ध्यान्प्रमुदा ॥ भुवस्य कण्ठ्यं रुद्रस्यान्तर्ठ पार्श्व्यम्महादेवस्य यकृच्छर्वस्यं वनिष्ठुः पशुपतेर्ठ पुरीतत् ॥ १३ $\frac{१}{३९}$ ॥ लोमंभ्युर्ठ स्वाहा लोमंभ्युर्ठ स्वाहा त्वचे स्वाहा त्वचे स्वाहा लोहिताय स्वाहा लोहिताय स्वाहा मेदोभ्युर्ठ स्वाहा मेदोभ्युर्ठ स्वाहा ॥ माꣳसेभ्युर्ठ स्वाहा माꣳसेभ्युर्ठ स्वाहा स्नावंभ्युर्ठ स्वाहा स्नावंभ्युर्ठ स्वाहा स्तयभ्युर्ठ स्वाहा स्तयभ्युर्ठ स्वाहा मुज्जभ्युर्ठ स्वाहा मुज्जभ्युर्ठ स्वाहा ॥ रेतसे स्वाहा पायवे स्वाहा ॥ १४ $\frac{२}{३९}$ ॥ आयासाय स्वाहा प्रायासाय स्वाहा सँय्यासाय स्वाहा वियासाय स्वाहोद्यासाय स्वाहा ॥ शुचे स्वाहा शोचते स्वाहा शोचमानाय स्वाहा शोकाय स्वाहा ॥ १५ $\frac{३}{३९}$ ॥ तपसे स्वाहा तप्यते स्वाहा तप्यमानाय स्वाहा तुप्ताय स्वाहा घुर्म्माय स्वाहा ॥ निष्कृत्यै स्वाहा प्रायश्चित्त्यै स्वाहा भेषुजाय स्वाहा ॥ १६ $\frac{४}{३९}$ ॥ युमाय स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा ॥ ब्रह्मणे स्वाहा ब्रह्महुत्यायै स्वाहा विश्वेभ्यो देवेभ्युर्ठ स्वाहा द्यावापृथिवीभ्याꣳ स्वाहा ॥ १७ $\frac{५}{३९}$ ॥ इति षष्ठोऽध्यायः ॥

ॐ वाजश्च मे प्रसुवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रुवश्च मे श्रुतिश्च मे ज्योतिश्च मे स्वश्च मे युज्ञेन कल्पन्ताम् ॥ $\frac{१}{४०}$ ॥ प्राणश्च मे पानश्च मे व्यानश्च मे सुश्च मे चित्तञ्च मऽ आधीतञ्च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रञ्च मे दक्षश्च मे वलञ्च मे युज्ञेन कल्पन्ताम् ॥ $\frac{२}{४०}$ ॥ ओजश्च मे सहश्च मऽ आत्मा च मे तनूश्च मे शर्म्म च मे वर्म्म च मेऽङ्गानि च मेऽस्थीनि च मे परूꣳषि च मे

१ इति सप्तनदाम्नैरभिषेक. । ॐ वाजश्चेति तिसृभिः सप्तभिर्वा रुद्रजटानाम्नीभिश्चेति परशुरामादयः ॥ निर्मूलत्वादिति देवयाज्ञिकादयः ॥

शरीराणि च मुऽआयुश्च मे जुरा च मे युज्ञेनं कल्पन्ताम् ॥ ३/१८ ॥ ज्यैष्ठ्यश्च मुऽ आधिपत्यश्च मे मुन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्राघिमा च मे वृद्धश्च मे वृद्धिश्च मे युज्ञेनं कल्पन्ताम् ॥ ४/१८ ॥ सुत्यश्च मे श्रुद्धा च मे जगच मे धनश्च मे विश्वश्च मे महश्च मे क्रीडा च मे मोदश्च मे जातश्च मे जनिष्यमाणश्च मे सूक्तश्च मे सुकृतश्च मे युज्ञेनं कल्पन्ताम् ॥ ५/१८ ॥ ऋतश्च मेऽमृतश्च मेऽयुक्ष्मश्च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वश्च मेऽनमित्रश्च मेऽभयश्च मे सुखश्च मे शयनश्च मे सूषाश्च मे सुदिनश्च मे युज्ञेनं कल्पन्ताम् ॥ ६/१८ ॥ युन्ता च मे धुर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वश्च मे महश्च मे सुंविच्च मे ज्ञात्रश्च मे सूश्च मे प्रसूश्च मे सीरश्च मे लयश्च मे युज्ञेनं कल्पन्ताम् ॥ ७/१८ ॥ शश्च मे मयश्च मे प्रियश्च मेऽनुकामश्च मे कामश्च मे सौमनुसश्च मे भगश्च मे द्रविणश्च मे भुद्रश्च मे श्रेयश्च मे वसीयश्च मे यशश्च मे युज्ञेनं कल्पन्ताम् ॥ ८/१८ ॥ ऊर्क्च मे सूनृता च मे पयश्च मे रसश्च मे घृतश्च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रश्च मुऽऔद्भिद्यश्च मे युज्ञेनं कल्पन्ताम् ॥ ९/१८ ॥ रुयिश्च मे रायश्च मे पुष्टश्च मे पुष्टिश्च मे विभु च मे प्रभु च मे पूर्णश्च मे पूर्णतरश्च मे कुयवश्च मेऽक्षितश्च मेऽन्नश्च मेऽक्षुच्च मे युज्ञेनं कल्पन्ताम् ॥ १०/१८ ॥ वित्तश्च मे वेद्यश्च मे भूतश्च मे भविष्यच्च मे सुगश्च मे सुपथ्यश्च मुऽ ऋद्धश्च मुऽऋद्धिश्च मे क्लृप्तश्च मे क्लृप्तिश्च मे मुतिश्च मे सुमुतिश्च मे युज्ञेनं कल्पन्ताम् ॥ ११/१८ ॥ व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मुसूराश्च मे युज्ञेनं कल्पन्ताम् ॥ १२/१८ ॥ अश्मा च मे मृत्तिका

च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यञ्च
मेऽयश्च मे श्यामञ्च मे लोहञ्च मे सीसञ्च मे त्रपु च मे यज्ञेन
कल्पन्ताम् ॥१३/१८॥ अग्निश्च मऽ आपश्च मे वीरुधश्च मऽ ओषधयश्च मे
कृष्टपच्याश्च मे कृष्टपच्याश्च मे ग्राम्याश्च मे पशवऽ आरण्याश्च मे
वित्तञ्च मे वित्तिश्च मे भूतञ्च मे भूतिश्च मे यज्ञेन कल्पन्ताम् ॥१४/१८॥
वसु च मे वसतिश्च मे कर्म्म च मे शक्तिश्च मेऽर्थश्च मऽ एमश्च मऽ
इत्या च मे गतिश्च मे यज्ञेन कल्पन्ताम् ॥१५/१८॥ अग्निश्च मऽ इन्द्रश्च मे
सोमश्च मऽ इन्द्रश्च मे सविता च मऽ इन्द्रश्च मे सरस्वती च मऽ
इन्द्रश्च मे पूषा च मऽ इन्द्रश्च मे बृहस्पतिश्च मऽ इन्द्रश्च मे यज्ञेन
कल्पन्ताम् ॥ १६/१८ ॥ मित्रश्च मऽ इन्द्रश्च मे वरुणश्च मऽ इन्द्रश्च मे
धाता च मऽ इन्द्रश्च मे त्वष्टा च मऽ इन्द्रश्च मे मरुतश्च मऽ इन्द्रश्च
मे विश्वे च मे देवाऽ इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥ १७/१८ ॥ पृथिवी
च मऽ इन्द्रश्च मेऽन्तरिक्षञ्च मऽ इन्द्रश्च मे द्यौश्च मऽ इन्द्रश्च मे समाश्च
मऽ इन्द्रश्च मे नक्षत्राणि च मऽ इन्द्रश्च मे दिशश्च मऽ इन्द्रश्च मे
यज्ञेन कल्पन्ताम् ॥ १८/१८ ॥ अंशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधि-
पतिश्च मऽ उपांशुश्च मेऽन्तर्य्यामश्च मऽ ऐन्द्रवायवश्च मे मैत्रावरु-
णश्च मऽ आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च मे
यज्ञेन कल्पन्ताम् ॥ १९/१८ ॥ आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे
वैश्वानरश्च मऽ ऐन्द्राग्नश्च मे महावैश्वदेवश्च मे मरुत्वतीयाश्च मे
निष्केवल्यश्च मे सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे
हारियोजनश्च मे यज्ञेन कल्पन्ताम् ॥ २०/१८ ॥ स्रुचश्च मे चमसाश्च मे
वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मेऽधिषवणे च मे

पूतभृच्च मऽ आधवनीयश्च मे वेदिश्च मे बर्हिश्च मेऽवभृथश्च मे स्वगाकारश्च मे यज्ञेन कल्पन्ताम् ॥ २१/१८ ॥ अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मेऽङ्गुलयः शक्वरयो दिशश्च मे यज्ञेन कल्पन्ताम् ॥ २२/१८ ॥ व्रतञ्च मऽ ऋतवश्च मे तपश्च मे संवत्सरश्च मेऽहोरात्रेऽ ऊर्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्पन्ताम् ॥ २३/१८ ॥ एका च मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे नव च मऽ एकादश च मऽ एकादश च मे त्रयोदश च मे त्रयोदश च मे पञ्चदश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे नवदश च मे नवदश च मऽ एकविꣳशतिश्च मऽ एकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे त्रयोविꣳशतिश्च मे पञ्चविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च मे नवविꣳशतिश्च मऽ एकत्रिꣳशच्च मऽ एकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे यज्ञेन कल्पन्ताम् ॥२४/१८॥ चतस्रश्च मेऽष्टौ च मेऽष्टौ च मे द्वादश च मे द्वादश च मे षोडश च मे षोडश च मे विꣳशतिश्च मे विꣳशतिश्च मे चतुर्विꣳशतिश्च मे चतुर्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मेऽष्टाविꣳशतिश्च मे द्वात्रिꣳशच्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्वारिꣳशच्च मे चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मेऽष्टाचत्वारिꣳशच्च मे यज्ञेन कल्पन्ताम् ॥२५/१८॥ त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च मे यज्ञेन कल्पन्ताम् ॥२६/१८॥ पष्ठवाट् च मे पष्ठौही च मऽ उक्षा च मे वशा च

ऽ ऋषभश्च मे वेहच्च मेऽनड्वांश्च मे धेनुश्च म आयुर्यज्ञेन कल्पन्ताम् ॥२७/१८॥
[वा]जाय स्वाहा प्रसवाय स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा वसवे
[स्]वाहाऽहर्पतये स्वाहाऽह्ने मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा
[वि]नꣳशिनऽ आन्त्यायनाय स्वाहाऽन्त्याय भौवनाय स्वाहा भुवनस्य
[प]तये स्वाहाऽधिपतये स्वाहा प्रजापतये स्वाहा ॥ इयन्ते राण्मित्राय
[य]न्तासि यमनऽ ऊर्जे त्वा वृष्ट्यै त्वा प्रजानान्त्वाधिपत्याय ॥ २८/१८ ॥
[आ]युर्यज्ञेन कल्पताम्प्राणो यज्ञेन कल्पताञ्चक्षुर्यज्ञेन कल्पताꣳ
[श्]रोत्रँयज्ञेन कल्पतां वाग्यज्ञेन कल्पताम्मनो यज्ञेन कल्पतामात्मा
[य]ज्ञेन कल्पताम्ब्रह्मा यज्ञेन कल्पताञ्ज्योतिर्यज्ञेन कल्पताꣳ स्वर्य-
[ज्ञे]न कल्पताम्पृष्ठँयज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् ॥ स्तोमश्च
[य]जुश्च ऋक्च साम च बृहच्च रथन्तरञ्च ॥ स्वर्देवाऽ अगन्मामृताऽ
अभूम प्रजापतेः प्रजाऽ अभूम वेट् स्वाहा॥२९/१८॥ इति सप्तमोऽध्यायः॥

ॐ ऋचं वाचम्प्रपद्ये मनो यजुः प्रपद्ये साम प्राणम्प्रपद्ये चक्षुः
[श्]रोत्रम्प्रपद्ये ॥ वागोजः सहौजो मयि प्राणापानौ ॥ १/३६ ॥ यन्मे
छिद्रञ्चक्षुषो हृदयस्य मनसो वातितृण्णम्बृहस्पतिर्मे तद्दधातु॥ शन्नो
भवतु भुवनस्य यस्पतिः ॥२/३६॥ भूर्भुवः स्वः । तत्सवितुर्वरेण्यम्भर्गो
[दे]वस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥३/३६॥ कया नश्चित्रऽ
आभुवदूती सदावृधः सखा ॥ कया शचिष्ठया वृता ॥४/३६॥ कस्त्वा
[स]त्यो मदानाम्मꣳहिष्ठो मत्सदन्धसः॥ दृढा चिदारुजे वसु॥५/३६॥ अभी
[ष]ु णः सखीनामविता जरितॄणाम् ॥ शतम्भवास्यूतिभिः ॥ ६/३६ ॥

---

१ इत्येकोनत्रिंशन्मन्त्रात्मकचमकाध्यायेनाभिषेकः ॥ वाजश्च म इत्यष्टानुवाकात्मकेन
चमकेन चेति देवयाज्ञिकाः ॥ २ अत्र अर्द्धमात्रः सन्ध्यभावदर्शनात् ॥

कया त्वन्नऽ ऊत्याभि प्रमन्दसे वृषन्॥कया स्तोतृभ्यऽ आभर॥७/३६॥
इन्द्रो विश्वस्य राजति ॥ शन्नोऽअस्तु द्विपदे शञ्चतुष्पदे ॥८/३६॥ शन्नो
मित्रः शं वरुणः शन्नो भवत्वर्य्यमा ॥ शन्नऽ इन्द्रो बृहस्पतिः शन्नो
विष्णुरुरुक्रमः ॥ ९/३६ ॥ शन्नो वातः पवताᳪं शन्नस्तपतु सूर्य्यः ॥
शन्नः कनिक्रदद्देवः पर्जन्योऽ अभिवर्षतु ॥१०/३६॥ अहानि शम्भवन्
तु नः शᳪं रात्रीः प्रतिधीयताम्॥ शन्नऽ इन्द्राग्नी भवतामवोभिः शन्न
इन्द्रावरुणा रातहव्या ॥ शन्नऽ इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा
सुविताय शंय्योः ॥११/३६॥ शन्नो देवीरभिष्टयऽ आपो भवन्तु पीतये ।
शंय्योरभिस्रवन्तु नः ॥१२/३६॥ स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥
यच्छा नः शर्म्म सप्रथाः॥१३/३६॥ आपो हि ष्ठा मयोभुवस्ता नऽ ऊर्जे
दधातन ॥ महे रणाय चक्षसे ॥ १४/३६ ॥ यो वः शिवतमो रसस्तस्य
भाजयतेह नः ॥ उशतीरिव मातरः ॥१५/३६॥ तस्माऽ अरङ्गमाम वो
यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च नः॥१६/३६॥ द्यौः शान्तिर-
न्तरिक्षᳪं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ॥
वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वᳪं शान्तिः
शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥१७/३६॥ दृते दृᳪंह मा मित्रस्य मा
चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्॥मित्रस्याहञ्चक्षुषा सर्वाणि भूतानि
समीक्षे ॥ मित्रस्य चक्षुषा समीक्षामहे ॥ १८/३६ ॥ दृते दृᳪंह मा ॥ ज्योक्ते
सन्दृशि जीव्यासञ्ज्योक्ते सन्दृशि जीव्यासम् ॥ १९/३६ ॥ नमस्ते हरसे
शोचिषे नमस्तेऽ अस्त्वर्चिषे ॥ अन्याँस्तेऽ अस्मत्तपन्तु हेतयः
पावकोऽ अस्मभ्यᳪं शिवो भव ॥२०/३६॥ नमस्तेऽ अस्तु विद्युते नमस्ते
स्तनयित्नवे ॥ नमस्ते भगवन्नस्तु यतः स्वः समीहसे॥२१/३६॥ यतो यतः

....... त्रीं नोऽ अभयङ्करु॥ शन्नः कुरु प्रजाभ्योभयन्नः पशुभ्यः ॥२२॥ सुमित्रिया न ऽ आप ऽ ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः ॥२३॥ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येम शरदः शतञ्जीवेम शरदः शतᳬ शृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् ॥ २४ ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ इत्यष्टमोऽध्यायः ॥

अथ भिस्तर्पणम्—ॐ भवं देवं तर्पयामि । ॐ शर्वं देवं तर्पयामि । ॐ ईशानं देवं तर्पयामि । ॐ पशुपतिं देवं तर्पयामि । ॐ रुद्रं देवं तर्पयामि । ॐ उग्रं देवं तर्पयामि । ॐ भीमं देवं तर्पयामि । ॐ महान्तं देवं तर्पयामि । इति तर्पयित्वा । ॐ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ ६० ॥ ज्येष्ठाय नमः । भगवते साम्बशिवाय आचमनीयं समर्पयामि। ॐ त्र्यम्बकं यजामहे०॥ श्रेष्ठाय नमो रुद्राय नमः । भगवते साम्बशिवाय मधुपर्कं समर्पयामि ॥ ॐ त्र्यम्बकं यजामहे० । कालाय नमः। भगवते साम्बशिवाय गन्धं समर्पयामि॥ ॐ त्र्यम्बकं यजामहे०। कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः। भगवते साम्बशिवाय पुष्पाणि समर्पयामि॥ ॐ त्र्यम्बकं यजामहे०। सर्वभूतदमनाय नमः। भगवते साम्बशिवाय धूपं समर्पयामि॥ ॐ त्र्यम्बकं यजामहे० । मनोन्मनाय नमः । भगवते साम्बशिवाय दीपं समर्पयामि॥ ॐ त्र्यम्बकं यजामहे० । भवोद्भवाय नमः । भगवते साम्बशिवाय नैवेद्यं समर्पयामि ॥ नैवेद्यान्ते आचमनीयं समर्पयामि ॥ ततोऽष्टभिर्मन्त्रैरष्टौ पुष्पाणि दद्यात् —१ ॐ भवाय देवाय नमः। २ ॐ

शर्वाय देवाय नमः । ३ ॐ ईशानाय देवाय नमः । ४ ॐ पशुपतये देवाय नमः । ५ ॐ रुद्राय देवाय नमः । ६ ॐ उग्राय देवाय नमः। ७ ॐ भीमाय देवाय नमः । ८ ॐ महते देवाय नमः॥ ॐ अघोरेभ्य इत्यस्य अघोर ऋषिः अनुष्टुप्छन्दः रुद्रो देवता तत्पुरुषायेत्यस्य तत्पुरुष ऋषिः गायत्रीछन्दः रुद्रो देवता ईशान इत्यस्य ईशान ऋषि अनुष्टुप्छन्दः रुद्रो देवता सर्वेषामघोरादिशरीरोपस्थाने विनियोगः ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यं नमस्ते अस्तु रुद्ररूपेभ्यः॥तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात्। ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपति ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदा शिवोम् ॥ इत्युपस्थानम् ॥

## ॥ अथ पञ्चवक्त्रपूजनम् ॥

अथ समाचारात्पञ्चवक्त्रपूजा । तत्र गन्धसिताक्षतश्वेतपुष्पैः पश्चिमवक्त्रपूजनम्—सद्योजातोम्यमिमीतेत्यस्य जमदग्नि ऋषिः त्रिष्टुप्छन्दः स्वाहाकृतिर्देवता पश्चिमवक्त्रपूजने विनियोगः ॥ ॐ सुद्योजातो व्यमिमीत युज्ञमुग्निर्देवानामभवत्पुरोगाः ॥ अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतꣳ हुविरदन्तु देवाः ॥३६॥ सद्योजाताय पश्चिमवक्त्राय नमः गन्धसिताक्षतश्वेतपुष्पाणि समर्पयामि॥ गन्धादितुलसीशतपत्रैश्चोत्तरवक्त्रपूजनम्—वाममद्येत्यस्य भरद्वाज ऋषिः त्रिष्टुप्छन्दः सविता देवता उत्तरवक्त्रपूजने विनियोगः—ॐ वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यꣳ सावीः॥ वामस्य हि क्षयस्य देव भूरेर्या धिया वामभाजः स्याम ॥६॥ वामदेवायोत्तरवक्त्राय नमः गन्धादितुलसीशतपत्राणि समर्पयामि ॥

गन्धादिनीलाब्जकरवीरैश्च दक्षिणवक्त्रपूजनम्–या ते रुद्र शिवेत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छन्दः एको रुद्रो देवता दक्षिणवक्त्र-पूजने विनियोगः । ॐ या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ॥ तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥ २/२ ॥ अघोराय दक्षिणवक्त्राय नमः गन्धादिनीलाब्जकरवीरपुष्पाणि समर्पयामि ॥

गन्धादिदूर्वाङ्कुरार्कपुष्पैश्च पूर्ववक्त्रपूजनम्–यत्पुरुषमित्यस्य नारायण ऋषिः अनुष्टुप्छन्दः जगद्बीजं पुरुषो देवता प्राग्वक्त्रपूजने विनियोगः–ॐ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ॥ मुखं किमस्यासीत्किम्बाहू किमूरू पादाऽ उच्येते ॥ ३/१ ॥ तत्पुरुषाय पूर्ववक्त्राय नमः गन्धादिदूर्वाङ्कुरार्कपुष्पाणि समर्पयामि ॥

गन्धादिबिल्वकनकपुष्पैश्चोर्ध्ववक्त्रपूजनम्—तमीशानमित्यस्य गोतम ऋषिः जगती छन्दः ईशानो देवता ऊर्ध्ववक्त्रपूजने विनियोगः—ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे वयम्॥पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये॥२/२॥ ईशानायोर्ध्ववक्त्राय नमः गन्धादिबिल्वकनकपुष्पाणि समर्पयामि ॥ इति रुद्रकल्पद्रुमान्तर्गताभिषेकपरिच्छेदोक्तैकतरप्रकारेण पञ्चवक्त्र-पूजनम् ॥

## अथ प्रकारान्तरेण पञ्चवक्त्रपूजा ।

सद्योजातमित्यस्य सद्योजात ऋषिः त्रिष्टुप्छन्दः सद्योजातो देवता श्वेतवर्णं हंसवाहनं पश्चिमवक्त्रं पृथिवीतत्त्वं पश्चिमवक्त्रनमस्कारे विनि-योगः–ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवे भवे

नातिभवे भवस्व मां भवोद्भवाय नमः ॥ सद्योजाताय श्वेतवर्णाय हंसवाहनाय पश्चिमवक्त्राय पृथिवीतत्त्वाय सृष्टिरूपात्मने ब्रह्मणे नमः ह्रौं इति प्रणम्य धनुर्बाणमुद्राप्रदर्शनम्¹ । सद्योजातमित्यस्य सद्योजात ऋषिः त्रिष्टुप्छन्दः सद्योजातो देवता श्वेतवर्णं हंसवाहनं पश्चिमवक्त्र पृथिवीतत्त्वं पश्चिमवक्त्रपूजने विनियोगः-ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः॥² सद्योजाताय श्वेतवर्णाय हंसवाहनाय पश्चिमवक्त्राय नमः इत्यनेन गन्धमनःशिलाचन्दनश्वेताक्षतश्वेतपुष्पगुग्गुलधूपघृतदीपपायसनैवेद्यादिभिः पूजनम् ॥

कलापूजनम्³–१ ॐऋद्ध्यै नमः २ ॐसिद्ध्यै नमः ३ ॐधृत्यै नमः ४ ॐलक्ष्म्यै नमः ५ ॐमेधायै नमः ६ ॐकान्त्यै नमः ७ ॐस्वधायै नमः ८ ॐप्रभायै नमः इत्यष्टौ कलाः सम्पूजयेत् ॥

ध्यानम्––प्रालेयामलबिन्दुकुन्दधवलं गोक्षीरफेनप्रभं भस्माभ्यङ्गमनङ्गदेहदमनज्वालावलीलोचनम् । ब्रह्मेन्द्रादिमरुद्गणैः स्तुतिपरैरभ्यर्चितं योगिभिर्वन्देऽहं सकलं कलङ्करहितं स्थाणोर्मुखं पश्चिमम् ॥ शुभ्रं त्रिलोचनं नाम्ना सद्योजातं शिवप्रदम् । शुद्धस्फटिकसङ्काशं वन्देऽहं पश्चिमं मुखम् ॥ इति पश्चिमवक्त्रपूजा ॥

---

१ वामस्य मध्यमाग्रं तु तर्जन्यग्रे नियोजयेत् । अनामिका कनिष्ठां च तस्याङ्गुष्ठेन पीडयेत् । दर्शयेद्दक्षिणस्कन्धे धनुर्मुद्रेयमीरिता । दक्षाङ्गुष्ठस्य तर्जन्या दीर्घया बाणमुद्रिका ॥
२ श्वेताक्षतैः श्वेतपुष्पैः पूजयेद्धंसवाहनम् । सिद्ध्यन्ति सर्वकार्याणि पूजनेन न संशयः ॥
३ ऋद्धिः सिद्धिर्धृतिर्लक्ष्मीर्मेधा कान्तिः स्वधा प्रभा । सद्योजातकला ह्येता अष्टौ च परिकीर्तिताः ॥

अथोत्तरवक्त्रपूजा—वामदेवायेत्यस्य वामदेव ऋषिः जगती छन्दः विष्णुर्देवता कृष्णवर्णं गरुडवाहनम् उत्तरवक्त्रम् आपस्तत्त्वम् उत्तरवक्त्रनमस्कारे विनियोगः—ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः । कालाय नमः कलविकरणाय नमो बलविकरणाय नमः॥वामदेवाय कृष्णवर्णाय गरुडवाहनायोत्तरवक्त्रायापस्तत्त्वायामृतरूपात्मने विष्णवे नमः ह्रीँ इति प्रणम्य पंचमुद्राप्रदर्शनम् । वामदेवायेत्यस्य वामदेव ऋषिः जगतीछन्दः विष्णुर्देवता कृष्णवर्णं गरुडवाहनम् उत्तरवक्त्रम् आपस्तत्त्वम् उत्तरवक्त्रपूजने विनियोगः—ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमः॥ वामदेवाय कृष्णवर्णाय गरुडवाहनायोत्तरवक्त्राय नमः इत्यनेन हरिचन्दनतुलसीशतपत्रपुष्पपञ्चसौगन्धकधूपघृतपक्वगोधूमान्ननैवेद्यादिभिः पूजनम् ।

कलापूजनम्—१ ॐरजसे नमः २ ॐरक्षायै नमः ३ ॐरत्यै नमः ४ ॐपाल्यायै नमः ५ ॐ कामायै नमः ६ ॐ सञ्जीविन्यै नमः ७ ॐप्रियायै नमः ८ ॐ बुद्ध्यै नमः ९ ॐक्रियायै नमः १० ॐ धात्र्यै नमः ११ ॐभ्रामर्यै नमः १२ ॐमोहिन्यै नमः १३ ॐज्वरायै नमः इति त्रयोदश कलाः सम्पूजयेत् ॥

१ करौ ॥ सहतौ कृत्वा समुत्तानुन्नताङ्गुली । तलान्तर्मिलिताङ्गुष्ठौ कुर्यादेषाऽम्बुमुद्रिका ॥ २ तुलसीशतपत्रैश्च पूजयेद् गरुडासनम् । सर्वदोषविनाशेन प्राप्नोति शिवसम्पदम् ॥ ३ कङ्कोलपूगकर्पूरजातीफलल्लवङ्गके । सुगन्धपञ्चकं प्रोक्तमायुर्वेदप्रकाशके ॥ ४ रजो रक्षा रतिः पाल्या कामा सञ्जीविनी प्रिया । बुद्धिः क्रिया च धात्री च भ्रामरी मोहिनी ज्वरः । वामदेवकला ह्येतास्त्रयोदश प्रतानने ॥

ध्यानम्–गौरं कुङ्कुमपिङ्गलं सुतिलकं व्यापाण्डुगण्डस्थलं भ्रूविक्षेपकटाक्षवीक्षणलसत्संसक्तकर्णोत्पलम् । स्निग्धं बिम्बफलाधरं प्रहसित नीलालकालङ्कृतं वन्दे पूर्णशशाङ्कमण्डलनिभं वक्त्रं हरस्योत्तरम्॥ वामदेवं सुवर्णाभं दिव्यास्त्रगणसेवितम् । अजन्मानमुमाकान्तं वन्देऽहमुत्तरं मुखम् ॥ इत्युत्तरवक्त्रपूजा ॥

अथ दक्षिणवक्त्रपूजा–अघोरेभ्य इत्यस्य अघोर ऋषिः अनुष्टुप्छन्दः रुद्रो देवता नीलवर्णं कूर्मवाहनं दक्षिणवक्त्रं तेजस्तत्त्वं दक्षिणवक्त्रनमस्कारे विनियोगः ॥ ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः॥ सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः॥अघोराय नीलवर्णाय कूर्मवाहनाय दक्षिणवक्त्राय तेजस्तत्त्वाय विश्वरूपाननेकालाग्निरुद्राय नमः ह्रूं इति प्रणम्य ज्ञानमुद्राप्रदर्शनम्[१] । अघोरेभ्य इत्यस्य अघोर ऋषिः अनुष्टुप्छन्दः रुद्रो देवता नीलवर्णं कूर्मवाहनं दक्षिणवक्त्रं तेजस्तत्त्वं दक्षिणवक्त्रपूजने विनियोगः–ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः॥ अघोराय नीलवर्णाय कूर्मवाहनाय दक्षिणवक्त्राय नमः इत्यनेन कृष्णागरुचन्दननीलोत्पलकरवीरपुष्पसितागरुधूपमायान्नैवेद्यादिभिः पूजनम्[२] ।

कलापूजनम्[३]–१ ॐतमसे नमः २ ॐमोहायै नमः ३ ॐक्षयायै

---

१ तर्जन्यङ्गुष्ठकौ सक्तावग्रतो हृदि विन्यसेत् । ज्ञानमुद्रा भवदेषा कथिता तत्त्वदर्शिभि ॥ २ नीलोत्पलै करवीरै पूजयेत्कूर्मसंस्थितम् । सर्वाबाधाविनाशाय ज्ञानमोक्षप्रसाधकम् ॥ ३ तमा मोहा क्षया निद्रा व्याधिर्मृत्यु क्षुधा तृषा । अघोरस्य कला ह्येता अष्टौ च परिकीर्तिता ॥

मयानीतं महाप्रभो ॥ करास्यक्षालनार्थाय गृहाण त्रिपुरान्तक ॥ गङ्गायास्तु समानीतं विशुद्धं निर्मलं जलम् । गण्डूषार्थं मया दत्तं गृहाण वरदर्षभ ॥ सुगन्धिद्रव्येण करादिशुद्धिं विधाय नैवेद्यान्ते पुनराचमनीयं समर्पयामि । इति आचमनं दत्वा प्रणमेत् । तत उच्छिष्टभोजने नैवेद्यांशं दद्यात् । किञ्चित् नैवेद्यं पात्रान्तरे आदाय हस्ते जलं गृहीत्वा उमादिशिवादिपार्षदेभ्यो नमः उच्छिष्टभोजनं समर्पयामि । इति बलिं दद्यात् । तत एलादिवासितं जलं धेनुमुद्रया अमृतीकृत्य ॐ नमो भगवते रुद्राय । समस्तदेवदेवेश सर्वतुष्टिकर शुभम् । अखण्डनन्दसम्पूर्णं गृहाण जलमुत्तमम् ॥ साङ्गाय सपरिवाराय श्रीमहारुद्राय नमः सुवासितं जलं समर्पयामि । ततो नैवेद्यमध्यात् ईशान्यां चण्डेश्वराय नमः इति निर्माल्यसहितं चण्डेश्वराय बलिं दद्यात् । भक्ष्यभोज्यान्नपानादि चन्दनं स्रग्विलेपनम् । निर्माल्यभोजनं तुभ्यं दत्तमस्तु शिवाज्ञया ॥ इति बलिं दत्वा प्रणमेत् । ततः पाणिपादं प्रक्षाल्याचम्य श्रीमहारुद्राय ताम्बूलं दद्यात् । ॐ नमः शम्भवायेत्यस्य परमेष्ठी ऋषिः जगती छन्दः रुद्रो देवता ताम्बूलदाने विनियोगः । ॐ नमः॑–शम्भवाय॑ च मयोभवाय॑ च नमः॑–शङ्कराय॑ च मयस्कराय॑ च नमः॑–शिवाय॑ च शिवतराय च ॥ ३ ॥ साङ्गाय सपरिवाराय श्रीमहारुद्राय नमः ताम्बूलं समर्पयामि ॥ ततः फलम् ॥ ॐ याः॒ फलिनी॒र्याऽ अ॑फला॒ऽ अ॑पु॒ष्पा याश्च॑ पु॒ष्पिणीः॑ ॥ बृह॒स्पति॑प्रसूता॒स्तानो॑ मुञ्चन्त्व॒ꣳ हसः॑ ॥ ६ ॥ साङ्गाय सपरिवाराय श्रीमहारुद्राय नमः फलं समर्पयामि॥ ततो हिरण्यगर्भदक्षिणाम्॥ ॐ हि॒र॒ण्य॒ग॒र्भः समवर्त्त॒ताग्रे॑ भू॒तस्य॑ जा॒तः पति॒रेक॑ऽ आसीत् ॥ सदाधार-

पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥$\frac{५}{१३}$॥ साङ्गाय सपरिवाराय श्रीमहारुद्राय नमः हिरण्यगर्भमहादक्षिणा समर्पयामि ॥ छत्रचामरादिराजोपचारान् दद्यात्॥ तद्यथा ॥ आदर्शः सूर्यसदृशो मया ते कल्पितः पुरा । वदनं रुचिरं तस्मिन् विलोकय मुहुर्मुहुः ॥ ॐ नमो भगवते रुद्राय साङ्गाय सपरिवाराय श्रीमहारुद्राय नमः आदर्शं दर्शयामि ॥ ततश्छत्रम् ॥ पूर्णेन्दुसन्निभं छत्रं नानारत्नसमन्वितम् । हेमदण्डयुत देव गृह्यतामिदमुत्तमम् ॥ साङ्गाय सपरिवाराय श्रीमहारुद्राय नमः छत्रं समर्पयामि ॥ ततश्चामरम् ॥ विचित्र चामरं देव रत्नदण्डेन मण्डितम् ॥ तेन त्वा वीजयाम्यद्य विलोकय मुहुर्मुहुः ॥ श्वेतैः शरच्चन्द्रमयूखसन्निभैर्माणिक्यरत्नद्युतिदण्डमञ्जुलैः ॥ प्रीत्या भवन्तं मनसा ह्युमापते श्रीचामरैस्त्वा परिवीजयामि ॥ साङ्गाय सपरिवाराय श्रीमहारुद्राय नमः चामरं समर्पयामि ॥ व्यजनम् ॥ नक्षत्रराजेन्द्रमरीचिशुभ्रैर्नक्षत्रपैलागरुवासितैश्च ॥ नक्षत्रिणं शंभुमहं भवन्तं श्रीतालवृन्तैः परिवीजयामि ॥ ॐ नमो भगवते रुद्राय साङ्गाय सपरिवाराय श्रीमहारुद्राय नमः व्यजनं समर्पयामि ॥ पादुके ॥ मन्दारपुष्पाकरकान्तिसुन्दर माणिक्यमुक्तामणिरत्नमण्डितम् ॥ पादाम्बुजाग्रे मनसा प्रकल्पित ह्युमापते स्वीकुरु पादुकाद्वयम् ॥ ॐ नमो भगवते रुद्राय साङ्गाय सपरिवाराय श्रीमहारुद्राय नमः पादुके समर्पयामि ॥ ततो महानीराजनम् ॥ कर्पूरगर्भवर्तिसयुक्तां दीपपालिकां प्रज्वाल्य देवस्याग्रे निधाय हस्ते अर्घोदकं गृहीत्वा ॐ अस्त्राय फडिति सम्प्रोक्ष्य नमः इति सम्पूज्य वमिति धेनुमुद्रां दर्शयित्वा फट् इति चक्रमुद्रया संरक्ष्य हस्ते गन्धाक्षतपुष्पाणि गृहीत्वा ॐ श्रियै नमः । ॐ श्रीं ह्रीं ग्लूं ग्लूं प्लूं प्लूं ग्लूं ह्रीं श्रीं ॐ नमो भगवते रुद्राय इति मन्त्रेण गन्धाक्षतपुष्पैरभ्यर्च्य । ॐ जगद्ध्वनिमन्त्रमातः स्वाहा इति घण्टां सम्पूज्य ता

वादयन् नीराजयेत्॥ॐ अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता ॥ २०/१४ ॥ ॐ गणानान्त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे वसो मम ॥ आहमजानि गर्भधमा त्वमजासि गर्भधम् ॥ २३/१९ ॥ समक्ख्ये देव्याधियासन्दक्षिणयोरुचक्षसा ॥ मामऽ आयुꣳ प्रमोषीर्मोऽ अहन्तव वीरं विदेय तव देवि सन्दृशि॥ २३/२०॥ ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽ अनमीवो भवानः ॥ यत्त्वे महे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे ॥ ॐ अम्बेऽ अम्बिकेम्बालिके नमा नयति कश्चन ॥ स सस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥ २३/१८॥ ॐ नमोस्तु सर्पेभ्यो ये के च पृथिवीमनु ॥ येऽ अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ १३/६ ॥ ॐ ब्रह्म जज्ञानम्प्रथमम्पुरस्ताद्विसीमुतः सुरुचो वेनऽ आवः ॥ सबुध्न्याऽ उपमाऽ अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ १३/३ ॥

॥ अथ जयशङ्करारार्तिक्यम् ॥

जय देव जय देव वन्दे तं गिरिशम् । विधिहरिवासववन्दितचरणाम्बुजमनिशम् ॥ ध्रुवः ॥ रजनीकरयुतभालं भुवनत्रयपालम् । करतलधृतकरवालं दानवकुलकालम् ॥ कण्ठे धृतविषजालं नरमस्तकमालम् । विग्रहधृतसुव्यालं वारितभवजालम् ॥ जय देव जय देव वन्दे तं गिरिशम् । विधिहरिवासववन्दितचरणाम्बुजमनिशम् ॥ १ ॥ निगमागमश्रुतिसारं भुजगाधिपहारम् । करुणापारावारं भस्मीकृतमारम् ॥ भैरवगणपतिवारं गिरितनयाधारम् । शुद्धं जगदुद्धारं संश्रितभुजसारम् ॥

जय देव जय देव वन्दे तं गिरिशम् । विधिहरिवासववन्दितचरणाम्बुजमनिशम् ॥ २ ॥ फणिवरकुण्डलमण्डितगण्डस्थलयुगुलम् । मूर्ध्नी धृतकलिनाशकगङ्गाशुभसलिलम् ॥ त्रिभुवनपावनकृपया पीताखिलं गरलम् । स्वेच्छाहृतकमलासनपञ्चकमुखकमलम् ॥ जय देव जय देव वन्दे तं गिरिशम् । विधिहरिवासववन्दितचरणाम्बुजमनिशम् ॥ ३ । कटितटविलसद्वारणचर्माम्बरममलम् । भार्गवमाशिवापहवरमण्डितकर कमलम् ॥ स्कन्दं मृगकरहिमकरदुग्धार्णवधवलम् । विजितारातिसुशोभितपञ्चाननकमलम् ॥ जय देव जय देव वन्दे तं गिरिशम् । विधि हरिवासववन्दितचरणाम्बुजमनिशम् ॥४॥ पञ्चास्यं गङ्गायुतभाले धृत नयनम् । जनसर्गस्थितियोजितपद्मजजलशयनम् ॥ ध्वंसितदक्षाध्वर हरमदकन्दलनयनम् । निजपदपद्मजसङ्गतनारायणशरणम् ॥ जय देव जय देव वन्दे तं गिरिशम्। विधिहरिवासववन्दितचरणाम्बुजमनिशम्॥५

॥ द्वितीय शङ्करारार्तिक्यम् ॥

जय देव जय देव शिवशङ्कर शम्भो । श्यामल शरण परात्पर शशिशेखर शम्भो ॥ ध्रुवः ॥ वृषवाहन वृन्दारक वृन्दकवर शम्भो । वारणसदजिनवासो वारिदगलशम्भो ॥ वासववन्दित अम्भोविकसितपद शम्भो । वाक्पतिवर्णितवैभव विश्वेश्वर शम्भो ॥ जय देव जय देव शिवशङ्कर शम्भो । श्यामल शरण परात्पर शशिशेखर शम्भो ॥ १ ॥ भोगिविभूषणभासुरभावनभुज शम्भो । भूसुर भूरिभयापह भगवन् भव शम्भो ॥ भैरवभावितकुम्भोदरगणभर शम्भो । भासितभूतभयङ्कर भिक्षाटण शम्भो ॥ जय देव जय देव शिवशङ्कर शम्भो । श्यामल शरण परात्पर शशिशेखर शम्भो ॥ २ ॥

गङ्गाधर गिरिजावर गुह्यकगुणशम्भो । गाढकरासितगुणजितगायन-गल शम्भो ॥ गीतागीरसगुग् भो गणपतिगुरुशम्भो । गभीरगोपति-गर्जन गोपालक शम्भो ॥ जय देव जय देव शिवशङ्कर शम्भो । श्यामळ शरण परात्पर शशिशेखर शम्भो ॥ ३ ॥

॥ तृतीयं शङ्करार्तिक्यम् ॥

जय जय जय शिव शम्भो गङ्गाधर गिरिश । पश्चारतिमङ्गीकुरु स्वामिन् विश्वेश ॥ ध्रु० ॥ चन्द्रोद्भासितमौलं कण्ठे धृतगरलम् । त्रिभुवनदाहकपावकचक्षुःस्थितभालम्॥ प्रियभूपणकृतव्यालं वरवाहन-विमलम् । उज्ज्वलसुन्दरहृदयं नरमस्तकमालम् ॥ जय जय जय शिव शम्भो गङ्गाधर गिरिश । पश्चारतिमङ्गीकुरु स्वामिन् विश्वेश ॥ १ ॥ राजितकरतलचतुरं खड्गैः खट्वाङ्गम् । पिनाकडमरूमण्डितत्रिशूलधर-भुजगम् ॥ रजताचलसमवर्ण सुन्दरसर्वाङ्गम् । शिरोजटिलदिग्वसनं स्वीकृतकुशलाङ्गम् ॥ जय जय जय शिव शम्भो गङ्गाधर गिरिश । पश्चारतिमङ्गीकुरु स्वामिन् विश्वेश ॥ २ ॥ वरदाभयदा ईशा दुरित-क्षयकर्ता । सुरनरभजनें स्तवनें वाञ्छितफलदाता ॥ त्रिपुरान्तक सुखदायक विपतासंहरता । शरणागतरक्षक मम करुणाकर त्राता ॥ जय जय जय शिव शम्भो गङ्गाधर गिरिश । पश्चारतिमङ्गीकुरु स्वामिन् विश्वेश ॥ ३ ॥ गौरीरमणागहना श्रेष्ठा मदद्हना । भस्मो-द्धूलितसदना जनतामनहरणा ॥ तापत्रयअघशमना करुणाकरगमना । विघ्नेशा गणनायक त्राता परिपूर्णा ॥ जय जय जय शिव शम्भो

गङ्गाधर गिरिश पञ्चारतिमङ्गीकुरु स्वामिन् विश्वेश ॥ ४ ॥ पशुपति-श्मशानवासिन् परिवेष्टितभूतैः । अनुचरमङ्गीकुरु शतवर्णितसुमणिपातैः ॥ दीनाद्धर पतितोऽहं धारय तव भूतैः । जय जय शङ्कर अभीष्टवाञ्छित इत्येतैः॥ जय जय जय शिव शम्भो गङ्गाधर गिरिश । पञ्चारतिमङ्गीकुरु स्वामिन् विश्वेश ॥ ५ ॥

चतुर्थं शङ्करारार्तिक्यम् ॥

चतुर्थ—ॐजय गङ्गाधर हर, शिव जय गिरिजाधीश, त्वं मां पालय नित्यं कृपया जगदीश ॥ हरहरहरमहादेव ॥ ध्रु० ॥ कैला गिरिशिखरे कल्पद्रुमविपिने ॥ शिव० ॥ गुंजति मधुकरपुंजे कुंजवं गहने ॥ हरहर० ॥ कोकिलकुंजति खेलति, हंसावनललिता ॥शिव०। रचयति कलाकलाप नृत्यति मुदसहिता ॥ हरहर० ॥ तस्मिल्ललित सुदेशे शालामणिरचिता ॥ शिव० ॥ तन्मध्ये हरनिकटे गौरीमुदस हिता ॥ हरहर० ॥ क्रीडा रचयति भूषारंजितनिजमीशम् ॥ शिव० ॥ ब्रह्मादिकसुरसेवित प्रणमति ते शीर्षम् ॥ हरहर० ॥ विबुधवधूर्बहु नृत्यति हृदये मुदसहिता ॥ शिव०॥ किन्नरगानं कुरुते सप्तस्वरसहिता ॥ हरहर० ॥ धिनकतथैथैधिनकतमृदङ्ग वादयते ॥ शिव० ॥ कणकणल लितावेणुर्मधुरं नादयते ॥हरहर० ॥ रुणुरुणुचरणे रचयति नूपुरमुज्ज्व लिता ॥ शिव० ॥ चक्रावर्ते भ्रमयति कुरुते ता धिकृताम् ॥ हरहर०॥ ता तां लुपचुपचालं तालं नादयते ॥ शिव० ॥ अगुष्ठाङ्गुलिनादं लास्यकतां कुरुते ॥ हरहर०॥ कर्पूरद्युतिगौरं पंचाननसहितम्॥शिव०॥

त्रिनयन शशिधरमौले विषधरकण्ठयुतम् ॥ हरहर० ॥ सुंदरजटाकलापं पावकयुतभालम् ॥ शिव० ॥ डमरुशूलपिनाकं करधृतनृकपालम् ॥ हरहर० ॥ शंखनिनादं कृत्वा झल्लरी नादयते ॥ शिव० ॥ नीराजयते ब्रह्मा वेदऋचां पठते ॥ हरहर० ॥ इति मृदुचरणसरोजे हृदि कमले धृत्वा ॥ शिव० ॥ अवलोकयति महेशं ईशं अभिनत्वा ॥ हरहर० ॥ रुंडरचितउरमालापन्नगमुपवीतम् ॥ शिव० ॥ वामविभागे गिरिजारूपं अतिललितम् ॥ हरहर० ॥ सकलशरीरे मनसिजकृतभस्माभरणम् ॥ शिव० ॥ इति वृषभध्वजरूपं तापत्रयहरणम् ॥ हरहर० ॥ ध्यानं आरति समये हृदये इति कृत्वा ॥ शिव० ॥ रामं त्रिजटानाथं ईशं अभिनत्वा ॥ हरहर० ॥ संगीतमिति प्रतिदिनपठनं यः कुरुते ॥ शिव० ॥ शिवसायुज्यं गच्छति भक्त्या यः शृणुते ॥ हरहर० ॥

पञ्चमं साम्बसदाशिवनीराजनम् ॥

पञ्चमम्—जय जय शङ्कर साम्ब सदाशिव पाहि सदा निजमीश जनम् । त्रिभुवनतारक जनहितकारक दुरितनिवारक शितिकण्ठ ॥१॥ श्रुतिजनरञ्जन भवभयभञ्जन दितिसुतगञ्जन कीर्तिपते ॥ भूतिविभूषण पशुजनदूषण धर्मधुरन्धर रागरते॥जय०॥२॥दुर्बलबन्धो करुणासिन्धो निर्मलनिश्चल भावयते ॥ श्रीगिरिराजसुतामुखमण्डन खण्डनदुस्तरकालगते ॥जय० ॥३॥ हृदयकमलमलपादविदारण तारणसंसृतिवारिनिधे॥ ज्ञानकलापरिपूर्णविलोचन भवभयमोचन बोधनिधे॥ जय०॥४॥

द्विजजनसेवितपादसरोरुह कलिमलमर्दन विश्वपते ॥ क्षितिजलपावक-वायुगगनतलरविशशिदेहिसुमूर्तियुते ॥ जय० ॥५॥ कैलासे ललितैक-विलासे कमलविकाशे सुक्तशुचे ॥ भैरवरुद्रगणैरनुरक्षित इन्दुकलार्ध-विचित्ररुचे ॥ जय० ॥६॥ कल्पद्रुमलतिकाकुसुमाङ्कित दिव्यस्त्रीजनयूथ-वृते॥ द्विपदचतुष्पदखगमृगराजितविजयोल्लासितवनललिते॥जय०॥७॥ विद्याधरगणकेलिकुतूहलमुनिजनमोहकरावसथे ॥ मधुकर कोकिलशुक-मधुरध्वनिनादसुगन्धिसरोजपथे ॥ जय० ॥ ८ ॥ आनन्दामृतपूर्ण-विलोभक गौरीशार्द्धमखण्डपदम् ॥ कनकरचितमणिखचितमलौकिक-सिंहासनमाश्रयसुखदम् ॥ जय० ॥ ९ ॥ जातिलवङ्गमरीचिसितान्वित-विजयापानं कुरु सुहितम् ॥ षडरसयुक्तचतुर्विधभोजनमीश्वर भुंक्ष्व सुभावघृतम् ॥ जय० ॥ १० ॥ ताम्बूलैलापूगीफलसहितं सुखवासं कुरु रुचितम् ॥ मृगमदचन्दनकुङ्कुमकेसरकर्पूरागरुगन्धयुतम् ॥ जय०॥११॥ आरार्तिकमविच्छलितज्योतिर्भरदाङ्गीकुरु समदृष्ट्या ॥ देहिदयाकरवा-ञ्छितफलमिदमेवमपाकुरु तव सृष्ट्या ॥ जय० ॥ १२ ॥

षष्ठ शङ्करारार्तिक्यम् ॥

षष्ठं—देवं वन्दे स्थाणुं गिरिशं साम्बं शान्तं सुरवरदम् । पार्वती-कान्ते मिलति सुखं भयहर गरधर देहि शिवम् ॥ १ ॥ ताण्डवनृत्ये शूले प्रोतं विश्व भाति स्फुरदिव चक्रम् । त्रिपुरहरे किं भ्रान्तिमयं भयहर गरधर देहि शिवम् ॥ २ ॥ शीतकरैर्धृतपीयूषं जनवन्दितरंजित-

विश्वेशम् । दीनं मां पालय मामू भयहर गरधर देहि शिवम्॥३॥ सनकादिकपरिभूतिविरवते विचरस्यानन्दे देवी ललितजया रक्तार्थं भक्तार्तिहरा सुखदा नीराजनविधिगीतं हरपदनीतं शिवदं भवनीयम् ॥ ४॥ देवं वन्दे ॥

ॐ ग्रहाऽ ऊर्ज्जाहुतयो व्यन्तो विप्राय मतिम् ॥ तेषां विशिप्रियाणा वोहमिषमूर्ज्जं समग्रभमुपयामगृहीतोसीन्द्राय त्वा जुष्टङ्गृह्णाम्येषते योनिरिन्द्राय त्वा जुष्टतमम् ॥५॥ ॐ आब्रह्मन्ब्राह्मणो ब्रह्मवर्च्चसी जायतामा राष्ट्रे राजन्यः शूरऽ इषव्योतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयोयुवास्य यजमानस्य वीरो जायतान्निकामे निकामे नः पर्ज्जन्यो वर्षतु फलवत्यो नऽ ओषधयः पच्यन्तांय्योगक्षेमो नः कल्पताम् ॥६॥

ॐ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥७॥

आदौ चतुष्पादतलैकदेशे नाभिप्रदेशे मुखमण्डलैकम् । सर्वाङ्गदेशे त्वथ सप्तवारमारार्तिकं भक्तजनाश्च कुर्युः ॥ सर्वतो ध्वान्तसंहारिन् त्रिधोत्तित दिगम्बर । सौभाग्यमदं देव गृहाणारार्तिकं मम॥ साङ्गाय सपरिवाराय महारुद्राय नमः नीराजयामि ॥ पुष्पैः देववन्दनम् । हस्ताभ्यामात्मवन्दनम् ॥

एष त इत्यनयोः प्रजापतिर्ऋषिः सामपङ्क्तिर्यजुर्जगती छन्दांसि रुद्रो देवता प्रदक्षिणे विनियोगः । ॐ एष ते रुद्र भाग? सुहस्वस्राम्बिकया तञ्जुषस्व स्वाहैष ते रुद्र भागऽ आखुस्ते पशु? ॥ ५७/३ ॥ यानि कानि च पापानि जन्मान्तरकृतानि च॥ तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ॥ ॐ नमो भगवते रुद्राय साङ्गाय सपरिवाराय श्रीमहारुद्राय नमः प्रदक्षिणा समर्पयामि ॥

## अथ मन्त्रपुष्पाञ्जलिः ।

ॐ गुणानां त्वा गुणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे वसो मम ॥ आहमजानि गर्भधमात्वमजासि गर्भधम् ॥ १ २३/१९ ॥ श्रीश्च ते लक्ष्मीश्च पत्न्यावहो रात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्॥ इष्णन्निषाणामुम्मऽ इषाण सर्वलोकम्मऽ इषाण ॥ २ ३१/२२ ॥ अम्बेऽ अम्बिकेम्बालिके न मा नयति कश्चन॥ स संस्त्यश्वक? सुभद्रिकाङ्काम्पीलवासिनीम्॥ ३ २३/१८ ॥ तन्तंऽ एतमनुजोषम्भराम्येष नेत्त्वदपचेतयातै ताऽ अग्ने? प्रियम्पायोपीतम्॥ स ꣳ ह्यवभागास्त्वेषा बृहन्त— प्रस्तरेष्ठा? परिधेयाश्च देवा? ॥ ४ १७/९६ ॥ मूर्द्धानन्दिवोऽ अरतिम्पृथिव्या वैश्वानरमृतऽ आजातमग्निम् ॥ कविꣳ सम्राजमतिथिञ्जनानामासन्ना पात्रञ्जनयन्त देवा? ॥ ५ ७/२४ ॥ प्रोह्यमाण? सोमऽ आगतो वरुणऽ आसन्द्यामा सन्नोग्निराग्नीध्रऽ इन्द्रो हविर्द्धानेथर्वोपावह्रियमाणो विश्वे देवा? ॥ ६ ८/५६ ॥

विश्वे देवा शृणुत स्तुत मे विष्णुराप्रीतपाऽ आप्यायमानो यम? सूयमानो विष्णुः सम्भ्रियमाणो वायु? पूयमानः शुक्र? पूत? शुक्र? क्षीरश्रीर्मन्थी सक्तुश्रीर्विश्वे देवा? ॥ ७ ॥ पितेवैधि सूनवऽ आसुशेवा स्वावेशा तन्वा संविशस्वाश्विनाध्वर्यू सादयतामिह त्वा ॥ पृथिव्या? पुरीषमस्यप्सो नाम तान्त्वा विश्वेऽ अभिगृणन्तु देवा? ॥ ८ ॥ स्तोमश्च यजुश्चऽ ओजो द्रविणमृतस्यास्वाऽ रिहस्तोमो वर्चो द्रविणम् ॥ अग्ने? पुरीषमस्यप्सो नाम तान्त्वा विश्वेऽ अभिगृणन्तु देवा? ॥ ९ ॥ समिद्धेऽ अग्नावधि मामहानऽ उक्थपत्रऽ ईड्यो गृभीत? ॥ तप्तं घर्मं परिगृह्यायजन्तोर्जा यद्यज्ञमयजन्त देवा? ॥ १० ॥ यस्येमा? प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥ यऽ आत्मदा बलदा यस्य विश्वेऽ उपासते प्रशिषं यस्य देवा? ॥ ११ ॥ अनाधृष्टास्वस्तोऽ अदितिः कृणोतु क्षत्रन्तोऽ अश्वो वनताꣳ हविष्मान् ॥ इमा नु कम्भुवना सीषधामेन्द्रश्च विश्वे च देवा? ॥ १२ ॥ बृहस्पते सवितर्बोधयैनं नु सꣳशितञ्चित्सन्तराꣳ सꣳशिशाधि ॥ वर्द्धयैनम्महते सौभगाय विश्वेऽ एनमनु मदन्तु देवा? ॥ १३ ॥ प्रजापतिस्तपसा वावृधान? सद्यो जातो दधिषे यज्ञमग्ने ॥ स्वाहाकृतेन हविषा पुरोगा याहि साध्या हविरदन्तु देवा? ॥ १४ ॥ सद्योजातोऽव्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगा? ॥ अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतꣳ हविरदन्तु देवा? ॥ १५ ॥ अस्मै

रुद्रा मेहना पर्वतासो वृत्रहत्ये भरंहूतौ सुजोषा॑ः ॥ य?शꣳसंते स्तुवते धायिंपज्र्जꣳ इन्द्रं ज्येष्ठाꣳ अस्माँ२ꣳ अंवन्तु देवा? ॥ १६ ॥
नुहिस्पशमविंदन्नुन्यमुस्माद्वैश्वानुरात्पुरꣳ एतारंमुग्ने? ॥ एमेनमवृधन्नुमृताꣳ अमंर्त्यं वैश्वानुरङ्क्षेत्रं जित्याय देवा? ॥ १७ ॥ युज्ञेनं युज्ञमंयजन्त देवास्तानि धर्माणि प्रथुमान्यांसन् ॥ ते हुनाकंम्महिमानं- सचन्तु यत्र पूर्वे साध्या? सन्ति देवा? ॥ १८ ॥
ॐ राजाधिराजायं प्रसह्यसाहिने ॥ नमो वुयं वैंश्रवुणायं कुर्महे । स मे कामान्कामुकामाय मह्यंम् । कामेश्वरो वैंश्रवुणो दंदातु । कुबेरायं वैश्रवुणायं । महाराजाय नमंः ॥ ॐ स्वस्ति । साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्सार्वभौमः सार्वायुष आन्तादापरार्धात् पृथिव्यै समुद्रपर्यन्ताया एकराडिति तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे । आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ।
ॐ विश्वतंश्चक्षुरुत विश्वतोंमुखो विश्वतो बाहुरुत विश्वतंस्पात् ॥ सम्बाहुभ्यान्धमंति सम्पतंत्रैर्द्यावाभूमी जनयंन् देवꣳ एकं- ॥ १९ ॥
नानासुगन्धिपुष्पाणि ऋतुकालोद्भवानि च । पुष्पाञ्जलिमदानेन देहि मे हीप्सितं वरम् ॥ नानाकुसुमसम्भूतं प्रमोदितदिगन्तरम्॥ गन्धार्चितं शम्भो गृहाण कुसुमाञ्जलिम्॥ ॐ नमो भगवते रुद्राय साङ्गाय सपरिवाराय श्रीमहारुद्राय नमः पुष्पाञ्जलिं समर्पयामि ॥

तत उत्थाय प्रदक्षिणां कुर्यात् ॥ पदे पदे वा परिपूजकेभ्यः सद्योऽश्वमेधादि फलं ददाति ॥ तां सर्वपापक्षयहेतुभूतां प्रदक्षिणां ते परितः करोमि ॥

ततोऽष्टोत्तरशतम् अष्टाविंशतिवारं वा मूलमन्त्रं जप्त्वा । गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे देव त्वत्प्रसादान्महेश्वर ॥ इति अर्घोदकं गृहीत्वा देवकरे दद्यात्—

ॐ एष ते रुद्र भाग? सहस्वस्राम्बिकया तञ्जुषस्व स्वाहैष ते रुद्र भागऽ आखुस्ते पशु? ॥२०॥ इति इषुमुद्रा, योनिमुद्रा, त्रिशूलमुद्रा, पद्ममुद्रा, कालकर्णिकमुद्रा, धेनुमुद्रा, एताः पद्ममुद्राः प्रदर्शयेत् ॥

ततः स्तुतिपाठं कुर्यात् ॥ बुद्धिः सवासना कृप्ता दर्पणं मङ्गलानि च । मनोवृत्तिर्विचित्रान्ते नृत्यरूपेण कल्पिता ॥१ ॥ ध्वनयो गीतरूपेण श्रद्धावाद्यप्रभेदतः । छत्राणि नवपद्मानि कल्पितानि मया प्रभो ॥ सुषुम्णाध्वजरूपेण प्राणायामश्चामरात्मना । अहङ्कारो गजत्वेन वेगकृप्तो रथात्मना ॥ इन्द्रियाण्यश्वरूपाणि शब्दादिरथवर्त्मना । मनः प्रग्रहरूपेण बुद्धिः सारथिरूपतः ॥ सर्वमन्यत् तथा कृप्तं तवोपकरणात्मना । कल्पनासंपरित्यागे महाराज्यं समर्पये ॥ भोक्तृत्वाभ्यासराहित्यं वरं देहि सहस्रधा । अखण्डा तव पूजेयं सदा भवतु मत्कृता । आत्मत्वात्तव मे सर्वपूजैवास्ति न चान्यथा ॥ मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ यथाशक्ति नृत्यगीतवादित्राणि कुर्यात् । हस्ते मालाङ्गृहीत्वा यथाशक्ति ॐ नमो भगवते

रुद्राय, ॐनमः शिवायेति वा जपं कृत्वा । ॐ जलं गृहीत्वा अनेन जपकृतेन श्रीमद्रारुद्रः प्रीयताम् ॥

स्तुतिपाठं कुर्यात्—

नमः सोमाय शान्ताय सगुणादिकहेतवे । निवेदयामि चात्मानं त्वं गतिः परमेश्वर ॥ नमामि त्वां विरूपाक्ष नीलग्रीव नमोऽस्तु ते । त्रिनेत्राय नमस्तुभ्यमुमादेहार्धधारिणे ॥ त्रिशूलधारिणे नित्यं भूतानाम्पतये नमः । पिनाकिने नमस्तुभ्यं नमो मीढुष्टमाय च ॥ नमामि त्वां महाभूतपतये त्वां नमाम्यहम् । स्वयं भिक्षान्नभोक्ता वै भक्तानां राज्यदायकः ॥ सूर्यरूपं समासाद्य देहिनां देहदायकः । यतीनां मुक्तिदस्त्वञ्च भुक्त्यर्थिना च भुक्तिदः ॥ राजसेन स्वयं ब्रह्मा सात्त्विकेन स्वयं हरिः ॥ तामसेन स्वयं रुद्रस्त्रितयं त्वयि संस्थितम् ॥ यदृच्छया सर्वमिदं ततं मध्ये च पालितम् । अंते च विलयं नीतं शक्तिः कस्य भवादृते ॥ शिवं शान्तं शुद्धं प्रकटमकलङ्कं श्रुतितनुं महेशानं शम्भुं सकलसुरसंसेव्यचरणम् ॥ गिरीशं गौरीशं भवभयहरं निष्कलमजं महादेवं वन्दे प्रणतजनतापोपशमनम् ॥ त्वमेकः शुद्धोऽसि त्वयि निगमबाह्यामलमयं प्रपञ्चं पश्यन्ति भ्रमपरवशाः पापनिरताः ॥ बहिस्तेभ्यः कृत्वा स्वपदशरणं मां नय विभो शरण्यं त्वां मामस्तव चरणसेवासुनिरतः॥ कदाऽहं भो शम्भो नियतमनसा त्वां हर भजन् । अभद्रे संसारे ह्यनवरतदुःखेति विरसः । लभेयं त्वां शान्ति परममुनिभिर्या ह्यपि गता दया कृत्वा मे त्वं वितर सुखशान्ति भयहर ॥ नमः पश्चाद्वामनाय सगुणादिकहेतवे । निवेदयामि चात्मानं त्वं गतिः

परमेश्वर । एवं क्षमाप्य पुष्पाञ्जलिं दत्वा पुनः करसम्पुटौ कृत्वा वदेत् । नान्यं वदामि न शृणोमि न चिन्तयामि नान्य स्मरामि न भजामि न चाश्रयामि । स्मृत्वा त्वदीयचरणाम्बुजमादरेण मा त्राहि भूत कृपया मयि देहि सिद्धिम् ॥

इमा रुद्रायेति कुत्स ऋषिः जगती छन्दः एको रुद्रो देवता पूजानिवेदने विनियोगः । ॐ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मती॥यथा शमसद्द्विपदे चतुष्पदे विश्वम्पुष्टङ्ग्रामेऽ अस्मिन्ननातुरम् ॥ ५८/११ ॥ भगवान्परमात्मा सपरिवारः साम्बसदाशिवः प्रीयताम् ॥ ॐ द्रापे इत्यस्य परमेष्ठी ऋषिः उपरिष्टाद् बृहती छन्दः एको रुद्रो देवता अष्टाङ्गप्रणामे विनियोगः—ॐ द्रापेऽ अन्धसस्पते दरिद्र नीललोहित ॥ आसाम्प्रजानामेषाम्पशूनाम्मा भेर्म्मा रोङ्मोचनः किञ्चनाममत्॥ ४७/१६॥ उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्या कराभ्या जानुभ्यां प्रणामोऽष्टाङ्ग उच्यते ॥ इति अष्टाङ्गप्रणामः ॥

ततोऽर्घपात्रमुत्थाप्य । ॐ नमो भगवते रुद्राय । साधु वाऽसाधु वा कर्म यद्यदाचरितं मया । तत्सर्वं कृपया शम्भो गृहाण त्रिपुरान्तक॥ इति शिवोपरि भ्रामयित्वा । श्रीमहारुद्राय अर्घं समर्पयामि । इति देवस्य दक्षकरे समर्प्य पात्रं स्वस्थाने निधाय ॥

हस्ते पुनर्जलं गृहीत्वा । ॐ इतः प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा हस्ताभ्या पद्भ्यामुदरेण शिश्ना यत्कृत यत्स्मृतं यदुक्त तत्सर्वं ब्रह्मार्पणं भवतु । मदीयं सकलं श्रीसाम्बसदाशिवाय समर्पितमस्तु ।

ततो संहारमुद्रया निर्माल्यपुष्पं गृहीत्वा। शिवनिर्माल्यतोयेन यो-ऽङ्गानि परिमार्जयेत्। आधयस्तस्य नश्यन्ति व्याधीनां तु कथैव का॥ इति निर्माल्यपुष्पेण सर्वाङ्गं परिमार्ज्य स्वशिरसि धृत्वा। आत्मानं कृतकृत्यं मत्वा श्रीमहारुद्रं प्रणमेत्।

तत आचारात् ब्राह्मणान् गन्धादिभिरभ्यर्च्य तेभ्य आशीर्वादं गृह्णीयात्॥

पुनः हस्ते जलमादाय ब्राह्मणभोजनसङ्कल्पं कुर्यात्। हस्ते जलं गृहीत्वा। कृतस्य कर्मणः साङ्गतासिद्ध्यर्थमद्येऽहि यथासंख्याकान् ब्राह्मणान् सुवासिनीः कुमारिका बटुकांश्च यथान्नेन तर्पयिष्ये तेन कर्माधीशो महारुद्रः प्रीयताम्॥ पश्चात् यथासुखं विहरेत्॥



# अथ होमात्मकमहारुद्रे—एकषष्ट्युत्तरशतधामन्त्रविभाग-पक्षाश्रयेण होमानुक्रमः ॥

आचार्यः अग्नेः पश्चिमत उपविशेत् ॥ यजमानस्तु दक्षिणतोग्नेर्ब्रह्मणः पश्चिमत उपविष्ट एवास्ते ॥ आचार्यः आचम्य प्राणानायम्य देशकालौ संकीर्त्य करिष्यमाणहोमात्मकमहारुद्राख्ये कर्मणि वैकल्पिकपदार्थाव-धारणं देवताभिध्यानं च करिष्ये ॥ अथ वैकल्पिकपदार्थावधारणम्—पूर्वेण ब्रह्मणो गमनमपरेण वा॥अग्नेः पश्चिमतः पात्रासादनमुत्तरतो वा॥ त्रीणि पवित्राणि ॥ पवित्रे द्वे ॥ प्रोक्षणीपात्रम् ॥ आज्यस्थाली चरुस्थाली च तैजसी मृन्मयी वा ॥ पालाश्यः समिधो यज्ञियवृक्षोद्भवा अन्या वा॥ पाश्वावाघारौ विदिशौ वा ॥ समिद्धतमेऽग्नौ आज्यभागौ आग्नेयमुत्तर-पूर्वार्द्धे सौम्यं दक्षिणपूर्वार्द्धे ॥ पूर्णपात्रं दक्षिणावरो वा ॥ एतान्वैकल्पि-कपदार्थानहमस्मिन्कर्मणि करिष्ये ॥ अथ देवताभिध्यानम्—समिद्द्वयं गृहीत्वा प्रजापतिम् इन्द्रम् अग्निं सोमम् एकैकयाज्याहुत्या॥आदित्यं सोमं भौमं बुधं बृहस्पतिं शुक्रं शनैश्चरं राहुं केतुम् इति नवग्रहान् अर्कादियथा-लाभसमिच्चरुतिलाज्यद्रव्यैः प्रत्येकं प्रतिद्रव्येण अष्टाष्टसङ्ख्याकाभिरा-हुतिभिः॥ईश्वरम् उमां स्कन्दं विष्णुं ब्रह्माणम् इन्द्रं यमं कालं चित्रगुप्तम् इत्यधिदेवताः—अग्निम् अपः धरां विष्णुम् इन्द्रम् इन्द्राणीं प्रजापतिं सर्पान् ब्रह्माणम् एताः प्रत्यधिदेवताश्च तैरेव द्रव्यैः प्रतिद्रव्येण चतुश्चतु:सङ्ख्याका-

---

१ देवताभिध्यानस्य अकरणे प्रत्यवाय ॥ पारिजाते बृहन्मनु —देवताभिध्यानरूप ह्यन्वाधान समिद्धुतम् । यो मूढधीर्न कुरुते हवनस्याल्पक फलम्॥परशुराममहारुद्रपद्धतौ—देवतानामभिध्यान न करोत्यत्र मूढधी· । तस्य कर्म वृथैव स्यादिति वेदविदो विदु·॥

२ वसिष्ठः—यदिग्रहाणामष्टौ स्यादधिप्रत्यधिकेषु च । चतुश्चतुर्हुनेद्देवग्नादीनां द्विद्विसङ्ख्यया॥

भिराहुतिभिः॥विनायकं दुर्गां वायुम् आकाशम् अश्विनाविति पञ्चलोकपालान् वास्तोष्पतिं क्षेत्राधिपतिम् इन्द्रम् अग्निं यमं निर्ऋतिं वायुं कुबेरम् ईशानं ब्रह्माणम् अनन्तं तैरेव द्रव्यैः प्रतिद्रव्यं द्वाभ्यां द्वाभ्याम् आहुतिभ्यां शेषादिमनुष्यान्तान्ग्रहपीठस्थविशेषदेवताश्च तैरेव द्रव्यैः प्रतिद्रव्यमेकैकयाहुत्या अथप्रधानं श्रीमहारुद्रं महारुद्रहवनपूर्तये अद्यदिनमारभ्य पञ्चदिनपर्यन्तं प्रत्यहं षडङ्गमन्त्रैः घृताक्तयवमिश्रतिलद्रव्येण षडाहुतिभिः तथैव नमस्त इत्यध्यायस्य एकषष्ट्युत्तरशतधामन्त्रविभागपक्षाश्रयेण तैरेव द्रव्यैः सकृत् लघुरुद्रेण महारुद्रसंख्यया प्रतिलघुरुद्रान्ते तैरेव द्रव्यैः वयꣳसोमव्रत इत्यष्टकण्डिकात्मकेन महच्छिरसा एकाहुत्या तैरेव द्रव्यैः ऋचंवाचमितिशान्त्यध्यायमन्त्रैश्चतुर्विंशत्याहुतिभिः अन्त्यदिने लिङ्गतोभद्रदेवताः रुद्रपीठदेवताः ग्रहपीठस्थसर्वतोभद्रदेवताः वास्तुपीठदेवताः योगिनीपीठदेवताः क्षेत्रपालपीठदेवताः प्रत्येकं दशदशघृताक्ततिलाहुतिभिः एकैकयाज्याहुत्या च शेषेण अग्निं स्विष्टकृतम् अग्निं वायुं सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निमयसं वरुणं सवितारं विष्णुं विश्वान्देवान्मरुतः स्वर्कान् वरुणम् आदित्यम् अदितिं प्रजापतिम् एता अङ्गप्रधानार्था देवता एकैकयाज्याहुत्या अस्मिन्कर्मण्यहं यक्ष्ये। समिद्द्वयं अग्नावादध्यात् । इति अन्वाधानम् ॥

अथ कुशकण्डिका—अग्नेर्दक्षिणतो ब्रह्मासनास्तरणम् ॥ तत्र ब्रह्मोपवेशनम् ॥ अस्मिन्कर्मणि त्वं ब्रह्मा भव॥ भवामीति प्रतिवचनम्॥ तत्र पूर्वेण ब्रह्मणो गमनम्॥ उत्तरतः प्रणीतासनम्॥ ब्रह्मन् अपः प्रणेष्यामि॥ॐप्रणय यज्ञं देवता वर्द्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु सप्तऋषीणाꣳसुकृता यत्र लोकस्तत्रेमं यजमानं च धेहि॥ ॐप्रणय ॥ इति ब्रह्मानुज्ञातः अग्नेरुत्तरतः प्रागग्रं कौशं पूर्वापरमासनद्वयं प्रकल्प्य वारणं

सव्यहस्ते कृत्वा दक्षिणहस्तोद्धृतपात्रोदकेन पूरयित्वा पश्चिमासने निधाय आलभ्य ब्रह्मणोमुखमवलोकयन् पूर्वासने उत्तरतोऽग्नेः स्थापनम्॥ ईशान्यादिपूर्वाग्रैस्त्रिभिस्त्रिभिर्दर्भैः द्वितीयमेखलायां पश्चिमयोनिरन्ध्रेण अग्नेः परिस्तरणम्। तच्च प्रागुदगग्रैर्दक्षिणतः प्रागग्रैः प्रत्यगुदगग्रैः उत्तरतः प्रागग्रैः ॥ अग्नेरुत्तरतः पश्चाद्वा अर्थवत्पात्रासादनम्—पवित्रच्छेदना दर्भास्त्रयः ॥ साग्रे अनन्तर्गर्भे पवित्रे द्वे ॥ प्रोक्षणीपात्रम् ॥ आज्यस्थाली ॥ चरुस्थाली ॥ सम्मार्गकुशाः पञ्च ॥ उपयमनकुशाः सप्त ॥ समिधस्तिस्रः॥ स्रुवः ॥ आज्यम्॥ त्रिः प्रक्षालितास्तण्डुलाः ॥ पूर्णपात्रम् ॥ दक्षिणावरो वा यथाशक्तिहिरण्यादिद्रव्यम् ॥ अन्यान्युपकल्पनीयानि अर्कादिसमिधः तिलादिहवनीयद्रव्याणि वसोर्द्धारार्थे स्रुक् ॥ इति पात्रासादनम् ॥

पवित्रे कृत्वा—द्वयोः पवित्रयोरुपरि पवित्रत्रयं निधाय द्वयोर्मूलेन द्वौ कुशौ प्रदक्षिणीकृत्य त्रयाणां मूलाग्राणि एकीकृत्य अनामिकाङ्गुष्ठेन द्वयोरग्रं छेदयेत् द्वे ग्राह्ये त्रीण्युत्तरतः क्षिपेत् ॥ प्रणीतोत्तरतः प्रोक्षणीपात्रं निधाय तत्र पात्रान्तरेण प्रणीतोदकं प्रपूर्य पवित्राभ्यामुत्पूय पवित्रे प्रोक्षणीषु निधाय दक्षिणेन हस्तेन प्रोक्षणीपात्रमुत्थाप्य पाणौ कृत्वा दक्षिणहस्तमुत्तानं कृत्वा मध्यमानामिकाङ्गुल्योः मध्यमपर्वाभ्यामपामुद्दिङ्गनम् ॥ ताभिस्तासाम्प्रोक्षणम् ॥ आज्यस्थाल्याः प्रोक्षणम् ॥ चरु-

१ एतावान्विकल्पः रुद्रकल्पद्रुमे ॥ २ केचन—चतुर्वारं केचन त्रिवारं निक्षिप्यन्ति वदन्ति परं च भाष्यपञ्चके नोक्तत्वान्निर्मूलं भाति॥ ३ केचन—वामकरे पवित्राग्रं दक्षिणे पवित्रयोर्मूलं धृत्वा मध्यतः पवित्राभ्यामुत्पूय—इति वदन्ति तत्र मूलं न पश्यामः ॥ ४ ताभिः विकल्पे प्रोक्षणीपात्रस्थाभिरद्भिः प्रोक्षणीपात्रस्थापां प्रोक्षणम् ॥ प्रणीतापात्रस्थाभिरद्भिः तासां प्रोक्षणीपात्रस्थापां प्रोक्षणमित्यर्थः ॥

स्थाल्याः प्रोक्षणम् ॥ सम्मार्गकुशानां प्रोक्षणम् ॥ उपयमनकुशाना प्रोक्षणम् ॥ समिधां प्रोक्षणम् ॥ स्रुवस्य प्रोक्षणम् ॥ आज्यस्य प्रोक्षणम् । तण्डुलाना प्रोक्षणम् ॥ पूर्णपात्रस्य प्रोक्षणम् ॥ अन्येषामुपकल्पनीयहवनीयद्रव्याणा प्रोक्षणम् ॥ असञ्चरे प्रोक्षणीपात्रं निधाय ॥ आज्यस्थाल्याम् आज्यनिर्वापः॥ चरुस्थाल्या प्रणीतोदकमासिच्य तत्र त्रिःप्रक्षालितांस्तण्डुलान् प्रक्षिप्य दक्षिणतो ब्रह्मणा आज्याधिश्रयणं मध्ये यजमानेन चरोरधिश्रयणं युगपत्॥ज्वलदुल्मुकेन उभयोः ऐशानीमारभ्य ऐशानीपर्यन्तं पर्यग्निकरणम् इतरथावृत्तिः। अर्धशृते चरौ स्रुवस्य प्रतपनम् । दक्षिणेन हस्तेन स्रुवमादाय प्राञ्चमधोमुखमग्नौ तापयित्वा सव्ये पाणौ कृत्वा दक्षिणेन सम्मार्गाग्रैर्मूलतोऽग्रपर्यन्तं सम्मृज्य मूलैरग्रमारभ्य अधस्तान्मूलपर्यन्तं सम्मृज्य प्रणीतोदकेनाभ्युक्ष्य पुनः पूर्ववत्प्रतप्य दक्षिणतो निदध्यात् ॥ सम्मार्गकुशानग्नौ प्रास्य आज्योद्वासनम्—अग्नेः सकाशादाज्यं गृहीत्वा चरोः पूर्वेणोत्तरतो नीत्वा अग्नेरुत्तरतः प्रोक्षण्याः पश्चिमे निधाय चरुमुत्थाप्य पूर्वेणोत्तरतः आज्यस्य पश्चिमतो नीत्वा आज्यस्योत्तरतः निधाय आज्यमग्नेः पश्चादानीय स्थापयेत् । चरुं च आज्यस्य पूर्वेण प्रदक्षिणमानीय उत्तरत आसादयेत् । पवित्राभ्याम् आज्योत्पवनम् । अवेक्षणम्। अपद्रव्यनिरसनम् ।

१ असञ्चर प्रणीताग्न्योरन्तराल परशुरामकारिकायाम्–प्रणीताग्न्यन्तरे भागे कुश्द वायव्यगोचरे । असञ्चर हि विज्ञय प्रोक्षणीस्थानमुत्तमम् ॥ इति क्वचित् ॥ सर्वसम्म तन्तु–प्रणीताग्न्योरन्तराले प्रोक्षणीस्थानमुत्तमम् । अन्यत्र स्थापिता चैव यज्ञकर्ता च ब्रह्मा ॥ २ वचन—सपवित्रचरुस्थाल्यामिति वदन्ति तत्र मूल मृग्यम् ॥ कात्यायनश्रौतसूत्रे–सम्मार्जनानन्तरयत्याहवनीये प्रासनमग्नौ ॥

ताभ्यामेवाज्यलिप्ताभ्यां पवित्राभ्यां प्रोक्षण्याः प्रत्युत्पवनम् । पवित्रे प्रोक्षण्यां निधाय । दक्षिणहस्तेन उपयमनकुशानादाय सव्ये गृहीत्वा तिस्रः संमिधः तिष्ठन्नग्नावाधाय दक्षिणचुलुकगृहीतेन सपवित्रेण प्रोक्षण्युदकेन अग्नेः ईशानकोणादारभ्य ईशानपर्यन्तं प्रदक्षिणवत्पर्युक्षणम् इतरथावृत्तिः । पवित्रे प्रणीतासु निधाय अग्नेः प्रदीप्तिकरणम् । ततः स्थानोपविष्टः दक्षिणं जान्वाच्य कुशैर्ब्रह्मणाऽन्वारब्धः उपयमनकुशसहितं प्रसारिताङ्गुलिहस्तं हृदि निधाय समिद्धतमेऽग्नौ मनसा प्रजापतिं ध्यायन्प्रणवपूर्वकं तूष्णीं स्रुवेण प्राञ्चमूर्ध्वमृजुं सन्ततमाज्येन अग्नेरुत्तरप्रदेशे पूर्वाघारमाघारयति–मनसा ॐप्रजापतये (अत्र न स्वाहाकारः) यजमानः–इदं प्रजापतये न मम ॥ प्रोक्षण्यां संस्रवप्रक्षेपः ॥ अग्नेर्दक्षिणप्रदेशे उत्तराघारमाघारयेत्–ॐइन्द्राय स्वाहा–इदमिन्द्राय न मम ॥ इत्येतौ पूर्वोत्तरावाघारौ हुत्वा अग्नेरुत्तरार्द्धपूर्वार्द्धे–ॐअग्नये स्वाहा–

---

१ समिल्लक्षण स्मृत्यर्थसार—पलाशखादिराश्वत्थशम्युदुम्बरजा समित् । अपामार्गार्कदूर्वाश्च कुशाश्चेति विदुर्बुधाः ॥ अन्यच्च —अर्कः पलाशः खदिरो ह्यपामार्गोऽथ पिप्पलः । उदुम्बरः शमीदूर्वाकुशाश्च समिधः क्रमात् ॥ सत्वच समिधः कार्या ऋजुश्लक्ष्णाः समास्तथा । शस्ता दशाङ्गुलास्तास्तु द्वादशाङ्गुलिकास्तु वा ॥ आर्द्राः पक्वाः समच्छेदास्तर्जन्यङ्गुलिवर्तुलाः । अपाटिताश्चाद्विशाखाः कृमिदोषविवर्जिताः ॥ ईदृशा होमयेत्प्राज्ञः प्राप्नोति विपुलां श्रियम् ॥ यद्वा—समिधश्चैव वेदश्च नव: प्रादेशसम्मिताः । इध्मस्तु द्विगुणः कार्यस्त्रिगुणः परिधि स्मृतः ॥ २ सपवित्राम्बुहस्तेन यर्हि कुर्यात्प्रदक्षिणम् । हव्यवाट् सलिलं दृष्ट्वा विभीतः सम्मुखो भवेत् ॥ ३ द्रवद्रव्यं स्रुवेणैव पाणिना कठिनं हविः । जुहुयादग्नये स्वाहा सुसमिद्धहुताशने ॥ ४ अत्र न स्वाहाकारपठनमिति रुद्रकल्पद्रुमकारसम्मतम् अन्ये तु—ॐप्रजापतये स्वाहा—इति मनसा ध्यायन्—आहुतिर्देयेति सम्मन्वते तत्र मूलं मृग्यम् ॥

इदमग्नये न मम ॥ अग्नेर्दक्षिणार्द्धपूर्वार्द्धे–ॐसोमाय स्वाहा–इदं सोमाय न मम ॥ ततो यजमानो द्रव्यत्यागं कुर्यात्॥ हस्ते जलमादाय–इदमुपकल्पितं समिच्चरुतिलाज्यादिहवनीयद्रव्यं या या वक्ष्यमाणदेवतास्ताभ्यस्ताभ्यो मया परित्यक्तं न मम यथादैवतमस्तु॥ॐअग्नेनय सुपथा॰ विधेम॥[१]॥रुद्रादौ मृडनामाग्नये नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि॥सप्तजिह्वाख्यमुद्रां प्रदर्श्य प्रार्थना–अग्ने त्वमैश्वरं तेजः पावनं परमं हि तत्।तस्मात्त्वदीयहृत्पद्मे श्रीरुद्रं तर्पयाम्यहम्॥अग्नौ रुद्रध्यानम्–ध्याये ह्यग्नौ महादेवं रुद्रं पञ्चमुखं शिवम्। प्रतिवक्त्रं त्रिनेत्रं च दशहस्तं दशायुधम् ॥ कमण्डल्वक्षसूत्राहिबाणशूलधरं हरम्। दण्डं डमरुखट्वाङ्गाभयहस्तं पिनाकिनम्। अष्टसिद्धियुतं सौम्यं सर्वाभरणभूषितम्। नीलग्रीवं शशाङ्कार्धशेखरं स्मितसुन्दरम्॥ शुभ्रस्फटिकसंकाशं नागयज्ञोपवीतिनम्। गजचर्मपरीधानं व्याघ्रचर्मोत्तरीयकम्॥ वृषस्कन्धसमारूढमुमादेहार्धधारिणम्। दुर्दान्तपिङ्गलजटाशिखमुद्योतकारिणम्॥ अमृतेनाप्लुतं हृष्टं दिव्यभोगसमाकुलम्। दिग्देवतासमायुक्तं सुरासुरनमस्कृतम्॥ शाश्वतं सच्चिदानन्दं ध्रुवमक्षरमव्ययम्। अजातममृतं नित्यं सर्वव्यापिनमीश्वरम्॥एवं ध्यात्वा वह्न्यन्तर्गतं रुद्रं गन्धपुष्पाक्षतादिभिः पूजयेत्॥ तत आचार्यादयः सावधाना यजमानाभीष्टसिद्धिप्राप्त्यर्थं होमं कुर्युः॥ अथ वराहुतिः–ॐगणानान्त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे॰सिगर्भधम् स्वाहा ॥

---

१ रुद्रकल्पद्रुमे–बहुकर्तृके होमे यथाकालं प्रत्याहुतित्यागस्य कर्तुमशक्यत्वात् सर्वं होमद्रव्यं देवताश्च मनसा ध्यात्वा त्यजेत् ॥ २ सप्तजिह्वाख्यमुद्रा—मणिबन्धौ समौ कृत्वा करौ प्रसारिताङ्गुलि । मध्यमे मिलिते कृत्वा तु मध्येऽङ्गुष्ठौ क्षिपेत् ॥

**सूर्यादिनवग्रहाणां प्रत्येकं प्रतिद्रव्यमष्टोष्टसङ्ख्ययाहोमः।**

१ मधुसर्पिर्दध्याक्तार्कसमिदाज्यचरुतिलान् गृहीत्वा—आकृष्णेनेत्यस्य हिरण्यस्तूपआङ्गिरसऋषिः त्रिष्टुप्छन्दः सूर्योदेवता सूर्यप्रीतये कपिलाग्नावर्कसमिच्चरुतिलाज्यहोमे विनियोगः—ॐआ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् स्वाहा ॥४३/३३॥

२ मधुसर्पिर्दध्याक्तपलाशसमिदाज्यचरुतिलान् गृहीत्वा—इमन्देवा इत्यस्य वरुणऋषिः अत्यष्टीछन्दः सोमोदेवता सोमप्रीतये पिङ्गलाग्नौ पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐइमन्देवाऽअसपत्नꣳ सुवद्ध्वम्महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय ॥ इममुमुष्य्य पुत्रममुष्यै पुत्रमस्यै विशऽ एषवोमी राजा सोमोस्माकम्ब्राह्मणानाꣳराजा स्वाहा ॥ ४०/९ ॥

३मधुसर्पिर्दध्याक्तखादिरसमिच्चरुतिलाज्यद्रव्य गृहीत्वा अग्निर्मूर्द्धेत्यस्य विरूपाक्ष ऋषिः गायत्रीछन्दः अङ्गारकोदेवता अङ्गारकप्रीतये धूमकेत्वग्नौ खादिरसमिच्चरुतिलाज्यहोमे विनियोगः—ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् ॥ अपाꣳ रेताꣳसि जिन्वति स्वाहा ॥१२/३॥

४मधुसर्पिर्दध्याक्तापामार्गसमिदाज्यचरुतिलेतिद्रव्यचतुष्टयं गृहीत्वा उद्बुध्यस्वेत्यस्य परमेष्ठीऋषिः त्रिष्टुप्छन्दः बुधो देवता बुधप्रीतये

---

१ प्रतिग्रहमष्टोत्तरसहस्राभिरष्टोत्तरशताभिरष्टाविंशतिभिरष्टभि सङ्ख्याभिर्वा प्रणवादिकै स्वाहान्तैराकृष्णनेत्यादिमन्त्रैर्होमं कार्यं ॥ यदि ग्रहाणामरिष्टस्यादाधिप्रत्याधिकपुच । चतुश्चतुर्गुणद्विरष्टादीनां द्वि द्वि सङ्ख्यया ॥ २ प्रादेशमात्राभिरव्यङ्गाभिर्घृणकीटाग्रजग्धाभि कनिष्ठावस्थूलाभिर्मधुसर्पिर्दध्याक्ताभिरर्कादिसमिद्भिर्होमं कार्यं ॥

जठरनामाग्नौ अपामार्गसमिच्चरुतिलाज्यहोमे विनियोगः—ॐ उद्बु-
ध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सꣳसृजेथामयञ्च ॥ अस्मिन्त्स-
धस्थेऽ अध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत स्वाहा ॥ $\frac{११}{१८}$ ॥

५ मधुसर्पिर्दध्याक्ताश्वत्थसमिच्चरुतिलाज्यद्रव्यं गृहीत्वा—बृहस्पत इत्यस्य गृत्समद ऋषिः त्रिष्टुप्छन्दः बृहस्पतिर्देवता बृहस्पतिप्रीतये शिखिनामाग्नौ अश्वत्थसमिच्चरुतिलाज्यहोमे विनियोगः—ॐ बृहस्पतेऽ अति यदर्य्योऽ अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽ ऋतप्रजाततदस्मासु द्रविणन्धेहि चित्रम् स्वाहा ॥ $\frac{३}{२६}$ ॥

६ मधुसर्पिर्दध्याक्तोदुम्बरसमिच्चरुतिलाज्यानि गृहीत्वा-अन्नात्परिस्रुत इत्यस्य अश्विसरस्वतीन्द्रा ऋषयः अतिजगतीछन्दः शुक्रो देवता शुक्रप्रीतये हाटकाग्नौ उदुम्बरसमिच्चरुतिलाज्यहोमे विनियोगः—ॐ अन्नात्परिस्रुतो रसम्ब्रह्मणा व्यपिबत्क्षत्रम्पयꣳ सोमम्प्रजापतिः ॥ ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धसऽ इन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु स्वाहा ॥ $\frac{७५}{१९}$ ॥

७ मधुसर्पिर्दध्याक्तशमीसमिच्चरुतिलाज्यानि गृहीत्वा—शन्नो देवीरित्यस्य दध्यङ्ङाथर्वणऋषिः गायत्रीछन्दः शनैश्चरोदेवता शनैश्चरप्रीतये महातैजसाग्नौ शमीसमिच्चरुतिलाज्यहोमे विनियोगः—ॐ शन्नो देवीरभिष्टयऽ आपो भवन्तु पीतये ॥ शंय्योरभि स्रवन्तु नः स्वाहा ॥ $\frac{१२}{३६}$ ॥

८ मधुसर्पिर्दध्याक्तदूर्वासमिच्चरुतिलाज्यानि गृहीत्वा कयान इत्यस्य वामदेव ऋषिः गायत्रीछन्दः राहुर्देवता राहुप्रीतये शुचिनामाग्नौ दूर्वासमिच्चरुतिलाज्यहोमे विनियोगः—ॐ कया नश्चित्रऽ आभुवदूती सदावृधः सखा ॥ कया शचिष्ठया वृता स्वाहा ॥ $\frac{४}{३६}$ ॥

९ मधुसर्पिर्दध्याक्तकुशसमिच्चरुतिलाज्यानि गृहीत्वा—केतुङ्कृण्व-न्नित्यस्य मधुच्छन्दाऋषिः अनिरुक्तागायत्रीछन्दः केतवोदेवताः केतु-प्रीतये हुताशनाग्नौ कुशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐकेतुङ्कृण्व-न्नकेतवे पेशो मर्य्याऽ अपेशसे ॥ समुषद्भिरजायथाः स्वाहा ॥ २९/१ ॥

## अथाधिदेवतानां मधुसर्पिर्दध्याक्तपलाशसमिच्चरु तिलाज्यैश्चतुश्चतुःसङ्ख्याभिर्होमः ।

१ त्र्यम्बकमित्यस्य वसिष्ठ ऋषिः अनुष्टुप्छन्दः त्र्यम्बको देवता ईश्वरप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐत्र्यम्बकंय्यजामहे सुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् स्वाहा ॥ ६०/३ ॥

२ श्रीश्च त इत्यस्य उत्तरनारायणऋषिः त्रिष्टुप्छन्दः उमा देवता उमाप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐश्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्म इषाण सर्वलोकम्मऽ इषाण स्वाहा ॥ २२/३१ ॥

३ यदक्रन्द इत्यस्य भार्गवजमदग्निदीर्घतमा ऋषयः त्रिष्टुप्छन्दः स्कन्दोदेवता स्कन्दप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐयदक्रन्दः प्रथमञ्जायमानऽ उद्यन्त्समुद्रादुत वा पुरीषात् ॥ श्येनस्य पक्षा हरिणस्य बाहूऽ उपस्तुत्यम्महि जातन्तेऽ अर्वन् स्वाहा ॥ १२/२९ ॥

४ विष्णोरराटमित्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः विष्णुर्देवता विष्णुप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐविष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवासि ॥ वैष्णवमसि विष्णवे त्वा स्वाहा ॥ २१/५ ॥

---

१ राहितामौ वा ॥ २ अधिदेवतानां पलाशसमिद्धरव होम ॥

५ आब्रह्मन्नित्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः ब्रह्मा देवता ब्रह्मप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः ॥ ॐआ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यᳪ शूर इषव्योऽतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिᳪ पुरन्ध्रिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतान्निकामे निकामे नᳪ पर्जन्यो वर्षतु फलवत्यो नऽ ओषधयᳪ पच्यन्तां योगक्षेमो नः कल्पताम् स्वाहा ॥२२/२२॥

६ सजोषाइन्द्रेत्यस्य विश्वामित्र ऋषिः त्रिष्टुप्छन्दः इन्द्रो देवता इन्द्रप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः ॥ ॐसजोषाऽ इन्द्र सगणो मरुद्भिᳪ सोमम्पिब वृत्रहा शूर विद्वान् ॥ जहि शत्रूँ१ऽ रप मृधो नुदस्वाथाभयङ्कृणुहि विश्वतो नᳪ स्वाहा ॥७/३७ ॥

७ यमायत्वेत्यस्य दध्यङ्ङाथर्वणऋषिः यजुश्छन्दः यमो देवता यमप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐयमाय त्वाङ्गिरस्वते पितृमते स्वाहा ॥ स्वाहा घर्म्माय स्वाहा घर्म्मः पित्रे स्वाहा ॥३८/९॥

८ कार्षिरसीत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः कालोदेवता कालप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐकार्षिरसि समुद्रस्य त्वा क्षित्याऽ उन्नयामि॥समापोऽ अद्भिरग्मत समोषधीभिरोषधीᳪ स्वाहा ॥६/२८॥

९ चित्रावसोइत्यस्य हिरण्यस्तूपऋषिः यजुर्जगतीछन्दः चित्रगुप्तो देवता चित्रगुप्तप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐचित्रावसो स्वस्ति ते पारमशीय स्वाहा ॥ ३/१८ ॥ इत्यधिदेवतानां होमः ॥

## अथ प्रत्यधिदेवतानां मधुसर्पिर्दध्याक्तपलाशसमि-चरुतिलाज्यैश्चतुश्चतुःसङ्ख्याभिर्होमः ॥

१ अग्निन्दूतमित्यस्य विरूपाक्ष ऋषिः गायत्रीछन्दः अग्निर्देवता अग्निप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः–ॐअग्निन्दूतम्पुरोदधे हव्यवाहमुप ब्रुवे ॥ देवाँ २ऽ आ सादयादिह स्वाहा ॥२२/१७॥

२ आपोहिष्ठेति सिन्धुद्वीपऋषिः गायत्रीछन्दः आपो देवता अपां प्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः–ॐ आपो हि ष्ठा मयो भुवस्ता नऽ ऊर्ज्ज दधातन ॥ महे रणाय चक्षसे स्वाहा ॥१४/११॥

३ स्योनापृथिवीत्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः पृथ्वीदेवता पृथ्वीप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः–ॐस्योना पृथिवि नो भवानृक्षरा निवेशनी॥ यच्छा नः शर्म्म सप्रथाः स्वाहा॥१३/३६॥

४ इदं विष्णुरित्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः विष्णुर्देवता विष्णुप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः–ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्य पाꣳसुरे स्वाहा ॥ ५/१५ ॥

५ त्रातारमिन्द्रमित्यस्य गर्गऋषिः त्रिष्टुप्छन्दः इन्द्रोदेवता इन्द्रप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः–ॐत्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् ॥ ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳ स्वस्तिनो मघवा धात्विन्द्रः स्वाहा ॥२०/५०॥

६ अदित्यैरास्ना इत्यस्य दध्यङ्ङाथर्वणऋषिः यजुश्छन्दः इन्द्राणी देवता इन्द्राणीप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः–ॐअदित्यै रास्नासीन्द्राण्याऽ उष्णीषः ॥ पूषासि घर्म्माय दीष्व स्वाहा ॥ ३८/३ ॥

७ प्रजापतइत्यस्य हिरण्यगर्भऋषिः त्रिष्टुप्छन्दः प्रजापतिर्देवता प्रजापतिप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव॥ यत्कामास्ते जुहुमस्तन्नोऽ अस्तु वयᳬ स्याम पतयो रयीणाᳬ स्वाहा ॥$\frac{६५}{२३}$॥

८ नमोस्तुसर्पेभ्यइत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः सर्पादेवताः सर्पप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐ नमोस्तु सर्प्पेभ्यो ये के च पृथिवीमनु॥ येऽ अन्तरिक्षे ये दिवि तेब्भ्यः सर्प्पेब्भ्यो नमः स्वाहा ॥$\frac{६}{१३}$॥

९ ब्रह्मजज्ञानमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता ब्रह्मप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐ ब्रह्म जज्ञानम्प्रथमम्पुरस्ताद्वि सीमतः सुरुचो वेनऽ आवः॥ स बुध्न्याऽ उपमाऽ अस्य विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा ॥$\frac{३}{१३}$॥

**अथ विनायकादिलोकपालदेवतानां मधुसर्पिर्दध्याक्तपलाशसमिच्चरुतिलाज्यैर्दाभ्यां द्वाभ्यामाहुतिभ्यां होमः।**

१ गणानान्त्वेत्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः गणपतिर्देवता गणपतिप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐ गणानान्त्वा गणपतिᳬ हवामहे प्रियाणान्त्वा प्रियपतिᳬ हवामहे निधीनान्त्वा निधिपतिᳬ हवामहे वसो मम ॥ आहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधम् स्वाहा ॥ $\frac{१९}{२३}$ ॥

२ अम्बे अम्बिकइत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः दुर्गादेवता दुर्गाप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः ॐ अम्बेऽ अम्बिकेऽम्बालिके न मा नयति कश्चन॥ ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् स्वाहा ॥$\frac{१८}{२३}$॥

३ वायो ये ते इत्यस्य गृत्समद ऋषिः गायत्रीछन्दः वायुर्देवता वायुप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः–ॐवायो ये तें सहुस्रिणो रथांसुस्तेभिरागंहि ॥ निुयुत्वान्त्सोमंपीतये स्वाहा ॥ $\frac{३३}{२७}$ ॥

४ घृतंघृतपावान इत्यस्य प्रजापतिर्ऋषिः ऋचां पङ्क्तिछन्दः आकाशो देवता आकाशप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः–ॐघृत-ङ्घृंतपावानः पिबतु वसां वसापावानः पिबतान्तरिक्षस्य हुविरंसि स्वाहा॥दिशंः प्रदिशंऽ आदिशों विदिशंऽ उद्दिशों दिग्भ्यः स्वाहा॥ $\frac{६}{१९}$ ॥

५ यावाङ्कशेत्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः अश्विनौ देवत अश्विनोः प्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः–ॐया वां कशा मधुंमुत्यश्विना सूनृतांवती॥ तयां युज्ञम्मिमिक्षतम् स्वाहा ॥ $\frac{११}{७}$ ॥

अथ वास्तुक्षेत्रपालयोः औदुम्बर-पलाश-समिच्चरुतिलाज्यैः द्वाभ्यां द्वाभ्याम् आहुतिभ्यां होमः ।

१ वास्तोष्पतइत्यस्य वसिष्ठऋषिः त्रिष्टुप्छन्दः वास्तोष्पतिर्देवता वास्तोष्पतिप्रीतये औदुम्बरसमिच्चरुतिलाज्यहोमे विनियोगः–ॐवा-स्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवानः॥यत्वेमहे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शंचतुष्पदे स्वाहा॥ पा०गृ०का०३कं०४मं०७

२ नहिस्पशमविदमित्यस्य विश्वामित्रऋषिः त्रिष्टुप्छन्दः क्षेत्राधि-पतिर्देवता क्षेत्राधिपतिप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः–ॐनुहि स्पर्शमविंदन्नुन्यमुस्माद्वैश्वानुरात्पुंरऽएतारंमुग्नेः ॥ एमेनम-वृधन्नुमृताऽ अमर्त्यं वैश्वानुरङ्क्षैत्रंजित्याय देवाः स्वाहा ॥ $\frac{६६}{३३}$ ॥ इति वास्तुक्षेत्रपालयोर्होमः ॥

## अथ दशदिक्पालानां तत्तन्मन्त्रैः मधुसर्पिर्दध्याक्त-पलाशसमिच्चरुतिलाज्यैर्द्वाभ्यां द्वाभ्याम् आहुतिभ्यां होमः।

१ त्रातारमित्यस्य गर्गऋषिः त्रिष्टुप्छन्दः इन्द्रो देवता इन्द्रप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः ॐत्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सहवꣳ शूरमिन्द्रम्॥ ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः स्वाहा ॥२०/५०॥

२त्वन्नोऽअग्न इत्यस्य हिरण्यस्तूपआङ्गिरसऋषिः जगतीछन्दः अग्निर्देवता अग्निप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐत्वन्नोऽ अग्ने वरुणस्य विद्वान्देवस्य हेडोऽ अवयासिसीष्ठाः॥यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांꣳसि प्रमुमुग्ध्यस्मत् स्वाहा ॥२१/३॥

३ यमायेत्यस्य दध्यङ्ङाथर्वणऋषिः यजुश्छन्दः यमो देवता यमप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐयमाय त्वाङ्गिरस्वते पितृमते स्वाहा ॥ स्वाहा घर्माय स्वाहा घर्मः पित्रे स्वाहा ॥३८/९॥

४ असुन्वन्तमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः निर्ऋतिर्देवता निर्ऋतिप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐअसुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य ॥ अन्यमस्मदिच्छ सा तऽ इत्या नमो देवि निर्ऋते तुभ्यमस्तु स्वाहा ॥१२/६२॥

५ तत्त्वायामीत्यस्य शुनःशेप ऋषिः त्रिष्टुप्छन्दः वरुणो देवता वरुणप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः—ॐतत्त्वा यामि

ब्रह्मंण्या वन्दंयानुस्त्वदाशास्ते यजंमानो हुविर्भिः॥अहेडमानो वरुणेह बोध्युरुंशस मा नु आयुः प्रमोषीः स्वाहा ॥ ३/२१॥

६ आनोनियुद्भिरित्यस्य वसिष्ठऋषिः त्रिष्टुप्छन्दः वायुर्देवता वायुप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः–ॐआ नो नियुद्भिः शुतिनीभिरध्वरꣳ संहुस्रिणीभिरुपंयाहि युज्ञम्॥ वायोऽ अस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः सदा नः स्वाहा ॥ २७/२८॥

७ वयꣳसोमेत्यस्य बंधुर्ऋषिः गायत्रीछन्दः सोमो देवता सोमप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः–ॐवुयꣳ सोम व्रते तव मनंस्तुनूषु बिभ्रतः॥ प्रजावन्तः सचेमहि स्वाहा ॥ ५६/३ ॥

८ तमीशानमित्यस्य गौतम ऋषिः जगतीछन्दः ईशानो देवता ईशानप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः–ॐतमीशानुञ्जगंतस्तुस्थुषुस्पतिंन्धियञ्जिन्वमवंसे हूमहे वुयम् ॥ पूषा नो यथा वेदंसामसंद्वृधे रंक्षिता पायुरदंब्धः स्वुस्तये स्वाहा ॥ २६/२५॥

९ अस्मेरुद्रामेहनेत्यस्य प्रगाथऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता ब्रह्मप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः॥ ॐअुस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरंहूतौ सुजोषाः॥य? शꣳसंते स्तुवुते धायि पुज्रऽ इन्द्रंज्येष्ठाऽ अुस्माँर अंवन्तु देवा? स्वाहा ॥ ५६/३३॥

१० स्योनापृथिवीत्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः अनन्तो देवता अनन्तप्रीतये पलाशसमिच्चरुतिलाज्यहोमे विनियोगः–ॐस्योना पृथिवि नो भवानृक्षुरा निवेशंनी॥यच्छा नुः शर्म्मं सुप्रथाः स्वाहा॥ ३/३६॥

अथ शेषादिमनुष्यान्तग्रहपीठस्थविशेषदेवतानां तैरेव द्रव्यैः प्रतिद्रव्यमेकैकयाऽऽज्याहुत्या होमः।

१ॐशेषाय नमः स्वाहा
२ॐवासुकये नमः स्वाहा
३ॐतक्षकाय नमः स्वाहा
४ॐकर्कोटकाय नमः स्वाहा
५ॐपद्माय नमः स्वाहा
६ॐमहापद्माय नमः स्वाहा
७ॐशङ्खपालाय नमः स्वाहा
८ॐकम्बलाय नमः स्वाहा
९ॐकुलीशाय नमः स्वाहा
१०ॐअश्विन्यादिसप्तनक्षत्रेभ्यो नमः स्वाहा
११ॐविष्कुम्भादिसप्तयोगेभ्यो नमः स्वाहा
१२ॐबवबालवकरणाभ्यांनमःस्वाहा
१३ॐसप्तद्वीपेभ्यो नमः स्वाहा
१४ॐऋग्वेदाय नमः स्वाहा
१५ॐपुष्यादिसप्तनक्षत्रेभ्योनमःस्वा.
१६ॐधृत्यादिसप्तयोगेभ्योनमःस्वाहा
१७ॐकौलवतैतिलकरणाभ्यां नमः [स्वाहा
१८ॐसप्तसागरेभ्यो नमः [स्वाहा
१९ॐयजुर्वेदाय नमः स्वाहा
२०ॐस्वात्यादिसप्तनक्षत्रेभ्योनमःस्वा.
२१ॐवज्रादिसप्तयोगेभ्योनमःस्वाहा
२२ॐगरवणिजकरणाभ्यांनमःस्वा.
२३ॐसप्तपातालेभ्यो नमः स्वाहा
२४ॐसामवेदाय नमः स्वाहा
२५ॐ अभिजिदादिसप्तनक्षत्रेभ्यो नमः स्वाहा
२६ॐसाध्यादिपड्योगेभ्यो नमः [स्वाहा
२७ॐविशिष्टकरणायनमः स्वाहा
२८ॐभूरादिसप्तलोकेभ्यो नमः [स्वाहा
२९ॐअथर्ववेदाय नमः [स्वाहा
३०ॐध्रुवाय नमः स्वाहा
३१ॐसप्तऋषिभ्यो नमः स्वाहा
३२ॐगङ्गादिसप्तसरिद्भ्यो नमः स्वाहा
३३ॐसप्तकुलाचलेभ्योनमःस्वाहा
३४ॐअष्टवसुभ्यो नमः स्वाहा
३५ॐएकादशरुद्रेभ्यो नमःस्वाहा
३६ॐद्वादशादित्येभ्योनमः स्वाहा
३७ॐएकोनपञ्चाशद्मरुद्भ्यो नमः स्वाहा
३८ॐषोडशमातृभ्यो नमः स्वाहा
३९ॐषड्ऋतुभ्यो नमः स्वाहा
४०ॐद्वादशमासेभ्योनमःस्वाहा
४१ॐद्वाभ्यामयनाभ्यांनमःस्वाहा

४२ ॐपञ्चदशतिथिभ्यो नमः स्वाहा
४३ ॐषष्टिसंवत्सरेभ्यो नमः स्वाहा
४४ ॐसुवर्णेभ्यो नमः स्वाहा
४५ ॐनागेभ्यो नमः स्वाहा
४६ ॐसर्पेभ्यो नमः स्वाहा
४७ ॐयक्षेभ्यो नमः स्वाहा
४८ ॐगन्धर्वेभ्यो नमः स्वाहा
४९ ॐसिद्धेभ्यो नमः स्वाहा
५० ॐविद्याधरेभ्यो नमः स्वाहा
५१ ॐअप्सरोभ्यो नमः स्वाहा
५२ ॐराक्षसेभ्यो नमः स्वाहा
५३ ॐभूतेभ्यो नमः स्वाहा
५४ ॐमनुष्येभ्यो नमः स्वाहा

॥ इति ग्रहहोमः ॥

॥ ततो घृताक्ततिलद्रव्येण प्रधानहोमः ॥

एकलघुरुद्रहोमे एकादशविमाः ऋष्यादिस्मरणपूर्वकं सावधाना घृताक्ततिलान् मृगीमुद्रया[1] महारुद्रं ध्यायन्तः मन्त्रपठनपूर्वकं जुहुयुः॥

यज्जाग्रत इति षण्णां शिवसङ्कल्प ऋषिः त्रिष्टुप्छन्दः मनोदेवता श्रीमहारुद्रप्रीतये होमे विनियोगः ॥

ॐयज्जाग्रतो०॥ येन कर्म्माण्य०॥ यत्प्रज्ञान० ॥ येनेदम्भूतं०॥ यस्मिन्नृच६० ॥ सुषारथिरश्वानिव० शिवसङ्कल्पमस्तु स्वाहा ॥

इति शिवसङ्कल्पसूक्तस्यहृदयरूपाङ्गस्यचतुस्त्रिंशाध्यायस्यषण्मन्त्रैरेकाहुतिः

सहस्रशीर्षेतिषोडशर्चस्य नारायणपुरुष ऋषिः आद्यानां पञ्चदशानामनुष्टुप्छन्दः अन्त्यायास्त्रिष्टुप् जगद्बीजं पुरुषो देवता श्रीमहारुद्रप्रीतये होमे विनियोगः ॥

१ मृगीमुद्रालक्षणम्—अनामिकाङ्गुष्ठकेन योजयेन्मध्यमाङ्गुलिम्। शेषाङ्गुली उच्छ्रिते वै मृगीमुद्रेयमीरिता॥अत्र कृष्णतिलाः ग्राह्या ॥होमावसरे यत् हविःकुण्डाद्बहिः पततितत्प्रद्यादौ जलेप्रक्षेपणीयम् ॥ शौनकः—ऋत्विजाजुह्वतावह्नौबहिःपततियद्धविः । सज्ञेयोवारुणोभागः प्रक्षेप्योविमलेजले॥ तस्मादप्सु विनिक्षिपेत् इति चतुर्थपादस्य वा पाठः ॥ बृहच्छौनकः—हूयमाने हविर्यत्र बहिः पतति यद्धविः । द्रप्सश्चस्कन्दमन्त्रेण तदप्सौ निक्षिपेत्पुनः ॥ इति तद्धूयमानायाश्चर्वाद्याहुतेः हस्ताद् भूमौ पाते ज्ञेयम् ॥ २ इदं मनसे न मम ॥

ॐसहस्रशीर्षा०॥ पुरुषऽए० ॥ एतावानस्य० ॥ त्रिपादूर्द्ध्व० ॥ ततो विरा० ॥ तस्माद्यज्ञात्सर्वहुतꣳ सम्भृतं० ॥ तस्माद्यज्ञात्सर्व-हुतऽऋचꣳ०॥ तस्मादश्वा०॥ तँय्यज्ञं०॥यत्पुरुषं०॥ब्राह्मणोस्स्य०॥ चन्द्रमा मनसो०॥ नाभ्याऽ आसी०॥ यत्पुरुषेण०॥ सप्तास्या०॥ यज्ञेन० सन्ति देवा? स्वोहा ॥

इति शिरोरूपस्य पौरुषस्य एकत्रिंशाध्यायस्य षोडशमन्त्रैरेकाहुतिः ॥

अद्भ्य? सम्भृत इति षण्णां नारायणपुरुष ऋषिः आद्यान तिसृणां त्रिष्टुप् द्वयोरनुष्टुप् अन्त्यायास्त्रिष्टुप् आदित्यो देवत श्रीमहारुद्रप्रीतये होमे विनियोगः ॥

ॐअद्भ्य?सम्भृतꣳ०॥वेदाहमे०॥प्रजापतिश्चरति०॥योदेवेभ्य०॥ रुचम्ब्राह्मं० ॥ श्रीश्चते० लोकम्मऽइषाण स्वाहा ॥ इति उत्तराभिधशिरारूपस्य नारायणीयस्य एकत्रिंशाध्यायस्य षण्मन्त्रैरेकाहुति

आशु? शिशान इति द्वादशानामप्रतिरथ ऋषिः त्रिष्टुप्छन्दः इन्द्रो देवता श्रीमहारुद्रप्रीतये होमे विनियोगः ॥

ॐआशु? शिशानो०॥ सङ्क्रन्दने०॥सऽइषुहस्तैꣳ०॥ बृहस्पते०॥ बलविज्ञा० ॥ गोत्रभिदङ्गोविदं० ॥ अभिगोत्राणि० ॥ इन्द्रऽआसा-न्नेता० ॥ इन्द्रस्य वृष्णो० ॥ उद्धर्षय० ॥ अस्माकमिन्द्रꣳ० ॥ अमीषाञ्चित्तं० सचन्ताम् स्वाहा ॥

इत्यप्रतिरथसूक्तस्यकवचरूपाङ्गस्यसप्तदशाध्यायस्य द्वादशमन्त्रैरेकाहुतिः

---

१ द्विवर्णमेकवर्णवद्धारणात्स्वरमध्ये समानपदे॥पा०शा० अ० ४।सू०१४२ अस्य, अस्मात्, आज्यम्, इत्यादि॥ २ इद जगद्बीजाय पुरुषाय न मम ॥ ३ इदमादित्याय न मम ॥ ४ सप्तदशर्चेनेति कर्कः तस्मात्सप्तदशपक्षे विनियोगे सप्तदशानामित्यूह कृत्वा सप्तदशर्चेन प्रणवादिकेन स्वाहान्तेनाप्रतिरथनैकामाहुतिं जुहुयात् ॥ ५ स्वाहाकारस्य अध्याहारे परे अनुस्वारस्य© इति सन्धिर्न भवति ॥ अध्याहार. अश्रुतपदस्य लौकिकस्यानयन वाक्यनैराकाङ्क्ष्यार्थम् । प्रयोजन चाध्याहृतपदस्य संहितायांप्रयोगो न भवति । सावसान प्रयोग इत्यर्थः ॥ ६ इदमिन्द्राय न मम ॥

विभ्राडित्यस्य विभ्राड्सूर्य ऋषिः जगतीछन्दः सूर्यो देवता उदुत्यमितितिसृणां प्रस्कण्व ऋषिः गायत्री छन्दः सूर्यो देवता तम्प्रत्नथेत्यस्य ब्रह्मस्वयम्भूर्ऋषिः जगतीछन्दः विश्वेदेवा देवताः अयंवेनइत्यस्य ब्रह्मस्वयम्भूर्ऋषिः त्रिष्टुप्छन्दः सोमो देवता चित्रंदेवानामित्यस्य ब्रह्मस्वयम्भूर्ऋषिः त्रिष्टुप्छन्दः सूर्यो देवता आनऽ इत्यस्य अगस्त्यऋषिः त्रिष्टुप्छन्दः सूर्यो देवता यदद्येत्यस्य श्रुतकक्षसुतकक्षावृषी गायत्रीछन्दः सूर्यो देवता तरणिरित्यस्य प्रस्कण्व ऋषिः गायत्री छन्दः सूर्यो देवता तत्सूर्यस्येति द्वयोः कुत्स ऋषिः त्रिष्टुप्छन्दः सूर्यो देवता बण्महाँइतिद्वयोर्जमदग्निर्ऋषिः आद्यस्य बृहतीछन्दः द्वितीयस्य सतो बृहतीछन्दः सूर्यो देवता श्रायन्त इत्यस्य नृमेध ऋषिः बृहतीछन्दः सूर्यो देवता अद्यादेवा इत्यस्य कुत्सऋषिः त्रिष्टुप्छन्दः सूर्यो देवता आकृष्णेनेत्यस्य हिरण्यस्तूप आङ्गिरस ऋषिः त्रिष्टुप्छन्दः सूर्यो देवता श्रीमहारुद्रप्रीतये होमे विनियोगः ॥

ॐ विभ्राड् बृहत्॰॥उदुत्यञ्जातवे॰॥येनापावक॰॥दैव्यावध्वर्यू॰॥ तम्प्रत्नथा पूर्वथा॰ ॥ अयं वेनश्चो॰ ॥ चित्रन्देवाना॰ ॥ आनऽ इडा॰॥यदद्य कच्च॰॥तरणिर्विश्व॰॥ तत्सूर्यस्य दे॰॥तन्मित्रस्य॰ ॥ बण्महाँ॰ । बट् सूर्य्यश्र॰ ॥ श्रायन्तऽ इव॰ ॥ अद्या देवाऽ॰ ॥ आकृष्णेन॰ भुवनानि पश्यन् स्वाहा ॥

इति मैत्रसूक्तस्य नेत्ररूपस्य पञ्चमाङ्गस्य सप्तदशमन्त्रैरेकाहुतिः ॥

---

१ इदं रुद्राय न मम इति रुद्रस्य सूर्यात्मकत्वात् । पञ्चाङ्गस्य पञ्चस्वाहुतिष्वपि इदं रुद्राय न मम इति त्यागः—रुद्रो होवेदꣳसर्वमितिश्रुतेः । एवं पञ्चाङ्गमन्त्रैः पञ्चाहुतीर्जुहुयात् ॥

एवं पञ्चाहुतीर्हुत्वा षडङ्गमन्त्रैर्होमपक्षे रौद्राध्यायस्यार्षेयादिकं स्मृत्वा होमः कार्यः ॥

यथा—नमस्तेरुद्रमन्यव इत्यादिकस्यरौद्राध्यायस्यपरमेष्ठी ऋषिः देवा ऋषयः प्रजापतिर्वा ऋषिः नमस्तेरुद्रेत्यस्य गायत्रीछन्दः याते रुद्रेत्यादीनां तिसृणामनुष्टुप्छन्दः अद्ध्यवोचदित्यादितिसृणां पङ्क्तिश्छन्दः नमोस्तुनीलग्रीवायेत्यादिसप्तानामनुष्टुप्छन्दः मानोमहान्तमितिद्वयोः कुत्स ऋषिः जगतीछन्दः सर्वासामेको रुद्रो देवता नमो हिरण्यबाहवे इत्यादीनि द्रापे इत्यतः प्राक्तनानि सर्वाणि यजूंषि नमोहिरण्यबाहवे इत्यादीनां श्वपतिभ्यश्चवो नम इत्यन्तानां यजुषां हिरण्यबाहुः सेनानीः दिशां च पतिरित्यादिमन्त्रवर्णावगत नामका उभयतो नमस्कारा बहवो रुद्रा देवताः ततो नमो भवाय च रुद्राय चेत्यादीनां प्रखिदतेचेत्यन्तानां यजुषां भवादयो मन्त्रलिङ्गावगता अन्यतरतो नमस्कारा बहवो रुद्रा देवताः ततो नमऽइषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नम इत्यस्य यजुषः उभयतो नमस्कारा बहवो रुद्रा देवताः तत्र नमो हिरण्यबाहव इत्यादयो द्वन्द्विनो रुद्राः नमः सभाभ्य इत्यादयो जातसंज्ञका रुद्रा देवता नमोवःकिरिकेभ्य इत्यादीनाम् अग्निवायुसूर्यहृदयभूतव्याहृतीनाम् अन्यतरतो नमस्कारा बहवो रुद्रा देवताः द्रापेइत्यस्य उपरिष्टाद्बृहतीछन्दः इमारुद्रायेत्यस्याः कुत्सऋषिः जगतीछन्दः यातेरुद्रेत्यस्य अनुष्टुप्छन्दः परिनोरुद्रमीढुष्टमेतिद्वयोः त्रिष्टुप्छन्दः विकिरिद्रसहस्राणीतिद्वयोः अनुष्टुप्छन्दः सप्तानामेको रुद्रो देवता असङ्ख्यातेत्यादीना दशानामनुष्टुप्छन्दः

१ तत्र यजुषामनियताक्षरत्वादेकेषा छन्दो न विद्यत इति कात्यायनोक्तेर्यजुषा छन्दोविशेषानियमो नास्तीत्येके ॥

यहवो रुद्रा देवताः नमोस्तु रुद्रेभ्य इत्यादीनां त्रयाणां यजुषां धृतिश्छन्दः यहवो रुद्रा देवताः श्रीमहारुद्रप्रीतये होमे विनियोगः॥ ॐनमस्ते०॥ यातेरुद्रशिवा०॥ यामिषुङ्गिरिशन्त०॥शिवेनवचसा०॥ अद्ध्यवोचदधि०॥ असौ यस्ताम्म्रो०॥ असौ यो०॥नमोस्तु नी०॥ प्रमुञ्च धन्व०॥विज्ज्यन्धनु—०॥ या तेहेतिर्म्मी०॥ परितेधन्वनो० ॥ अवतत्य०॥ नमस्तऽ आ० ॥ मानो महान्त० ॥ मानस्तोके०॥ नमो हिरण्यबा०॥नमोवञ्चलुशाय०॥ नमोरोहिताय०॥ नम–कृत्स्नाय०॥ नमोवञ्चते० ॥ नमऽउष्णीषिणे०॥ नमो विसृजद्भ्यो०॥ नम–सभा-भ्य–०॥नमोगणेभ्यो०॥नमऽसेनाभ्यऽ०॥नमस्तक्षभ्यो०॥नमऽ श्वभ्यऽ०॥ नम– कपर्दिने० ॥ नमोह्रस्वाय०॥ नमऽआशवे०॥ नमो ज्येष्ठाय० ॥ नमऽसोभ्याय०॥ नमो वन्याय० ॥ नमोबिल्मिने०॥ नमोधृष्णवे० ॥ नमऽस्रुत्याय०॥नमऽकूप्याय० ॥ नमोवात्याय०॥ नम–शङ्गवे०॥नम–शम्भवाय०॥नमऽपार्य्याय०॥नम–सिकत्याय०॥ नमोवृज्याय०॥ नम–शुष्क्याय०॥ नम–पर्ण्णाय०॥ द्रापेऽअन्ध०॥ इमारुद्राय०॥ यातेरुद्रशिवातनू०॥ परिनोरुद्रस्य०॥ मीढुष्टम०॥ विकिरिद्र०॥ सहस्राणि०॥असङ्ख्याता०॥अस्मिन्महत्य०॥नीलग्रीवाऽ शितिकण्ठादिवं०॥ नीलग्रीवाऽशितिकण्ठाऽशर्वाऽ० ॥ ये वृक्षेषु०॥ येभूताना०॥येपथाम्पथि०॥ येतीर्थानि०॥ येन्नेषु०॥ यएतावन्तश्च०॥ नमोस्तुरुद्रेभ्योयेदिवि० ॥ नमोस्तुरुद्रेभ्यो यन्तरिक्षे० ॥ नमोस्तु रुद्रेभ्यायेपृथिव्या० यश्च नो द्वेष्टि तमेषाञ्जम्भेदध्मऽ स्वाहा ॥

इति शतरुद्रियस्य अङ्गरूपस्य षडङ्गस्य षट्षष्टिमन्त्रैरेकाहुति

१ अस्य शतरुद्रियस्य अङ्गरूपाङ्गस्यापि–इदं रुद्राय न ममेति त्याग उचित रुद्रकल्पद्रुमहोमपरिच्छेदे तु नोक्तस्तत्र मूल मृग्यम् ॥ इति षडङ्गपक्षे षडङ्ग-मन्त्रे षडाहुतय ॥

# अथ प्रधानहोमः ॥

अत्र रौद्राध्यायस्यार्षेयादिकं पूर्ववत्स्मृत्वा श्रीमहारुद्रप्रीतये होमे विनियोगः ॥

एकषष्ट्युत्तरशतधामन्त्रविभागात्मकरुद्रहोमस्वाहाकाराः।

ॐनमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः॥ बाहुभ्यामुततेनमः स्वाहा १

ॐया ते रुद्र शिवा तनूरघोरापापकाशिनी ॥
तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि स्वाहा ॥ २

ॐयामिषुङ्गिरिशन्त हस्ते बिभर्ष्यस्तवे ॥
शिवाङ्गिरित्रताङ्कुरु मा हिꣳसीः पुरुषञ्जगत् स्वाहा ॥ ३

ॐशिवेन वचसा त्वा गिरिशाच्छा वदामसि ॥
यथा नः सर्वमिज्जगदयक्ष्मꣳसुमनाऽ असत् स्वाहा ॥ ४

ॐअध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ॥
अहींश्चसर्वाञ्जम्भयन्त्सर्वांश्चयातुधान्योधराचीः परासुव स्वाहा ॥ ५

ॐअसौ यस्ताम्रोऽ अरुणऽ उत बभ्रुः सुमङ्गलः ॥
येचैनꣳरुद्राऽअभितोदिक्षुश्रिताः सहस्रशोवैषाꣳहेडऽईमहे स्वाहा ६

ॐअसौ योवसर्प्पति नीलग्रीवो विलोहितः ॥
उतैनङ्गोपाऽअदृश्रन्नदृश्रन्नुदहार्य्यः सदृष्टोमृडयातिनः स्वाहा ॥ ७

ॐनमोस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ॥
अथो येऽ अस्य सत्वानोहन्तेभ्योकरन्नमः स्वाहा ॥ ८

ॐप्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ॥
याश्च ते हस्तऽ इषवः परा ता भगवो वप स्वाहा ॥ ९

ॐविज्यन्धनुः कपर्दिनो विशल्यो बाणवाँ२ऽ उत ॥
अनेशन्नस्य याऽ इषवऽ आभुरस्य निषङ्गधिः स्वाहा ॥ १०

ॐया ते हेतिर्म्मीढुष्टम हस्ते बभूव ते धनुः ॥
तयास्म्मान्विश्वतस्त्वमयक्ष्मया परिभुज स्वाहा ॥ ११
ॐपरि ते धन्वनो हेतिरस्म्मान्वृणक्तु विश्वतः ॥
अथो यऽ इषुधिस्तवारेऽ अस्म्मन्निधेहि तम् स्वाहा ॥ १२
ॐअवतत्य धनुष्ट्वꣳ सहस्राक्ष शतेषुधे ॥
निशीर्य्यशल्ल्यानाम्मुखा शिवो नः सुमना भव स्वाहा ॥ १३
ॐनमस्तऽ आयुधायानातताय धृष्णवे ॥
उभाभ्यामुत ते नमो बाहुभ्यान्तव धन्वने स्वाहा ॥ १४
ॐमानोमहान्तमुतमानोऽअर्भकम्मानऽउक्षन्तमुतमानऽउक्षितम्॥ मा-
नोवधीꣳपितरम्मोतमातरम्मानःप्रियास्तन्वोरुद्ररीरिषꣳस्वाहा १५
ॐमानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषꣳ ॥
मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तꣳसदमित्त्वाहवामहेस्वाहा १६
ॐनमो हिरण्यबाहवे सेनान्ये दिशाञ्च पतये नमः स्वाहा ॥ १७
ॐनमो वृक्षेभ्यो हरिकेशेभ्यꣳ पशूनाम्पतये नमः स्वाहा ॥ १८
ॐनमः शष्पिञ्जराय त्विषीमते पथीनाम्पतये नमः स्वाहा ॥ १९
ॐनमो हरिकेशायोपवीतिने पुष्टानाम्पतये नमः स्वाहा ॥ २०
ॐनमो बभ्लुशाय व्याधिनेन्नानाम्पतये नमः स्वाहा ॥ २१
ॐनमो भवस्य हेत्यै जगताम्पतये नमः स्वाहा ॥ २२
ॐनमो रुद्रायाततायिने क्षेत्राणाम्पतये नमः स्वाहा ॥ २३
ॐनमः सूतायाहन्त्यै वनानाम्पतये नमः स्वाहा ॥ २४
ॐनमो रोहिताय स्थपतये वृक्षाणाम्पतये नमः स्वाहा ॥ २५
ॐनमो भुवन्तये वारिवस्कृतायौषधीनाम्पतये नमः स्वाहा ॥ २६
ॐनमो मन्त्रिणे वाणिजाय कक्षाणाम्पतये नमः स्वाहा ॥ २७

ॐनमऽ उच्चैर्घोषायाक्रन्दयते पत्तीनाम्पतये नमः स्वाहा ॥ २८
ॐनमः कृत्स्नायतया धावते सत्त्वनाम्पतये नमः स्वाहा ॥ २९
ॐनमᳬसहमानायनिव्याधिनऽआव्याधिनीनाम्पतये नमः स्वाहा ३०
ॐनमो निषङ्गिणे ककुभाय स्तेनानाम्पतये नमः स्वाहा ॥ ३१
ॐनमो निचेरवे परिचरायारण्यानाम्पतये नमः स्वाहा ॥ ३२
ॐनमो वञ्चते परिवञ्चते स्तायूनाम्पतये नमः स्वाहा ॥ ३३
ॐनमो निषङ्गिणऽ इषुधिमते तस्कराणाम्पतये नमः स्वाहा ॥ ३४
ॐनमः सृकायिभ्यो जिघाᳬंसद्भ्योमुष्णताम्पतयेनमः स्वाहा ३५
ॐनमोसिमद्भ्योनक्तञ्चरद्भ्यो विकृन्तानाम्पतये नमः स्वाहा॥ ३६
ॐनमऽउष्णीषिणे गिरिचराय कुलुञ्चानाम्पतये नमः स्वाहा ॥ ३७
ॐनमऽइषुमद्भ्यो धन्वायिभ्यश्च वो नमः स्वाहा ॥ ३८
ॐनमऽ आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमः स्वाहा ॥ ३९
ॐनमऽ आयच्छद्भ्योस्यद्भ्यश्च वो नमः स्वाहा ॥ ४०
ॐनमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमः स्वाहा ॥ ४१
ॐनमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमः स्वाहा ॥ ४२
ॐनमᳬ शयानेभ्यऽआसीनेभ्यश्च वो नमः स्वाहा ॥ ४३
ॐनमास्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः स्वाहा ॥ ४४
ॐनमः सभाभ्यः सभापतिभ्यश्च वो नमः स्वाहा ॥ ४५
ॐनमोश्वेभ्योश्वपतिभ्यश्च वो नमः स्वाहा ॥ ४६
ॐनमऽ आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमः स्वाहा ॥ ४७
ॐनमऽउगणाभ्यस्तृᳬहतीभ्यश्च वो नमः स्वाहा ॥ ४८
ॐनमो गणेभ्यो गणपतिभ्यश्च वो नमः स्वाहा ॥ ४९
ॐनमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः स्वाहा ॥ ५०
ॐनमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः स्वाहा ॥ ५१

ॐनमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः स्वाहा ॥ ५२
ॐनमऽ सेनाभ्यऽ सेनानिभ्यश्च वो नमः स्वाहा ॥ ५३
ॐनमो रथिभ्योऽ अरथेभ्यश्च वो नमः स्वाहा ॥ ५४
ॐनमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्च वो नमः स्वाहा ॥ ५५
ॐनमो महद्भ्योऽअर्भकेभ्यश्च वो नमः स्वाहा ॥ ५६
ॐनमस्तक्षभ्यो रथकारेभ्यश्च वो नमः स्वाहा ॥ ५७
ॐनमऽ कुलालेभ्यऽ कर्मारेभ्यश्च वो नमः स्वाहा ॥ ५८
ॐनमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमः स्वाहा ॥ ५९
ॐनमः श्वनिभ्यो मृगयुभ्यश्च वो नमः स्वाहा ॥ ६०
ॐनमऽ श्वभ्यऽ श्वपतिभ्यश्च वो नमः स्वाहा ॥ ६१
ॐनमो भवाय च रुद्राय च स्वाहा ॥ ६२
ॐनमः शर्वाय च पशुपतये च स्वाहा ॥ ६३
ॐनमो नीलग्रीवाय च शितिकण्ठाय च स्वाहा ॥ ६४
ॐनमः कपर्दिने च व्युप्तकेशाय च स्वाहा ॥ ६५
ॐनमः सहस्राक्षाय च शतधन्वने च स्वाहा ॥ ६६
ॐनमो गिरिशयाय च शिपिविष्टाय च स्वाहा ॥ ६७
ॐनमो मीढुष्टमाय चेषुमते च स्वाहा ॥ ६८
ॐनमो ह्रस्वाय च वामनाय च स्वाहा ॥ ६९
ॐनमो बृहते च वर्षीयसे च स्वाहा ॥ ७०
ॐनमो वृद्धाय च सवृधे च स्वाहा ॥ ७१
ॐनमोऽग्र्याय च प्रथमाय च स्वाहा ॥ ७२
ॐनमऽआशवे चाजिराय च स्वाहा ॥ ७३
ॐनमऽ शीघ्र्याय च शीभ्याय च स्वाहा ॥ ७४

ॐनमऽऊर्म्म्याय चावस्वन्याय च स्वाहा ॥ ७५
ॐनमो नादेयाय च द्वीप्याय च स्वाहा ॥ ७६
ॐनमो ज्येष्ठाय च कनिष्ठाय च स्वाहा ॥ ७७
ॐनम–पूर्वजाय चापरजाय च स्वाहा ॥ ७८
ॐनमो मद्ध्यमाय चापगल्भाय च स्वाहा ॥ ७९
ॐनमो जघन्याय च बुध्न्याय च स्वाहा ॥ ८०
ॐनमः सोभ्याय च प्रतिसर्य्याय च स्वाहा ॥ ८१
ॐनमो याम्म्याय च क्षेम्म्याय च स्वाहा ॥ ८२
ॐनमः श्लोक्याय चावसान्याय च स्वाहा ॥ ८३
ॐनमऽ उर्व्वर्य्याय च खल्ल्याय च स्वाहा ॥ ८४
ॐनमो वन्याय च कक्ष्याय च स्वाहा ॥ ८५
ॐनम– श्रवाय च प्रतिश्रवाय च स्वाहा ॥ ८६
ॐनमऽआशुषेणाय चाशुरथाय च स्वाहा ॥ ८७
ॐनमः शूराय चावभेदिने च स्वाहा ॥ ८८
ॐनमो बिल्म्मिने च कवचिने च स्वाहा ॥ ८९
ॐनमो वर्म्मिणे च वरूथिने च स्वाहा ॥ ९०
ॐनम– श्रुताय च श्रुतसेनाय च स्वाहा ॥ ९१
ॐनमो दुन्दुभ्याय चाहनन्याय च स्वाहा ॥ ९२
ॐनमो धृष्णवे च प्रमृशाय च स्वाहा ॥ ९३
ॐनमो निषङ्गिणे चेषुधिमते च स्वाहा ॥ ९४
ॐनमस्तीक्ष्णेषवे चायुधिने च स्वाहा ॥ ९५
ॐनम– स्वायुधाय च सुधन्वने च स्वाहा ॥ ९६
ॐनमः स्रुत्याय च पथ्याय च स्वाहा ॥ ९७
ॐनमः काट्याय च नीप्याय च स्वाहा ॥ ९८

ॐ नमः कुल्ल्याय च सरस्याय च स्वाहा ॥ ९९
ॐ नमो नादेयाय च वैशन्ताय च स्वाहा ॥ १००
ॐ नमः कूप्याय चावट्याय च स्वाहा ॥ १०१
ॐ नमो वीध्र्याय चातप्याय च स्वाहा ॥ १०२
ॐ नमो मेघ्याय च विद्युत्याय च स्वाहा ॥ १०३
ॐ नमो वर्ष्याय चावर्ष्याय च स्वाहा ॥ १०४
ॐ नमो वात्याय च रेष्म्याय च स्वाहा ॥ १०५
ॐ नमो वास्तव्याय च वास्तुपाय च स्वाहा ॥ १०६
ॐ नमः सोमाय च रुद्राय च स्वाहा ॥ १०७
ॐ नमस्ताम्राय चारुणाय च स्वाहा ॥ १०८
ॐ नमः शङ्गवे च पशुपतये च स्वाहा ॥ १०९
ॐ नमः उग्राय च भीमाय च स्वाहा ॥ ११०
ॐ नमोऽग्रेवधाय च दूरेवधाय च स्वाहा ॥ १११
ॐ नमो हन्त्रे च हनीयसे च स्वाहा ॥ ११२
ॐ नमो वृक्षेभ्यो हरिकेशेभ्यः स्वाहा ॥ ११३
ॐ नमस्ताराय स्वाहा ॥ ११४
ॐ नमः शम्भवाय च मयोभवाय च स्वाहा ॥ ११५
ॐ नमः शङ्कराय च मयस्कराय च स्वाहा ॥ ११६
ॐ नमः शिवाय च शिवतराय च स्वाहा ॥ ११७
ॐ नमः पार्य्याय चावार्य्याय च स्वाहा ॥ ११८
ॐ नमः प्रतरणाय चोत्तरणाय च स्वाहा ॥ ११९
ॐ नमस्तीर्थ्याय च कूल्याय च स्वाहा ॥ १२०
ॐ नमः शष्प्याय च फेन्याय च स्वाहा ॥ १२१
ॐ नमः सिकत्याय च प्रवाह्याय च स्वाहा ॥ १२२

ॐ नम॰ किंशिलाय च क्षयणाय च स्वाहा ॥ १२३
ॐ नम॰ कपर्दिने च पुलस्तये च स्वाहा ॥ १२४
ॐ नमऽइरिण्याय च प्रपथ्याय च स्वाहा ॥ १२५
ॐ नमो व्रज्याय च गोष्ठ्याय च स्वाहा ॥ १२६
ॐनमस्तल्प्याय च गेह्याय च स्वाहा ॥ १२७
ॐ नमो हृदय्याय च निवेष्प्याय च स्वाहा ॥ १२८
ॐनमः काट्याय च गह्वरेष्ठाय च स्वाहा ॥ १२९
ॐनमः शुष्क्याय च हरित्याय च स्वाहा ॥ १३०
ॐनम॰ पाᳬसव्याय च रजस्याय च स्वाहा ॥ १३१
ॐनमो लोप्याय चोलप्याय च स्वाहा ॥ १३२
ॐनमऽ ऊर्व्याय च सूर्व्याय च स्वाहा ॥ १३३
ॐनम॰ पर्णाय च पर्णशदाय च स्वाहा ॥ १३४
ॐनमऽ उद्गुरमाणाय चाभिघ्नते च स्वाहा ॥ १३५
ॐनमऽ आखिदते च प्रखिदते च स्वाहा ॥ १३६
ॐनमऽ इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमः स्वाहा ॥ १३७
ॐनमो वः किरिकेभ्यो देवानाᳬ हृदयेभ्यः स्वाहा ॥ १३८
ॐनमो विचिन्वत्केभ्यो देवानाᳬ हृदयेभ्यः स्वाहा ॥ १३९
ॐनमो विक्षिणत्केभ्यो देवानाᳬ हृदयेभ्यः स्वाहा ॥ १४०
ॐनमऽ आनिर्हतेभ्यो देवानाᳬ हृदयेभ्यः स्वाहा ॥ १४१
ॐद्रापेऽ अन्धसस्पते दरिद्र नीललोहित ॥ आसाम्प्रजानामेषाम्प
शूनाम्मा भेर्म्मा रोङ्मो च नः किञ्चनाममत् स्वाहा ॥ १४२

---

१ अत्र दीर्घात्परोऽप्यनुस्वारो द्विमात्रोह्रस्वर्णव्यञ्जनादिगत्वात् ॥ उक्तं च याज्ञवल्क्यशिक्षायाम्
अनुस्वारो द्विमात्र स्याद्द्रस्वर्णव्यञ्जनादिग । ह्रस्वात्त यदि वा दीर्घाद्देवानाᳬ हृदयेभ्य इति ॥

ॐइमा रुद्राय तवसे कपर्दिनेक्षयद्वीरायप्रभरामहेमती? ॥ यथाशम-
सद्द्विपदेचतुष्पदेविश्वम्पुष्टङ्गामेऽअस्मिन्ननातुरम् स्वाहा १४३
ॐया ते रुद्र शिवा तनू? शिवा विश्वाहा भेषजी ॥
शिवा रुतस्य भेषजी तया नो मृड जीवसे स्वाहा १४४
ॐपरि नो रुद्रस्य हेतिर्वृणक्तुपरित्वेषस्यदुर्म्मतिरघायो?॥ अवस्थिर-
रा मघवद्भ्यस्तनुष्व मीड्ढ्वस्तोकाय तनयाय मृड स्वाहा॥१४५
ॐमीढुष्टम शिवतम शिवो न—सुमना भव॥ परमे वृक्षऽआयुधन्निधा-
यकृत्तिं वसानऽ आचर पिनाकम्बिभ्रदागहि स्वाहा ॥ १४६
ॐविकिरिद्र विलोहित नमस्तेऽ अस्तु भगवऽ ॥
यास्ते सहस्रऽ हेतयोन्यमस्म्मन्निवपन्तु ताऽ स्वाहा ॥ १४७
ॐ सहस्राणि सहस्रशो बाह्वोस्तव हेतय— ॥
तासामीशानो भगवऽ पराचीना मुखा कृधि स्वाहा ॥ १४८
ॐअसङ्ख्याता सहस्राणि ये रुद्रा अधि भूम्म्याम् ॥
तेषाऽ सहस्रयोजनेव धन्वानि तन्मसि स्वाहा ॥ १४९
ॐ अस्मिन्नमहत्यर्ण्णवेन्तरिक्षे भवा अधि ॥
तेषाऽ सहस्रयोजनेव धन्वानि तन्मसि स्वाहा ॥ १५०
ॐनीलग्ग्रीवाऽ शितिकण्ठा दिवऽ रुद्राऽ उपश्रिताऽ ॥
तेषाऽसहस्रयोजनेव धन्वानि तन्मसि स्वाहा ॥ १५१
ॐ नीलग्ग्रीवाऽ शितिकण्ठाऽ शर्वाऽ अध? क्षमाचरा? ॥
तेषाऽ सहस्रयोजनेव धन्वानि तन्मसि स्वाहा ॥ १५२
ॐ ये वृक्षेषु शष्पिञ्जरा नीलग्ग्रीवा विलोहिताऽ ॥
तेषाऽ सहस्रयोजनेव धन्वानि तन्मसि स्वाहा ॥ १५३

ॐ ये भूतानामधिपतयो विशिखासः कपर्दिनः ॥
तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसि स्वाहा ॥ १५४
ॐ ये पथाम्पथिरक्षय ऐलबृदाऽ आयुर्य्युधः ॥
तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसि स्वाहा ॥ १५५
ॐ ये तीर्त्थानि प्पचरन्ति सृकाहस्ता निषङ्गिणः ॥
तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसि स्वाहा ॥ १५६
ॐ येन्नेषु विविद्ध्यन्ति पात्रेषु पिवतो जनान् ॥
तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसि स्वाहा ॥ १५७
ॐ यऽ एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे ॥
तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसि स्वाहा ॥ १५८
ॐ नमोस्तु रुद्रेब्भ्यो ये दिवि येषां वर्षमिषवः ॥ तेब्भ्यो दश प्प्राचीर्दश दक्षिणा दश प्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः ॥
तेब्भ्यो नमोऽ अस्तु ते नोवन्तु ते नो मृडयन्तु ते यन्द्विष्म्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः स्वाहा ॥ १५९
ॐ नमोस्तु रुद्रेब्भ्यो येन्तरिक्षे येषां वातऽ इषवः ॥ तेब्भ्यो दश प्प्राचीर्दश दक्षिणा दश प्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः ॥
तेब्भ्यो नमोऽ अस्तु ते नोवन्तु ते नो मृडयन्तु ते यन्द्विष्म्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः स्वाहा ॥ १६०
ॐ नमोस्तु रुद्रेब्भ्यो ये पृथिव्यां येषामन्नमिषवः ॥ तेब्भ्यो दश प्प्राचीर्दश दक्षिणा दश प्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः ॥
तेब्भ्यो नमोऽ अस्तु ते नोवन्तु ते नो मृडयन्तु ते यन्द्विष्म्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः स्वाहा ॥ १६१

॥ एकषष्ट्युत्तरशतधामन्त्रविभागात्मकरुद्रहोमस्वाहाकाराः सम्पूर्णाः ॥

एवम् एकपञ्चाशदुत्तरशतधामन्त्रविभागरौद्राध्यायेनैकादशवारंजुहुयात् ॥

वयᳬ सोमेत्यस्य बन्धुर्ऋषिः गायत्रीछन्दः सोमोदेवता एषत इत्यनयोः बन्धुर्ऋषिः सामपङ्क्तिर्यजुर्जगतीछन्दांसि रुद्रो देवता अवरुद्रमित्यस्यप्रजापतिर्ऋषिःपङ्क्तिश्छन्दःरुद्रो देवता भेषजमसीत्यस्य प्रजापतिर्ऋषिः ककुप्छन्दः रुद्रो देवता त्र्यम्बकमित्यनयोः क्रमेण वसिष्ठ॰ प्रजापती ऋषी अनुष्टुप्छन्दः त्र्यम्बको रुद्रो देवता एतत्त इत्यस्य प्रजापतिर्ऋषिः आस्तारपङ्क्तिश्छन्दः रुद्रो देवता त्र्यायुषमित्यस्य नारायणऋषिःउष्णिक्छन्दः आशीर्देवता शिवोनामेत्यस्य प्रजापतिर्ऋषिः प्राजापत्याबृहतीछन्दःक्षुरोदेवतानिवर्त्तयामीत्यस्यप्रजापतिर्ऋषिः प्राजापत्यात्रिष्टुप्छन्दः लिङ्गोक्ता देवता श्रीमहारुद्रप्रीतये होमे विनियोगः॥

ॐवयᳬसोम॰॥एषतेरुद्र॰॥अवरुद्रम॰॥भेषजमसि॰॥ त्र्यम्बकँयजा॰॥एतत्तेरुद्रा॰॥त्र्यायुषञ्जम॰॥शिवोनामासि॰सुवीर्य्याय स्वाहा॥

इति अष्टकण्डिकाःमेकेन महच्छिरसा प्रतिलघुरुद्रान्ते एकामाहुतिं जुहुयात् ॥

## ॥ अथ शान्त्यध्यायमन्त्रैर्होमः ॥

ऋचं वाचमित्यस्यदध्यङ्ङाथर्वणऋषिःचतुर्णायजुषां दैवीजगतीछन्दः ऋगादयोलिङ्गोक्ता देवताः वागोजइत्यस्य यजुर्जगतीछन्दः वागादिलिङ्गोक्ता देवताः यन्मइत्यस्यदध्यङ्ङाथर्वणऋषिः पङ्क्तिश्छन्दः बृहस्पतिर्देवतातिसृणांमहाव्याहृतीनां दध्यङ्ङाथर्वणऋषिःदैवीगायत्रीदैव्युष्णिक्दैवीअनुष्टुप्छन्दांसिअग्निवायुसूर्यादेवताःतत्सवितुरित्यस्य

---

१ खण्डदीक्षितमहारुद्रपद्धतौ प्रतिपत्तिर्ऋषिः । कल्पद्रुममहामपरिच्छेदे प्रजापतिर्ऋषिः इत्युदितमस्ति पर त्वस्माभिः सर्वानुक्रमसूत्रानुसारतः बन्धुर्ऋषि इत्येव मुद्रितमस्ति ॥ अस्य महच्छिरसः इदं रुद्राय न ममेति त्याग उचितः तथापि कल्पद्रुमकारैर्नोक्तः तत्र मूलं मृग्यम् ॥

दध्यङ्ङाथर्वणऋषिः गायत्रीछन्दः सवितादेवता कयानइत्यस्यदध्यङ्ङाथर्वणऋषिः गायत्रीछन्दः इन्द्रो देवता कस्त्वेत्यस्यदध्यङ्ङाथर्वणऋषिः गायत्रीछन्दः इन्द्रोदेवता अभीषुणइत्यस्यदध्यङ्ङाथर्वणऋषिः पादनिचृद्गायत्रीछन्दः इन्द्रोदेवता कयात्त्वमित्यस्यदध्यङ्ङाथर्वणऋषिः अनिरुक्तागायत्रीछन्दःइन्द्रोदेवताइन्द्रोविश्वस्येतिदध्यङ्ङाथर्वणऋषिः द्विपदाविराट्छन्दःइन्द्रोदेवताशन्नोमित्रइत्यस्यदध्यङ्ङाथर्वणऋषिःअनुष्टुप्छन्दः मित्रावरुणादयोलिङ्गोक्ता देवताः शन्नोवातइत्यस्यदध्यङ्ङाथर्वणऋषिः अनुष्टुप्छन्दः वाय्वादयोलिङ्गोक्ता देवताः अहानिशामित्यस्य दध्यङ्ङाथर्वणऋषिः द्विपदागायत्रीछन्दः अहानिरात्रयश्चदेवताः शन्नऽइन्द्राग्नीत्यस्यदध्यङ्ङाथर्वणऋषिः त्रिष्टुप्छन्दः इन्द्राग्नी इन्द्रावरुणौ इन्द्रापूषणौ इन्द्रासोमौच देवताः शन्नोदेवीरित्यस्यदध्यङ्ङाथर्वणऋषिः गायत्रीछन्दः आपो देवताः स्योनापृथिवीत्यस्य दध्यङ्ङाथर्वणऋषिः गायत्रीछन्दः पृथिवीदेवताआपोहिष्ठेत्यस्यदध्यङ्ङाथर्वणऋषिः गायत्रीछन्दःआपोदेवताःयोवः शिवतमइत्यस्यदध्यङ्ङाथर्वणऋषिः गायत्रीछन्द आपो देवताः तस्माऽअरङ्गमामवइत्यस्यदध्यङ्ङाथर्वणऋषिः गायत्रीछन्दः आपो देवताः द्यौःशान्तिरित्यस्य दध्यङ्ङाथर्वणऋषिः एकाधिकशक्करीछन्दः द्यौरादयोलिङ्गोक्ता देवताः दृतेदृंहमाइत्यस्यदध्यङ्ङाथर्वणऋषिः ब्राह्मी अनुष्टुप्छन्दः घर्मो देवता दृतेदृंहमाज्योक्ते इत्यस्य दध्यङ्ङाथर्वणऋषिः उष्णिक्छन्दः घर्मो देवता नमस्तेहरस इत्यस्य दध्यङ्ङाथर्वणऋषिः बृहतीछन्दः अग्निर्देवताः नमस्तेऽअस्त्वित्यस्य दध्यङ्ङाथर्वणऋषिः अनुष्टुप्छन्दः विद्युत्स्तनयित्नुर्भग-

वान्देवता यतोयत इत्यस्य दध्यङ्ङाथर्वण ऋषिः अनुष्टुप्छन्दः महावीरो देवता सुमित्रियान इत्यस्य दध्यङ्ङाथर्वण ऋषिः प्राजापत्या जगती आपो देवताः तच्चक्षुरित्यस्य दध्यङ्ङाथर्वण ऋषिः उष्णिक् छन्दः सूर्यो देवताः सर्वेषां शान्त्यर्थेहोमे विनियोगः ॥

ॐऋचंवाचम्प्रपद्ये मनोयजुꣳप्रपद्ये सामप्राणम्प्रपद्ये चक्षुꣳश्रोत्रम्प्रपद्ये ॥ वागोजꣳसहौजोमयिप्राणापानौस्वाहा ॥ १ ॥

ॐयन्मेछिद्रञ्चक्षुषोहृदयस्यमनसोवातितृण्णम्बृहस्पतिर्मेतद्दधातु ॥ शन्नोभवतुभुवनस्ययस्पतिःस्वाहा ॥ २ ॥

ॐभूर्भुवꣳस्वः ॥ तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात्स्वाहा ॥ ३ ॥

ॐकयानश्चित्रऽआभुवदूतीसदावृधꣳसखा ॥ कयाशचिष्ठयावृतास्वाहा ॥ ४ ॥

ॐकस्त्वासत्योमदानाम्मꣳहिष्ठोमत्सदन्धसꣳ ॥ दृढाचिदारुजेवसुस्वाहा ॥ ५ ॥

ॐअभीषुणꣳसखीनामविताजरितॄणाम् ॥ शतम्भवास्यूतिभिःस्वाहा ॥ ६ ॥

ॐकयात्वन्नऽऊत्याभिप्रमन्दसेवृषन् ॥ कयास्तोतृभ्यऽआभरँ स्वाहा ॥ ७ ॥

---

१ इद वाचे मनसे प्राणाय चक्षुषे श्रोत्राय वाचे ओजसे प्राणापानाभ्या न मम ॥
२ इद बृहस्पतय न मम ॥ ३ इदमग्निवायुसूर्येभ्य. सवित्रे च न मम ॥
४ इदमिन्द्राय न मम ॥ ५ इदमिन्द्राय न मम ॥ ६ इदमिन्द्राय न मम ॥
७ इदमिन्द्राय न मम ॥

ॐइन्द्रोविश्वस्यराजति ॥ शन्नोऽअस्तुद्विपदेशञ्चतुष्पदेस्वाहा ॥ ८ ॥

ॐशन्नोमित्र?शंवरुण(शन्नोभवत्वर्य्यमा॥ शन्नऽइन्द्रोबृहस्पतिशन्नो-
विष्णुरुरुक्रम?स्वाहा ॥ ९ ॥

ॐशन्नोवात-पवताशन्नस्तपतुसूर्य्य- ॥ शन्नकनिक्रदद्देव?पर्ज्ज-
न्योऽअभिवर्षतुस्वाहा ॥ १० ॥

ॐअहानिशम्भवन्तुनशरात्रीप्रतिधीयताम् ॥ शन्नऽइन्द्राग्नीभ
तामवोभिशन्नइन्द्रावरुणारातहव्या ॥ शन्नऽइन्द्रापूषणावाजस
तौशमिन्द्रासोमासुवितायशंय्यो?स्वाहा ॥ ११ ॥

ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये ॥ शंय्योरभिस्स्रवन्तुन
स्वाहा ॥ १२ ॥

ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानशर्म्मसप्रथा
स्वाहा ॥ १३ ॥

ॐआपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन॥महेरणायचक्षसेस्वाहा॥१

ॐयोव-शिवतमोरसस्तस्यभाजयतेहन-॥उशतीरिवमातर-स्वाहा॥१

ॐतस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचन
स्वाहा ॥ १६ ॥

---

१ इदमिन्द्राय न मम ॥ २ इद मित्राय वरुणायार्यम्णे इन्द्राय बृहस्पत
उरुक्रमाय विष्णवे च न मम ॥ ३ इद वायवे सूर्याय पर्जन्याय च न मम ।
४ इदमिन्द्राग्निभ्या इन्द्रावरुणाभ्या इन्द्रापूषाभ्या इन्द्रासोमाभ्या च न मम ।
५ इदमद्‌भ्यो न मम ॥ ६ इद पृथिव्यै न मम ॥ ७ इदमद्‌भ्यो न मम ॥
८ इदमद्‌भ्यो न मम ॥ ९ इदमद्‌भ्यो न मम ॥

ॐद्यौ?शान्तिरन्तरिक्षᳬशान्ति–पृथिवीशान्तिराप꣡शान्तिरोषधय꣡ शान्ति– ॥ वनस्पतय꣡शान्तिर्विश्वेदेवा?शान्तिर्ब्रह्मशान्ति꣡सर्वᳬ शान्ति꣡शान्तिरेवशान्ति꣡सामाशान्तिरेधिस्वाहा[१] ॥ १७ ॥

ॐदृतेदृᳬहमामित्रस्यमाचक्षुपास र्वाणिभूतानिसमीक्षन्ताम्॥मित्रस्याहं- चक्षुपासर्वाणिभूतानिसमीक्षे॥ मित्रस्यचक्षुपासमीक्षामहेस्वाहा[२] १८

ॐदृतेदृᳬहमा॥ज्योक्तेसन्दृशिजीव्यासञ्ज्योक्तेसन्दृशिजीव्यासंस्वाहा[३]

ॐनमस्तेह रसेशोचिषेनमस्तेऽअस्त्वर्चिषे ॥ अन्यॉस्तेऽअस्मत्तपन्तु- हेतय–पावकोऽअस्मभ्यᳬशिवोभवस्वाहा[४] ॥ २० ॥

ॐनमस्तेऽअस्तुविद्युतेनमस्ते स्तनयित्नवे॥नमस्तेभगवन्नस्तुयत꣡स्व– समीहसेस्वाहा[५] ॥ २१ ॥

ॐयतोयत꣡समीहसेततोनोऽअभयङ्कुरु॥ शन्न–कुरुप्रजाभ्योभयन्न꣡ पशुभ्य– स्वाहा[६] ॥ २२ ॥

ॐसुमित्रियानऽआपऽओषधय꣡ सन्तुदुर्मित्रियास्तस्मैसन्तुयोस्मा- न्द्वेष्टियञ्चवयन्द्विष्म?स्वाहा[७] ॥ २३ ॥

ॐतच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरद–शतञ्जीवेमशरद– शतᳬशृणुयामशरद–शतम्प्रब्रवामशरद–शतमदीना꣡स्यामशरद– शतम्भूयश्चशरद–शतात्स्वाहा[८] ॥ २४ ॥

एवं प्रत्यहं एकस्य द्वयोः त्रयाणां वा साङ्गलघुरुद्राणां हवनं कार्यम्॥

---

१ इद दिवेन्तरिक्षाय पृथिव्यै अद्भ्य ओषधीभ्यो वनस्पतिभ्यो विश्वेभ्यो देवेभ्यो ब्रह्मणे सर्वस्मै शान्त्यै च न मम॥ २ इद धर्माय न मम॥ ३ इद धर्माय न मम॥ ४ इदमग्नये न मम॥ ५ इद विद्युते स्तनयित्नवे भगवते च न मम॥ ६ इद महावीराय न मम॥ ७ इदमद्भ्यो न मम॥ ८ इद सूर्याय न मम॥

अन्तिमदिने प्रधानहोमानन्तरं त्रयश्चत्वारिंशद्रेखात्मकहरिहरात्मकद्वादशलिङ्गतोभद्रदेवताहोमः॥तत्रादौ सर्वतोभद्रस्यपट्पञ्चाशद्देवताहोमः॥ दशविप्रैः घृताक्ततिलद्रव्यम् एकेन केवलाज्यं गृहीत्वा कुण्डपरितः उपविश्य प्रत्येकं दशदशघृताक्ततिलाहुतिभिः एकैकयाऽऽज्याहुत्या च होमः कार्यः ॥

१ ॐब्रह्मणे नमः स्वाहा
२ ॐसोमाय नमः स्वाहा
३ ॐईशानाय नमः स्वाहा
४ ॐइन्द्राय नमः स्वाहा
५ ॐअग्नये नमः स्वाहा
६ ॐयमाय नमः स्वाहा
७ ॐनिर्ऋतये नमः स्वाहा
८ ॐवरुणाय नमः स्वाहा
९ ॐवायवे नमः स्वाहा
१० ॐअष्टवसुभ्यो नमः स्वाहा
११ ॐएकादशरुद्रेभ्यो नमःस्वा
१२ ॐद्वादशादित्येभ्योनमःस्वा
१३ ॐअश्विभ्यां नमः स्वाहा
१४ ॐविश्वेभ्योदेवेभ्योनमःस्वा
१५ ॐसप्तयक्षेभ्यो नमः स्वाहा
१६ ॐभूतनागेभ्यो नमः स्वाहा
१७ ॐगन्धर्वाप्सरोभ्योनमःस्वाह
१८ ॐस्कन्दाय नमः स्वाहा
१९ ॐनन्दिने नमः स्वाहा
२० ॐशूलमहाकालाभ्यांनमःस्वा॰

१ केषुचित्पुस्तकेष्वत्र–सर्पेभ्यो नम सर्पान्० भूतेभ्यो नम भूतान्० इतिदेवताद्वयस्थापनमस्ति ॥२॥ केषुचित्पुस्तकेष्वत्र ईश्वराय नम ईश्वर शूलाय नम शूल महाकालाय नम. महाकालम् इति देवतात्रयस्थापन प्रोक्तमस्ति॥३ क्वचित् ईश्वरस्थापन नास्ति॥ पर चैवकरणे एकोनपञ्चाशद्देवता वा अष्टपञ्चाशद्देवता भवन्ति ॥ भूतनागेत्यभिधान सर्पस्याप्यरपर्याय एव ॥ शूलमहाकालयोः पृथक्स्थापन षट्पञ्चाशद्गणनायामाधिक्य भवति तत्र शूलमहाकालयो एकवद्भाववत्वात् अग्रे त्रिशूलस्य च ग्रहणात् । देवतास्तु षट्पञ्चाशदेव ॥

२१ ॐदक्षादिसप्तगणेभ्योनमःस्वा०
२२ ॐदुर्गायै नमः स्वाहा
२३ ॐविष्णवे नमः स्वाहा
२४ ॐस्वधायै नमः स्वाहा
२५ ॐमृत्युरोगाभ्यां नमः स्वाहा
२६ ॐगणपतये नमः स्वाहा
२७ ॐअद्भ्यो नमः स्वाहा
२८ ॐमरुद्भ्यो नमः स्वाहा
२९ ॐपृथिव्यै नमः स्वाहा
३० ॐगङ्गादिनदीभ्यो नमः स्वाहा
३१ ॐसप्तसागरेभ्यो नमः स्वाहा
३२ ॐमेरवे नमः स्वाहा
३३ ॐगदायै नमः स्वाहा
३४ ॐत्रिशूलाय नमः स्वाहा
३५ ॐवज्राय नमः स्वाहा
३६ ॐशक्तये नमः स्वाहा
३७ ॐदण्डाय नमः स्वाहा
३८ ॐखड्गाय नमः स्वाहा
३९ ॐपाशाय नमः स्वाहा
४० ॐअङ्कुशाय नमः स्वाहा
४१ ॐगोतमाय नमः स्वाहा
४२ ॐभरद्वाजाय नमःस्वाहा
४३ ॐविश्वामित्राय नमः स्वाहा
४४ ॐकश्यपाय नमः स्वाहा
४५ ॐजमदग्नये नमः स्वाहा
४६ ॐवसिष्ठाय नमः स्वाहा
४७ ॐअत्रये नमः स्वाहा
४८ ॐअरुन्धत्यै नमः स्वाहा
४९ ॐऐन्द्र्यै नमः स्वाहा
५० ॐकौमार्यै नमः स्वाहा
५१ ॐब्राह्म्यै नमः स्वाहा
५२ ॐवाराह्यै नमः स्वाहा
५३ ॐचामुण्डायै नमः स्वाहा
५४ ॐवैष्णव्यै नमः स्वाहा
५५ ॐमाहेश्वर्यै नमः स्वाहा
५६ ॐवैनायक्यै नमः स्वाहा

त्रयश्चत्वारिंशद्रेखात्मकहरिहरमण्डलस्थद्वादशलिङ्गतोभद्रदेवानां प्रत्येकं दशदशघृताक्ततिलाहुतिभिः एकैकयाऽऽज्याहुत्या होमः ॥

१ ॐशिवाय नमः स्वाहा
२ ॐतत्पुरुषाय नमः स्वाहा
३ ॐपशुपतये नमः स्वाहा
४ ॐउग्राय नमः स्वाहा
५ ॐअघोराय नमः स्वाहा
६ ॐरुद्राय नमः स्वाहा
७ ॐभवाय नमः स्वाहा
८ ॐसद्योजाताय नमः स्वाहा
९ ॐसर्वजाताय नमः स्वाहा
१० ॐमहालिङ्गाय नमः स्वाहा
११ ॐवामदेवाय नमः स्वाहा
१२ ॐभीमाय नमः स्वाहा
१३ ॐअसिताङ्गभैरवाय नमः स्वाहा
१४ ॐरुरुभैरवाय नमः स्वाहा
१५ ॐचण्डभैरवाय नमः स्वाहा
१६ ॐक्रोधभैरवाय नमः स्वाहा
१७ ॐउन्मत्तभैरवाय नमः स्वाहा
१८ ॐकपालीभैरवाय नमःस्वाहा
१९ ॐभीषणभैरवाय नमः स्वाहा
२० ॐसंहारभैरवाय नमः स्वाहा
२१ ॐभवाय नमः स्वाहा
२२ ॐशर्वाय नमः स्वाहा
२३ ॐईशानाय नमः स्वाहा
२४ ॐपशुपतये नमः स्वाहा
२५ ॐरुद्राय नमः स्वाहा
२६ ॐउग्राय नमः स्वाहा
२७ ॐभीमाय नमः स्वाहा
२८ ॐमहते नमः स्वाहा
२९ ॐशूलिने नमः स्वाहा
३० ॐचन्द्रमौलिने नमः स्वाहा
३१ ॐचन्द्रमसे नमः स्वाहा

१ इदं नमः स्वाहेत्यादिनमोन्तैर्नाममन्त्रैर्जुहुयात् ॥ नाममन्त्रलक्षणं तण्डदीक्षितहवनात्मकमहारुद्रे तथा गारुडे चोक्तम्—प्रणवादिनमोन्तं च चतुर्थ्यन्तं च सत्तम । देवतायाः स्वकं नाम नाममन्त्रः प्रकीर्तितः ॥

३२ ॐवृषभध्वजाय नमः स्वाहा
३३ ॐत्रिलोचनाय नमः स्वाहा
३४ ॐशक्तिधराय नमः स्वाहा
३५ ॐमहेश्वराय नमः स्वाहा
३६ ॐशूलधारिणे नमः स्वाहा
३७ ॐअनन्ताय नमः स्वाहा
३८ ॐतक्षकाय नमः स्वाहा
३९ ॐकुलिशाय नमः स्वाहा
४० ॐकर्कोटकाय नमः स्वाहा
४१ ॐशङ्खपालाय नमः स्वाहा
४२ ॐकम्बलाय नमः स्वाहा
४३ ॐअश्वतराय नमः स्वाहा
४४ ॐपृथिव्यै नमः स्वाहा
४५ ॐभूम्यै नमः स्वाहा
४६ ॐहैहयाय नमः स्वाहा
४७ ॐमाल्यवते नमः स्वाहा
४८ ॐपारिजाताय नमः स्वाहा
४९ ॐदिवपतये नमः स्वाहा
५० ॐमहादेवाय नमः स्वाहा
५१ ॐविष्णवे नमः स्वाहा
५२ ॐमाल्यवते नमः स्वाहा-
५३ ॐमहारुद्राय नमः स्वाहा
५४ ॐकालाग्निरुद्राय नमः स्वाहा
५५ ॐद्वादशादित्येभ्योनमःस्वाहा
५६ ॐमहेश्वराय नमः स्वाहा
५७ ॐमृत्युरोगाभ्यां नमः स्वाहा
५८ ॐवैनायक्यै नमः स्वाहा
५९ ॐशाकुन्तलेयाय नमः स्वाहा
६० ॐभरताय नमः स्वाहा
६१ ॐनलाय नमः स्वाहा
६२ ॐरामाय नमः स्वाहा
६३ ॐसार्वभौमाय नमः स्वाहा
६४ ॐनैषधाय नमः स्वाहा
६५ ॐविंध्याचलाय नमः स्वाहा
६६ ॐहेमकूटाय नमः स्वाहा
६७ ॐगन्धमादनाय नमः स्वाहा
६८ ॐकुलाचलाय नमः स्वाहा
६९ ॐहिमाचलाय नमः स्वाहा
७० ॐपृथिव्यै नमः स्वाहा
७१ ॐअनंताय नमः स्वाहा
७२ ॐकमलासनाय नमः स्वाहा
७३ॐअश्विनीकुमाराभ्यांनमःस्वा०

७४ ॐविश्वेभ्योदेवेभ्योनमः स्वाहा
७५ ॐपितृभ्यो नमः स्वाहा
७६ ॐनागेभ्यो नमः स्वाहा
७७ ॐइन्द्राय नमः स्वाहा
७८ ॐअग्नये नमः स्वाहा
७९ ॐयमाय नमः स्वाहा
८० ॐनिर्ऋतये नमः स्वाहा
८१ ॐवरुणाय नमः स्वाहा
८२ ॐवायवे नमः स्वाहा
८३ ॐकुबेराय नमः स्वाहा
८४ ॐईशानाय नमः स्वाहा
८५ ॐवज्राय नमः स्वाहा
८६ ॐशक्तये नमः स्वाहा
८७ ॐदण्डाय नमः स्वाहा
८८ ॐखड्गाय नमः स्वाहा
८९ ॐपाशाय नमः स्वाहा
९० ॐअङ्कुशाय नमः स्वाहा
९१ ॐगदायै नमः स्वाहा
९२ ॐत्रिशूलाय नमः स्वाहा
९३ ॐकश्यपाय नमः स्वाहा
९४ ॐअत्रये नमः स्वाहा
९५ ॐभरद्वाजाय नमः स्वाहा
९६ ॐविश्वामित्राय नमः स्वाहा
९७ ॐगोतमाय नमः स्वाहा
९८ ॐजमदग्नये नमः स्वाहा
९९ ॐवसिष्ठाय नमः स्वाहा
१०० ॐभृगवे नमः स्वाहा

## अथ पीठदेवताहोमः ॥

१ ॐमूलप्रकृत्यै नमः स्वाहा
२ ॐआधारशक्त्यै नमः स्वाहा
३ ॐकूर्माय नमः स्वाहा
४ ॐअनन्ताय नमः स्वाहा
५ ॐवराहाय नमः स्वाहा
६ ॐपृथिव्यै नमः स्वाहा
७ ॐविचित्रदिव्यमण्डपाय नमः स्वाहा
८ ॐकल्पवृक्षेभ्यो नमः स्वाहा
९ ॐसुवर्णवेदिकायै नमः स्वाहा
१० ॐरत्नसिंहासनाय नमः स्वाहा
११ ॐधर्माय नमः स्वाहा

१२ ॐज्ञानाय नमः स्वाहा
१३ ॐवैराग्याय नमः स्वाहा
१४ ॐऐश्वर्याय नमः स्वाहा
१५ ॐअधर्माय नमः स्वाहा
१६ ॐअज्ञानाय नमः स्वाहा
१७ ॐअवैराग्याय नमः स्वाहा
१८ ॐअनैश्वर्याय नमः स्वाहा
१९ ॐतल्पाकारायानन्ताय नमः स्वाहा
२० ॐपद्माय नमः स्वाहा
२१ ॐआनन्दकन्दाय नमः स्वाहा
२२ ॐसंविन्नालाय नमः स्वाहा
२३ ॐप्रकृतिमयपत्रेभ्योनमःस्वाहा
२४ ॐविकारमयकेसरेभ्यो नमः०
२५ ॐपञ्चाशद्वर्णाढ्यकर्णिकायै नमः स्वाहा
२६ ॐअंसत्त्वाय नमः स्वाहा
२७ ॐउंरजसे नमः स्वाहा
२८ ॐमंतमसे नमः स्वाहा
२९ ॐअंद्वादशकलात्मनेऽर्कमण्डलाय नमः स्वाहा
३० ॐउंषोडशकलात्मने सोममण्डलाय नमः स्वाहा
३१ ॐमंदशकलात्मनेऽग्निमण्डलाय नमः स्वाहा
३२ ॐअंब्रह्मणे नमः स्वाहा
३३ ॐउंविष्णवे नमः स्वाहा
३४ ॐमंमहेश्वराय नमः स्वाहा
३५ ॐअंआत्मने नमः स्वाहा
३६ ॐउंअन्तरात्मनेनमः स्वाहा
३७ ॐमंपरमात्मने नमः स्वाहा
३८ ॐआंज्ञानात्मने नमः स्वाहा
३९ ॐवामायै नमः स्वाहा
४० ॐज्येष्ठायै नमः स्वाहा
४१ ॐरौद्र्यै नमः स्वाहा
४२ ॐकाल्यै नमःस्वाहा
४३ ॐकलविकरण्यै नमः स्वाहा
४४ ॐबलविकारिण्यै नमःस्वाहा
४५ ॐबलप्रमथिन्यै नमः स्वाहा
४६ ॐसर्वभूतदमन्यै नमः स्वाहा
४७ ॐमनोन्मन्यै नमः स्वाहा
४८ ॐनमोभगवते सकलगुणात्मशक्तियुक्तायानन्ताय योगपीठात्मने नमः स्वाहा

## अथ रुद्रपीठस्थदेवानां प्रत्येकं दशदशघृताक्ततिलाहुतिभिः एकैकयाऽऽज्याहुत्या होमः कार्यः ॥

१ ॐउमादेव्यै नमः स्वाहा
२ ॐशङ्करप्रियायै नमः स्वाहा
३ ॐपार्वत्यै नमः स्वाहा
४ ॐगौर्यै नमः स्वाहा
५ ॐकालिन्द्यै नमः स्वाहा
६ ॐकोटर्यै नमः स्वाहा
७ ॐविश्वधारिण्यै नमः स्वाहा
८ ॐह्रॉं नमः स्वाहा
९ ॐह्रीं नमः स्वाहा
१० ॐगङ्गादेव्यै नमः स्वाहा
११ ॐगङ्गादेव्यै भक्त्यै नमःस्वाहा

(इत्येकादशरुद्राणीहोमः)[1]

१२ ॐअघोराय नमः स्वाहा
१३ ॐपशुपतये नमः स्वाहा
१४ ॐशर्वाय नमः स्वाहा
१५ ॐविरूपाक्षाय नमः स्वाहा
१६ ॐविश्वरूपिणे नमः स्वाहा
१७ ॐत्र्यम्बकाय नमः स्वाहा
१८ ॐकपर्दिने नमः स्वाहा
१९ ॐभैरवाय नमः स्वाहा
२० ॐशूलपाणये नमः स्वाहा
२१ ॐईशानाय नमः स्वाहा
२२ ॐमहेशाय नमः स्वाहा

( इत्येकादशरुद्रहोमः )

अथ स्कान्दोक्तावरणदेवताहोमः।

२३ ॐनमोभगवतेरुद्रायनमःस्वाहा[2]

---

१ इत्येकादशरुद्राणीस्थापन रुद्रकल्पद्रुमे खण्डदीक्षितरुद्रपद्धतावप्यस्ति । होमावसरे खण्डदीक्षितहोमा नात्र पर च स्थापनानुसारेण होम आवश्यक ॥ काशिदीक्षित महारुद्रपद्धतौ स्थापनमपि नास्ति ॥ २ कर्णिकामध्यदेशे तु रुद्र पञ्चास्यमालिखेत् ॥ ॐ नमो भगवते रुद्रायेति तारकादिक न्यसेत् ॥ साय दशाक्षरा मन्त्र सर्वकामार्थ सिद्धिद ॥

२४ ॐसद्योजाताय नमः स्वाहा
२५ ॐवामदेवाय नमः स्वाहा
२६ ॐअघोराय नमः स्वाहा
२७ ॐतत्पुरुषाय नमः स्वाहा
२८ ॐईशानाय नमः स्वाहा

अथ प्रथमावरणदेवताहोमः ।

२९ ॐनन्दिने नमः स्वाहा
३० ॐमहाकालाय नमः स्वाहा
३१ ॐगणेशाय नमः स्वाहा
३२ ॐवृषभाय नमः स्वाहा
३३ ॐभृङ्गिरिटये नमः स्वाहा
३४ ॐस्कन्दाय नमः स्वाहा
३५ ॐउमायै नमः स्वाहा
३६ ॐचण्डेश्वराय नमः स्वाहा

अथ द्वितीयावरणदेवताहोमः ।

३७ ॐअनन्ताय नमः स्वाहा
३८ ॐसूक्ष्माय नमः स्वाहा
३९ ॐशिवाय नमः स्वाहा
४० ॐएकपदे नमः स्वाहा
४१ ॐएकरुद्राय नमः स्वाहा
४२ ॐत्रिमूर्तये नमः स्वाहा
४३ ॐश्रीकण्ठाय नमः स्वाहा
४४ ॐवामदेवाय नमः स्वाहा
४५ ॐज्येष्ठाय नमः स्वाहा
४६ ॐश्रेष्ठाय नमः स्वाहा
४७ ॐरुद्राय नमः स्वाहा
४८ ॐकालाय नमः स्वाहा
४९ ॐकलविकरणाय नमः स्वाहा

---

१ सद्योजातं वामदेवमघोरं तदनन्तरम् । ततस्तत्पुरुषं प्रोक्तमीशानं पञ्चमं क्रमात् । प्रधानमिदमाख्यातं प्रथमावरणे ततः ॥

२ दलेष्वष्टसु नन्दादीन् पूर्वादिक्रमतो न्यसेत् ॥ आदौ नन्दिमहाकालौ गणेशऋषभौ क्रमात् । ततो भृङ्गिरिटिस्कन्दोमाचण्डेश्वरसंज्ञकाः ॥

३ षोडशारे ततः पद्मे द्वितीयावरणे यजेत् । अनन्तं च तथा सूक्ष्मं शिवं चैकपदं तथा ॥ एकरुद्रं त्रिमूर्तिं च श्रीकण्ठं वामदेवकम् । ज्येष्ठं श्रेष्ठं तथा रुद्रं कालं कलविकरणम् ॥ बलं बलविकरणं च बलप्रमथनं तथा ।

५० ॐ बलाय नमः स्वाहा

५१ ॐ बलविकरणाय नमःस्वाहा

५२ ॐ बलप्रमथनाय नमः स्वाहा

अथ तृतीयावरणदेवताहोमः।[1]

५३ ॐ अणिमायै नमः स्वाहा

५४ ॐ महिमायै नमः स्वाहा

५५ ॐ गरिमायै नमः स्वाहा

५६ ॐ लघिमायै नमः स्वाहा

५७ ॐ प्राप्त्यै नमः स्वाहा

५८ ॐ प्राकाम्यै नमः स्वाहा

५९ ॐ ईशित्वायै नमः स्वाहा

६० ॐ वशित्वाय नमः स्वाहा

६१ ॐ ब्राह्म्यै नमः स्वाहा

६२ ॐ माहेश्वर्यै नमः स्वाहा

६३ ॐ कौमार्यै नमः स्वाहा

६४ ॐ वैष्णव्यै नमः स्वाहा

६५ ॐ वाराह्यै नमः स्वाहा

६६ ॐ ऐन्द्र्यै नमः स्वाहा

६७ ॐ चामुण्डायै नमः स्वाहा

६८ ॐ चण्डिकायै नमः स्वाहा

६९ ॐ असिताङ्गभैरवायनमःस्वाहा

७० ॐ रुरुभैरवाय नमः स्वाहा

७१ ॐ चण्डभैरवाय नमः स्वाहा

७२ ॐ क्रोधभैरवाय नमः स्वाहा

७३ ॐ उन्मत्तभैरवाय नमः स्वाहा

७४ ॐ कालभैरवाय नमः स्वाहा

७५ ॐ भीषणभैरवाय नमः स्वाहा

७६ ॐ संहारभैरवाय नमः स्वाहा

---

१ तृतीयावरणे पद्मे चतुर्विंशद्दले तथा। अणिमा महिमा चैव गरिमा लघिमा तथा॥ प्राप्तिः प्राकाम्यमीशित्व वशित्व चाष्टसिद्धयः। तत. परं क्रमेणैव न्यसेद् ब्राह्म्यादि-देवताः॥ ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराहैन्द्री च चामुण्डा चण्डिका चेति ताः क्रमात्॥ ततोऽष्टस्वसिताङ्गादीन् भैरवान् विन्यसेत्पुन.। असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तभैरव.॥ कालभीषणसंहारा भैरवाश्चाष्ट कीर्तिता॥

अथ चतुर्थावरणदेवताहोमः।[1]

७७ ॐभवाय नमः स्वाहा

७८ ॐशर्वाय नमः स्वाहा

७९ ॐईशानाय नमः स्वाहा

८० ॐपशुपतये नमः स्वाहा

८१ ॐरुद्राय नमः स्वाहा

८२ ॐउग्राय नमः स्वाहा

८३ ॐभीमाय नमः स्वाहा

८४ ॐमहते नमः स्वाहा

८५ ॐअनन्ताय नमः स्वाहा

८६ ॐवासुकये नमः स्वाहा

८७ ॐतक्षकाय नमः स्वाहा

८८ ॐकुलीरकाय नमः स्वाहा

८९ ॐकर्कोटकाय नमः स्वाहा

९० ॐशङ्खपालाय नमः स्वाहा

९१ ॐकम्बलाय नमः स्वाहा

९२ ॐअश्वतराय नमः स्वाहा

९३ ॐवैन्याय नमः स्वाहा

९४ ॐपृथवे नमः स्वाहा

९५ ॐहैहयाय नमः स्वाहा

९६ ॐअर्जुनाय नमः स्वाहा

९७ ॐशाकुन्तलेयाय नमः स्वाहा

९८ ॐभरताय नमः स्वाहा

९९ ॐनलाय नमः स्वाहा

१०० ॐरामाय नमः स्वाहा

१०१ ॐहिमवते नमः स्वाहा

१०२ ॐनिषधाय नमः स्वाहा

१०३ ॐविन्ध्याय नमः स्वाहा

१०४ ॐमाल्यवते नमः स्वाहा

१०५ ॐपारियात्रकाय नमःस्वाहा

१०६ ॐमलयाय नमः स्वाहा

---

१ द्वात्रिंशत्पत्रके पूर्वं भवाष्टकमुदाहृतम्। भव शर्वस्तथेशानस्तथा पशुपतिः स्मृत रुद्रश्चोग्रश्च भीमश्च महानिति क्रमाद्यजेत्। ततोऽनन्तो वासुकिश्च तक्षकश्च कुलीरक ॥ कर्कोटक शङ्खपाल कम्बलोऽश्वतरस्तथा। ततोऽष्टसु न्यसद्वैन्य पृथु हैहयमर्जुनम्। शाकुन्तलेय भरत नल राममिति क्रमात्॥ तत कुलाचलानष्टौ दलेष्वष्टसु विन्यसेत्॥ हिमवान्निषधो विन्ध्यो माल्यवान्पारियात्रक। मलयो हेमकूटश्च गन्धमादनसंज्ञक॥

१०७ ॐ हेमकूटाय नमः स्वाहा
१०८ ॐ गन्धमादनाय नमः स्वाहा

( पञ्चमावरणदेवताहोमः )[1]

१०९ ॐ इन्द्राय नमः स्वाहा
११० ॐ अग्नये नमः स्वाहा
१११ ॐ यमाय नमः स्वाहा
११२ ॐ निर्ऋतये नमः स्वाहा
११३ ॐ वरुणाय नमः स्वाहा
११४ ॐ वायवे नमः स्वाहा
११५ ॐ कुबेराय नमः स्वाहा
११६ ॐ ईशानाय नमः स्वाहा
११७ ॐ शच्यै नमः स्वाहा
११८ ॐ स्वाहायै नमः स्वाहा
११९ ॐ वाराह्यै नमः स्वाहा
१२० ॐ खड्गिन्यै नमः स्वाहा
१२१ ॐ वारुण्यै नमः स्वाहा
१२२ ॐ वायव्यै नमः स्वाहा
१२३ ॐ कौबेर्यै नमः स्वाहा
१२४ ॐ ईशान्यै नमः स्वाहा
१२५ ॐ वज्राय नमः स्वाहा
१२६ ॐ शक्तये नमः स्वाहा
१२७ ॐ दण्डाय नमः स्वाहा
१२८ ॐ खड्गाय नमः स्वाहा
१२९ ॐ पाशाय नमः स्वाहा
१३० ॐ अङ्कुशाय नमः स्वाहा
१३१ ॐ गदायै नमः स्वाहा
१३२ ॐ त्रिशूलाय नमः स्वाहा
१३३ ॐ ऐरावताय नमः स्वाहा
१३४ ॐ मेषाय नमः स्वाहा
१३५ ॐ महिषाय नमः स्वाहा
१३६ ॐ प्रेताय नमः स्वाहा
१३७ ॐ मकाराय नमः स्वाहा

---

१ चत्वारिंशद्दले पद्मे पञ्चमावरणे न्यसेत् । इन्द्राद्यष्टौ लोकपालानष्टसु क्रमतो न्यसेत्॥ इन्द्रमग्निं यमं चैव निर्ऋतिं वरुणं तथा । वायुं कुबेरमीशानं दलेष्वष्टसु विन्यसेत् ॥ इन्द्रादिलोकपालानामष्टौ शक्तीस्तथा न्यसेत् । शचीं स्वाहां च वाराहीं खड्गिनीं वारुणीं तथा ॥ वायवीं चैव कौबेरीमीशानीं च तथाऽष्टमीम् । वज्रं शक्तिं दण्डखड्गौ पाशाङ्कुशगदा अपि ॥ त्रिशूलं लोकपालानामायुधानि क्रमान्न्यसेत् ॥ ऐरावतं तथा मेषं महिषं प्रेतसंज्ञितम् । मकरं च मृगं चैव नरं च वृषभं तथा ॥

१३८ ॐमृगाय नमः स्वाहा
१३९ ॐनराय नमः स्वाहा
१४० ॐवृषभाय नमः स्वाहा
१४१ ॐऐरावताय नम स्वाहा
१४२ ॐपुण्डरीकाय नमः स्वाहा
१४३ ॐवामनाय नमः स्वाहा
१४४ ॐकुमुदाय नमः स्वाहा
१४५ ॐअञ्जनाय नमः स्वाहा
१४६ ॐपुष्पदन्ताय नमः स्वाहा
१४७ ॐसार्वभौमाय नमः स्वाहा
१४८ ॐसुप्रतीकाय नमः स्वाहा

अथ समस्तावरणदेवताहोमः

---

१ ऐरावतादयोऽप्यष्टौ दिग्गजास्तदनन्तरम् । ऐरावत पुण्डरीको वामन कुमुदाऽञ्जन ॥ पुष्पदन्त सार्वभौम सुप्रतीकश्च दिग्गजा ॥

२ भूपुरान्त पुनर्लेख्या पञ्चरश्म्यात्मकाद्बहि । इन्द्र विन्यस्य पूर्वस्यामाग्नय्यामग्निमेव च ॥ दक्षिणस्या यम चैव नैर्ऋत्या निर्ऋतिं तथा ॥ प्रतीच्या वरुण वायु वायव्या विन्यसेत्पुन ॥ कुबेर चैव कौबेर्यामीशान्यामीशमालिखत् । विरूपाक्ष तु विन्यस्य ह्याग्नय्यामग्नियोगत ॥ नैऋत्यां निर्ऋतयोग विश्वरूप च विन्यसेत् । वायव्या वायुयोग च लिखेत्पशुपतिं तथा ॥ इशान्यामूर्ध्वलिङ्गन्तु न्यसदाशानयागत । प्रागादिक्रमतो लेख्या शेषाद्या भूपुराद्बहि ॥ विप्रवर्णं श्वतरूप सहस्रफणसयुतम् । पूर्वस्या विन्यसञ्छष पूजयेदुपचारकै ॥ तक्षक वैश्यवर्णं च नील पञ्चशतै फणै । युक्तमुत्तुङ्गकाय च ह्याग्नय्या दिशि विन्यसेत् । अनन्त विप्रवर्णं च तथा कुङ्कुमवर्णकम् । सहस्रफणसयुक्त दक्षिणस्या प्रपूजयेत् ॥ वासुकिं क्षात्रय पीतवर्णं सप्तशतै फणै । युक्तमुत्तुङ्गकाय च नैर्ऋत्या दिशि विन्यसेत् ॥ शङ्खपाल क्षत्रिय च पीत सप्तशतै फणै । युक्तमावाह्य वारुण्या पूजयेद् गन्धधूपकै । महापद्म वैश्यवर्णं नील पञ्चशतै फणै । युक्तमुत्तुङ्गकाय च वायव्या दिशि पूजयेत् ॥ कम्बल शूद्रवर्णं च कृष्ण त्रिशतफणैर्युतम् । कौबेर्या दिशि विन्यस्य पूजयच्च विधानत । कर्कोटक शूद्रवर्णं श्वेत त्रिशतफणायुतम् । ईशान्या दिशि विन्यस्य पूजयेद्विधिवत्तत ॥ रुद्रपीठमिद सर्वं रुद्रकल्प च विश्रुतम् ।

१४९ ॐइन्द्राय नमः स्वाहा
१५० ॐअग्नये नमः स्वाहा
१५१ ॐयमाय नमः स्वाहा
१५२ ॐनिर्ऋतये नमः स्वाहा
१५३ ॐवरुणाय नमः स्वाहा
१५४ ॐवायवे नमः स्वाहा
१५५ ॐकुबेराय नमः स्वाहा
१५६ ॐईशानाय नमः स्वाहा
१५७ ॐविरूपाक्षाय नमः स्वाहा
१५८ ॐविश्वरूपाय नमः स्वाहा
१५९ ॐपशुपतये नमः स्वाहा
१६० ॐऊर्ध्वलिङ्गाय नमः स्वाहा
१६१ ॐशिवाय नमः स्वाहा
१६२ ॐतक्षकाय नमः स्वाहा
१६३ ॐअनन्ताय नमः स्वाहा
१६४ ॐवासुकये नमः स्वाहा
१६५ ॐशङ्खपालाय नमः स्वाहा
१६६ ॐमहापद्माय नमः स्वाहा
१६७ ॐकम्बलाय नमः स्वाहा
१६८ ॐकर्कोटकाय नमः स्वाहा

॥ इति रुद्रपीठदेवताहोमः ॥

---

१ अत्र ग्रन्थे त्रयश्चत्वारिंशद्रेखात्मकहरिहरात्मकरुद्रादयलिङ्गतोभद्रदेवताहोम समुद्धृत । यत्र प्रकारान्तरेण त्रयस्त्रिंशद्रेखात्मक चतुस्त्रिंशद्रेखात्मक पञ्चत्रिंशद्रेखात्मक षट्त्रिंशद्रेखात्मक सप्तत्रिंशद्रेखात्मक वा मण्डल क्रियत तत्र होमसंख्या न्यूनाधिका स्यादिति ग्रन्थान्तरता बोध्यम् ॥

## अथ होमात्मकमहारुद्रप्रारम्भदिनात्पूर्वे तदङ्गीभूतकर्मानुक्रम ॥

१ परीक्षापूर्वक मण्डलार्थे यागोचितभूमिपरिग्रह कृत्वा मार्जनखननदहनापसारणादिभि शोधिता शल्यनिरसनपूर्वक शुद्धाभिर्मृद्भिरापूरिता दृढा भूमि समां कृत्वा भूमिपूजादिप्रयोगपूर्वक सविधिमण्डपरचना तदशक्तौ छायामण्डपरचना तत्र वेदीकुण्डादि निर्माणम् ॥ कुण्डकरणाशक्तौ स्थण्डिल वा कार्यम् ॥ २ यजमानस्य शरीरशुद्ध्यर्थे पूर्वोत्तराङ्गप्रायश्चित्ताचरणम् ॥ मुख्यवेद्युपरि हरिहरात्मकरुद्रादयलिङ्गतोभद्ररचना, वास्तुवेद्युपरि वास्तुमण्डलरचना, ग्रहवेद्युपरि सर्वतोभद्ररचनापूर्वकग्रहमण्डलरचना, योगिनीपीठे क्षेत्रपालपीठे मातृकापीठे च तत्तन्मण्डलरचना, रङ्गवल्यादिभि कुण्डमण्डपस्यालङ्करणम् ॥

अथ ग्रहपीठस्यसर्वतोभद्रदेवानां प्रत्येकं दशदशघृताक्ततिलाहुतिभिः एकैकयाऽऽज्याहुत्या च जुहुयात्।

१ ॐब्रह्मणे नमः स्वाहा
२ ॐसोमाय नमः स्वाहा
३ ॐईशानाय नम स्वाहा
४ ॐइन्द्राय नमः स्वाहा
५ ॐअग्नये नमः स्वाहा
६ ॐयमाय नमः स्वाहा
७ ॐनिर्ऋतये नमः स्वाहा
८ ॐवरुणाय नमः स्वाहा
९ ॐवायवे नमः स्वाहा
१० ॐअष्टवसुभ्यो नमः स्वाहा
११ ॐएकादशरुद्रेभ्यो नमः स्वाहा
१२ ॐद्वादशादित्येभ्यो नमः स्वाहा
१३ ॐअश्विभ्यां नमः स्वाहा
१४ ॐविश्वेभ्यो देवेभ्यो नमः स्वाहा
१५ ॐसप्तयक्षेभ्यो नमः स्वाहा
१६ ॐभूतनागेभ्यो नमः स्वाहा
१७ ॐगन्धर्वाप्सरोभ्यो नमः स्वाहा
१८ ॐस्कन्दाय नमः स्वाहा
१९ ॐनन्दिने नमः स्वाहा
२० ॐशूलमहाकालाभ्यां नमः स्वाहा
२१ ॐदक्षादिसप्तगणेभ्यो नमः स्वाहा
२२ ॐदुर्गायै नमः स्वाहा
२३ ॐविष्णवे नमः स्वाहा
२४ ॐस्वधायै नमः स्वाहा
२५ ॐमृत्युरोगाभ्यांनमःस्वाहा
२६ ॐगणपतये नमः स्वाहा
२७ ॐअद्भ्यो नमः स्वाहा
२८ ॐमरुद्भ्यो नमः स्वाहा

१ अत्र होमविषय स्थापनक्रमण हाम कार्य इतिनशकनीयम् यज्ञादिषु ग्रहाणा प्रधानदेवस्य च मुख्यत्वाद्वास्तुयोगिनीक्षेत्रपालादिस्थापितदेवाना गौणत्वाच्च ॥ स्थापनक्रमेण होमे विष्णुयागादिषु प्रधानहोमानन्तर ग्रहहोमस्य प्रसङ्ग स्यात् ॥ खण्डदीक्षितमहारुद्रपद्धतौतु योगिनीक्षेत्रपालदेवतानां स्थापनमपि न विद्यते ॥

२९ ॐपृथिव्यै नमः स्वाहा ।
३० ॐगङ्गादिनदीभ्यो नमः स्वाहा
३१ ॐसप्तसागरेभ्योनमःस्वाहा
३२ ॐमेरवे नमः स्वाहा
३३ ॐगदायै नमः स्वाहा
३४ ॐत्रिशूलाय नमः स्वाहा
३५ ॐवज्राय नमः स्वाहा
३६ ॐशक्तये नमः स्वाहा
३७ ॐदण्डाय नमः स्वाहा
३८ ॐखड्गाय नमः स्वाहा
३९ ॐपाशाय नमः स्वाहा
४० ॐअङ्कुशाय नमः स्वाहा
४१ ॐगौतमाय नमः स्वाहा
४२ ॐभरद्वाजाय नमः स्वाहा
४३ ॐविश्वामित्राय नमः स्वाहा
४४ ॐकश्यपाय नमः स्वाहा
४५ ॐजमदग्नये नमः स्वाहा
४६ ॐवसिष्ठाय नमः स्वाहा
४७ ॐअत्रये नमः स्वाहा
४८ ॐअरुन्धत्यै नमः स्वाहा
४९ ॐऐन्द्यै नमः स्वाहा
५० ॐकौमार्यै नमः स्वाहा
५१ ॐब्राह्म्यै नमः स्वाहा
५२ ॐवाराह्यै नमः स्वाहा
५३ ॐचामुण्डायै नमः स्वाहा
५४ ॐवैष्णव्यै नमः स्वाहा
५५ ॐमाहेश्वर्यै नमः स्वाहा
५६ ॐवैनायक्यै नमः स्वाहा

इति ब्रह्मादिदेवताहुतीर्हुत्वा वास्तुपीठदेवताहोमः कार्यः ॥

---

१ केषाचिन्मते अत्र नाममन्त्रैरौदुम्बरसमिच्चरुतिलाज्यद्रव्ये प्रत्येकमष्टाष्टाहुतीर्हुत्वा वास्तोष्पतेप्रतिजानीह्यस्मान्० १वास्तोष्पतेप्रतरणो० २वास्तोष्पतेशग्मया० ३ अमीवहावास्तोष्पते० ४ इति चतुर्भिर्मन्त्रैस्तैरेवद्रव्यै अष्टाष्टाहुतिभि हुत्वा तत पूर्वोक्तैश्चतुर्भि तथा वास्तोष्पतध्रुवास्थूणा० इत्यनन च पञ्चमन्त्रेण पञ्चबिल्वफलानि तद्बीजानि वा हुत्वा वास्तोष्पतय नमम इति त्यजेत् ॥ शारदातिलके तु होमो नोक्त ॥ तिलाज्यादिद्रव्याणा विकल्प ॥ केचन वास्तुपूजनमात्रमेवाचरन्ति होमस्तु स्वतन्त्रतया वास्तुपूजनपक्षे इति तेषां सम्मतम् ॥

अथ शिख्यादिवास्तुपीठदेवानां प्रत्येकं दशदशघृताक्ततिलाहुतिभिः एकैकयाऽऽज्याहुत्या च जुहुयात्।

१ ॐशिखिने नमः स्वाहा
२ ॐपर्जन्याय नमः स्वाहा
३ ॐजयन्ताय नमः स्वाहा
४ ॐकुलिशायुधाय नमः स्वाहा
५ ॐसूर्याय नमः स्वाहा
६ ॐसत्याय नमः स्वाहा
७ ॐभृशाय नमः स्वाहा
८ ॐआकाशाय नमः स्वाहा
९ ॐवायवे नमः स्वाहा
१० ॐपूष्णे नमः स्वाहा
११ ॐवितथाय नमः स्वाहा
१२ ॐगृहक्षताय नमः स्वाहा
१३ ॐयमाय नमः स्वाहा
१४ ॐगन्धर्वाय नमः स्वाहा
१५ ॐभृङ्गराजाय नमः स्वाहा
१६ ॐमृगाय नमः स्वाहा
१७ ॐपितृभ्यो नमः स्वाहा
१८ ॐदौवारिकाय नमः स्वाहा
१९ ॐसुग्रीवाय नमः स्वाहा
२० ॐपुष्पदन्ताय नमः स्वाहा
२१ ॐवरुणाय नमः स्वाहा
२२ ॐअसुराय नमः स्वाहा
२३ ॐशोषाय नमः स्वाहा
२४ ॐपापाय नमः स्वाहा
२५ ॐरोगाय नमः स्वाहा
२६ ॐअहये नमः स्वाहा
२७ ॐमुख्याय नमः स्वाहा
२८ ॐभल्लाटाय नमः स्वाहा
२९ ॐसोमाय नमः स्वाहा
३० ॐसर्पाय नमः स्वाहा
३१ ॐअदित्यै नमः स्वाहा
३२ ॐदित्यै नमः स्वाहा
३३ ॐआपाय नमः स्वाहा
३४ ॐसावित्राय नमः स्वाहा
३५ ॐजयाय नमः स्वाहा
३६ ॐरुद्राय नमः स्वाहा
३७ ॐअर्यम्णे नमः स्वाहा

३८ ॐसवित्रे नमः स्वाहा
३९ ॐविवस्वते नमः स्वाहा
४० ॐविबुधाधिपाय नमः स्वाहा
४१ ॐमित्राय नमः स्वाहा
४२ ॐराजयक्ष्मणे नमः स्वाहा
४३ ॐपृथ्वीधराय नमः स्वाहा
४४ ॐआपवत्साय नमः स्वाहा
४५ ॐब्रह्मणे नमः स्वाहा
४६ ॐचरक्यै नमः स्वाहा
४७ ॐविदार्यै नमः स्वाहा
४८ ॐपूतनायै नमः स्वाहा
४९ ॐपापराक्षस्यै नमः स्वाहा
५० ॐस्कन्दाय नमः स्वाहा
५१ ॐअर्यम्णे नमः स्वाहा
५२ ॐजृम्भकाय नमः स्वाहा
५३ ॐपिलिपिच्छाय नमः स्वाहा
५४ ॐइन्द्राय नमः स्वाहा
५५ ॐअग्नये नमः स्वाहा
५६ ॐयमाय नमः स्वाहा
५७ ॐनिर्ऋतये नमः स्वाहा
५८ ॐवरुणाय नमः स्वाहा
५९ ॐवायवे नमः स्वाहा
६० ॐकुबेराय नमः स्वाहा
६१ ॐईश्वराय नमः स्वाहा
६२ ॐब्रह्मणे नमः स्वाहा
६३ ॐअनन्ताय नमः स्वाहा
६४ ॐवास्तुपुरुषायनमः स्वाहा

अथ महाकालीमहालक्ष्मीमहासरस्वतीसहितचतुःषष्टियोगिनीपीठदेवतानांदशदशघृताक्ततिलाहुतिभिःएकैकयाऽऽज्याहुत्या च जुहुयात्॥

१ ॐमहाकाल्यै नमः स्वाहा
२ ॐमहालक्ष्म्यै नमः स्वाहा
३ ॐमहासरस्वत्यै नमः स्वाहा
४ ॐगजाननायै नमः स्वाहा
५ ॐसिंहमुख्यै नमः स्वाहा
६ ॐगृध्रास्यायै नमः स्वाहा
७ ॐकाकतुण्डिकायै नमः स्वाहा
८ ॐउष्ट्रग्रीवायै नमः स्वाहा
९ ॐहयग्रीवायै नमः स्वाहा
१० ॐवाराह्यै नमः स्वाहा
११ ॐशरभाननायै नमः स्वाहा

१२ ॐउलूंकिकायै नमः स्वाहा

१३ ॐशिवारावायै नमः स्वाहा

१४ ॐमयूर्यै नमः स्वाहा

१५ ॐविकटाननायै नमः स्वाहा

१६ ॐअष्टवक्रायै नमः स्वाहा

१७ ॐकोटराक्ष्यै नमः स्वाहा

१८ ॐकुब्जायै नमः स्वाहा

१९ ॐ विकटलोचनायै नमः स्वाहा

२० ॐशुष्कोदर्यै नमः स्वाहा

२१ ॐललज्जिह्वायै नमः स्वाहा

२२ ॐश्वदंष्ट्रायै नमः स्वाहा

२३ ॐवानराननायै नमः स्वाहा

२४ ॐऋक्षाक्ष्यै नमः स्वाहा

२५ ॐकेकराक्ष्यै नमः स्वाहा

२६ ॐबृहत्तुण्डायै नमः स्वाहा

२७ ॐसुराप्रियायै नमः स्वाहा

२८ ॐकपालहस्तायै नमः स्वाहा

२९ ॐरक्ताक्ष्यै नमः स्वाहा

---

१ अत्र–ओमुलूकिकायै इति ॐकारेण सह उकारस्य सन्धिर्न भवति ॥ ॐकारस्य पृथग्विधानत्वात् ॥ मदनरत्ने व्यासः–त्रिमात्रस्तु प्रयोक्तव्य. कर्मारम्भेषु सर्वशः ॥ आपस्तम्बोऽपि–त्रिमात्रस्तु प्रयोक्तव्य' कर्मारम्भेषु सर्वदा ॥ त्रियिमान्भूयासमिति कात्यायनश्रौतसूत्रभाष्ये कर्कोपाध्यायैः पृथग्विधानेन सह सन्धिर्न भवतीत्युपपादितत्वात् ॥ २ अत्र नमस्स्वाहा इत्युच्चारो न भवति किन्तु नम' स्वाहा इतिविसर्गं सम्पूर्णमुच्चार्य स्वाहाशब्दस्य पृथक् उच्चार ॥ अयमर्थ. कर्कोपाध्यायैःपशुसमञ्जनप्रकरणे पशुंपूर्वंङ्समनक्तीतिसूत्रे प्रदर्शित तस्मात् स्वाहाकारा यध्याहारपरेण मन्त्रेण सह सन्धिर्नभवाति अध्याहारस्य लौकिकत्वात् ॥ अध्याहार' अश्रुतपदस्य लौकिकस्यानयन वाक्यनैराकाङ्क्षार्थम् ॥ प्रयोजनं चाध्याहृतपदस्य संहितावत्प्रयोगो न भवति सावसान प्रयोग इत्यर्थ । तस्मात् रुद्रस्वाहाकारादिषु अस्मन्निर्धेहित ॐस्वाहा न भवति अपि तु "अस्मन्निर्धेहित स्वाहा" इति ॥

३० ॐशुक्यै नमः स्वाहा
३१ ॐश्येन्यै नमः स्वाहा
३२ ॐकपोतिकायै नमः स्वाहा
३३ ॐपाशहस्तायै नमः स्वाहा
३४ ॐदण्डहस्तायै नमः स्वाहा
३५ ॐप्रचण्डायै नमः स्वाहा
३६ ॐचण्डविक्रमायै नमः स्वाहा
३७ ॐशिशुघ्न्यै नमः स्वाहा
३८ ॐपापहन्त्र्यै नमः स्वाहा
३९ ॐकाल्यै नम स्वाहा
४० ॐरुधिरपायिन्यै नमः स्वाहा
४१ ॐवसाधयायै नमः स्वाहा
४२ ॐगर्भभक्षायै नमः स्वाहा
४३ ॐशवहस्तायै नमः स्वाहा
४४ ॐआन्त्रमालिन्यै नमः स्वाहा
४५ ॐस्थूलकेश्यै नमः स्वाहा
४६ ॐबृहत्कुक्ष्यै नमः स्वाहा
४७ ॐसर्पास्यायै नमः स्वाहा
४८ ॐप्रेतवाहनायै नमः स्वाहा
४९ ॐदन्दशूककरायै नमःस्वाहा
५० ॐक्रौंच्यै नमः स्वाहा
५१ ॐमृगशीर्षायै नमः स्वाहा
५२ ॐवृषाननायै नम स्वाहा
५३ ॐव्यात्तास्यायै नमः स्वाहा
५४ ॐधूमनिःश्वासायै नमः स्वाहा
५५ ॐव्योमैकचरणोर्ध्वदृशे नमः स्वाहा
५६ ॐतापिन्यै नमः स्वाहा
५७ ॐशोषणीदृष्ट्यै नमः स्वाहा
५८ ॐकोटर्यै नमः स्वाहा
५९ ॐस्थूलनासिकायै नम स्वाहा
६० ॐविद्युत्प्रभायै नमः स्वाहा
६१ ॐबलाकास्यायै नमः स्वाहा
६२ ॐमार्जार्यै नमः स्वाहा
६३ ॐकटपूतनायै नमः स्वाहा
६४ ॐअट्टाट्टहासायै नमः स्वाहा
६५ ॐकामाक्ष्यै नमः स्वाहा
६६ ॐमृगाक्ष्यै नमः स्वाहा
६७ ॐमृगलोचनायै नमः स्वाहा

क्षेत्रपालपीठस्थैकपञ्चाशत्क्षेत्रपालदेवानां दशदशघृताक्ततिलाहुतिभिः एकैकयाऽऽज्याहुत्या च जुहुयात् ॥

१ ॐक्षेत्रपालाय नमः स्वाहा
२ ॐअजराय नमः स्वाहा
३ ॐव्यापकाय नमः स्वाहा
४ ॐइन्द्रचौराय नमः स्वाहा
५ ॐइन्द्रमूर्तये नमः स्वाहा
६ ॐउक्षाय नमः स्वाहा
७ ॐकूष्माण्डाय नमः स्वाहा
८ ॐवरुणाय नमः स्वाहा
९ ॐबटुकाय नमः स्वाहा
१० ॐविमुक्ताय नमः स्वाहा
११ ॐलिप्तकायाय नमः स्वाहा
१२ ॐलीलाकाय नमः स्वाहा
१३ ॐएकदंष्ट्राय नमः स्वाहा
१४ ॐऐरावताय नमः स्वाहा
१५ ॐओषधिघ्नायनमः स्वाहा
१६ ॐबन्धनाय नमः स्वाहा
१७ ॐदिव्यकाय नमः स्वाहा
१८ ॐकम्बलाय नमः स्वाहा
१९ ॐभीषणाय नमः स्वाहा
२० ॐगवयाय नमः स्वाहा
२१ ॐघण्टाय नमः स्वाहा
२२ ॐव्यालाय नमः स्वाहा
२३ ॐअणवे नमः स्वाहा
२४ ॐचन्द्रवारुणायनमःस्वाहा
२५ ॐपटाटोपाय नमः स्वाहा
२६ ॐजटालाय नमः स्वाहा
२७ ॐक्रतवे नमः स्वाहा
२८ ॐघण्टेश्वराय नमः स्वाहा
२९ ॐविटङ्काय नमः स्वाहा
३० ॐमणिमानाय नमः स्वाहा
३१ ॐगणबन्धवे नमः स्वाहा
३२ ॐडामराय नमः स्वाहा
३३ ॐढुण्ढिकर्णाय नमः स्वाहा
३४ ॐस्थविराय नमः स्वाहा
३५ ॐदन्तुराय नमः स्वाहा
३६ ॐधनदाय नमः स्वाहा
३७ ॐनागकर्णाय नमः स्वाहा
३८ ॐमहाबलाय नमः स्वाहा
३९ ॐफेत्काराय नमः स्वाहा
४० ॐचीकराय नमः स्वाहा
४१ ॐसिंहाय नमः स्वाहा
४२ ॐमृगाय नमः स्वाहा
४३ ॐयक्षाय नमः स्वाहा
४४ ॐमेघवाहनायनमः स्वाहा

४५ ॐतीक्ष्णोष्ठाय नमः स्वाहा
४६ ॐअनलाय नमः स्वाहा
४७ ॐशुक्लतुण्डाय नमः स्वाहा
४८ ॐसुधालापाय नमः स्वाहा
४९ ॐबर्बरकाय नमः स्वाहा
५० ॐपवनाय नमः स्वाहा
५१ ॐपावनाय नमः स्वाहा

अत्रावसरे त्वाधुनिकाः केचन त्र्यम्बकमन्त्रेणगुग्गुलहोमंसजोषा इत्यनेन नयदपरोइत्यनेन वार्समर्षपैः शत्रुहोमं श्रीश्चतइत्यादिनालक्ष्मीहोमं व्यस्तसमस्तव्याहृत्या घृताक्ततिलैर्व्याहृतिहोमं आकृष्णेनेत्यादिनाफलहोमंचकुर्वन्ति ॥ तत्तुरुद्रकल्पद्रुमेकाशीदीक्षितकृतमहारुद्रपद्धतौखण्डदीक्षितकृतमहारुद्रपद्धतौपद्मनाभकृतरुद्रपद्धतौ पारस्करगृह्यसूत्रे संस्कारगणपतौसंस्कारदीपकेसंस्काररत्नसिंहेरेणुकारिकायांस्मार्तोल्लासेस्मार्तगङ्गाधर्यांप्रयोगरत्नाद्याकरग्रन्थेष्वनुक्तत्वान्निर्मूलमेव ॥ अस्मिन्ग्रन्थेच अन्वाधानेऽप्यनुक्तत्वात्अस्माभिरत्र प्रयोगे नादृतम् ॥

॥ अथ उत्तरपूजनम् ॥

हस्ते जलमादाय–कृतस्य हवनात्मकमहारुद्राख्यस्य कर्मणः साङ्गतासिद्ध्यर्थं स्थापितदेवतानां मूर्हाग्रेश्च उत्तरपूजनं करिष्ये ॥

मण्डपस्थगणेशपीठे गणपतिपूजनम्–गणानान्त्वेत्यस्य प्रजापतिर्ऋषिः आर्षी बृहती छन्दः गणपतिर्देवता गणपत्युत्तरपूजने

---

१ पूजा स्विष्ट नवाहुत्योबलिःपूर्णाहुतिस्तथा । पूर्णपात्रविमोकाश्चाप्यर्चनान्तेऽभिषेचनम् ॥ मानस्तोकेतिभूतिश्चदेवपूजाविसर्जने । श्रेयोग्रहोदक्षिणादिदान कर्मेश्वरार्पणम् ॥ क्रमोऽयमुत्तराङ्गानांप्राय स्मार्तेष्वितिस्थिति ॥२ यज्ञपार्श्वे–पूर्वे प्रज्वलितो ह्यस्माद्विर्द्रव्य बुभुक्षित । मृतो निर्धूमनिर्ज्वालो मृडाग्नि परिकीर्तित ॥

विनियोगः ॥ ॐ गणानान्त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वां निधिपतिꣳ हवामहे वसो मम ॥ आहमजानि गर्भधमा त्वमजासि गर्भधम् ॥ २३ ॥ ॐ भूर्भुवःस्वः गणेशाय नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

मातृकापूजनम् — समख्यइत्यस्यवत्सऋषिःआस्तारपङ्क्तिश्छन्दः मातृकादेवता वसोःपवित्रमित्यस्य प्रजापतिर्ऋषिःयजुश्छन्दः वसोर्द्धारा-देवता मातृकाणाम् उत्तरपूजने विनियोगः ॥ ॐसमख्ये देव्याधियासन्दक्षिणयोरुचक्षसा ॥ मा मऽआयुꣳप्रमोषीर्म्मोऽअहन्तव वीरं विदेय तव देवि सन्दृशि ॥२३॥ ॐवसोꣳ पवित्रमसि शतधारं वसोꣳपवित्रमसिसहस्रधारम् ॥ देवस्त्वासविता पुनातुवसोꣳपवित्रेणशतधारेण सुप्वा कामधुक्षꣳ ॥ ३ ॥ ॐभूर्भुवःस्वः वसोर्द्धारासहितगणेशगौर्याद्यावाहितमातृभ्योनमःसर्वोपचारार्थेगन्धाक्षतपुष्पाणिसमर्पयामि ॥

वास्तुपूजनम्—तमीशानमितिगौतमऋषिः जगतीछन्दः शिखी देवता वास्तोष्पत इत्यस्य वसिष्ठऋषिः त्रिष्टुप्छन्दः वास्तोष्पतिर्देवता उभयोः शिख्यादिसहितवास्तोरुत्तरपूजने विनियोगः ॥ ॐतमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे वयम्॥पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धꣳस्वस्तये ॥ ३८ ॥ ॐवास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशो अनमीवो भवानः॥ यत्त्वेमहेप्रतितन्नोजुषस्व शन्नो भव द्विपदे शञ्चतुष्पदे ॥ ॐभूर्भुवःस्वः शिख्यादिसहित-वास्तुपुरुषाय नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

---

१ अवकाशे सति षोडशोपचारैः पञ्चोपचारैर्वा पूजयेत् ॥

योगिनीपूजनम्—योगेयोगइत्यस्य शुनःशेपऋषिः गायत्रीछन्दः योगिनीदेवता योगिन्युत्तरपूजने विनियोगः ॥ ॐ योगेयोगे तुवस्तरंवाजेवाजेहवामहे ॥ सखायइन्द्रमूतये ॥ ३४ ॥ ॐभूर्भुवःस्वः महाकालीमहालक्ष्मीमहासरस्वतीसहितगजाननादिमृगलोचनान्ताभ्यो योगिनीभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

क्षेत्रपालपूजनम्—नहिस्पशमित्यस्य विश्वामित्रऋषिः त्रिष्टुप्छन्दः क्षेत्रपालो देवता क्षेत्रपालोत्तरपूजने विनियोगः ॥ ॐनहि स्पश मविदन्नन्यमस्माद्वैश्वानरात्पुरऽ एतारमग्ने? ॥ एमेनमवृधन्नमृताऽ अमर्त्यं वैश्वानरङ्क्षैत्रजित्याय देवा? ॥ ३६ ॥ ॐ भूर्भुवःस्वः क्षेत्राधिपतिसहिताभ्यः अजरादिपावनान्ताभ्यः क्षेत्रपालपीठदेवताभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

पीठदेवतासहितश्रीमहारुद्रपूजनम्—ब्रह्मजज्ञानमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता॥नमःशम्भवायेत्यस्य परमेष्ठी प्रजापतिर्ऋषिः बृहतीछन्दः रुद्रोदेवता उभयोः ब्रह्माद्यादिसहित महारुद्रस्योत्तरपूजने विनियोगः ॥ ॐब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमत? सुरुचो वेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्य विष्ठा? सतश्च योनिमसतश्च विव- ॥ ३ ॥ ॐनम—शम्भवाय च मयोभवाय च नम-शङ्कराय च मयस्कराय च नम- शिवाय च शिवतराय च ॥४१॥ ॐभूर्भुवः स्वः ब्रह्मादिसर्वतोभद्रदेवताहरिहरात्मकद्वादशलिङ्गतोभद्रदेवतापीठदेवतासहितश्रीम हारुद्राय नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

ग्रहमण्डलदेवतापूजनम्—ब्रह्मजज्ञानमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः ब्रह्मा देवता ॥ ग्रहा इत्यस्य बृहस्पतिर्ऋषिः अनुष्टुप्

छन्दः ग्रहा देवताः ब्रह्मादिसर्वतोभद्रदेवतासहितसूर्याद्यावाहितग्रहमण्डलदेवतोत्तरपूजने विनियोगः ॥ ॐब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्च योनिमसतश्चविवः ॥ $\frac{3}{13}$ ॥ ॐग्रहाऽऊर्जाहुतयो व्यन्तो विप्राय मतिम् ॥ तेषांविशिप्रियाणां वोहमिषमूर्जꣳसमग्रभमुपयामगृहीतो सीन्द्राय त्वा जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ $\frac{8}{?}$ ॥ ॐभूर्भुवः स्वः ब्रह्मादिसर्वतोभद्रदेवतासहितसूर्याद्यावाहितग्रहमण्डलदेवताभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

अग्निपूजनम्—अग्नेनयेत्यस्य अगस्त्य ऋषिः त्रिष्टुप् छन्दः अग्निर्देवता अग्नेरुत्तरपूजने विनियोगः ॥ ॐ अग्ने नय सुपथा रायेऽअस्मान्विश्वानि देव वयुनानि विद्वान् ॥ युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमऽउक्तिं विधेम ॥ $\frac{36}{5}$ ॥ ॐभूर्भुवः स्वः स्वाहास्वधायुताय मृडाग्नये नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

स्विष्टकृद्धोमः—हविः शेषोत्तरार्धात् द्विर्द्विरवदानधर्मेणावदाय द्विरभिघार्य ब्रह्मणाऽन्वारब्धः—ॐ अग्नये स्विष्टकृते स्वाहा—इदमग्नये स्विष्टकृते न मम । उदकोपस्पर्शः ॥

---

१ अग्नेर्गन्धादिकंबहिर्देयमितिरुद्रकल्पद्रुमकारा.अन्ये तु मध्ये पूजनमिच्छन्ति॥ विष्णुधर्मोत्तरे—मध्येपि गन्धपुष्पादीन् दद्यादग्नेर्न संशयः । बहिर्निवेद्यमानन्तु दातव्यमिति निश्चयः ॥ २ अनेकदिनसाध्यहोमश्चेत्तदा पर्युषितदोषपरिहारार्थं हविःशेषं स्विष्टकृदर्थं घृतमध्ये स्थापयेत् । नष्टे दुष्टे वा हविषि आज्येनैव स्विष्टकृद्धोम. ॥ ३ रौद्रत्वात्—रौद्रं राक्षसमासुरमाभिचरणिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चालभ्योपस्पृशेदपः ॥ आत्माहृदयम् ॥ चात्कर्म च कृत्वति ॥

सर्वप्रायश्चित्तहोमः—हस्ते जलमादाय अस्मिन्सग्रहमखहवनात्मकमहारुद्राख्ये कर्मणि देशतः कालतस्तन्त्रतो मन्त्रतो वा ज्ञानतोऽज्ञानतो वा अयथाकरणन्यूनकरणचतुर्विधकर्मातिरिक्तकरणभ्रेशजातप्रत्यवायपरिहारद्वारा कर्मसाद्गुण्यसिद्ध्यर्थं तथा प्रधानदेवताग्न्योश्च मध्ये गमने तथा समिदाज्यचरुतिलादिहविषांमध्ये अन्यतमस्याभावे होमस्वाहाकारयोः पूर्वापराभावे अग्निमध्येहविर्गतकीटाद्युपघाते प्रणीताग्न्योर्मध्येगमने प्रणीतास्कन्दने इध्मपरिस्तरणादिदाहे कुण्डाद्बहिरग्निपतने समिच्चरुतिलाज्यमध्ये कृमिकीटकादिसंयोगे होममन्त्रपठनसमये स्वरवर्णादिविस्मृतौ देवतावदानमन्त्रतन्त्रकर्मविपर्यासमक्षिकाकीटकेशादिभिर्हविर्दुष्टदग्धपाकाविहितस्थाने होमाकरणादिज्ञाताज्ञातदोषपरिहारार्थं सर्वप्रायश्चित्तहवनं करिष्ये ॥ भूरित्यस्य प्रजापतिर्ऋषिः गायत्रीछन्दः अग्निर्देवता भुवरित्यस्य प्रजापतिर्ऋषिः उष्णिक् छन्दः वायुर्देवता स्वरित्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः सूर्यो देवता त्वन्नो अग्न इत्यस्य वामदेवऋषिः त्रिष्टुप्छन्दः अग्नीवरुणौ देवते सत्वन्न इत्यस्य वामदेवऋषिः त्रिष्टुप्छंदः अग्नीवरुणौ देवते अयाश्चाग्न इत्यस्य वामदेवऋषिः बृहतीछन्दः अग्निर्देवता येते शतमित्यस्य वामदेवऋषिः त्रिष्टुप्छन्दः वरुणसवितृविष्णुविश्वेदेवामरुतः स्वर्काश्च देवताः उदुत्तमामित्यस्य शुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणादयो देवताः प्रजापतय इत्यस्य ब्रह्माऋषिः यजुश्छन्दः प्रजापतिर्देवता सर्वेषां होमे विनियोगः ॥

ब्रह्मणाऽन्वारब्धः—१ ॐ भूःस्वाहा—इदमग्नये नमम ॥२ ॐभुवः

---

१ पा० गृ० कण्डिका पञ्चमी सूत्र ३।४।५॥ अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्त प्राजापत्यं स्विष्टकृच्च ॥ एतन्नित्यं सर्वत्र ॥ प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः ॥

स्वाहा–इदं वायवे न मम ॥ ३ ॐस्वः स्वाहा–इदं सूर्याय न मम

४ ॐत्वन्नोऽ अग्ने वरुणस्य विद्वान् देवस्य हेडोऽ अवया-सिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाᳬसि प्रमुमुग्ध्यस्मत्स्वाहा ॥ ३६ ॥ इदमग्नीवरुणाभ्यां न मम ॥

५ ॐस त्वन्नोऽअग्नेवमो भवोती नेदिष्ठोऽ अस्याऽ उषसो व्युष्टौ ॥ अवयक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो नऽ एधि स्वाहा ॥ ३६ ॥ इदमग्नीवरुणाभ्यां न मम ॥

६ ॐअयाश्चाग्नेस्यनभिशास्तिपाश्चसत्यमित्वमयाऽआसि ॥ अयानोयज्ञंवहास्ययानोधेहिभेषजᳬस्वाहा–इदमग्नये अयसे न मम ॥

७ ॐयेतेशतंवरुणयेसहस्रंयज्ञियाःपाशावितताम्हान्तः ॥ तेभिर्नोऽअद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्काःस्वाहा–इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्य. स्वर्केभ्यश्च न मम ॥

८ ॐउदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमᳬश्रथाय ॥ अथा वयमादित्य व्रते तवानागसोऽ अदितये स्याम स्वाहा ॥ ३३ ॥ इदं वरुणाय आदित्याय अदितये च न मम ॥

९ ॐप्रजापतये स्वाहा–इदं प्रजापतये न मम ॥

॥ अथ बलिदानम् ॥

हस्तेजलमादाय—कृतस्य सग्रहमखहवनात्मकमहारुद्राख्यस्य कर्मणः साङ्गतासिद्ध्यर्थं दिक्पालपूर्वकं स्थापितदेवताभ्यो पूजनपूर्वकं बलिदानं करिष्ये ॥

१ त्रातारमित्यस्यगर्गऋषिःत्रिष्टुप्छन्दःइन्द्रोदेवताइन्द्रप्रीतयर्थेबलि-दानेविनियोगः ॥ ॐत्रातारमिन्द्रमवितारमिन्द्रᳬहवेहवेसुहवᳬशूरमिन्द्रम् ॥

दयामिश्रक्मपुरुहूतमिन्द्रॅ स्वस्तिनोमघवांधात्विन्द्रः ॥ ३६ ॥ प्राच्याम् इन्द्रंसाङ्गंसपरिवारंसायुधंसशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमापभक्तबलिं समर्पयामि ॥ भो इन्द्र दिशंरक्ष बलिंभक्ष ममसकुटुम्बस्याभ्युदयं कुरु ॥ आयुःकर्ताक्षेमकर्ता शान्तिकर्तापुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव ॥ अनेन बलिदानेन इन्द्रः प्रीयताम् ॥

२ त्वन्नोऽअग्नइत्यस्यहिरण्यस्तूपआङ्गिरसऋषिः जगती छन्दः अग्निर्देवताअग्निप्रीत्यर्थेबलिदानेविनियोगः ॐ त्वन्नोऽ अग्ने वरुणस्य विद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषाॅसिप्रमुमुग्ध्यस्मत् ॥३७॥ आग्नेय्याम् अग्निं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ अग्नये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमापभक्तबलिं समर्पयामि ॥ भो अग्ने दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव ॥ अनेन बलिदानेन अग्निः प्रीयताम् ॥

३ यमायेत्यस्यदधीचऋषिःआसुर्युष्णिक्छन्दःयमोदेवतायमप्रीत्यर्थेबलिदानेविनियोगः—ॐ यम यत्वाङ्गिरस्वतेपितृमतेस्वाहा ॥ स्वाहाघर्मायस्वाहाघर्मःपित्रे ॥ ३८ ॥ दक्षिणस्यां यमं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ यमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमापभक्तबलिं समर्पयामि ॥ भो यम दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता

निर्विघ्नकर्ता वरदो भव ॥ अनेन बलिदानेन यमः प्रीयताम् ॥

४ असुन्वन्तमित्यस्यप्रजापतिर्ऋषिः त्रिष्टुप्छन्दः निर्ऋतिर्देवता निर्ऋतिप्रीत्यर्थेबलिदानेविनियोगः—ॐ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य ॥ अन्यमस्मदिच्छ सा तऽइत्यानमोदेवि निर्ऋते तुभ्यमस्तु ॥ ६२ ॥ नैर्ऋत्यां निर्ऋतिं साङ्गं सपरिवारंसायुधंसशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहंपूजयामि॥ निर्ऋतये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमाषभक्तबलिं समर्पयामि ॥ भोनिर्ऋते दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्न कर्ता वरदो भव ॥ अनेन बलिदानेन निर्ऋतिः प्रीयताम् ॥

५ तत्वायामीत्यस्यशुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणोदेवतावरुणप्रीत्यर्थेबलिदानेविनियोगः—ॐतत्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः ॥ २१ ॥ पश्चिमायांवरुणंसाङ्गंसपरिवारंसायुधंसशक्तिकम्एभिर्गन्धाद्युपचारैस्त्वामहंपू० ॥ वरुणाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकायइमंसदीपमाषभक्तबलिंस० ॥ भोवरुणदिशंरक्षबलिंभक्षममसकुटुम्बस्याभ्युदयंकुरु॥ आयुःकर्ताक्षेमकर्ताशान्तिकर्तापुष्टिकर्तातुष्टिकर्तानिर्विघ्नकर्तावरदोभव ॥ अनेनबलिदानेनवरुणःप्रीयताम् ॥

६ आनोनियुद्भिरित्यस्य वसिष्ठऋषिः त्रिष्टुप्छन्दः वायुर्देवता वायुप्रीत्यर्थेबलिदानेविनियोगः— ॐआनोनियुद्भिः शतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहि यज्ञम् ॥ वायोऽ अस्मिन्त्सवने मादयस्व यूय-

पात स्वस्तिभिः सदा नः ॥ ३८/२७ ॥ वायव्यां वायुं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ वायवे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमाषभक्तबलिं समर्पयामि ॥ भो वायो दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु ॥ आयुःकर्त्ता क्षेमकर्त्ता शान्तिकर्त्ता पुष्टिकर्त्ता तुष्टिकर्त्ता निर्विघ्नकर्त्ता वरदो भव ॥ अनेन बलिदानेन वायुः प्रीयताम् ॥

७ वयःसोमेत्यस्य बन्धुर्ऋषिः गायत्रीछन्दः सोमो देवता सोमप्रीत्यर्थे बलिदाने विनियोगः—ॐ व्वयः सोम व्रते तव मनस्तनूषु बिब्भ्रतः ॥ प्रजावन्तः सचेमहि ॥ ५६/३ ॥ उदीच्यां सोमं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ सोमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमाषभक्तबलिं समर्पयामि ॥ भो सोम दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु ॥ आयुःकर्त्ता क्षेमकर्त्ता शान्तिकर्त्ता पुष्टिकर्त्ता तुष्टिकर्त्ता निर्विघ्नकर्त्ता वरदो भव ॥ अनेन बलिदानेन सोमःप्रीयताम् ॥

८ तमीशानमित्यस्यगौतमऋषिःजगतीछन्दःईशानोदेवताईशानप्रीत्यर्थेबलिदानेविनियोगः—ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेव्वयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ १८/२५ । ईशान्याम् ईशानंसाङ्गंसपरिवारसायुधंसशक्तिकम्एभिर्गन्धाद्युपचारैस्त्वामहंपूजयामि ॥ ईशानायसाङ्गाय सपरिवाराय सायुधायसशक्तिकायइमंसदीपमाषभक्तबलिंस० ॥ भोईशानदिशंरक्षबलिंभक्षममसकुटुम्बस्याभ्युदयंकुरु ॥ आयुःकर्त्ता क्षेमकर्त्ता शान्तिकर्त्ता पुष्टिकर्त्ता तुष्टिकर्त्तानिर्विघ्नकर्त्तावरदोभव ॥ अनेनबलिदानेनईशानःप्रीयताम् ॥

९ अस्मेरुद्रामेहनेत्यस्य प्रगाथऋषिः त्रिष्टुप्छन्दःब्रह्मा देवता ब्रह्म-प्रीत्यर्थे बलिदाने विनियोगः—ॐअस्मे रुद्रा मेहनापर्वतासोवृत्रहत्ये भरंहूतौसुजोषाः॥ यःशᳪ᳭सतेस्तुवतेधायिपुज्रऽइन्द्रज्येष्ठाऽअस्माँ२ऽ अवन्तु देवाः॥ ३३॥ पूर्वेशानयोर्मध्ये ऊर्ध्वायां ब्रह्माणं साङ्गं सपरिवारंसायुधंसशक्तिकमेभिर्गन्धाद्युपचारैस्त्वामहंपूजयामि ॥ ब्रह्मणे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमाषभक्तबलिं समर्पयामि ॥ भो ब्रह्मन् दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव ॥ अनेन बलिदानेन ब्रह्मा प्रीयताम् ॥

१० स्योनापृथिवीत्यस्य मेधातिथिर्ऋषिः गायत्रीछन्दः अनन्तो देवता अनन्तप्रीत्यर्थे बलिदानेविनियोगः—ॐस्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म्म सप्रथाः॥ ३३॥ निर्ऋति-पश्चिमयोर्मध्ये अधःस्थायां दिशि अनन्तं साङ्गं सपरिवारं सायुधं सशक्तिकमेभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ अनन्ताय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमाषभक्तबलिं समर्पयामि ॥ भो अनन्त दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव ॥ अनेन बलिदानेन अनन्तः प्रीयताम् ॥

॥ स्थापितदेवताबलिदानम् ॥

१ गणेशबलिः—गणानान्त्वेत्यस्यप्रजापतिर्ऋषिःआर्षीबृहतीछन्दःगणपतिर्देवतागणपतिप्रीत्यर्थेबलिदानेविनियोगः॥ॐगणानान्त्वागणपतिᳪ᳭ हवामहे प्रियाणान्त्वा प्रियपतिᳪ᳭हवामहे निधीनान्त्वा निधिपतिᳪ᳭हवामहे

द्वसोमम ॥ आहमजानिगर्भधमात्वमजासिगर्भधम् ॥३६॥ गणपतिंसाङ्गं सपरिवारंसायुधंसशक्तिकमेभिर्गन्धाद्युपचारैस्त्वामहंपूजयामि ॥ गण-पतयेसाङ्गायसपरिवारायसायुधायसशक्तिकाय इमं सदीपमाषभक्त-बलिं समर्पयामि ॥ भो गणपते इमं बलिं गृहाण मम सकुटुम्बस्या-भ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव ॥ अनेन बलिदानेन गणपतिः प्रीयताम् ॥

२ मातृकाबलिः—समख्यइत्यस्यवत्सऋषिः आस्तारपङ्क्तिश्छन्दः वाग्देवता मातृप्रीत्यर्थे बलिदाने विनियोगः ॥ ॐसमख्ये देव्या धिया सन्दक्षिणयोरुचक्षसा ॥ मा मुऽआयुः प्रमोषीर्मोऽअहन्तव वीरं विदेय तव देवि सन्दृशि ॥ ३७ ॥ वसोर्द्धारासहितसगणेशगौर्याद्यावाहि-तमातृः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः एभिर्गन्धाद्युपचारैः वः अहं पूजयामि ॥ वसोर्द्धारासहितसगणेशगौर्याद्यावाहितमातृभ्यः साङ्गाभ्यः सपरिवाराभ्यः सायुधाभ्यः सशक्तिकाभ्यः इमं सदीप-माषभक्तबलिं समर्पयामि ॥ भोवसोर्द्धारासहितसगणेशगौर्याद्यावाहित-मातरः इमं बलिं गृह्णीत मम सकुटुम्बस्याभ्युदयं कुरुत आयुःकर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्यः निर्विघ्नकर्त्र्यः वरदाःभवत । अनेन बलिदानेन वसोर्द्धारासहितसगणेशगौर्यादिमातरः प्रीयन्ताम् ॥

३ वास्तोष्पतिबलिः—वास्तोष्पतइत्यस्य वसिष्ठऋषिः त्रिष्टुप्छन्दः वास्तोष्पतिर्देवता वास्तोष्पतिप्रीत्यर्थे बलिदाने विनियोगः ॥ ॐवास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोअनमीवोभवानः ॥ यत्त्वेमहेप्र-तितन्नोजुषस्वशन्नोभवद्विपदेशञ्चतुष्पदे ॥ शिख्यादिसहितवास्तोष्पतिं साङ्गं सपरिवारं सायुधं सशक्तिकमेभिर्गन्धाद्युपचारैस्त्वामहं

पूजयामि ॥ शिख्यादिसहितवास्तोष्पतये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमाषभक्तबलिं समर्पयामि ॥ भोशिख्यादिसहितवास्तोष्पते इमं बलिं गृहाण मम सकुटुम्बस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव ॥ अनेन बलिदानेन शिख्यादिसहितवास्तोष्पतिः प्रीयताम् ॥

४ ग्रहबलिः—ग्रहाइत्यस्य बृहस्पतिर्ऋषिः निच्यृदार्ष्यनुष्टुप्छन्दः ग्रहा देवताः सूर्याद्यावाहितग्रहप्रीत्यर्थे बलिदाने विनियोगः ॥ ॐग्रहाऽऊर्ज्जाहुतयो व्यन्तोविप्रायमतिम् ॥ तेषां विशिप्रियाणां वोहमिषमूर्ज्जᳬसमग्रभमुपयामगृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्येष तेयोनिरिन्द्राय त्वाजुष्टतमम् ॥ २ ॥ ब्रह्मादिसर्वतोभद्रदेवतासहिताः आदित्याद्यावाहितदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः एभिर्गन्धाद्युपचारैः वः अह पूजयामि । ब्रह्मादिसर्वतोभद्रदेवतासहिताभ्यः आदित्याद्यावाहितदेवताभ्यः साङ्गाभ्यः सपरिवाराभ्यः सायुधाभ्यः सशक्तिकाभ्यः इमं सदीपमाषभक्तबलिं समर्पयामि ॥ भोब्रह्मादिसर्वतोभद्रदेवतासहिताः आदित्याद्यावाहितदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः इमंबलिंगृह्णीतममसकुटुम्बस्याभ्युदयंकुरुत ॥ आयुःकर्त्र्यः क्षेमकर्त्र्यः शांतिकर्त्र्यः पुष्टिकर्त्र्य तुष्टिकर्त्र्यः निर्विघ्नकर्त्र्यः वरदाः भवत ॥ अनेनबलिदानेनब्रह्मादिसर्वतोभद्रदेवतासहितादित्याद्यावाहितदेवताः प्रीयन्ताम् ॥

५ रुद्रबलिः—रुद्रपीठस्याग्रे अर्कपत्रे वैणवपात्रे वा घृतौदनबलिं निधाय इमारुद्रायेत्यस्यकुत्सऋषिः आर्षीजगतीछन्दः रुद्रोदेवतारुद्रप्रीतयेबलिदानेविनियोग ॥ ॐइमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमती? ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननाता-

तुरम् ॥६६॥ हरिहरात्मकद्वादशलिङ्गतोभद्रदेवतापूर्वकपीठदेवतासहितं महारुद्रं साङ्गं सपरिवारं सायुधं सशक्तिकमेभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ हरिहरात्मकद्वादशलिङ्गतोभद्रदेवतापूर्वकपीठदेवतासहिताय महारुद्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपघृतौदनबलिंसमर्पयामि ॥ भोहरिहरात्मकद्वादशलिङ्गतोभद्रदेवतापूर्वकपीठदेवतासहितमहारुद्र साङ्ग सपरिवार सायुध सशक्तिक इमं बलिंगृहाणममसकुटुम्बस्याभ्युदयंकुरु ॥ आयुःकर्ताक्षेमकर्ताशान्तिकर्ता पुष्टिकर्तातुष्टिकर्ता निर्विघ्नकर्ता वरदो भव ॥ अनेनबलिदानेनहरिहरात्मकद्वादशलिङ्गतोभद्रदेवतापूर्वकपीठदेवतासहितमहारुद्रः प्रीयताम् ॥

६ योगिनीदेवताबलिः-योगेयोगइत्यस्यशुनःशेपऋषिः गायत्री छन्दः लिङ्गोक्ता देवता योगिनीदेवताप्रीत्यर्थे बलिदाने विनियोगः ॥ ॐ योगेयोगेतवस्तरं वाजेवाजे हवामहे ॥ सखायइन्द्रमूतये ॥६७॥ महाकालीमहालक्ष्मीमहासरस्वतीसहितगजाननाद्यावाहितचतुः षष्टियोगिन्यः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः एभिर्गन्धाद्युपचारैः वः अहं पूजयामि ॥ महाकालीमहालक्ष्मीमहासरस्वतीसहितगजाननाद्यावाहितचतुःषष्टियोगिनीभ्यः साङ्गाभ्यः सपरिवाराभ्यः सायुधाभ्यः सशक्तिकाभ्यः इम सदीपमाषभक्तबलिं समर्पयामि ॥ भो महाकाली महालक्ष्मीमहासरस्वतीसहितचतुःषष्टियोगिन्यः इमंबलिंगृह्णीत ममस कुटुम्बस्याभ्युदयंकुरुत आयुःकर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्यः निर्विघ्नकर्त्र्यः वरदाः भवत ॥ अनेनबलिदानेनमहाकालीमहालक्ष्मीमहासरस्वतीसहितगजाननाद्यावाहितचतुःषष्टियोगिन्यःप्रीयन्ताम्॥

७ क्षेत्रपालपीठदेवबलिः—नमोस्तुसर्पेभ्य इत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छन्दः सर्पा देवता क्षेत्रपालपीठदेवप्रीत्यर्थे बलिदाने विनियोगः॥ ॐनमोस्तुसर्पेभ्यो ये के च पृथिवीमनु॥ येऽअन्तरिक्षे येदिविते॑भ्यः सर्पेभ्योनमः॥ $\frac{६}{१३}$ ॥ क्षेत्रपालपीठदेवान्साङ्गान्सपरिवारान्सायुधान् सशक्तिकानएभिर्गन्धाद्युपचारैः वः अहपूजयामि ॥ क्षेत्रपालपीठदेवेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः इमं सदीपमाषभक्तबलिं समर्पयामि ॥ भो क्षेत्रपालपीठदेवाः इमं बलिं गृह्णीत मम स कुटुम्बस्याभ्युदयंकुरुत॥ आयुःकर्तारः क्षेमकर्तारः शान्तिर्तारः पुष्टिकर्तारः तुष्टिकर्तारःनि० कु० वरदाः भवत । अनेनब० क्षेत्रपालपीठदेवाःप्री० ॥

८ क्षेत्रपालमहाबलिः—मण्डपाद् बहिः वंशपात्रे सदीपमाषभक्तदध्योदनताम्बूलदक्षिणाकूष्माण्डोदककुम्भयुतंबलिं संस्थाप्य हरिद्राकुङ्कुमसिन्दूरपताकायुतं कृत्वा हस्तेजलमादाय अद्यपू० मारब्धस्यमहारुद्राख्यस्य कर्मणः साङ्गतासिद्ध्यर्थं क्षेत्रपालाय पूजनपूर्वकं बलिदानं करिष्ये ॥ बलिदानपात्रे पूगीफले क्षेत्रपालमावाहयेत् ॥ नहिस्पशमित्यस्याविश्वामित्रऋषिः त्रिष्टुप्छन्दः क्षेत्रपालोदेवता क्षेत्रपालपूजने बलिदाने च विनियोगः ॥ ॐनहिस्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः॥ एमेनमवृधन्नमृताऽ अमर्त्यं वैश्वानरं क्षैत्रजित्याय देवाः ॥ $\frac{६०}{३३}$ ॥ ॐभूर्भुवः स्व क्षेत्रपालाय नमः क्षेत्रपालमावाहयामि स्थापयामि ॥ क्षेत्रपालाय नमः इत्यनेन षोडशोपचारैः पञ्चोपचारैर्वा सम्पूज्य प्रार्थयेत् ॐनमामि क्षेत्रपाल त्वां भूतप्रेतगणाधिप । पूजां

१ हेमाद्रि —सोदकुम्भ सकूष्माण्ड क्षेत्रपालबलिं हरत् ॥ चतुर्वर्तिसमायुक्तं दीपं तत्र निधापयत् ॥

वलिं गृहाणेमंसौम्योभवतुसर्वदा ॥ आयुरारोग्यम्मेदेहिनिर्विघ्नंकुरुसर्वदा । माविघ्नंमास्तुमेपापंमासन्तुपरिपन्थिनः ॥ सौम्याभवन्तुतृप्ताश्चभूतप्रेताः सुखावहाः ॥ यंयंयंयक्षरूपं दशदिशिवदनं भूमिकम्पायमानं संसं संहारमूर्तिं शिरमुकुटजटाशेखरं चन्द्रविम्बम् । दंदंदंदीर्घकेशं विकृतनखमुखं नोर्ध्वरेखाकपालं पंपंपंपापनाशं प्रणतपशुपतिं भैरवं क्षेत्रपालम् ॥ ॐनमोक्षेत्रपाल चित्रतुरङ्गवाहन सर्वभूतप्रेतपिशाचशाकिनीडाकिनी कूष्माण्डगणवेतालादिपरिवृत दध्योदनप्रिय सकलशक्तिसहित इमां पूजां गृहाण॥अनया पूजया क्षेत्रपालः प्री०॥ क्षेत्रपालायसाङ्गायसपरिवाराय-वर्वरकेशाय भूतप्रेतपिशाचशाकिनीडाकिनीकूष्माण्डगणवेतालादियुताय सायुधायसशक्तिकायसवाहनाय इमंसदीपमाषभक्तबलिं समर्पयामि ॥ भोक्षेत्रपालसर्वतोदिशंरक्षवलिंभक्षममसकुटुम्बस्याभ्युदयंकुरु आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव ॥ अनेन वलिदानेन क्षेत्रपालः प्रीयताम् ॥ पश्चादनवेक्षमाणेन दुर्व्राह्मणेन शूद्रेणवावलिंनीत्वाचतुष्पथेस्थापयेत् ॥ यजमानस्तस्यपृष्ठतोद्वारपर्यन्तं गत्वा जलं क्षिपेत्–हिङ्कारायेत्यादीनां प्रस्कण्वऋषिः दैवीत्रिष्टुप्दैवीपङ्क्तिर्दैवीजगतीछन्दांसिलिङ्गोक्तादेवताजलक्षेपणेविनियोगः । ॐ हिङ्कारायस्वाहाहिङ्कृताय स्वाहा क्रन्दतेस्वाहा वक्रन्दायस्वाहाप्रोथतेस्वाहा प्रप्रोथायस्वाहा गन्धायस्वाहा घ्रातायस्वाहा निविष्टायस्वाहोपविष्टायस्वाहा सन्दितायस्वाहा वल्गतेस्वाहा सीनायस्वाहा शयानायस्वाहा स्वपतेस्वाहा जाग्रतेस्वाहा कूजतेस्वाहाप्रबुद्धायस्वाहा विजृम्भमाणायस्वाहा विचृत्तायस्वाहा संहानायस्वाहोपस्थितायस्वाहायनायस्वाहाप्रायणायस्वाहा ॥२६॥ पाणिपादप्रक्षाल्यआचामेत् ॥

पूर्णाहुतिहोम :—तत्र उपकल्पनीयानि—आज्यस्थाली होमावशिष्टादाज्यादन्यदाज्यं वैकङ्कतीस्रुक् खादिरःस्रुवःसम्मार्गकुशाः पवित्रे नारिकेलफलं ताम्बूलवीटकं पूगीफलं पट्टवस्त्रखण्डं रक्तसूत्रं पुष्पाणि पुष्पमाला च इत्युपकल्प्य हस्ते जलमादाय अद्यपू० कृतस्य महारुद्रस्य सम्पूर्णतासिद्ध्यर्थं वसोर्द्धारासमन्वितं पूर्णाहुतिहोमं करिष्ये ॥

आज्यं निरुप्याग्नावधिश्रित्य स्रुवं स्रुचं च प्रतप्य सम्मार्गकुशैः सम्मृज्य प्रणीतोदकेनाभ्युक्ष्य पुनः प्रतप्य अग्नेः पश्चिमतो याम्यायां निदध्यात् ॥ आज्यमुद्वास्य पवित्राभ्यामुत्पूय अवेक्ष्य अपद्रव्यं निरस्य स्रुवेण चतुर्वारमाज्यं स्रुचि गृहीत्वा शिष्टाचारात्तस्यां सपूगीफलं ताम्बूलवीटकं निधाय तदुपरि रक्तवस्त्रवेष्टितं रक्तसूत्रबद्धं पुष्पमालापरिवेष्टितं सिन्दूरादिभिश्चर्चितं नारिकेलफलं निधाय अधोमुखस्रुवच्छन्नां तां स्रुचमादाय वामस्तनान्तमानीय यजमानान्वारब्धः आचार्यः आसीन एव पूर्णाहुतिं जुहुयात् ॥

---

१ प्रयोगदर्पण रेणु कालस्मृत्वाऽस्यरुद्रस्यहोमस्यपरिपूर्तय । पूर्णाहुतिंकरिष्येऽहवसोर्द्धारासमन्विताम् ॥ अन्यदाज्यसमानीयाधिश्रितेस्रुक्स्रुवावुभौ । तौ प्रतप्य च सम्मार्गकुशैः सम्मृज्याभिश्रयेत् ॥ पुन प्रतप्य याम्याया निदध्यात्स्रुक्स्रुवौ च तौ । आज्यमुद्वास्यचोत्पूयावेक्ष्यापद्रव्यनिष्कृति ॥ चतुर्गृहीतमाज्य तद गृहीत्वा स्रुचि मध्यत । वस्त्रताम्बूलपूगादिफलपुष्पसमन्विताम् ॥ अधोमुखस्रुवच्छन्नागन्धमाल्याद्यलङ्कृताम् । पूर्वंदक्षिणहस्तेनपश्चाद्वामेनपाणिना ॥ गृहीत्वाऽयस्रुचकर्ताशङ्खसन्निभमुद्रया । वामस्तनान्तमानीयनाभिमूलास्रुचतत ॥ अग्रमध्यममध्यस्थमलमध्यममध्यत ॥ पाणिद्वयेन होतव्य पाणिरेको निरर्थक ॥ सततमाज्यधारा तां पूर्णाहुतिमथाचरेत् । समुद्रादूर्मिंसूक्तेनपुनस्त्वेत्यनयाऽथवा ॥ सप्ततेअग्न इति वामूर्द्धानन्दिवमन्नत । पूर्णादर्वीतिमन्त्रेणपूर्णाहुतिमथाचरेत् ॥ २ ॥ रुद्रकल्पद्रुमहोमपरिच्छेदे—केचित्तिष्ठन्पूर्णा-

सं०—समुद्रादूर्मिरित्येकादशर्चस्यवामदेवऋषिः त्रिष्टुप्छन्दः यज्ञपुरुषोदेवतापुनस्त्वेत्यस्यप्रजापतिर्ऋषिः त्रिष्टुप्छन्दः अग्निर्देवता सप्तत अग्नइत्यस्यसप्तऋषयः त्रिष्टुप्छन्दः अग्निर्देवतामूर्द्धानमित्यस्य भरद्वाजऋषिः त्रिष्टुप्छन्दः अग्निर्देवतापूर्णादर्वीत्यस्य और्णवाभऋषिः अनुष्टुप्छन्दः शतक्रतुर्देवतासर्वेषांपूर्णाहुतिहोमेविनियोगः । ॐसमुद्रादू-र्म्मिर्मधुमाँ२ऽउदारदुपा०ऽशुनासममृतत्त्वमानट् ॥ घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः॥१६॥ वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञे धारयामा नमोभिः॥ उपब्रह्माशृणवच्छस्यमानञ्चतुः-शृङ्गोऽव-मीद्गौरऽएतत् ॥१७॥ चत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्ता-सोऽअस्य ॥ त्रिधा बद्धो वृषभो रोरवीतिमहोदेवोमर्त्याँ२ऽआविवेश ॥ १८॥ त्रिधाहितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्वविन्दन् ॥

---

हुतिमाचरन्तितन्निर्मूलम् ॥ परशुराममहारुद्रप्रयोग होमोऽथोद्विविध प्रोक्त श्रौत स्मार्तश्चबहोतृभि । श्रौतोयजतिसंज्ञोऽसौस्मार्तोजुहोतिसंज्ञक ॥ तिष्ठता हूयते यत्र याज्यया चानुवाक्यया । वषट्कारप्रदानेन स श्रौत परिकीर्तित ॥ यत्र होत्रोपविश्य स्वाहाकारेण हूयते । स स्मार्त इति विज्ञेय पूर्णाहुत्यादि कर्मसु ॥ केचिदुत्थाय कुर्वन्ति कात्यायनमत न तत् । तस्मादध्वर्युणा कार्या पूर्णासीनेन सर्वदा ॥ कल्पद्रुमे तथा खण्डदीक्षितमहारुद्रपद्धतौ तु त्र्यृचा एव पूर्णाहुति ॥ अन्येषा म न्त्राणामपिविकल्पेनैवपूर्णाहुति प्रोक्ता यथा—सप्ततेअग्न इति मन्त्रेण वा अत्र इद मग्नये सप्तवत इति त्याग ॥ मूर्धानन्दिवइत्यनेन वा अत्र इदमग्नयेवैश्वानरायेति त्याग ॥ समुद्रादूर्मिरितित्र्यृचेन वा पुनरत्वेति वा पूर्णादर्वीत्यनयावात्रयाणामिदमग्नय इति त्याग ॥ केचनविकल्प विहायसर्वैरपिमन्त्रै पूर्णाहु तिहोमकुर्वन्तितदेतत्करण मन्त्राणा विकल्पानुगमात्समुच्चय न प्रमाणाभावात् चिन्त्यमितिकल्पद्रुमकारा ॥

इन्द्र एकं सूर्य्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः ॥ १३ ॥
एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे ॥ घृतस्यधाराऽ
अभिचाकशीमि हिरण्ययो वेतसो मध्यऽ आसाम् ॥ १७ ॥ सम्यक्
स्रवन्तिसरितोनधेनाऽ अन्तर्हृदामनसापूयमानाः ॥ एतेऽअर्षन्त्यूर्म्म-
यो घृतस्य मृगा ऽ इव क्षिपणोरीषमाणाः ॥ १८ ॥ सिन्धोरिव प्राध्व-
नेशूघनासोवातप्रमियःपतयन्तियह्वाः ॥ घृतस्यधाराऽअरुषोनवा-
जी काष्ठा भिन्दन्नूर्मिभिःपिन्वमानः ॥ १९ ॥ अभिप्रवन्त समनेव
योषाः कल्याण्यः-स्मयमानासोऽअग्निम् ॥ घृतस्य धाराःसमिधो
नसन्त ता जुषाणो हर्य्यति जातवेदाः ॥ २० ॥ कन्याऽइववहतुमेतवाऽ
उऽ अञ्ज्यञ्जानाऽ अभिचाकशीमि ॥ यत्र सोमः - सूयते यत्र यज्ञो
घृतस्यधाराऽअभितत्पवन्ते ॥२१॥ अभ्यर्षत सुष्टुतिङ्गव्यमाजिमस्मासु-
भद्रा द्रविणानि धत्त ॥ इमंयज्ञन्नयतदेवतानोघृतस्यधारामधुमत्पवन्ते
॥ २२ ॥ धामन्ते विश्वम्भुवनमधिश्रितमन्तः समुद्रे हृद्यन्तरायुषि ॥
अपामनीकेसमिथेयऽआभृतस्तमश्याम मधुमन्तन्तऽ ऊर्म्मिम् ॥ २३ ॥
पुनस्त्वादित्यारुद्रावसवःसमिन्धतांपुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृ-
तेन त्वन्तन्वं वर्द्धयस्वसत्याःसन्तु यजमानस्य कामाः ॥ २४ ॥ सप्त
तेऽअग्नेसमिधः- सप्तजिह्वाःसप्तऽऋषयःसप्तधाम प्रियाणि ॥ सप्त
होत्राःसप्तधात्वायजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा ॥ २५ ॥
मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्वानरमृतऽ आजातमग्निम् ॥ कविः
सम्राजमतिथिञ्जनानामासन्ना पात्रञ्जनयन्त देवाः ॥ २६ ॥ पूर्णा दर्वि
परापत सुपूर्णा पुनरापत ॥ वस्नेव विक्रीणावहाऽइषमूर्जं शतक्र-
तो स्वाहा ॥ २७ ॥ त्यागः—इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः
शतक्रतवे सप्तवतेऽग्नये अद्भ्यश्च न मम ॥ संस्रवमक्षेपः॥ इतिपूर्णाहुतिः॥

वसोर्द्धाराहोमः ॥ वह्नेरुपरि स्तम्भद्वयनिधृतामौदुम्बरीमृज्वीम कोटरां बाहुप्रमाणामार्द्रां स्रुचं पूर्वाग्रां निधाय तदुपरि शृङ्खलाबद्धतेननिर्मलघृतपूरितेन ताम्रमृदादिकुम्भेनाधोयवमात्रछिद्रेणाज्यमुत्र्य ताऽग्नेरुपरि वसोर्द्धारां पातयेत् ॥ तस्यां च घृतधारायां स्रुक्प्रणालिकयाऽग्नौपतन्त्यांसत्यांचमकाग्नेयादीनिसूक्तानिपठेत् ॥ हस्तेजलमादाय सप्ततइत्यारभ्यइममित्यन्तानांसप्तर्चयऋषयः घृतमित्यस्यगृत्समदऋषिःसप्ततइत्यस्यत्रिष्टुप्छन्दः शुक्रज्योतिरित्यस्यउष्णिक्छन्दःईदृक्ष

---

१ प्रयोगदर्पणे औदुम्बरीमथार्द्रां च ऋज्वीं कोटरवर्जिताम् ॥ बाहुमात्रां स्रुचं कृत्वा तत स्तम्भद्वयोपरि। घृतकुम्भवसोर्द्धारामग्नेरुपरिपातयेत् ॥२ सर्वानुक्रमसूत्र सप्तत आग्नेयीत्रिष्टुप्सप्तऋषीणाम् ॥ शुक्रज्योति षण्मारुत्यआद्याचतुर्थी चोष्णिग्द्वितीया तृतीया च गायत्रीपञ्चमी जगती षष्ठीगायत्र्युष्णिगैन्द्र देवीर्मारुतमिमत्रयोदशर्चं आग्नेयत्रैष्टुभोऽनुवाकोयज्ञस्तुतिर्घृतस्तुतिर्वावसोर्धाराभिवादिनी वा ॥ स०सूत्रे अ०१७ मन्त्र २७ तथा २८॥ प्रयोगदर्पण सप्ततेत्यनुवाक च मरुत्सूक्तान्विशेषत॥ चमकान्वसुधारोक्तान्वसोर्द्धाराहुतौ पठेत्। श्रावयेत्सूक्तमाग्नेय वैष्णवरौद्रमैन्द्रवम्॥ महावैश्वानरश्चैव ज्येष्ठसाम च पाठयेत्। समास्त्वातिच ह्याग्नेय विष्णोर्नुकंरुवैष्णवम्॥ रुद्राध्यायेन वै रौद्र आप्यायस्वत्यृचमैन्द्रवम्। वैश्वानरारण्यमारण्ये प्रोक्त षष्ठ प्रपाठके॥ महावैश्वानर सामद्वय चैव तु श्रावयेत्॥ मूर्द्धानन्दिवइत्यस्यामृचिगीतंहि ज्येष्ठकम्॥ रेणुकारिकाया–मूर्द्धानन्दिवमाग्नेय स्वादिष्ठया तथैन्द्रवम्॥ काशी दीक्षितमहारुद्रे तु–ऐन्द्रव सोमोधेनुमिति पद इति विकल्पानुगम ॥ महावैश्वानर ज्येष्ठसामयोरभावे स्वशाखीयऋक्मात्रं पठेत् ॥ महावैश्वानरस्थाने ॐ वैश्वानुरोन ऊतय० ॥ र्द्द ॥ ज्येष्ठसामस्थाने–मूर्द्धानन्दिवो० ॥ ३५ ॥ पठेदिति देवभट्टकृत देवस्थापनपद्धतौ ॥ एतच्चोपलक्षण तेनान्यान्यप्याग्नेयादीनि यथाभ्यास पठेत ॥

तथेत्यनयोर्गायत्रीछन्दः ऋताजिञ्चेत्यस्यउष्णिक्छन्दः ईदृक्षासइत्यस्य जगतीछन्दः स्वतवाँश्चेत्यस्यस्वराड्गायत्रीछन्दः इन्द्रमित्यस्यशक्करी छन्दः इमंघृतमित्यनयोस्त्रिष्टुप्छन्दः सप्ततइत्यस्य अग्निर्देवताशुक्रज्यो- तिरित्यारभ्यइन्द्रमित्यन्तानांसप्तानांमरुतोदेवताः इमं घृतमित्यनयोर- ग्निर्देवता वाजश्चमेत्यादीनां वेट्स्वाहेत्यन्तानामेकाधिकचतुःशतसंख्या- कानांवसोर्द्धारामन्त्राणांदेवाऋषयः वाजश्चमइत्यादीनांचतुरक्षराणांदैवी- बृहती छन्दः शश्चमइत्यादीनांत्र्यक्षराणांदैव्यनुष्टुप्छन्दः प्रयतिश्चम- इत्येवंपञ्चाक्षराणांदैवीपङ्क्तिः आधिपत्यश्चमइत्यादीनां षडक्षराणांदैवी- त्रिष्टुप्छन्दः यजुर्गायत्रीवाछन्दः हारियोजनश्चमइत्यादीनां सप्ताक्षराणां दैवीजगतीयजुरुष्णिग्वाआयुर्यज्ञेनकल्पतामित्यादीनामष्टाक्षराणांयजुर- नुष्टुप् प्राजापत्या गायत्री वा भुवनस्यपतय इत्यादीनां नवाक्षराणां यजुर्बृहतीआसुरीजगतीवाप्रसुग्रायवैनऽशिनायेत्यादीनांदशाक्षराणांयजुः- पङ्क्तिः आसुरीत्रिष्टुब्वाविनऽशिनआन्त्यायेत्यादीनामेकादशाक्षराणां यजुस्त्रिष्टुप्आसुरीपङ्क्तिर्वाअङ्गुलयः शक्करयोदिशश्चम इत्येषांद्वादशा- क्षराणांयजुर्जगतीसामगायत्रीवाप्राजापत्योष्णिग्वाआसुरीबृहतीवासर्वेषा- मग्निर्देवतासमस्तेवैश्याग्नेयसूक्तस्याग्निर्ऋषिः त्रिष्टुप्छन्दः अग्निर्देवता विष्णोर्नुकमितिचतुर्णामौतथ्योदीर्घतमाऋषिः त्रिष्टुप्छन्दः विष्णुर्देवता इदंविष्णुरित्यस्यमेधातिथिर्ऋषिः गायत्री छन्दः विष्णुर्देवतात्रीणिपदे- त्यस्य याज्ञवल्क्यऋषिःगायत्री छन्दः विष्णुर्देवतानमस्तइत्यध्यायस्य परमेष्ठीऋषिः प्रथमागायत्रीतिस्रोऽनुष्टुभस्तिस्रः पङ्क्तयः सप्तानुष्टुभो द्वेजगत्यावन्तयोः कुत्सोपि एकोरुद्रः सर्वासांदेवतानमोहिरण्यबाहवइ- त्यादीनिद्रापेइत्यतःप्राक्तनानिसर्वाणियजूंषि नमोहिरण्यबाहवइत्यादीनां

भ्वपतिभ्यश्चवोनमइत्यन्तानांहिरण्यबाह्वादयोमन्त्रवर्णावगता उभयतो-
नमस्कारावह्वोरुद्रादेवताः नमोभवायचरुद्रायचेत्यादीनामखिदतेचेत्य-
न्तानांमं भवादयोमन्त्रलिङ्गावगताअन्यतरतोनमस्कारावह्वोरुद्रादेवताः
नमइषुकृद्भ्योधनुष्कृद्भ्यश्चवो नमइत्यस्ययजुषः उभयतो नमस्कारा
वह्वोरुद्रादेवताः नमोहिरण्यबाहवइत्यादयोद्वाविंनोरुद्राः नमःसभा-
भ्यइत्यादयोजाताख्या रुद्रा नमोवः किरिकेभ्यइत्यग्निवायू सूर्यहृदय-
भूतत्वाहुतीनाम् अन्यतरतोनमस्कारावह्वोरुद्रादेवताः द्रापइत्यस्यो-
परिष्टाद्बृहतीछन्दः इमारुद्रायेत्यस्याःकुत्सऋषिः जगतीछन्दः याते-
रुद्रेत्यस्यानुष्टुप्छन्दःपरिनोरुद्रमीढुष्टमेतिद्वयोस्त्रिष्टुप्छन्दः विकिरिद्रसह-
स्राणीतिद्वयोरनुष्टुप्छन्दः सप्तानामेको रुद्रो देवता असङ्ख्यातेत्यादी-
नांदशानामनुष्टुप्छन्दः वह्वोरुद्रादेवताःनमोस्तुरुद्रेभ्यइत्यादीनांत्रयाणां
यजुषांधृतिच्छन्दः वह्वोरुद्रादेवताः॥ आप्यायस्वेतीतिसृणांगोतमऋषिः
आद्यायागायत्रीछन्दः द्वितीयायास्त्रिष्टुप्छन्दः तृतीयायाउष्णिक्छन्दः
सोमोदेवतामहाविश्वानरसाम्नांवैश्वानरऋषिःपथ्याबृहतीछन्दः वैश्वानरो-
देवताज्येष्ठसाम्नोभरद्वाजऋषिः त्रिष्टुप्छन्दः वैश्वानरोदेवतासर्वेषांवसो-
र्द्धाराहोमे विनियोगः—ॐसप्ततेऽअग्नेसमिधः सप्तजिह्वा२सप्तऽऋ-
षयः८सप्त धाम प्रियाणि ॥ सप्तहोत्राः८ सप्त धात्वायजन्तिसप्तयोनी-
रापृणस्व घृतेन स्वाहा ॥ ६६ ॥ शुक्रज्योतिश्च चित्रज्योतिश्च सत्य-
ज्योतिश्च ज्योतिष्माँश्च ॥ शुक्रश्चऽऋतपाश्चात्यंऽहाः८ ॥ ६० ॥
ईदृङ्चान्यादृङ्च सदृङ्च प्रतिसदृङ्च ॥ मितश्च सम्मितश्च सभराः८ ॥ ६१ ॥

ऋतश्चं सत्यश्च ध्रुवश्च धरुणश्च॥धर्त्ता चं विधर्त्ता चं विधारय?॥ ८३/१७ ॥ ऋतजिच्चं सत्यजिच्चं सेनजिच्च सुषेणश्च॥ अन्तिमित्रश्चदूरेऽ अमित्रश्च गण? ॥ ८३/१७॥ ईदृक्षासऽ एतादृक्षासऽ ऊषुणं-सदृक्षासःप्रतिसदृक्षासऽ एतन ॥ मितासंश्च सम्मितासोनाऽअद्यसभरसोमरुतोयज्ञेऽअस्मिन् ॥ ८४/१७॥ स्वतवाँश्च प्रघासी चं सान्तपनश्च गृहमेधी चं ॥ क्रीडी चं शाकी चोज्जेषी ॥ ८५/१७॥ इन्द्रंन्दैवीर्विशों मरुतोनुवर्त्मानोभवन्यथेन्द्रन्दैवीर्विशों मरुतोनुवर्त्मानोभवन् ॥ एवमिमं यजमानन्दैवीश्च विशोमानुषीश्चानुवर्त्मानो भवन्तु ॥ ८६/१७॥ इमℳस्तनमूर्ज्जस्वन्तन्धयापाम्प्रपीनमग्ने सरिरस्य मध्ये ॥ उत्संज्जुषस्व मधुमन्तमर्वन्त्समुद्रियℳ सदनमाविशस्व ॥ ८७/१७॥ घृतम्मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्म्वस्य धाम ॥ अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यम् ८८/१७ चमकानुवाका : १/१८ ॐवाजश्चमे०२ प्राणश्चमे०३ ओजश्चमे०४ ज्यैष्ठ्यंचमे०५ सत्यश्चमे०६ ऋतश्चमे०७ यन्ताचमे०८ शश्चमे०९ ऊर्क्चमे०१० रयिश्चमे०११ वित्तञ्चमे०१२ व्रीहयश्चमे०१३ अश्माचमे०१४ अग्निश्चमेऽ आपश्चमे ०१५ वसुचमे ०१६ अग्निश्चमऽइन्द्रश्चमे ०१७ मित्रश्चमऽइन्द्रश्चमे० १८ पृथिवीचमऽइन्द्रश्चमे० १९ अℳशुश्चमे० २० आग्रयणश्चमे० २१स्रुचश्चमे० २२ अग्निश्चमे० २३ व्रतञ्चमऽऋतवश्चमे० २४ एकाचमे० २५ चतस्रश्चमे० २६ त्र्यविश्चमे० २७ पष्ठवाट्चमे० २८ वाजायस्वाहा० २९ आयुर्यज्ञेनकल्प०प्रजाऽअभूम वेट्स्वाहा ॥

अग्निसूक्तम् – ॐसमास्त्वाग्न ऽ ऋतवोवर्द्धयन्तुसंवत्सराऽऋषयोयानि सत्या ॥ सन्दिव्येनदीदिहिरोचनेनविश्वाऽआभाहिप्रदिशश्चतस्र ८ १/२७॥

सञ्श्चेद्धयस्वाग्नेप्रचबोधयैनमुच्चातिष्ठमहुतेसौभगाय ॥ माचरिपदुप-
सत्तातेऽअग्नेब्रह्माणस्तेयशसः सन्तुमान्ये ॥ २/२७ ॥ त्वामग्नेवृणतेब्राह्मणाऽ
इमेशिवोऽअग्नेसंवरणेभवानः ॥ सपत्नहानोऽअभिमातिजिच्चस्वेगये-
जागृह्यप्रयुच्छन् । ३/२७ । इहैवाग्नेऽअधिधारयारयिम्मात्वानिक्रन्पूर्वचि-
तोनिकारिणः ॥ क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्तावर्द्धतान्तेऽअनिष्टृ-
तः ॥ ४/२७ ॥ क्षत्रेणाग्ने स्वायुःसꣳरभस्व मित्रेणाग्ने मित्रधेये यतस्व ॥
सजातानाम्मध्यमस्थाऽएधि राज्ञामग्ने विहव्यो दीदिहीह ॥ ५/२७ ॥
अतिनिहोऽअतिस्रिधोत्यचित्तिमत्यरातिमग्ने ॥ विश्वाह्यग्नेदुरितासह-
स्वाथास्मभ्यꣳसहवीरꣳरयिन्दाः ॥ ६/२७ ॥ अनाधृष्यो जातवेदाऽ
अनिष्टृतोविराडग्नेक्षत्रभृद्दीदिहीह ॥ विश्वाऽआशाःप्रमुञ्चन्मानुषी-
र्भियःशिवेभिरद्यपरिपाहिनोवृधे ॥ ७/२७ ॥ बृहस्पतेसवितर्बोधयैनꣳस-
शितञ्चित्सन्तराꣳसꣳशिशाधि ॥ वर्द्धयैनम्महतेसौभगाय विश्वऽएनम-

विष्णुसूक्तम्——ॐविष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि
विममे रजाꣳसि ॥ योऽ अस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रे-
धोरुगायो विष्णवे त्वा ॥ १८/५ ॥ दिवो वा विष्णऽउत वाऽ पृथि-
व्यामहोवा विष्णऽउरोरन्तरिक्षात् ॥ उभाहिहस्तावसुनापृणस्वाप्र-
यच्छ दक्षिणादोतसव्याद्विष्णवे त्वा ॥ १९/५ ॥ प्रतद्विष्णुस्तवतेवीर्येण
मृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्योरुषु त्रिषुविक्रमणेष्वधिक्षियन्ति-
भुवनानि विश्वा ॥ २०/५ ॥ विष्णो रराटमसि विष्णोःश्नप्त्रे स्थो

विष्णो॑र्ट॒स्यूर॑सि॒विष्णो॒र्द्ध्रुवो॑सि ॥ वैष्णवम॑सि विष्ण॑वे त्वा ॥ $\frac{३१}{५}$ ॥ इदंविष्णु॒र्विच॑क्रमेत्रे॒धानिद॑धेप॒दम् ॥ सम्मू॑ढमस्यपा॒ᳪसु॒रेस्वाहा॑ ॥$\frac{१५}{५}$॥ त्रीणि॑ प॒दा वि॑च॑क्रमे॒ विष्णु॑र्गो॒पाऽ अदा॑भ्यः ॥ अतो॒धर्म्मा॑णि धा॒रय॑न् ॥$\frac{२३}{३४}$॥$\frac{१}{१६}$॥ १ ॐनम॑स्तेरुद्र० २ यातेरुद्रशिवा० ३ यामिषु- ङ्गिरिशन्त० ४ शिवेनवच॑सा० ५अद्ध्य॑वोचदधिवक्ता० ६असौयस्ता- म्रो० ७असौयोवसर्प॑ति० ८नमो॑स्तुनी० ९प्रमुञ्चधन्व० १०विज्ज्य- न्धनुः० ११ यातेहेतिर्मी० १२ परि॑तेधन्व॑नो० १३ अवतत्य० १४ नम॑स्तऽआ० १५ मानो॑महान्तं० १६ मान॑स्तोके० १७ नमो हिर॑ण्यवाहवे० १८ नमो॑वभ्लुशाय॑० १९ नमो॑रोहिताय० २० नम॑- कृत्स्नायतया० २१ नमो॑वृञ्चते० २२ नम॑ऽउष्णीषिणे० २३ नमो॑विसृ- जद्भ्यो० २४ नम॑-सभाभ्य-० २५ नमो॑गणेभ्यो० २६ नम॒र्टसे- नाभ्यः० २७ नम॑स्तक्षभ्यो० २८ नम॒र्टश्वभ्य॒ः० २९ नम॑-क- पर्दिने० ३० नमो॑हृस्वाय० ३१ नमऽआशवे० ३२ नमो॑ज्येष्ठाय० ३३ नम॒र्टसोभ्याय० ३४ नमो॑वन्याय० ३५ नमो॑बिल्मिने० ३६ नमो॑धृष्णवे० ३७ नम॒र्टस्रुत्याय० ३८ नम॒र्टकूप्याय० ३९ नमो॑वा- स्याय० ४० नम॑-शङ्गवे० ४१ नम॑-शम्भवाय० ४२ नम॒र्टपार्य्या- य० ४३ नम॑-सिकत्याय० ४४ नमो॑व्रज्याय० ४५ नम॒र्टशुष्क्या- य० ४६ नम॑-पर्णाय० ४७द्रापेऽअन्ध॑सस्पते० ४८ इमारुद्राय० ४९ यातेरुद्रशिवातनूः० ५० परि॑नोरुद्रस्य० ५१ मीढुष्टम० ५२ वि- किरिद्र० ५३ सहस्रा॑णि० ५४ असङ्ख्याता० ५५ अस्मिन्मह॑० ५६

नीलंग्रीवा८ शितिकण्ठादिव६० ५७ नीलंग्रीवा८शितिकण्ठा८ं शर्वा० ५८येवृक्षेषु० ५९ येभूताना० ६० येपथाम्पथि० ६१ येतीर्थानि० ६२ येन्नेषु० ६३ यऽएतावन्तश्च० ६४ नमोस्तु रुद्रेभ्यो ये दिवि० ६५ नमोस्तु रुद्रेभ्योयेन्तरिक्ष० ६६ नमोस्तुरुद्रेभ्योयेपृथिव्या० प्राक्रम्भेददम८।

इन्दुसूक्तम्—ॐआप्यायस्वसमेतुते विश्वत– सोमवृष्ण्यम् ॥ भवावाजस्यसङ्गथे ॥ ११२/१२ ॥ सन्तेपया॑ꣳसिसमुयन्तुवाजा८संवृष्ण्यान्यभिमातिषाह– ॥ आप्यायमानोऽ अमृताय सोम दिवि श्रवा॑ꣳस्युत्तमानि धिष्व ॥ ११३/१२ ॥ आप्यायस्व मदिन्तम सोम विश्वेभिरꣳशुभि– ॥ भवा न८ सुप्रथस्तम८ सखा वृधे ॥ ११४/१२ ॥

२र २र २र ३र २र ३र२र
महावैश्वानरसाम—हाउ । हाउ । हाउ । ओहा । ओहा ।
३र२र २र१ २र१ २र१ २र१ २र१
ओहायि । वयोहोयि । वयोहोयि । वयोहोयि । पयोहोयि । पयोहोयि ।
२र१ २ १ २ १ २ १ २र १
पयोहोयि । चक्षुर्होयि । चक्षुर्होयि । चक्षुर्होयि । श्रोत्रꣳहोयि ।
२र १ २र १ २र १ २र १ २र १
श्रोत्रꣳहोयि । श्रोत्रꣳहोयि । आयुर्होयि । आयुर्होयि । आयुर्होयि ।
२र १ २र १ २र १ २र१ २र१
तपोहोयि । तपोहोयि । तपोहोयि । वर्चोहोयि । वर्चोहोयि ।
२र१ २रर१ २रर१ २रर१ २ १
वर्चोहोयि । तेजोहोयि । तेजोहोयि । तेजोहोयि । सुवर्होयि ।
२ १ २ १ २र १ २र १
सुवर्होयि । सुवर्होयि । ज्योतिर्होयि । ज्योतिर्होयि ।
२र १ २ १ र २ २ १र २ १र र
ज्योतिर्होयि । [illegible] २३ हा॰ । [illegible]–

विदथाजातवेदा २३ सायि । वैश्वानरायमतिर्नव्यसेशु २३ चीः । सोमइवपवतेचारुरग्ना २३ । या३यि । हाउ । हाउ । हाउ । ओहा । ओहा । ओहायि । वयोहोयि । वयोहोयि । वयोहोयि । पयोहोयि । पयोहोयि । पयोहोयि । चक्षुर्होयि । चक्षुर्होयि । चक्षुर्होयि । श्रोत्र७-होयि । श्रोत्र७होयि । श्रोत्र७होयि । आयुर्होयि । आयुर्होयि । आयुर्होयि । तपोहोयि । तपोहोयि । तपोहोयि । वर्चोहोयि । वर्चोहोयि । वर्चोहोयि । तेजोहोयि । तेजोहोयि । तेजोहोयि । सुवर्होयि । सुवर्होयि । सुवर्होयि । ज्योतिर्होयि । ज्योतिर्होयि । ज्योतिर्हो२ । वा २३४ ओहोवा । ए । अग्निःसमुद्रमाक्षयत् । ए । अग्निर्मूर्द्धाभवाद्दिवः । ए । आयुर्द्धो अस्मभ्यंवर्चोधादेभ्या २३४५ः ॥ १ ॥ ओ३१म् । ओ३१म् । ओ३१म् । आयुः । आयुः । आयुः । ज्योतिः । ज्योतिः । ज्योतिः । ज्योतोवा । ज्योतोवा । ज्योतोवा । ज्योतोवा हायि । ज्योतोवा हायि । ज्योतोवा३हाउ । वा । इहस्व-वैश्वानरायप्रदिशो ज्योतिर्बृहत् । इन्दुरिडासत्य । सत्य । सत्य । सत्योवा । सत्योवा । सत्योवा । सत्योवाहायि । सत्योवाहायि । सत्योवा३हाउ । वा । इहस्ववैश्वानरायप्रदिशोज्योतिर्बृहत् । कायमानो

वनातुवाम् । तुवाम् । तुवाम् । तुवोवा । तुवोवा । तुवोवा । तुवोवा-
हायि । तुवोवाहायि । तुवोवाहायि । तुवोवा ३ हाउ । वा ।
इहस्ववैश्वानरायप्रदिशोज्योतिर्बृहत् । द्यौर्भूतंपृथिवी । पृथिवी ।
पृथिवी । पृथिव्योवा । पृथिव्योवा । पृथिव्योवा । पृथिव्योवाहायि ।
पृथिव्योवाहायि । पृथिव्योवा ३ हाउ । वा । इहस्ववैश्वानराय-
प्रदिशोज्योतिर्बृहत् । यन्मातुरजगन्नपाः । अपाः । अपाः । अपोवा ।
अपोवा । अपोवा । अपोवाहायि । अपोवाहायि । अपोवा२हाउ ।
वा । इहस्ववैश्वानरायप्रदिशोज्योतिर्बृहत् । सहस्तेज आपः । आपः ।
आपः । आपोवा । आपोवा । आपोवा । आपोवाहायि । आपो-
वाहायि । आपोवा२हाउ । वा । इहस्ववैश्वानरायप्रदिशोज्योतिर्बृहत् ।
नतत्तेअग्नेप्रमृषेनिवर्तनाम् । तनाम् । तनाम् । तनोवा । तनोवा ।
तनोवा । तनोवाहायि । तनोवाहायि । तनोवा२हाउ । वा ।
इहस्ववैश्वानरायप्रदिशोज्योतिर्बृहत् । उपादिशोज्योतिः । ज्योतिः ।
ज्योतिः । ज्योतोवा । ज्योतोवा । ज्योतोवा । ज्योतोवाहायि ।
ज्योतोवाहायि । ज्योतोवा२हाउ । वा । इहस्ववैश्वानरायप्रदिशो-
ज्योतिर्बृहत् । यद्दूरेसन्निहाभुवाः । भुवाः । भुवाः । भुवोवा ।

भूवोवा । भूवोवा । भूवोवाहायि । भूवोवाहायि । भूवोवा३हाउ ।
वा । इहस्वर्वैश्वानरायमादिशाज्योतिर्बृहत् । ओ३१म् । ओ३१म् ।
ओ३१म् । आयुः । आयुः । आयुः । ज्योतिः । ज्योतिः । ज्योतिः ।
ज्योतोवा । ज्योतोवा । ज्योतोवा । ज्योतोवाहायि । ज्योतोवा-
हायि । ज्योतोवा३हाउ । वा । यमोमरुद्भिर्भुवनेषुचक्रदत् । इडा२इडा
२३४५ । आरण्यगानस्य पञ्चमपाठकस्य प्रथमार्द्धे साम ३ तथा ४ ॥

अथ ज्येष्ठसाम—हाउ । हाउ । हाउ । आज्यदोहम् । आज्य-
दोहम् । आज्यदोहम् । मूर्द्धानन्दायि । वा३अर । तिंपृथिव्याः ।
वैश्वानराम् । ऋतआ । जातमग्निम् । कविंᳪसम्रा । जा ३ मति ।
थिंजनानाम् । आसन्नः पा । त्रा३स्नन । यन्तदेवाः । हाउ । हाउ ।
हाउ । आज्यदोहम् । आज्यदोहम् । आज्यदो५हाउ । वा । ए ।
आज्यदोहम् । ए । आज्यदोहम् । ए । आज्यदोहा२३४५म्
॥ १ ॥ हाउ । हाउ । हाउ । हुम् । चिदोहम् । चिदोहम् ।
चिदोहम् । मूर्द्धानन्दायि ॥ वा३अर । तिंपृथिव्याः । वैश्वानराम् ।
ऋतआ । जातमग्निम् । कविंᳪसम्रा । जा३मति । थिंजनानाम् । आसन्नः
पा । त्रा३स्नन । यन्तदेवाः । हाउ । हाउ । हाउ । हुम् । चिदोहम् ।

२ १ २   २   २   ३१ १ १ १   २र   २र   २र
चिदोहम् । चिदो२हाउ । वा३ । इ२३४५ ॥२॥ हाउ । हाउ । हाउ ।
१ २   १ २   १ २   २र१र   २ १   २३
च्योहम् । च्योहम् । च्योहम् । मूर्द्धानन्दायि । वा३अर । तिंपृ-
४ ५   २र१र   २ १ र   २र३ ४ ५   २ १   २
थिव्याः । वैश्वानराम् । ऋतआ । जातमग्निम् । कवि७ंसम्रा । जा
१   २ ३ ४ ५   २र१   २ १   २ ३४ ५
३मति । थिंजनानाम् । आसन्नः पा । त्रा३ञ्जन । यन्तदेवाः ।
२र   २र   २र   १ २   १ २   १र २
हाउ । हाउ । हाउ । च्योहम् । च्योहम् । च्यो३हाउ । वा ३ ।
२   २१
ए ३ । ऋतम् ॥ आरण्यगानस्य प्रथमप्रपाठकस्य प्रथमार्द्धे साम
१६।१७।१८॥ अत्र अथातो वसोर्द्धारां जुहोतीति ब्राह्मणमपि पठन्ति ।

अथातोवुसोर्धुरांजुहोति ॥ अत्रैपसर्वोऽग्निःसुंस्कृतः सुऽएषोत्रवु-सुस्तुस्मै देवाऽएतांधुराम्प्रागृह्णँस्तुयेनममीणँस्तद्युदेतुस्मै वुसवऽएता-न्धुराम्प्रागृह्णस्तुस्मादेनाम्वुसोर्द्धारेत्याचक्षते तुथैवास्माऽअयुमेताम्धा-राम्प्रगृह्णाति तुयैनं प्रीणाति ॥ १ ॥ युद्वेवैताम्वुसोर्धुराञ्जुहोति । अभिषेकुऽएुवास्यैपुऽएतद्वाऽएनन्देवाः सुर्वंकृत्स्नृंसँस्कृत्याथैनमेतैःका-मैरभ्यपिञ्चन्नेतयावुसोर्द्धारया तुथैवैनमयुमेतत्सुर्वं कृत्स्नृंसँस्कृत्याथै-नमेतैःकामैरभिपिञ्चत्येतया वुसोर्द्धारयाज्येन पञ्चगृहीतेनौदुम्बर्या स्रुचातुस्योक्तोवुन्धुः ॥ २ ॥ वैश्वानरृंहुत्वा ॥ शिरोवैवैश्वानरःशीर्ष्णो-वाऽअन्नमद्यतेयोशीर्षतो वाऽअभिपिच्युमानोभिपिच्यते मारुतान्हुत्वा प्प्राणावै मारुताः प्राणैर्वाऽ अन्नमद्यतेयोप्राणेषु वाऽ अभिपिच्यु-मानोभिपिच्यते ॥ ३ ॥ तद्वाऽअरण्येनूच्येवाग्गाऽ ॥ अरण्ये नूच्योवाचो वाऽअन्नमद्यतेयोवाचा वाऽअभिपिच्यमानोभिपिच्युते

तदेतत्सर्वम्वसुसर्वेह्येतेकामाः सैषावसुमयीधारा अथाक्षीरस्यवासर्पिषोवैवमारम्भायैवेयमाज्याहुतिर्हूयतेतद्यदेषा वसुमयीधारा तस्मादेनाम्वसोर्धारेत्याचक्षते ॥ ४ ॥ स ऽ आह । इदुश्चमऽ इदुश्चमऽ इत्यनेन चत्वाप्रीणाम्यनेनचान्नेन चत्वाभिषिञ्चाम्यनेन चेत्येतदथोऽइदुश्चमेदुहीदुश्चम ऽइति सायदेवैषाधाराग्निम्प्राप्नुयादथैतद्यजु प्रतिपद्येत ॥५॥ एतद्वाऽएनन्देवा ॥ एतेनान्नेन प्रीत्वैतै कामैरभिषिच्यैतयावसोर्धारयाथैनमेतान्कामानयाचन्त तेभ्यऽइष्टः प्रीतोभिषिक्तऽएतान्कामान्प्रायच्छन्तथैवैनमयमेतदेतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतयावसोर्धारयाथैनमेतान्कामान्याचते तस्माऽइष्टः प्रीतोभिषिक्तऽएतान्कामान्प्रयच्छति द्वौद्वौकामौ संयुनक्त्यन्यवच्छेदाय अथान्योकसौसंयुज्यादेवंयज्ञेन कल्पतामिति ॥ ६ ॥ एतद्वै देवाऽ अब्रुवन् ॥ केनेमान्कामान्प्रतिग्रहीष्यामऽइत्यात्मनैवेत्यब्रुवन्यज्ञो वै देवानामात्मा यज्ञऽ उऽएवयजमानस्यसयदाह यज्ञेनकल्पन्तामित्यात्मनामे कल्पन्तामित्ये वै तदाह ॥ ७ ॥ द्वादशसु कल्पयति ॥ द्वादशमासाः संवत्सरः संवत्सरोग्निर्यावानग्निर्यावत्यस्य मात्रातावतैवैनमेतदन्नेन प्रीणात्यथो तावतैवैनमेतदन्नेनाभिषिञ्चति चतुर्दशसुकल्पयत्यष्टासु कल्पयतिदशसु कल्पयति त्रयोदशसु कल्पयति ॥ ८ ॥ अथार्धेन्द्राणि जुहोति ॥ सर्वमेतद्यदर्धेन्द्राणि सर्वेणैवैनमेतत्प्रीणात्यथो सर्वेणैवैनमेतदभिषिञ्चति ॥ ९ ॥ अथ ग्रहाञ्जुहोति ॥ यज्ञो वै ग्रहायज्ञेनैवैनमेतदन्नेन प्रीणात्यथो यज्ञेनैवै नमेतदन्नेनाभिषिञ्चति ॥ १० ॥ अथैतान्यज्ञक्रतूञ्जुहोति ॥ अग्निश्च मेघर्मश्चमऽ इत्येतैरेवै न मे तद्यज्ञक्रतुभिः प्रीणात्यथाऽ एतैरेवै न मे तद्यज्ञक्रतुभिरभिषिञ्चति ॥ ११ ॥ अथायुज स्तोमाञ्जुहोति॥

स ह्वेष यज्ञऽ उवाच नग्नताया वै बिभेमीति का ते नग्नतेत्यभित एव मापरिस्तृणीयुरितितस्मादेतदग्निमभितः परिस्तृणन्ति तृष्णाया वैबि- भेमीतिकाते तृप्तिरितिब्राह्मणस्यैव तृप्तिमनुतृप्येयमिति तस्मात्सᳫं- स्थिते यज्ञे ब्राह्मणन्तर्पयित वै ब्रूयाद्यज्ञमेवैतत्तर्पयति ॥१२॥ यत्क- र्मणात्यरीरिचं यद्वान्यूनमिहाकरम् ॥ अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टᳫं- सुहुतं करोतु स्वाहा ॥ १३ ॥ अत्र संस्रवप्रक्षेपः ॥ इदमग्नये वाजादि- भ्योऽग्नये विष्णवे रुद्राय सोमाय वैश्वानराय च न मम ॥ एवं वसो- र्द्धाराहोमं विधाय यजमानस्तस्मिन्नेवाग्नौ स्रुचं प्रक्षिप्य रुद्रस्तुतिं कुर्यात् यथा—नमः सोमाय शान्ताय सगुणायादिहेतवे । निवेदयामि चात्मानं

---

१ अत्र केचन रुद्रकलशसमीपे कुशे त्यागः इति वदन्त संस्रवप्रक्षेप कुर्वन्ति तन्निर्मूलम् ॥ त्यागपठनरूपा क्रिया भिन्ना तथा च संस्रवप्रक्षेपरूपा क्रिया भिन्ना न तयोर्नित्यसम्बन्ध च ॥ २ इति तन्त्रेण त्यागः ॥ ३ रुद्रकल्पद्रुमशान्त्यार्थपरिच्छेदे वसोर्द्धारां हुत्वा यजमान एव तस्मिन्नग्नौ स्रुक्प्रासनं करोति अत्र वा स्रुचमनुप्रास्यति यद्वान्य लिप्तं नैतद्बहिर्द्धा निरसदिति श्रवणात् ॥ महार्णवेऽपि—होमान्ते प्रास्येदग्नौ स्रुच तामाज्यलिप्तिकाम् ॥ कात्यायनसूत्रेऽपि—वसोर्द्धारां जुहोत्यौदुम्बर्या पञ्चगृहीतं सतत यजमानोऽरण्येनूच्येऽग्निधाम्नेवाजश्चम इत्यष्टानुवाकेन हुत्वा स्रुक्प्रासनमिति ॥ संस्रवो नाम पात्रसलग्नहुतशेष ॥ श्राद्धसूत्रे—सᳫंस्रवान् समवनीय-इत्यस्य व्याख्याने कर्कादिभाष्यकारै संस्रवनाम—पात्रसंलग्नहुतशेष इत्युक्तमस्ति ॥ श्राद्धे संस्रवस्य येयप्रतिपत्ति —पुञ्जीकरणम् ॥ कात्यायनश्रौतसूत्रे तृतीयाध्याये दर्शपौर्णमासेष्टयाम्— सᳫंस्रवान् जुहोति सᳫंस्रवभागास्थ इति ॥ श्रौते संस्रवस्य येयप्रतिपत्ति —होम ॥ स्मार्ते ॥ भक्षणम् ॥ बर्हिर्हुत्वा प्राश्नाति ॥

त्वं गतिः परमेश्वर ॥ अनादिनिधनो रुद्रो गीयते श्रुतिभिः सदा । राजसेन स्वयं ब्रह्मा सात्त्विकेन स्वयं हरिः ॥ तामसेन स्वयं रुद्र-त्रितयं त्वयि संस्थितम् ॥ नमामि त्वां विरूपाक्ष नीलग्रीव नमोऽस्तु ते । त्रिनेत्राय नमस्तुभ्यमुमादेहार्धधारिणे ॥ त्रिशूलधारिणे तुभ्यं भूतानां पतये नमः । पिनाकिने नमस्तुभ्यं नमो मीढुष्टमाय च ॥ नमामि त्वां महाभूतपतये त्वां नमाम्यहम् । स्वयं भिक्षान्नभोक्ता च भक्तानां राज्यदायकः ॥ सूर्यरूपं समासाद्य देहिनां देहदायकः । यतीनां मुक्तिदस्त्वं च भुक्त्यर्थिनां च भुक्तिदः ॥ यदृच्छया सर्वमिदं ततं मध्ये च पालितम् । अन्ते च विलयं नीतं शक्तिः कस्य भवादृते ॥ त्वं माता त्वं पिता त्वं हि त्वं बन्धुस्त्वं च मे सखा । त्वं विद्या द्रविणं त्वं च त्वं च सर्वं मम प्रभो ॥ नमो विरिञ्चिविष्ण्वीशभेदेन परमात्मने । सर्गसंस्थिति-संहारव्यापिने परमात्मने ॥ कर्मन्यूनातिरिक्तं यज्जपहोमार्चनादिकम् । कृतमज्ञानतो देव तन्मम क्षन्तुमर्हसि ॥ अपराधसहस्राणि क्रियन्तेऽहर्निशं मया । दासोऽयमिति मां मत्वा क्षमस्व परमेश्वर ॥ अपराधसहस्राणां सहस्रमयुतं तथा । अर्बुदञ्चाप्यसंख्येयं करुणाब्धे क्षमस्व मे ॥ यं चापराधं कृतवानज्ञानात्पुरुषोत्तम । भक्तस्य मम देवेश त्वं सर्वं क्षन्तुमर्हसि ॥ अज्ञानादल्पशक्तित्वादालस्याद्दुष्टचेतसः । यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षन्तुमर्हसि ॥ विश्वेश्वर विरूपाक्ष विश्वरूप सदाशिव । शरणं भव भूतेश करुणाकर शङ्कर ॥ हर शम्भो महादेव विश्वेशामरवल्लभ । शिवशङ्कर सर्वात्मन्नीलग्रीव नमोऽस्तु ते ॥ मृत्युञ्जय महारुद्र सर्वेश शशिशेखर । चन्द्रचूड

महादेव पार्वतीश नमोऽस्तु ते ॥ मृत्युञ्जयाय रुद्राय नीलकण्ठाय शम्भवे । अमृतेशाय शर्वाय महादेवाय ते नमः ॥ रुद्रहोमो जपो वापि न्यूनो वाऽप्यधिकोऽपि वा । सम्पूर्णस्त्वत्प्रसादेन भूयाद्भूतिविभूषण । इति स्तुत्वा ततोऽग्निप्रदक्षिणां कुर्यात्तत्रमन्त्रः—ॐसुं हैषु यज्ञऽउवाच नमृतायाः वै बिभेमीति का ते नग्नतेत्यभित एव मा परिस्तृणीयुरिति तस्मादेतदग्निमभितः परिस्तृणन्ति तृष्णाया वै बिभेमीति का तेतृप्तिरिति ब्राह्मणस्यैव तृप्तिमनुतृप्येयमिति तस्मात्सु(ँ)स्थितेयज्ञे ब्राह्मणन्तर्पयित वै ब्रूयाधज्ञमेवैतत्तर्पयति ॥ श० ब्रा० काण्ड १ प्रपाठक६ब्राह्मण१मन्त्र ॥२८॥ इत्यग्निम्प्रदक्षिणीकृत्य अग्नेः पश्चात्प्राङ्मुखो यजमान उपविश्य भस्म धारयेत्—यथाॐत्र्यायुषं जमदग्नेः²—ललाटे । कश्यपस्य त्र्यायुषं—ग्रीवायाम् । यद्देवेषु त्र्यायुषम्—बाह्वोः । तन्नोऽअस्तुत्र्यायुषम्—हृदये ॥ ततः संस्रवप्राशनं पवित्राभ्यां मार्जनम् अग्नौ पवित्रप्रतिपत्तिः ब्रह्मणे पूर्णपात्रदानं प्रणीतोदकेन सङ्कल्पः कृतस्य कर्मणः साङ्गतासिद्ध्यर्थं ब्रह्मन् इदं पूर्णपात्रं सदक्षिणाकं तुभ्यमहं सम्प्रददे ॥ प्रतिगृह्यताम्—यजमानो वदेत्—ब्रह्मा प्रतिगृह्णामीति—ॐद्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ॥ प्रणीताविमोकः मार्जनम्—ॐआपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम् ॥ श्रेयोदानम्—ब्रह्मादय ऋत्विजादयश्च आचार्यद्वारा श्रेयोदानं

---

१ अनेन मन्त्रेण अग्निप्रदक्षिणीकरणं काशिदीक्षितमहारुद्रपद्धतावुक्तम् ॥

२ अत्र होमरुद्रत्वात् तर्पणमार्जने अत्र अपदयात्त्वतो होमादिविहित तथैव ते ॥

३ कल्पद्रुमादिग्रन्थेषु तु वरणक्रमेण आचार्यादय एव स्वं श्रेयोदान कुर्युः इत्युक्तं सौकर्याय अत्र प्रयोगे आचार्यद्वारा श्रेयोदानमादृतमस्ति ॥ इदं श्रेय सम्पादन

कुर्युः ॥ उदङ्मुख आचार्यः प्राङ्मुखस्थितयजमानहस्ते श्रेयोदानं कुर्यात् तद्यथा—शिवा आपः सन्तु इति यजमानहस्ते उदकं दत्वा सौमनस्यमस्तु इति पुष्पाणि । अक्षतं चारिष्टं चास्तु—इति अक्षतांश्च दत्वा ततो दीर्घमायुः शान्तिः पुष्टिस्तुष्टिश्चास्तु—इति पुनरुदकं दत्वा आचार्यः—हस्ते साक्षतसोदकपूगीफलं गृहीत्वा—भवन्नियोगेन मया अस्मिन् होमात्मकमहारुद्राख्ये कर्मणि यत्कृतं आचार्यत्वं तथा च एभिर्ब्राह्मणैः सह यत्कृतं ब्रह्मत्वं गाणपत्यं सादस्यं तथा च यः कृतो होमः तस्माद् आचार्यत्वात् ब्रह्मत्वात् गाणपत्यात् सादस्यात् होमात् यदुत्पन्नं श्रेयः तत्तुभ्यमहं सम्प्रददे प्रतिगृह्यताम् । प्रतिगृह्णामि ॥ तेन श्रेयसा त्वं श्रेयस्वान्भव ॥ भवामि इति यजमानो वदेत् ॥ दक्षिणादानम्—सपत्नीको यजमानः अग्नेः पश्चिमतः उपविष्टः उदङ्मुखानाचार्यादीन् वरणक्रमेण कनिष्ठमध्यमोत्तमपक्षाणां शक्त्यनु-

---

निर्मूलत्वाद्यजमानप्रतारणमात्रमेव ऋत्विक्कर्तृककर्मणः फलस्य यजमाननिष्ठत्वात् ॥ केचित्तु पुनरुक्तवैतरणीदानजन्यश्रेयोदानवन्माघस्नानादिजन्यपुण्यदानवच्चेदमपि श्रेयोदानमविरुद्धमित्याहुः ॥ इति कल्पद्रुमकारैरुक्तम् ॥ खण्डदीक्षितास्तु-श्रेयोदान निर्मूलत्वाद्यजमानप्रतारणमात्रमिति केचन वदन्ति तदयुक्त विधिवाक्यश्रवणात् ॥ तदुक्त प्रयोगपारिजाते वामन—आचार्यप्रभृतिभ्यश्च महार्चनफल ततः । समिदाज्यचरूणा च तिलहोमफलं तथा ॥ तेभ्यो जपफल तद्वद्गृह्णीयाज्जलपूर्वकम् । ततस्तेभ्यो यथाशक्ति दातव्या दक्षिणाः पृथक् । इत्युक्तत्वात् ॥ परशुराममहारुद्रपद्धतौ—यथोक्तविधिना यादृक् अस्माभिर्हवन कृतम् । तेन यजनित पुण्यं अपुण्येन हि पुण्यभाक् । मय रुद्रप्रसादेन तत्पुण्य तव नो मम । इत्युक्तत्वात्—रुद्रकल्पद्रुमे श्रेय सम्पाद्यते द्विजै ॥

सारिपक्षमाश्रित्य पूजापूर्विकां दक्षिणां दद्यात् । हस्ते जलमादाय-देशकालौ स्मृत्वा मया आचरितस्य हवनात्मकमहारुद्रस्य साङ्गता-

---

१ ब्राह्मणानां ततः पूजा कार्या शक्त्यनुसारतः । असम्पूर्णं भवेत्तावद्यावद्विप्रो न पूजितः ॥ पूजिते सति विप्रेऽस्मिन् सर्वं सम्पूर्णतां व्रजेत् ॥

२ दश गा सवत्सा स्वर्णभूषिता वृषभैकादशा तदलाभे एकां गां दद्यादित्याह भगवान् बौधायनः ॥ एतदसम्भवे तु—गवामभावे निष्कं स्यात्तदर्धं पादमेव च ॥ निष्कस्तु लोकशास्त्रयोरेकवाक्यतया चत्वारिंशन्माषाः तदर्द्धं विंशतिस्तदर्द्धं दश तदभावे रजतम् अशक्तौ पादार्द्धमिति ॥ यत्तु द्वात्रिंशत्पणिका गावः इत्युक्तम् तत्तु अत्यशक्त-विषयम् ॥ आचार्यदक्षिणार्द्धम् ऋत्विग्भ्यो देयम् । सर्वत्र ऋत्विग्दक्षिणापेक्षया आचार्याय द्वैगुण्यविधानात् ॥

परशुराममहारुद्रपद्धतौ—नानागोत्रेभ्य ऋत्विग्भ्यो नानाशर्मभ्य एव च । दास्येऽहं दक्षिणास्ताभिः प्रीयतामिन्द्रदेवता ॥ कर्मणा विहितं यच्च दक्षिणाभिस्तु दक्षयेत् । ताभिर्यज्ञः समृद्धः स्यात्तस्माद्देया च दक्षिणा ॥ ऋत्विजां दक्षिणामानं क्रमाद्रुद्रेषु पञ्चसु ॥ सुवर्ण-कुण्डलश्चैव माषकर्षपलोन्मितम् ॥, श्रेष्ठे निष्कत्रयं देयं निष्कद्वयं च मध्यमे । त्रिंशन्मा-षप्रमाणं यत् स्वर्णं तन्निष्कमुच्यते ॥ कैश्चिच्चोडशभिः प्रोक्तो यज्ञस्तस्य तथा भवेत् । न हि न्यूनं प्रकर्तव्यं काम्यकर्मविशेषतः ॥ न्यूने कृते कुतः सिद्धिः क्व सिद्धिः काम्यकर्मणः । यद्वा सोपस्करा गावो वृषभैकादशादश ॥ एकैकस्मै प्रदातव्या हिरण्यं वा पदान्वितम् । द्रव्याभावेऽथ वैकैका गावो देयाः सवत्सकाः । गोरभावे तु गोमूल्यमन्यद्वा वस्तु तत्समम् ॥ ब्रह्मणेऽध्वर्यवे देयं तत्तद्द्विगुणकं धनम् । ऋत्विग्भ्यो द्वारपालेभ्यो यथा श्रद्धा च भूयसी ॥ एकादशगुणां कृत्वा महारुद्रोक्तदक्षिणाम् । दद्यात्कर्मसमृद्ध्यर्थमतिरुद्रेऽनि रुद्रकृत् । अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तथार्त्विजः । यजमानमदक्षिण्यो नास्ति यज्ञसमो रिपुः ॥ दक्षिणा हेमरूप्यादि गजवाजिरथादि वा । तुलाप्रभृति दानानि विविधानि तथापि वा ॥

सिद्धये आचार्यादिवृतेभ्यः ब्राह्मणेभ्यः पूजनपूर्वकं दक्षिणाप्रदानं करिष्ये॥ आचार्यपूजनम्—महारुद्ररूपिन्नाचार्य एतत्ते पाद्यम् (शिष्टाचारात्पादौ प्रक्षाल्य ) इदमर्घ्यम् इमे तुभ्यं बार्हस्पत्ये वाससी एष ते गन्ध इमानि पुष्पाणि एष ते धूपःदीपःनैवेद्यताम्बूलादीनि एतावतीं दक्षिणां तुभ्यमहं सम्प्रददे ॥ ततः आचार्याय गोप्रदानम्—प्रत्यक्षगोप्रदाने "ॐगवे नम" इति गां च समभ्यर्च्य कुशाक्षतकुसुमजलान्यादाय पूर्वोक्तविशेषणवति काले मया आचरितस्य होमात्मकमहारुद्रस्य फलप्रतिष्ठासिद्ध्यर्थममुकसगोत्राय अमुकप्रवराय शुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायिने अमुकशर्मणे रुद्ररूपिणे आचार्याय यथाशक्त्यलङ्कृताम् इमां सवत्सां गां रुद्रदैवत्याम् इदञ्च हिरण्यम् अग्निदैवत्यं तुभ्यं सम्प्रददे न मम इति कुशकुसुमाक्षतसमन्वितं जलं आचार्यहस्ते दद्यात् ॥ आचार्यः प्रतिगृह्णामि ॥ ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम्॥ २१ ॥ द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ॥ ॐस्वस्ति ॥ इति प्रतिगृह्य कामस्तुतिं पठेत्—ॐकोदात्कस्माऽअदात्कामोदात्कामायादात् ॥ कामो दाता कामं प्रतिग्रहीता कामैतत्ते ॥ ४८ ॥ यज्ञसाधनभूताया विश्वस्याघौघनाशिनी । विश्वरूपधरो देवः प्रीयतामनया गवा ॥ गोदानसाङ्गतासिद्ध्ये इमां दक्षिणां तुभ्यमहं सम्प्रददे न मम ॥ प्रत्यक्षायाः गोरभावे तन्निष्क्रयं निष्कपरिमितं तदर्द्धं तदर्द्धं वा हिरण्यं दद्यात् ॥ तत्पक्षे—गोनिष्क्रयभूतमिदं हिरण्यमग्निदैवतं तुभ्यमहं सम्प्रददे इति सङ्कल्प्य दद्यात् ॥ एतावद्धिरण्यासम्भवे रजतं दद्यात् ॥ ततो ब्रह्मन्नेतत्ते पाद्यमित्यादिना पूर्वोक्तप्रकारेण पूजापूर्वकं ब्रह्मणे दक्षिणां दद्यात् ॥

एवं सदस्याय उपद्रष्ट्रे गाणपत्याय द्वारपालेभ्यः ऋत्विग्भ्यो ग्रहजापकेभ्यश्च यथोक्तदक्षिणां दत्त्वा आशिषो गृह्णीयात् ॥ दानानि–स्वर्णगोभूतिलान्दद्यात्सर्वदोषापनुत्तये । स्वर्णदानमन्त्रः–हिरण्यगर्भगर्भस्थं० इदं यथाशक्तिसुवर्णम् अग्निदैवतम् अमुकशर्मणे तुभ्यमहं सम्प्रददे ॥ प्रतिगृह्णामि–ॐदेवस्यत्वासावितु?०॥भूमिदानमन्त्रः–सर्वभूताश्रया भूमिर्वराहेण समुद्धृता । अनन्तसस्यफलदा ह्यतः शान्तिं प्रयच्छ मे ॥ इमां भूमिं विष्णुदैवतां वा तन्निष्क्रयीभूतं यथाशक्ति रजतद्रव्यम् अमुकशर्मणे आचार्याय तुभ्यमहं सम्प्रददे–ॐदेवस्यत्वा०॥ तिलपात्रदानम्–महर्षेर्गोत्रसम्भूताःकाश्यपस्य तिलाः स्मृताः।तस्मादेषां प्रदानेन मम दोषो व्यपोहतु ॥ एतांस्तिलान्प्रजापतिदैवतान् आचार्याय तुभ्यमहं सम्प्रददे न मम। ॐदेवस्यत्वा० प्रजापतये प्रतिगृह्णामि । तत आचार्यादयः सर्वे उदङ्मुखास्तिष्ठन्तः ग्रहवेदीसमीपस्थकलशोदकं रुद्रपीठादिस्थलपीठस्थकलशोदकानि आचाराद् द्वारकलशोदकं च पात्रान्तरे उद्धृत्य दूर्वापञ्चपल्लवैर्वक्ष्यमाणैर्वैदिकैः पौराणिकैश्च मन्त्रैः प्राङ्मुखोपविष्टं सकुटुम्बं यजमानं तद्वामत उपविष्टां पत्नीञ्च अभिषिञ्चेयुः–ॐआपोहिष्ठा० योवः–शिवतमो

१ परशुराममहारुद्रपद्धतौ–अभिषेक मूर्ध्नि होम माङ्गल्य स्वस्तिवाचनम्। प्रैष्य च मन्त्रपाठ च तिष्ठन् कुर्यात्सदैव हि ॥

२ गीतवाद्यादिमङ्गलघोषपुर सरोऽभिषेक कार्य इति कल्पद्रुमकारा ॥ परशुराम महारुद्रपद्धतौ–पीठस्थे कुम्भतोयैश्च पञ्चपल्लवसंयुतै । यजमानस्य कर्तव्य स्नापन चाभिषेचनम् ॥ ऋत्विग्भिरिह सन्तुष्टै प्राङ्मुखैर्वाप्युदङ्मुखै । अमन्त्रावयवैर्विप्रैस्तथा दर्भीपभूषणे ॥ मन्त्रैर्वरुणदैवत्यै स्वशाखोक्तै पुराणकै । अन्यैरप्यभिषेकोक्तैरभिषिञ्चेपुन पुन ॥

तस्म्माऽअरंङ्ग०॥ स्त्तोकाना॒मिन्दुम्प्रति॒शूरऽइन्द्रो॑ वृषा॒यमा॑णो वृष॒भ-
स्तुं॒रापाट् ॥ घृ॒तप्प्रु॑षा॒मन॑सा॒मोद॑माना॒ᳪस्वाहा॑दे॒वाऽअ॒मृता॑मादयन्ता-
म् ॥ ४६/२० ॥ आया॒त्त्विन्द्रोवस॒ऽ उप॑ नऽ इह स्तु॒तः सध॒माद॑स्तु शूर॑ः॥
वावृधानस्तवि॑षी॒र्यस्य॑ पूर्वी॒र्द्यौर्न॒क्षत्रम॒भिभू॑ति पुष्या॑त् ॥ ४७/२० ॥ आ न॒ऽ
इन्द्रो॑ दूरादा॒नऽआ॒सादभि॑ष्टि॒कृद्व॑से यास॒दुग्रः ॥ ओजि॑ष्ठेभि॒र्नृपति॒-
र्वज्र॑बाहुᳪसङ्गे॒ स॒मत्सु॑तु॒र्वणि॑ः पृत॒न्यून् ॥ ४८/२० ॥ आन॒ऽइन्द्रो॒हरि॑भिर्य्या॒-
त्वच्छा॑र्व्वा॒चीनोव॑से॒राध॑सेच ॥ तिष्ठा॑ति॒वज्री॒मघवा॑विर॒प्शीमँय्य॒ज्ञम॒-
नु॒नोवाजसा॑तौ ॥ ४९/२० ॥ त्रा॒तार॒मिन्द्र॑० ॥ ५०/२० ॥ इमम्मे॑वरुण श्रु-
धी० ॥ १/२१ ॥ तत्त्वा॑यामि॒० ॥ २/२१ ॥ त्वन्नो॑ऽअग्ने॒वरु॑णस्य० ॥
॥ ३/२१ ॥ सत्वन्नो॑ऽअग्ने॒ऽवमो॑भवो॒० ॥ ४/२१ ॥ उदु॑त्तमंवरुण॒-
पाश॑० ॥ १२/१२ ॥ वरु॑णस्यो॒त्तम्भ॒० ॥ ३४/३४॥ प्रा॒तर॒ग्निम्प्रा॒तरिन्द्र॑ᳪहवामहे
प्रा॒तर्म्मि॒त्रावरु॑णाप्रा॒तर॒श्विना॑ ॥ प्रा॒तर्भगम्पू॒षण॒म्ब्रह्म॑ण॒स्पति॑म्प्रा॒-
तःसोम॑मु॒तरु॒द्रᳪहु॑वेम ॥ ३५/३४॥ भग॒ प्रणे॑त॒र्भग॒ सत्य॑राधो॒ भगे॒मान्धि-
य॒मुद॑वा॒दद॑न्नः । भग॒प्रनो॑जनय॒गोभि॒रश्वै॒र्भग॒प्रनृ॒भिर्नृ॒वन्त॑ः स्याम ॥
३६/३४ इ॒दमा॑पः॒प्रव॑हतावद्यञ्च॒मलं॑च॒यत् ॥ यच्चा॑भिदु॒द्रोहानृ॒तं यच्च॑शे॒पेऽअ॒-
भी॒रुण॑म् ॥ आपो॑ मा॒ तस्मा॒देन॑सः॒पव॑मानश्च मुञ्चतु॒॥ १७/६॥ स॒मु॒द्राय॑त्वा॒-
वाता॑य॒स्वाहा॑सरि॒राय॑त्वा॒वाता॑य॒ स्वाहा॑ ॥ अ॒ना॒धृ॒ष्याय॑ त्वा॒ वाता॑य॒
स्वाहा॑प्रतिधृ॒ष्याय॑ त्वा॒ वाता॑य॒ स्वाहा॑ ॥ अ॒व॒स्यवे॑त्त्वा॒वाता॑य॒स्वाहा॑शि॒-
मि॒दाय॑ त्वा॒ वाता॑य॒ स्वाहा॑ ॥ ७/२२॥ पु॒नन्तु॑ मा पि॒तर॑ः सो॒म्म्यास॑ः पुन॒-
न्तु॑ मा पिताम॒हाः पुनन्तु॒ प्रपि॑तामहाः ॥ प॒वित्रे॑ण श॒तायु॑षा ॥ पुनन्तु॑
मा पिताम॒हाः पु॒नन्तु॒ प्रपि॑ताम॑हाः ॥ प॒वित्रे॑ण श॒तायु॑षा विश्व॒मायु॒र्व्य॒-
श्नवै ॥ ३७/१९ ॥ अग्न॒ऽ आयू॑ᳪषि पवस॒ऽ आसु॒वोर्ज्ज॒मिषं॑च नः ॥ आ॒रे
बाध॑स्व दु॒च्छुना॑म् ॥ ३८/१९॥ पुनन्तु॑ मा देवज॒नाः पु॒नन्तु॒ मन॑सा॒ धिय॑ः॥

पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मां ॥ ३९/१९ ॥ पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् ॥ अग्ने क्रत्वा क्रतूँ २ऽरनु ॥ ४०/१९ ॥ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ॥ ब्रह्म तेन पुनातु मा ॥ ४१/१९ ॥ पवमानः सोऽ अद्य नः पवित्रेण विचर्षणिः ॥ यः पोता स पुनातु मा ॥ ४२/१९ ॥ उभाभ्यान्देव सवितः पवित्रेण सवेन च ॥ माम्पुनीहि विश्वतः ॥ ४३/१९ ॥ वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः ॥ तया मदन्तः सधमादेषु वयः स्याम पतयो रयीणाम् ॥ ४४/१९ ॥ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ॥ भवा वाजस्य सङ्गथे ॥ ११२/१२ ॥ पञ्च नद्यः सरस्वती० ॥ ११/३४ ॥ चित्पतिर्म्मा पुनातु० ॥ ४/४ ॥ शिरो मे श्रीर्य्यशो मुखन्त्विषिः केशाश्च श्मश्रूणि ॥ राजा मे प्राणोऽ अमृतः सम्राट् चक्षुर्व्विराट् श्रोत्रम् ॥ ५/२० ॥ जिह्वा मे भद्रं वाङ्महो मनो मन्युः स्वराड् भामः ॥ मोदाः प्रमोदाऽ अङ्गुलीरङ्गानि मित्रम्मे सहः ॥ ६/२० ॥ बाहू मे बलमिन्द्रियः हस्तौ मे कर्म्म वीर्य्यम् ॥ आत्मा क्षत्रमुरो मम ॥ ७/२० ॥ पृष्ठीर्म्मे राष्ट्रमुदरमःसौ ग्रीवाश्च श्रोणी ॥ ऊरूऽ अरत्नी जानुनी विशो मेऽङ्गानि सर्व्वतः ॥ ८/२० ॥ नाभिर्म्मे चित्तं विज्ञानम्पायुर्म्मेऽपचितिर्भसत् ॥ आनन्दनन्दावाण्डौ मे भगः सौभाग्यम्पसः ॥ जङ्घाभ्याम्पद्भ्यान्धर्म्मोऽस्मि विशि राजा प्रतिष्ठितः ॥ ९/२० ॥ पयः पृथि० ॥ ३६/१८ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनो० ॥ सरस्वत्यै वाचो यन्तुर्य्यन्त्रियै दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ ॥ ३०/९ ॥ देवस्य त्वा० ॥ सरस्वत्यै वाचो यन्तुर्य्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ ३७/१८ ॥ देवस्य त्वा० ॥ अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन वीर्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि ॥

॥ ३/२० ॥ सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेर्भ्राजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण ॥ क्षत्राणाङ्क्षत्रपतिरेध्यति दिद्यून्पाहि ॥ १७/१० ॥ विश्वानिदेव० ॥ ३/३० ॥ धाम्च्छदग्नि० ॥ ७६/१८ ॥ त्वँय्यविष्ठ० ॥ ७७/१८ ॥ अन्नपते० ॥ पालाशंभवति । तेन ब्राह्मणोभिषिञ्चति ब्रह्म वै पलाशो ब्रह्मणैवैनमेतदभिषिञ्चति॥ औदुंबरं भवति । तेन स्वोभिषिञ्चत्यन्नं वाऽऊर्गुदुंबरऽऊर्ग्वैस्वं यावद्वैपुरुषस्यस्वंभवति नैव तावदशनायतितेनोर्क्स्वं तस्मादौदुंबरेण स्वोभिषिञ्चति ॥ नैग्यग्रोधपादं भवति । तेन मित्र्यो राजन्योभिषिञ्चति पद्भिर्वै न्यग्रोधःप्रतिष्ठितोमित्रेणवै राजन्यः प्रतिष्ठितस्तस्मान्नैग्यग्रोधपादेन मित्र्यो राजन्योभिषिञ्चति ॥ आश्वत्थं भवति । तेन वैश्योभिषिञ्चति सयदेवादोश्वत्थे तिष्ठतऽइन्द्रोमरुतऽउपामंत्रयत तस्मादाश्वत्थेन वैश्योभिषिञ्चति । स्रुवेव कुल्पाञ्जुहोति । माणावै कुल्पाऽअमृतमुवैमाणाऽअमृतेनैवैनमेतदभिषिञ्चति ॥ सर्वेषां वाऽएषघेदानाऽ रसो यत्साम सर्वेषामेवैनमेतद्वेदानाँरसेनाभिषिञ्चति ॥ पौराणाः—सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ॥ वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥ मद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा । वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जावपुः शान्तिः कान्तिस्तुष्टिश्च मातरः ॥ एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः । आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः॥ ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ॥ देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ऋषयो मनवो गावो देवमातर एव च । देवपत्न्यो द्रुमा नागा

दैत्याश्चाप्सरसां गणाः॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च। औषधानि च रत्नानि कालस्यावयवाश्च ये॥ सरितः सागराः शैलास्तीर्थानि जलदानदाः। ब्रह्मा विष्णुश्च रुद्रश्च मुनयः सकला ग्रहाः॥ सौभाग्यं ते प्रयच्छन्तु वेदमन्त्राश्च कल्पकाः॥ तपोधनाः कर्मपरा ह्यग्निहोत्रपरायणाः। अग्निहोत्रं च यज्ञाश्च तव सन्तु सुखप्रदाः॥ मीमांसाश्च पुराणानि इतिहासाः समूत्रकाः। भाष्यवार्तिकतत्त्वज्ञाः कल्याणानि दिशन्तु ते॥ अग्निः सोमश्च वायुश्च धर्मः सत्यं क्षमा दया। तव स्वस्तिपरा नित्यं सन्तु वै शुभदायकाः॥ ब्रह्माणी चैव गायत्री सावित्री श्रीरुमा सती। अरुन्धत्यनसूया च तव सन्तु फलप्रदाः॥ तीर्थानि सरितः पुण्याः सरांसि पुष्कराणि च। अचलाश्च चलाश्चैव तव स्वस्तिकराः सदा॥ वेदव्यासश्च वाल्मीकी रामश्चापि पराशरः। देवलः पर्वतश्चैव दुर्वासा भार्गवस्तथा॥ याज्ञवल्क्यश्च जाबालिर्जमदग्निः शुचिश्रवाः। विश्वामित्रः स्थूलशिराश्च्यवनोऽत्रिर्विदूरथः॥ एकतश्च द्वितश्चैव त्रितो गौतमगालवौ। शाण्डिल्यश्च भरद्वाजो मौद्गल्यो वेदवाहनः। कात्यायनश्च कण्वश्च वालखिल्यास्तथैव च॥ पृथुर्दिलीपो भरतो मान्धाता च पुरूरवाः॥ अम्बरीषः ककुत्स्थश्च मुचकुन्दोऽथ भूभृतः। श्वेतश्च शृङ्गवान्मेरुर्विन्ध्याद्रिर्गन्धमादनः॥ माल्यवान्पारियात्रश्च सर्व एव महीधराः। ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः॥ शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं तथा। छन्दः शास्त्राणि सर्वाणि पुराणैः सकलैः सह॥ सांख्ययोगौ पञ्चरात्रं शैवं पाशुपतं तथा। गायत्री पापशमनी दुर्गादेवी महाशिवः॥ स्थानानि च समस्तानि पुण्यान्यायतनानि च। लवणः क्षीरतोयश्च घृतमण्डोदकस्तथा। दधिमण्डः सुरोदश्च इक्षुः स्वादूदकस्तथा। पुष्करश्च प्रयागश्च प्रभासं नैमिषं तथा॥

गयाशिरो ब्रह्मशिरस्तथैवोत्तरमानसम् । गङ्गाद्वारं कुशावर्तं बिल्वकं नीलपर्वतम् ॥ वाराहं भृगुतुङ्गञ्च शालिग्रामसरस्तथा । शूर्पारकं पौण्डरीकं गङ्गासागरसङ्गमम् ॥ धर्मारण्यंफल्गुतीर्थंविमुक्तं मोक्षदं तथा । गङ्गासरस्वतीपुण्या सरयू गण्डकी तथा ॥ कौशिकी यमुना क्षिप्रा चन्द्रभागा च गोमती । मन्दाकिनी दशार्णा च तामसी च कुमुद्वती ॥ रेवावैतरणी भीमा कृष्णावेण्यामहीतथा । गोदावरी भीमरथा गौतमी चाश्वनद्यपि॥ तुङ्गभद्रा ताम्रपर्णी कावेरी नेत्रवत्यपि । नन्दा चालकनन्दा च करतोया च पिप्पला॥सर्वपापशमन्यश्च सर्वलोकस्य मातरः । स्वतोयपूर्णैः कलशैरभिषिञ्चन्तु सर्वदा ॥ भूराद्याः सप्तलो-

[illegible]

युगम्॥संवत्सराश्च ऋतवो मासपक्षदिनानि च । एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ सहस्राक्षं शतधारमृषिभिः पावनं कृतम् । तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते॥भगंतेवरुणो राजा भगं सूर्यो बृहस्पतिः। भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः॥ यत्तेकेशेषुदौर्भाग्यं सीमन्ते यच्च मूर्द्धनि । ललाटे कर्णयोरक्ष्णोरापो निघ्नन्तु ते सदा॥शान्तिः शान्तिः सुशान्तिर्भवतु॥ हस्ते जलं गृहीत्वा—अभिषेककर्तृभ्यो ब्राह्मणेभ्यो यथोत्साहदक्षिणां दास्ये तेन श्रीकर्माधीशः प्रीयताम्॥

॥ अथ अवभृथस्नानप्रयोगः ॥

अभिषेकानन्तरं पूजासाहित्यं दुग्धादिपञ्चामृतानि स्रुचं स्रुवं होमार्थघृतंमुख्यदेवतायन्त्रंप्रधानपीठस्थकलशंभस्मस्थापनार्थं मृद्घटः कुण्डस्थंभस्म दर्भफलपुष्पादिसाहित्यसहितः सपत्नीको यजमानः

---

१ अस्मिन् स्मार्तेऽवभृथस्नानविषये किञ्चिद्विचार्यते—ननु स्मार्तयागस्य अतिरुद्राद्यात्मकस्य श्रुत्यादौ स्पष्टरूपेण अविधानात् तदन्तस्नानस्य सुतराम् अवभृथत्वाभावात् कथं स्मार्तयागादौ अवभृथस्नानम् ? ॥ इत्युच्यते ।

मण्डपस्य पूर्वद्वारेण बहिर्निर्गत्य नगरवासिभिर्जनैस्तथा आचार्यादिऋत्विक्सहितःकिञ्चिद्दूरे गत्वाएकस्मिन् पीठे प्रधानकलशं संस्थाप्यतदुपरि प्रधानयन्त्रं संस्थाप्य तत एकस्मिन् घटे कुण्डादुद्धृतं भस्म संस्थाप्य तत्र सामगायकैः सामगानं कारयेत्। ततः सोपस्करो गीतवाद्यपुरःसरं जलाशयं गच्छेत्॥ अर्धमार्गे स्थित्वा तत्र पुनः सामगायकैः सामगानं कारयित्वा क्षेत्रपालेभ्यो बलिंदत्वानतो जलाशयान्तिके गत्वातृतीयसामगानंकारयित्वाततोजलाशयसमीपे उपवि-

---

मैनम्। अथातः शतरुद्रिय जुहोतीति श्रुतौ जुहोतीति पदश्रुत्या उपविष्टहोमाः स्वाहाकारप्रदानाजुहोतयइति कात्यायनोक्तलक्षणलक्षितस्य स्मार्तस्य अतिरुद्रायात्मकस्य यागस्य श्रुत्यादौ प्रसिद्धतया तदन्तस्नानस्यापि अवभृथत्वेन भवितव्यम्। न च सोमादियागादौ अवभृथस्नानस्य मार्जनानन्तर विधानात् तत्रैव कर्तव्यताप्राप्तिः इति वाच्यम्॥ मार्जनानन्तर सोमादौ विधानात् अत्रापि अभिषेकानन्तरं स्नानश्रवणात् उभयोः अवभृथत्वप्रयोजकधर्मस्य तुल्यत्वादुभयत्र अवभृथत्व स्यात्॥ न च श्रौतयागतया तत्रैव अवभृथ धर्म् नात्र इति वाच्यम्॥ श्रुतिमूला स्मृतिर्ज्ञेया न स्वतन्त्रा कथचन। श्रुत्यर्थश्रवणादेव स्मृतिः श्रुतिसमा स्मृता॥ इति श्रौतव स्मार्तः कर्तव्यः इति अतिदेशस्मरणात् अवभृथत्वप्रयोजकधर्माश्रयत्वाच्च अवभृथत्व निष्प्रत्यूहमिति॥ यद्यपि श्रौतवस्मार्तः कर्तव्यइतिवाक्यात् श्रौतयागे स्मार्तयागे च अवभृथस्य तुल्यता प्राप्ता तथापि श्रौतावभृथस्येतिकर्तव्यताविशेषितस्योपलम्भात् अस्य न स्नानविधिना विशेषितस्योपलम्भादुभयोर्विशेष पश्यामः॥ पूर्तकमलाकरे वह्निपुराणे च स्नायादवभृथेनाथ पुत्रभार्यासुहृद्युतः॥

एतत्पुस्तकसंस्करणे अवभृथादिप्रयोगदानेन काशीपुरस्थसप्तर्षीयुपाख्यहरिरामात्मजसोमनाथलक्ष्मीनाथशर्मणोर्मुख्यशिष्येण उत्तरगुर्जरदेशान्तर्गतसभौग्रामनिवासिना याज्ञिकोपाह्वकृपारामतनुजनुषा स्वर्गतविद्वद्वरसोमनाथशर्मणा अस्मदत्यन्तसाहाय्यमकारीति तेषां स्मरणतोऽन्यत्प्रत्युपकर्तुं न पारये॥

श्यस्वस्तिमंत्रान्वाचयित्वासङ्कल्पः—विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्यब्रह्मणो द्वितीये परार्द्धे श्रीश्वेतवाराहकल्पेवैवस्वतमन्वन्तरे अष्टाविंशतितमेकलियुगे प्रथमचरणेभारतवर्षे जम्बुद्वीपेरामक्षेत्रेपरशुरामाश्रमे दण्डकारण्ये देशेश्रीगोदावर्याः पश्चिमदिग्भागे श्रीमल्लवणाब्धेरुत्तरेतीरेअमुकेश्रीशालिवाहनशके अमुकसंवत्सरेअमुकेश्रीविक्रमवर्षेअमुकसंवत्सरेअमुकायनेअमुकर्तौअमुकमासेअमुकपक्षेअमुकतिथौ अमुकवासरेअमुकनक्षत्रेअमुकराशिस्थितेचन्द्रे अमुकराशिस्थितेश्रीसूर्येअमुकराशिस्थितेदेवगुरौ शेषेषुग्रहेषुयथायथंराशिस्थानस्थितेषुसत्सुएवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ रुद्रकल्पोक्ताष्टविभागान्तर्गतामुकपक्षाश्रयेण वायुपुराणोक्तकृतस्यहवनात्मकमहारुद्रकर्मणःसम्पूर्णफलावाप्तये अस्यां नद्यापुत्रपौत्रस्त्रीस्नुषादिकुटुम्बभृत्यनगरवासिभिरुपस्थितजनैः सह गणेशपूजनपूर्वकं स्नानापरपर्यायं मङ्गलावभृथस्नानमहं करिष्ये ॥ गणेशपूजनं कृत्वा स्वाग्रे तन्दुलैः पद्मं विरच्य तन्मध्येकलशं स्थापयेत्॥ तत्र भूमिं स्पृष्ट्वा—ॐमहीद्यौ०॥तत्र यवप्रक्षेपः ॐओषधयः समवदन्तु०॥ पद्ममध्येकलशस्थापयेत्—ॐआजिघ्रकलशं० ॥ कलशेजलपूरणम्—ॐवरुणस्योत्तं०॥ गन्धप्रक्षेपः—ॐत्वाङ्गन्धर्वा०॥ धान्यप्रक्षेपः—ॐधान्यमसि० ॥ सर्वौषधिप्रक्षेपः—ॐयाऽओषधीः पूर्वाजाता०॥दूर्वाप्रक्षेपः—ॐकाण्डात्काण्डात्० ॥ पञ्चपल्लवप्रक्षेपः—ॐअश्वत्थेवो०॥सप्तमृत्प्रक्षेपः स्योनापृ०॥फलप्रक्षेपः ॐयाः फलिनीर्या०॥ पञ्चरत्नप्रक्षेपः—ॐपरिवाज०॥ हिरण्यप्रक्षेपः—ॐहिरण्यगर्भ०॥ रक्तसूत्रेण वस्त्रेण वा वेष्टयेत्—ॐसुजातोज्योतिषा०॥ पूर्णपात्रमुपरिन्यसेत्—ॐपूर्णादर्वि० ॥ वरुणावाहनम्—तत्रमन्त्राः—ऋक्—वरुणयोरिशादसमृचामित्रहवामहे । परिव्रजेवव्राहोर्जगन्वां-

१ तडागे—वाप्यां—समुद्रे वा ॥

